श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीमद्गोपालमानम्यश्रीलक्ष्मणपदानुगः नीलकंठोभावदीपंकरोत्युद्योगपर्वणि १ गोपालनारायणलक्ष्मणा
र्याधीरेशगंगाधरनीलकंठाः चिंतामणिःसांबशिवश्चपूज्यादिशंतुसर्वेगुरवोमतिंमे २ भारतेसारमुद्योगमितिवृद्धानुशासनम् अतोविस्तरसस्तत्रव्याख्या-
नमुपपद्यते ३ अभिमन्योःसपक्षाः यादवपांडवाद्याः तस्यैवविवाहंकृत्वामुदिताअभूवन्नितिशेषः प्रतीताः प्रबुद्धाः १ मणयोमुक्ताप्रवालादयः तेषांप्रवे
कोजात्यादिरूपःसमूहः तेनउत्तमरत्नैःहीरपद्मरागैश्चचित्रामणिः स्त्रीपुंसयोरश्मजातौमुक्तादिकेपीतिमेदिनी २ आविशतामुपविष्टौ पित्रावसुदेवे



श्रीगणेशायनमः नारायणंनमस्कृत्यनरंचैवनरोत्तमम् देवींसरस्वतींचैवततोजयमुदीरयेत् १ वैशंपायनउवाच
कृत्वाविवाहंतुकुरुप्रवीरास्तदाभिमन्योर्मुदिताःसपक्षाः विश्रम्यचत्वार्युषसिप्रतीताःसभांविराटस्यततोभिजग्मुः १ सभातुसामत्स्य
पतेःसमृद्धमणिप्रवेकोत्तमरत्नचित्रा न्यस्तासनामाल्यवतीसुगंधा तामभ्ययुस्तेनरराजवृद्धाः २ अथासनान्याविशतांपुरस्तादुभौ
विराटद्रुपदौनरेंद्रौ वृद्धौचमान्यौपृथिवीपतीनांपित्रासमंरामजनार्दनौच ३ पांचालराजस्यसमीपतस्तुशिनिप्रवीरःसहरौहिणेयः
मत्स्यस्यराज्ञस्तुसुसन्निकृष्टौजनार्दनश्चैवयुधिष्ठिरश्च ४ सुताश्चसर्वेद्रुपदस्यराज्ञोभीमार्जुनौमाद्रवतीसुतौच प्रद्युम्नसांबौचयु
धिप्रवीरौविराटपुत्रैश्चसहाऽभिमन्युः ५ सर्वेचशूराःपितृभिःसमानावीर्येणरूपेणबलेनचैव उपाविशन्द्रौपदेयाःकुमाराःसुवर्णचि
त्रेषुवरासनेषु ६ तथोपविष्टेषुमहारथेषुविराजमानाभरणांबरेषु रराजसाराजवतीसमृद्धाग्रहैरिवद्यौर्विमलैरुपेता ७ ततःकथास्ते
समवायसुक्ताःकृत्वाविचित्राःपुरुषप्रवीराः तस्थुर्मुहूर्तंपरिचिंतयंतःकृष्णंनृपास्तेसमुदीक्षमाणाः ८ कथांतमासाद्यचमाधवेनसं
घट्टिताःपांडवकार्यहेतोः तेराजसिंहाःसहिताह्यशृण्वन्वाक्यंमहार्थंसुमहोदयंच ९ श्रीकृष्णउवाच सर्वैर्भवद्भिर्विदि-
तंयथायंयुधिष्ठिरःसौबलेनाक्षवत्याम् जितोनिकृत्यापहृतंचराज्यंवनप्रवासेसमयःकृतश्च १० शक्तैर्विजेतुंतरसामहींचसत्यैस्थि
तैःसत्यरथैर्यथावत् पांडोःसुतैस्तद्व्रतमुग्ररूपंवर्षाणिषट्सप्तचचीर्णमग्र्यैः ११ त्रयोदशश्चैवसुदुस्तरोऽज्ञायमानैर्भवतांसमी
पे क्लेशानसह्यान्विविधान्सहद्भिर्महात्मभिश्चापिवनेनिविष्टम् १२

नं३ रौहिणेयःबलरामः ४ ५ ६ ७ ८ संघट्टिताः सन्नद्धीकृताः महार्थंसारार्थ
म् महोदयंश्रेष्ठफलम् ९ अक्षवत्यां द्यूतक्रीडायाम् निकृत्याछलेन समयःपणः १० सत्यरथैः सत्यरथिव्यस्तेजांसि त्यत्वाप्याकाशौ उभयत्र अकुंठितोर-
थोयेषांतैरितिमध्यमपदलोपेनसमासः सत्यंरथवदारोढुंयोग्यंयेषांवापाठांतरेसत्यैकप्रियैः ११ १२ श्रीमद्गोपालकृष्णायनमः ५ ५ ५५

१३ १४ बुभूषेत् प्राप्तुमिच्छेत् तङ्भावआर्षः १५ अनामयंकुशलम् १६ यत्तुधनादिकंस्वयमेवसमाहृतंनपित्रादिभिः १७ १८ १९ पारयित्वेतिपाठेसमाप्य २० अतोराज्यार्द्धप्रदानात् २१ कार्येराज्यलाभनिमित्तंतैर्धार्तराष्ट्रैः कृतंविप्रकारं अपकारंनिशम्य ज्ञात्वातान् पांडवान् यदिइमान्बाधेयुः तर्हितेपितान्

एतैःपरप्रेष्यनियोगमुक्तैरिच्छद्भिराप्तुंस्वकुलेनराज्यम् एवंगतेधर्मसुतस्यराज्ञोदुर्योधनस्यापिचयद्धितंस्यात् १३ तच्चिंतयध्वं कुरुपुंगवानांधर्म्यंचयुक्तंचयशस्करंच अधर्मयुक्तंनचकामयेतराज्यंसुराणामपिधर्मराजः १४ धर्मार्थयुक्तंतुमहीपतित्वंग्रामेपिकस्मिंश्चिदयंबुभूषेत् पित्र्यंहिराज्यंविदितंनृपाणांयथाऽपकृष्टंधृतराष्ट्रपुत्रैः १५ मिथ्योपचारेणयथाह्यनेनेकृच्छ्रंमहत्प्राप्तमसह्यरूपम् नचापिपार्थोविजितोरणेतैःस्वतेजसाधृतराष्ट्रस्यपुत्रैः १६ तथापिराजासहितःसुहृद्भिरभीप्सतेऽनामयमेवतेषाम् यत्तुस्वयंपांडुसुतैर्विजित्यसमाहृतंभूमिपतीन्प्रपीड्य १७ तत्प्रार्थयंतेपुरुषप्रवीराःकुंतीसुतामाद्रवतीसुतौच बालास्त्विमेतैर्विविधैरुपायैःसंप्रार्थिताहंतुममित्रसंघैः १८ राज्यंजिहीर्षद्भिरसद्भिरुग्रैःसर्वंचतद्वोविदितंयथावत् तेषांचलोभंप्रसमीक्ष्यवृद्धंधर्मज्ञतांचापियुधिष्ठिरस्य १९ संबंधतांचापिसमीक्ष्यतेषांमतिंकुरुध्वंसहिताःपृथक्च इमेचसत्येभिरताःसदैवतंपालयित्वासमयंयथावत् २० अतोऽन्यथातैरुपचर्यमाणाहन्युःसमेतान्धृतराष्ट्रपुत्रान् तैर्विप्रकारंचनिशम्यकार्येसुहृज्जनास्तान्परिवारयेयुः २१ युद्धेनबाधेयुरिमांस्तथैवतैर्वध्यमानायुधितांश्चहन्युः तथापिनेमेऽल्पतयासमर्थास्तेषांजयायेतिभवेन्मतंवः २२ समेत्यसर्वेसहिताःसुहृद्भिस्तेषांविनाशाययतेयुरेव दुर्योधनस्यापिमतंयथावन्नज्ञायतेकिंतुकरिष्यतीति २३ अज्ञायमानेचमतेपरस्यनकिंसमारभ्यतमंमतंवः तस्मादितोगच्छतुधर्मशीलःशुचिःकुलीनःपुरुषोऽप्रमत्तः २४ दूतःसमर्थःप्रशमायतेषांराज्यार्धदानाययुधिष्ठिरस्य निशम्यवाक्यंतुजनार्दनस्यधर्मार्थयुक्तंमधुरंसमंच समाददेवाक्यमथाग्रजोस्यसंपूज्यवाक्यंतदतीवराजन् २५

इतिश्रीमन्महाभारतेउद्योगपर्वणिकृष्णवाक्यंनामप्रथमोऽध्यायः १ बलदेवउवाच श्रुतंभवद्भिर्गदपूर्वजस्यवाक्यंयथाधर्मवदर्थवच्च अजातशत्रोश्चहितंहितंचदुर्योधनस्यापितथैवराज्ञः १ अर्धंहिराज्यस्यविसृज्यवीराःकुंतीसुतास्तस्यकृतेयतंते प्रदायचार्द्धंधृतराष्ट्रपुत्रःसुखीसहास्माभिरतीवमोदेत् २

कौरवान्हन्युः इमेपांडवाः २२ २३ २४ २५ इतिश्रीमन्महाभारतेउद्योगपर्वणिटीकायांप्रथमोऽध्यायः १ १ अर्धंराज्यस्यविसृज्यतस्यकृतेअर्धस्यराज्यस्यार्थम् २ ७ ७ ७ ७

राज्यंराज्यार्धं३४ ५बलंचतुरंगंनिगमोनीतिशास्त्रंतेउभेप्रधानेयेषाम् श्रुतेन कालेनचवृद्धाः वृत्ताइतिपाठेश्रुतंकालवृत्तंसर्वसंहारकत्वंयैस्ते ६ समागते-
षुसभायामितिशेषः ७ वाक्यमेवाह सर्वास्विति सर्वथाऽपितेपांडवाः नकोप्याः भवद्भिरितिशेषः सोऽर्थोग्रस्तः वनवासादिप्रतिज्ञानिस्तीर्णेत्यर्थः बलंसत्य-



लब्ध्वाहिराज्यंपुरुषप्रवीराःसम्यक्प्रवृत्तेषुपरेषुचैव ध्रुवंप्रशांताःसुखमाविशेयुस्तेषांप्रशांतिश्चहितंप्रजानाम् ३ दुर्योधनस्यापि मतंचवेत्तुंवक्तुंचवाक्यानियुधिष्ठिरस्य प्रियंचमेस्याद्यदितत्रकश्चिद्व्रजेच्छमार्थंकुरुपांडवानाम् ४ सभीष्ममामंत्र्यकुरुप्रवीरंवैचित्रवीर्यंचमहानुभावम् द्रोणंसपुत्रंविदुरंकृपंचगांधारराजंचससूतपुत्रम् ५ सर्वेचयेऽन्येधृतराष्ट्रपुत्राबलप्रधानानिगमप्रधानाः स्थिताश्चधर्मेषुतथास्वकेषुलोकप्रवीराःश्रुतकालवृद्धाः ६ एतेषुसर्वेषुसमागतेषुपौरेषुवृद्धेषुचसंगतेषु ब्रवीतुवाक्यंप्रणिपातयुक्तंकुंतीसुतस्यार्थकरंयथास्यात् ७ सर्वास्ववस्थासुचतेनकोप्याग्रस्तोहिसोर्थेबलमाश्रितैस्तैः प्रियाभ्युपेतस्ययुधिष्ठिरस्यद्यूतेप्रसक्तस्यहृतंचराज्यम् ८ निवार्यमाणश्चकुरुप्रवीरःसर्वैःसुहृद्भिर्ह्ययमप्यतज्ज्ञः सदीव्यमानःप्रतिदिव्यचैनंगांधारराजस्यसुतंमताक्षम् ९ हित्वाहिकर्णंचसुयोधनंचसमाह्वयद्देवितुमाजमीढः दुरोदरास्तत्रसहस्रशोऽन्येयुधिष्ठिरोयान्विषहेतजेतुम् १० उत्सृज्यतान्सौबलमेवचायंसमाह्वयत्तेनजितोऽक्षवत्याम् सदीव्यमानःप्रतिदेवनेनअक्षेषुनित्यंतुपराङ्मुखेषु ११ संरंभमाणोविजितःप्रसह्यतत्रापराधःशकुनेर्नकश्चित् तस्मात्प्रणम्यैववचोब्रवीतुवैचित्रवीर्यंबहुसामयुक्तम् १२ तथाहिशक्योधृतराष्ट्रपुत्रःस्वार्थेनियोक्तुंपुरुषेणतेन अयुद्धमाकांक्षतकौरवाणांसाम्नैवदुर्योधनमाह्वयध्वम् १३ साम्नाजितोर्थोर्थकरोभवेतयुद्धेनयोभवितानेहसोर्थः १४ वैशंपायनउवाच एवंब्रुवत्येवमधुप्रवीरेशिनिप्रवीरःसहसोत्पपात तच्चापिवाक्यंपरिनिंद्यतस्यसमाददेवाक्यमिदंसमन्युः १५ इतिश्रीमन्महाभारतेउद्योगपर्वणिबलदेववाक्यंनामद्वितीयोऽध्यायः २ सात्यकिरुवाच यादृशःपुरुषस्यात्मातादृशंसंप्रभाषते यथारूपोंतरात्मातेतथारूपंप्रभाषसे १ संतिवैपुरुषाःशूराःसंतिकापुरुषास्तथा उभावेतौदृढौपक्षौदृश्येतेपुरुषान्प्रति २ एकस्मिन्नेवजायेतकुलेक्लीबमहाबलौ फलाफलवतीशाखेयथैकस्मिन्वनस्पतौ ३

पालनेसामर्थ्यम् पूर्वकोपिताअपिअतःपरंनकोप्याइतिभावः ८ अयंयुधिष्ठिरःअतज्ज्ञः द्यूतानभिज्ञः ९।१०।११ संरंभमाणः हठंकुर्वाणः संरब्धमानइतिपाठेसंरब्धदर्पइत्यर्थः १२ १३ इहसामोपायेसोऽर्थःअनयः १४ १५ इतिउद्योगपर्वणिटी॰द्वितीयोऽध्यायः२ यादृशआत्माशुद्धःपापोवातादृशंशुद्धंपापंवाभाषते १ २ फलाफलवतीसुपोलुक्आर्षः पूर्वसवर्णोवा ३ ६९ ६९ ६९

सर्वदावक्रीसन् सर्वतोभद्रंचक्रे वेधेनस्वातीस्थः सन्रोहिणीनक्षत्रंपीडयतीत्यर्थः १७ वक्रेतितत्रैवसर्वतोभद्रचक्रेमघास्थोलोहितांगोऽगारकःव क्रानुवक्रंकृत्वापुनःपुनर्वक्रीभूयब्रह्मणाबृहस्पतिनाक्रांतंराशिंनक्षत्रंश्रवणंसमावृत्यसम्यक्पूर्णदृष्ट्याविध्यतिष्ठति १८ परिच्छिन्नाच्छादिता पंचशी र्षाणिशिवासदृशानियेषांते पंचशीर्षाः १९ २० २१ २२ शोणितमयाआवर्तायस्यांरक्तप्रवाहवतीत्यर्थः अतएवध्वजाएवउडुपानिक्षुद्र नावस्तैःसमाकुला वैशसेविरोधे २३ २४ छर्दयन्श्रोतृणांक्लेशकरत्वेनरक्तवमनंकारयतीव २५ शस्त्राणिप्रतप्तत्वाज्ज्वलंतीव २६ संवत्सरेति पूर्वंश्रवणस्थोबृहस्पतिः भगनक्षत्रस्थःसूर्यपुत्रइत्युक्तंतावुभौविशाखासमीपेतिर्यग्वेधेनशतपदेचक्रेविशाखानक्षत्रंविध्यतइत्यर्थः तथाहितस्मिन्च-

रोहिणींपीडयत्येवमुभौचशशिभास्करौ चित्रास्वात्यंतरेचैवविधिष्ठितःपरुषोग्रहः १७ वक्रानुवक्रंकृत्वाचश्रवणंपावकप्रभः ब्रह्मरा- शिंसमावृत्यलोहितांगोव्यवस्थितः १८ सर्वसस्यपरिच्छिन्नापृथिवीसस्यशालिनी पंचशीर्षायवाश्चापिशतशीर्षाश्चशालयः १९ प्रधानाःसर्वलोकस्ययास्वायत्तमिदंजगत् तागावःप्रस्नुतावत्सैःशोणितंप्रक्षरंत्युत २० निश्चेरुरर्चिषश्चापात्खड्गाश्चज्वलिता- भृशम् व्यक्तंपश्यंतिशस्त्राणिसंग्रामंसमुपस्थितम् २१ अग्निवर्णायथाभासःशस्त्राणामुदकस्यच कवचानांध्वजानांचभवि- ष्यतिमहान्क्षयः २२ पृथिवीशोणितावर्ताध्वजोडुपसमाकुला कुरूणांवैशसेराजन्पांडवैःसहभारत २३ दिक्षुप्रज्वलितास्याश्च- व्याहरंतिमृगद्विजाः अत्याहितंदर्शयंतोवेदयंतोमहद्भयम् २४ एकपक्षाक्षिचरणःशकुनिःखचरोनिशि रौद्रंवदतिसंरब्धःशोणि- तंछर्दयन्निव २५ शस्त्राणिचैवराजेंद्रप्रज्वलंतीवसंस्थिता सप्तर्षीणामुदाराणांसमवच्छाद्यतेप्रभा २६ संवत्सरस्थायिनौचग्र हौप्रज्वलितावुभौ विशाखायाःसमीपस्थौबृहस्पतिशनैश्चरौ २७ चंद्रादित्यावुभौग्रस्तावेकाह्नाहित्रयोदशीम् अपर्वणिग्रहंयातौ प्रजासंक्षयमिच्छतः २८ अशोभितादिशःसर्वाःपांसुवर्षैःसमंततः उत्पातमेघारौद्राश्चरात्रौवर्षंतिशोणितम् २९ ७

क्रेस्थिरखुरवेइतिश्रवणांत्यपादत्रयेण व्युत्क्रमेणविशाखाद्यपादत्रयेणातितुतेइत्यनेनविध्यतेतृतीयेनचतुर्थोद्वितीयेनतृतीयः प्रथमेनाद्वितीयइति तच्चक्रविदांप्र त्यक्षम् २७ चंद्रादित्याविति अपर्वणिपर्वदर्शाख्यंपंचदशेऽह्निभवति एकतिथिवृद्धौषोडशेवाएकतिथिक्षयेचतुर्दशेवाह्निभवति तिथिद्वयक्षयस्तुलोके- त्यंतमप्रसिद्धइति अपर्वणीत्युक्तंग्रहंयातौराहुणाग्रहणंप्राप्तौ एतदेवप्रजासंक्षयहेतुत्वेनशास्त्रेदृष्टमित्याहप्रजेति २८ अशोभिताअमंगलाः २९ ७ ७ ७ ७ ७ ७

चित्रास्वात्यंतरस्थः परुषोग्रहोरोहिणींपीडयतीत्यक्तं तत्रचित्रांशेस्थित्वारोहिणींअष्टादशत्वेनसामुदायिकनक्षत्रंपीडयतिस्वात्यंशेस्थित्वाकृत्तिकांषो
डशत्वेनसंघानिकनक्षत्रंपीडयति सर्वतोभद्रचक्रेनथाचदर्शनात् तदेतदाहकृत्तिकामितित्यर्थेन तीक्ष्णैः क्रूरैः कर्मभिरुपलक्षितोराहुरित्यर्थः ३० धू
मकेतुंउत्पातविशेषमतुलक्ष्यावस्थिताः विषमंवैरंयुद्धमितियावत् ३१ त्रिष्विति त्रिष्वपिछत्रेषुनरपतिविजयप्रोक्तेषुयथाऽश्विन्यादिभिर्नवभिर्न-
क्षत्रैरौदीच्यस्याश्वपतेश्छत्रेचामरंकलशंवीणाछत्रंदंडंपतद्ग्रहः आसनंकीलकंरज्जुरित्यवयवाः कल्प्यंते एवंमघादिनवकेनप्राच्यस्यगजपतेः तथा-
मूलादिनवकेनदाक्षिणत्यनरपतेः एवंविधेषुत्रिष्वपिछत्रेषुतत्रापिसर्वेषुनक्षत्रनक्षत्रेषुनास्तिक्षत्रमेभिरितियोगेनक्षत्रविरोधिषुनक्षत्रेषुनक्षत्राणिच
तानिनक्षत्राणिभानितेषुक्रूराक्रांतत्वादिनाक्षत्रियाभावकरेषुनक्षत्रेषुगृध्रः पापग्रहः शीर्षकलशस्थानंसंपततेतेनछत्रत्रयस्यतदंतर्गतानामन्येषांच-
मांडलीकानांराज्ञांनाशः सूच्यते तत्रैवंसतिमघायांकुजोस्तितथायदाभगनक्षत्रंपूर्वाफल्गुनीतदातत्रत्यः शनैश्चरोवश्यंयुद्धादिनागजपतेर्महत्वभयंकरिष्य-
तियथोक्तंतत्रैव कलशस्थेभवेद्धद्रंरणेरोगेमहद्भयं घानपानादिकंसर्वंजायतेनात्रसंशयइति कलशस्थेशनैश्चरेइतिशेषः तथाविशाखाज्येष्ठेअपिअत्रैव

कृत्तिकांपीडयंस्तीक्ष्णैर्नक्षत्रंपृथिवीपते ३० अभीक्ष्णवातावायंतेधूमकेतुमवस्थिताः विषमंजनयंत्येतआक्रंदजननंमह-
त् ३१ त्रिषुसर्वेषुनक्षत्रनक्षत्रेषुविशांपते गृध्रः संपततेशीर्षेजनयन्भयमुत्तमम् ३२

छत्रेक्रूरविद्धेक्रूराक्रांतेवर्तनेइतिअव
श्यंगजपतेश्छत्रभंगः एवंप्रथमछत्रेपिकृत्तिकारोहिण्योःपुष्यस्यचपीडास्ति तथांतिमच्छत्रेश्रवणप्रोष्ठपदयोर्बृहस्पतिशक्रौवर्तेतेइतितथापितावनिष्ट-
फलावेवएवंपूर्वस्यनिरन्वयोनाशः इतरयोश्छत्रयोः राजनाशेपितत्पुत्राणांछत्रप्राप्तिरस्तीतिविशेषः तथाचमध्यमछत्रेमघास्थभौमः स्वात्यांसूर्यचंद्राहवः
पूर्वस्यामुत्तरस्यांवाफल्गुन्यांशनैश्चरः विशाखायांवेधेनबृहस्पतिश्चास्तितेषांफलंतत्रैवोक्तंक्रूरग्रहचतुष्कंचबुधचंद्रेणसंयुतम् पूर्वच्छत्रविनाशायकथि
तंपूर्वसूरिभिरिति तत्रसिंधुसागरसंगमात् गोदावरीसागरसंगमपर्यंतं एकारेखातद्दक्षिणेनरपतिः ततएवकर्णप्रावरणपर्यंतं द्वितीयातदुत्तरेगजपतिः
तयोरेखयोर्मध्येऽश्वपतिः हस्तिनापुरंतुईशानदेशस्थत्वात् गंगाद्वारात्पूर्वभागेस्तीति छत्रांतर्गतमेवहरिद्वारंतुदेहलीदीपन्यायेनाश्वपतिगजपत्योरंत
र्गतमितितेनहस्तिनापुरस्थानांप्राच्यत्वादत्यंतंक्षत्रक्षयः तथैवपांचालादीनामपीति एतच्चनरपतिविजयदर्शितांस्पष्टंईशानदेशाः कूर्मचक्रेप्रोक्ताः रेव
तीअश्विनीयाम्येपादेईशानगोचरे गंगाद्वारंकुरुक्षेत्रंश्रीकंठंहस्तिनापुरम् अश्ववक्त्रेकपादाश्चकर्णप्रावरणास्तथा विनश्यंतिचतेसर्वेदेशास्त्वीशान
गोचरेइतिदिक् ३२ ५ ५ ५ ५ ५ ५ ५

चंद्रादित्यावुभौग्रस्ताविल्येतेनश्लोकेनोक्तमर्थंविशदयतिद्वाभ्याम् चतुर्दशीमिति त्रयोदशींत्रयोदशानामह्नांपूरणींपंचदशींअमावास्यांभूतपूर्वांनाभिजानेन जानामिअतिभूयसाकालेनअयंदुर्योगआगतइतिभावः एकमासीएकस्मिन्नेवमासेभवांपूर्वंत्रयोदश्यांरात्रौपक्षसमास्यासूर्यग्रहणमेवोक्तंइदानींतुएकस्मिन्मा-सेचंद्रः पूर्णमास्यांग्रहेणराहुणाग्रस्तःसूर्योमावास्यायांयदासूर्योग्रस्तस्तदाचंद्रोपिग्रस्तएवदर्शनयोः संहतत्वात् ३३ अपर्वणीतिलोकाप्रसिद्धेपर्वणीतिपूर्ववत् ज्ञेयम् ३४ प्रतिस्रोतसोमहानद्यः विपरीतप्रवाहाविभक्तिलोपआर्षः विशेषणंविशेष्येणबहुलमितिसमासोवाक्रियाविशेषणंवाकूपाः जलाशयाः कूर्दंतिक्रीडंति

चतुर्दशींपंचदशींभूतपूर्वांचषोडशीम् इमांतुनाभिजानेहममावास्यांत्रयोदशीम् चंद्रसूर्यावुभौग्रस्तावेकमासींत्रयोदशीम् ३३ अपर्वणिग्रहेणैतौप्रजाः संक्षययिष्यतः शोणितैर्वल्कसंपूर्णाअतृप्तास्तत्रराक्षसाः ३४ प्रतिस्रोतोमहानद्यः सरितः शोणितोदकाः फेनायमानाः कूपाश्चकूर्दंतिवृषभाइव ३५ पतंत्युल्काः सनिर्घाताः शक्राशनिसमप्रभाः अद्यचैवनिशांव्युष्टामनयंसमवाप्स्यथ ३६ विनिःसृत्यमहोल्काभिस्तिमिरंसर्वतोदिशम् अन्योन्यमुपतिष्ठद्भिस्तत्रचोक्तंमहर्षिभिः ३७ भूमिपालसहस्राणांभूमिः पा-स्यतिशोणितम् कैलासमंदराभ्यांतुतथाहिमवतोविभो सहस्रशोमहाशब्दः शिखराणिपतंतिच ३८ महाभूताभूमिकंपेचत्वारः सा गराः पृथक् वेलामुद्वर्तयंतीवक्षोभयंतोवसुंधराम् ३९ वृक्षानुन्मथ्यवांत्युग्रावाताः शर्करकर्षिताः आभग्नाः स्रमहावातैरशनी-भिः समाहताः ४० वृक्षाः पतंतिचैत्याश्चग्रामेषुनगरेषुच नीललोहितपीतश्चभवत्यग्निर्हुतोद्विजैः ४१ वामार्चिर्दुष्टगंधश्चसुंच-न्नैदारुणंस्वनम् स्पर्शागंधारसाश्चैवविपरीतामहीपते ४२ धूमंध्वजाः प्रसुंचंतिकंपमानामुहुर्मुहुः मुंचत्यगारवर्षंचभेर्यश्चपट-हास्तथा ४३ शिखराणांसमृद्धानामुपरिष्टात्समंततः वायसाश्चरुवंत्युग्रंवामंमंडलमाश्रिताः ४४ पक्वापक्वेतिसुभृशंवावाश्यं-तेवयांसिच निलीयंतेध्वजाग्रेषुक्षयायपृथिवीक्षिताम् ४५

वातैः क्षुभ्यंतइत्यर्थः ३५ अनयंअनीतिफलम् ३६ महोल्काभिः दीपाभावात्शण काष्ठ ज्वालयारात्रौविनिःसृत्यगृहाद्बहिर्निर्गत्य ३७ महाशब्दः क्रियतइतिशेषः ३८ महाभूताः वृद्धीभूताः अभूततद्भावेमहच्छब्दात्भवतेोपरेडा वृमर्यादामुल्लंघितवंतइवेत्यर्थः ३९ अशनीभिः अशनिर्द्वयोर्लिंगयोरितिकोशात्स्त्रीत्वम् ४० ४१ ४२ ४३ शिखराणांद्रुमाणाम् शिखरोस्त्रीद्रुमाग्रेचेतिमेदिनी ४४ पक्वापक्वेतिविनाशाभिमुखानांपरस्परयुद्धमितिपक्वंपरिणतेपिस्यात्विनाशाभिमुखेत्रिष्वितिमेदिनी पक्वापक्वेति-पक्षिरुताकरणम् वावाश्यंतेअतिशयेनशब्दंकुर्वंति ४५ ५ ५ ५ ५ ५ ५

प्रकिरंतः शकृन्मूत्रमितिशेषः व्यालाः दुष्टहस्तिनः सलिलाश्रयाः अत्यंतंप्रस्वेदयुक्ताः ४६ ४७ ४८ ४९ ५० मुनिः एवंतथेत्युक्तेतिसंबंधः धृतराष्ट्रेणहेतुनातदर्थमित्यर्थः ध्यानंचिंताम् ५१ क्षीयतेक्षिणोति ५२ धर्म्यधर्मादनपेतंपंथानंदेशयशिक्षय ५३ अयंदुर्योधनः ५४ सधर्मः एनंधर्महंतारं



ध्यायंतः प्रकिरंतश्चव्यालावेपथुसंयुताः दीनास्तुरंगमाःसर्वेवारणाःसलिलाश्रयाः ४६ एतच्छ्रुत्वाभवानत्रप्राप्तकालंव्यवस्यतां यथालोकःसमुच्छेदंनायंगच्छेत्तुभारत ४७ वैशंपायनउवाच पितुर्वचोनिशम्यैतद्धृतराष्ट्रोब्रवीदिदम् दिष्टमेतत्पुरामन्येभविष्यतिनसंशयः ४८ राजानःक्षत्रधर्मेणयदिवध्यंतिसंयुगे वीरलोकंसमासाद्यसुखंप्राप्स्यंतिकेवलम् ४९ इहकीर्तिंपरेलोकेदीर्घकालंमहत्सुखम् प्राप्स्यंतिपुरुषव्याघ्राःप्राणांस्त्यक्त्वामहाहवे ५० वैशंपायनउ॰ एवमुक्तस्तथेत्युक्त्वाकवींद्रो राजसत्तम धृतराष्ट्रेणपुत्रेणध्यानमन्वगमत्परम् ५१ समुहूर्तंतथाध्यात्वापुनरेवाब्रवीद्वचः असंशयंपार्थिवेंद्रकालःसंक्षीयतेजगत् सृजतेचपुनर्लोकान्नेहविद्यतिशाश्वतम् ५२ ज्ञातीनांवैकुरूणांचसंबंधिसुहृदांतथा धर्म्यंदेशयपंथानंसमर्थोह्यसिवारणे ५३ क्षुद्रंज्ञातिवधंप्राहुर्माकुरुष्वममाप्रियम् कालोयंपुत्ररूपेणतवजातोविशांपते ५४ नवधःपूज्यतेवेदेहितंनैवकथंचन हन्यात्सएनंयोहन्यात्कुलधर्मंस्वकांतनुम् ५५ कालेनोत्पथगंतासिशक्येसतियथापदि कुलस्यास्यविनाशायतथैवचमहीक्षिताम् ५६ अनर्थोराज्यरूपेणतवजातोविशांपते लुप्तधर्मापरेणासिधर्मंदर्शयवैसुतान् ५७ किंतेराज्येनदुर्धर्षयेनप्राप्तोसिकिल्बिषम् यशोधर्मंचकीर्तिंचपालयस्वर्गमाप्स्यसि ५८ लभंतांपांडवाराज्यंशमंगच्छंतुकौरवाः एवंब्रुवतिविप्रेंद्रेधृतराष्ट्रोंबिकासुतः आक्षिप्यवाक्यंवाक्यज्ञोवाक्यंचैवाब्रवीत्पुनः ५९ धृतराष्ट्रउवाच यथाभवान्वेत्तितथैववेत्ताभावाभावौविदितौमेयथार्थौ स्वार्थेहिसंमुह्यतितातलोकोमांचापिलोकात्मकमेवविद्धि ६० प्रसादयेत्वामतुलप्रभावत्वंनोगतिर्दर्शयिताचधीरः नचापितेमद्वशगामहर्षेनचाधर्मंकर्तुमर्हाहिमेमतिः ६१ त्वंहिधर्मप्रवृत्तिश्चयशःकीर्तिश्चभारती कुरूणांपांडवानांचमान्यश्चापिपितामहः ६२ व्यासउवाच वैचित्रवीर्यनृपतेयत्तेमनसिवर्तते अभिधत्स्वयथाकामंछेत्तास्मितवसंशयम् ६३ धृतराष्ट्रउ॰ यानिलिंगानिसंग्रामेभवंतिविजयिष्यतां तानिसर्वाणिभगवञ्छ्रोतुमिच्छामितत्त्वतः ६४

५५ शक्येःनापदिसत्यांकिमर्थंआपदीवउन्मार्गगामीभवसीत्यर्थः ५६ परेणअतिशयेन ५७ ५८ आक्षिप्यवाक्यंनिंदावाक्यंब्रुवतीतिसंबंधः ५९ वेत्ताज्ञातास्मीतिशेषः भावाभावौस्थितिविनाशौपरेषांस्वेषांच ६० गतिःपरायणंदर्शयिताउपदेष्टा ६१ त्वंहिधर्मादौहेतुरित्यर्थः ६२ ६३ ६४ ६५

रूपंगमकंचिङ्गं ६५ ६६ इष्टइतियेपृष्ठतोभाषमाणा वायसास्तेगंतारंत्वरयंतिसिद्धिसूचकाइत्यर्थः येपुरतोभाषमाणास्तेगमनंनिषेधयंतीत्यर्थः ६७ ६८
६९ ७० प्रविष्टस्यपरसैन्यमितिशेषः इष्टाः मारितोमारितइतिदक्षिणाःदाक्ष्ययुक्ताः हतोसिहतोसीत्याद्याः पश्चादर्थेपाश्चात्यंप्रयोजनंजयाख्यंसंधारयंति निश्चिन्वंति
याश्चाग्रेप्रतिषेधिकाः मायुध्यस्वमरिष्यसिरिष्यसीत्येवंजातीयकास्ताअपिमरणस्यैवसूचकास्ताश्चदुर्योधनंप्रत्येवप्रवर्तंतइतिभावः ७१ ७२ अनुगाअनुकूलाः

व्यासउवाच प्रसन्नभाःपावकऊर्ध्वरश्मिः प्रदक्षिणावर्तशिखोविधूमः पुण्यागंधाश्चाहुतीनांप्रवांतिजयस्यैतद्भाविनोरूपमाहुः ६५ गंभीरघोषाश्चमहास्वनाश्चशंखामृदंगाश्चनदंतियत्र विशुद्धरश्मिस्तपनःशशीचजयस्यैतद्भाविनोरूपमाहुः ६६ इष्टावाचःप्रसृता वायसानांसंप्रस्थितानांचगमिष्यतांच येपृष्ठतस्तेत्वरयंतिराजन्येचाग्रतस्तेप्रतिषेधयंति ६७ कल्याणवाचःशकुनाराजहंसाःशुकाःक्रौंचाःशतपत्राश्चयत्र प्रदक्षिणाश्चैवभवंतिसंख्येध्रुवंजयस्तत्रवदंतिविप्राः ६८ अलंकारैःकवचैःकेतुभिश्चसुखप्रणादैर्हेषितैर्वाहयानाम् भ्राजिष्मतीदुःप्रतिवीक्षणीयायेषांचमूस्तेविजयंतिशत्रून् ६९ हृष्टावाचस्तथासत्वंयोधानांयत्रभारत नम्लायंति स्रजश्चैवतेतरंतिरणोदधिम् ७० इष्टावाचःप्रविष्टस्यदक्षिणाःप्रविविक्षतः पश्चात्संधारयंत्यर्थमग्रेचप्रतिषेधिकाः ७१ शब्दरूपरसस्पर्शागंधाश्चाविकृताःशुभाः सदाहर्षश्चयोधानांजयतामिहलक्षणम् ७२ अनुगावायवोयांतितथाभ्राणिवयांसिच अनुप्लवंति मेघाश्चतथैवेंद्रधनूंषिच ७३ एतानिजयमानानांलक्षणानिविशांपते भवंतिविपरीतानिमुमूर्षूणांजनाधिप ७४ अल्पायांवामहत्यांवा सेनायामितिनिश्चयम् हर्षोयोधगणस्यैकोजयलक्षणमुच्यते ७५ एकोदीर्णोदारयतिसेनांसुमहतीमपि तांदीर्णामनुदीर्यंतेयोधाःशूरतराअपि ७६ दुर्निवर्त्यास्तदाचैवप्रभग्नामहतीचमूः अपामिवमहावेगास्त्रस्तामृगगणाइव ७७ नैवशक्यासमाधातुंसंनिपातेमहाचमूः दीर्णामित्येवदीर्यंतेसुविद्वांसोपिभारत ७८ भीतान्भग्नांश्चसंप्रेक्ष्यभयंभूयोपिवर्द्धते प्रभग्नासहसाराजन्दिशोविद्रवतेचमूः ७९ नैवस्थापयितुंशक्याशूरैरपिमहाचमूः संस्मृत्यमहतींसेनांचतुरंगांमहीपतिः ८० उपायविजयंश्रेष्ठमाहुर्भेदेनमध्यमम् जघन्यएषविजयोयोयुद्धेनविशांपते महान्दोषःसन्निपातस्तस्याद्यःक्षयउच्यते ८१

७३ ७४ ७५ ७६ ७७ ७८

७९ ८० उपायविजयंलाभपूर्वकंजयंसाम्नाप्रार्थनयादानेनवा शत्रुणांवाप्रार्थितस्यधनेनवासंतर्पितस्यमुख्योजयः शत्रुभेदयतोमध्यमः निघ्नतोऽधमइत्यर्थः सन्निपातः योधानांसंघर्षः ८१ ५ ५ ५ ५ ५ ५

व्यवधूताः दारादिष्वनासक्ताः ८१ शूराणांसहायसंपत्तिर्नापेक्षितेत्यत्रदृष्टांतमाह नवैनतेयइति महत्याअपिसेनायाअपचितिंपूजांपत्नीकारंनाशंवा एकेनैवात्मना कर्तुं-
शक्यंदृष्ट्वाआलोच्यसुपर्णः शोभनपतनः गरुडोनामतः वैनतेयोविनतायाः पुत्रोमहाजनंबहुजनसमूहंनप्रशंसति नकामयतइत्यर्थः भवेदपचितिः पूजाव्ययनि-
ष्कृतिहानिषिति मेदिनी शूराणांनसहायापेक्षास्तीति अक्षौहिणीबाहुल्यान्मत्पुत्राणांजयोवश्यंभावीतित्वयानमंतव्यमितिभावः ८३ ८४ इतिश्रीमन्महाभा
रतेभीष्मपर्वणिटीकायांतृतीयोध्यायः ३ एवमुक्त्वेति १ २ ३ नवाशाम्यंतिनैवशाम्यंति यमक्षयंयमलोकम् ४ ५ ६ ७ दिव्येति यथादीपेनां-

परस्परज्ञाः संहृष्टाव्यवधूताः सुनिश्चिताः अपिपंचाशतंशूरा मृद्गंति महतींचमूम् ८२ अपिपंचवषट्सप्तविजयंत्यनिवर्तिनः
नवैनतेयोगरुडः प्रशंसतिमहाजनम् दृष्ट्वासुपर्णोपचितिंमहत्या अपिभारत ८३ नबाहुल्येनसेनायाजयोभवतिनित्यशः अ-
ध्रुवोहिजयोनामदैवंचात्रपरायणम् जयवंतोहिसंग्रामेकृतकृत्याभवंतिहि ८४ इतिश्रीमन्महाभारतेभीष्मपर्वणिजयल
क्षणवर्णनंनामतृतीयोऽध्यायः ३ वैशंपायनउवाच एवमुक्त्वाययौव्यासोधृतराष्ट्रायधीमते धृतराष्ट्रोपितच्छ्रुत्वाध्यानमे
वान्वपद्यत १ समुहूर्तमिवध्यात्वाविनिःश्वस्यमुहुर्मुहुः संजयंसंशितात्मानमपृच्छद्भरतर्षभ २ संजयेमेमहीपालाः शूरायुद्धाभि
नंदिनः अन्योन्यमभिनिघ्नंतिशस्त्रैरुच्चावचैरिह ३ पार्थिवाः पृथिवीहेतोः समभित्यज्यजीवितम् नवाशाम्यंतिनिघ्नंतोवर्धयंतियमक्ष
यम् ४ भौमैमैश्वर्यमिच्छंतोनमृष्यंतेपरस्परम् मन्येबहुगुणाभूमिस्तन्ममाचक्ष्वसंजय ५ बहूनिचसहस्राणिप्रयुतान्यर्बुदानि
च कोट्यश्चवीरलोकानांसमेताः कुरुजांगले ६ देशानांचपरीमाणंनगराणांचसंजय श्रोतुमिच्छामितत्वेनयतएतेसमागताः
७ दिव्यबुद्धिप्रदीपेनयुक्तस्त्वंज्ञानचक्षुषा प्रभावात्तस्यविप्रर्षेर्व्यासस्यामिततेजसः ८ संजयउवाच यथाप्रज्ञंमहाप्रा
ज्ञभौमान्वक्ष्यामितेगुणान् शास्त्रचक्षुरवेक्षस्वनमस्तेभरतर्षभ ९ द्विविधानीहभूतानिचराणिस्थावराणिच त्रसानांत्रिविधा
योनिरंडस्वेदजरायुजां १०

धकारेनाशितेचक्षुषाघटोदृश्यतेएवंधीवृत्त्यासर्वविषयावरकाज्ञानतमसिनाशितेसतिचिदात्मरूपेणाचक्षुषासर्वंप्रकाशतइत्य
र्थः ८ शास्त्रचक्षुरिति यदाऽहंब्रह्मास्मीतिवाक्योत्थयाधियाआत्मानंयोगीपश्यति तदांधोपिअनंधोभवति तथाचश्रुतिः तंवाएतंसेतुंतीर्त्वांधः सन्ननंधोभव
तीतिसेतुंमर्यादाविधारकंपरमेश्वरंतीर्त्वा प्राप्येतिश्रुतिपदयोरर्थः अनेनैवाभिप्रायेणाअवेक्षस्वेत्याह नमस्तइतिविनयः स्वस्योपदेष्टृत्ववारणाय व्यासेनैवत्वमुपदि-
ष्टोसीतिभावः ९ त्रसानांजंगमानांयोनिरुत्पत्तिस्थानम् अंडजाः पक्षिसरीसृपाद्याः स्वेदजाः यूकालिक्षाद्याः जरायुजाः मनुष्यपश्वाद्याः १० ६५ ६५

११ येषुचतुर्दशक्रतुयज्ञाः प्रतिष्ठिताः तेमानवाः त्रैवर्णिकाः पशवश्चगवाद्याः जरायुजानांमध्येप्रवराइतियोजना १२ ग्राम्याणांवक्ष्यमाणानांपशूनांमध्ये तथारण्य वासिनामित्यपि पुरुषंवैदेवाः पशूनालभंत तस्मात्त्रयः पशूनांहस्त्यादीनांपुरुषोहस्तीमर्कटइतिविध्यर्थवादादिषुपुरुषेपिपशुत्वमस्त्येवेतिग्राम्यपशुषुपुरुषस्यग- णनं १३ उद्भिज्जाभूमिंउद्भिद्यजाताः वृक्षाः अश्वत्थादयः गुल्माःकुशकाशादिस्तंबाः लताः वृक्षाद्यारूढाः गुडूच्यादयः वल्यः भूमिप्रसाराः वर्षमात्रस्थायिन्यः कूश्मांडा द्याः त्वक्साराः वेण्वादयः तएवतृणजातयः नतुवृक्षाः १४ तेषामितिसप्तग्राम्याः पशवः सप्तारण्याः पंचोद्भिज्जाइत्येकोनविंशतिसंख्यानांविकाराणांप्रकृतिभूतेषुपंचस्त महाभूतेषुप्रक्षेपेसतिचतुर्विंशत्यक्षरसंख्यासाम्यात्प्रकृतिविकृत्यात्मिकागायत्रीयंभवति अत्रस्वेदजानांउद्भिज्जेष्वंतर्भावः तेहिभूमिमुद्भिद्यजायंतेस्वेदजास्तुजलमुद्भिद्य जायंतइतिसाम्यात् तृतीयेनावरोधः संशोकजस्येतिन्यायाच्च अंडजानामपिमैथुनजत्वसाम्याज्जरायुजेष्वेवांतर्भावः जरायुर्गर्भवेष्टनंतद्रूपस्यअंडस्येवतत्रसत्वादित्या-

त्रसानांखलुसर्वेषांश्रेष्ठाराजन्जरायुजाः जरायुजानांप्रवरामानवाःपशवश्चये ११ नानारूपधराराजंस्तेषांभेदाश्चतुर्दश वेदोक्ताः पृथिवीपालयेषुयज्ञाःप्रतिष्ठिताः १२ ग्राम्याणांपुरुषाःश्रेष्ठाः सिंहाश्चारण्यवासिनाम् सर्वेषामेवभूतानामन्योन्येनोपजीवनम् १३ उ द्भिज्जाःस्थावराःप्रोक्तास्तेषांपंचैवजातयः वृक्षगुल्मलतावल्यस्त्वक्सारास्तृणजातयः १४ तेषांविंशतिरेकोनामहाभूतेषुपंचसु चतुर्विंशतिरुद्दिष्टागायत्रीलोकसंमता १५ यएतांवेदगायत्रींपुण्यांसर्वगुणान्विताम् तत्वेनभरतश्रेष्ठसलोकेनप्रणश्यति १६ भू- मौचजायतेसर्वंभूमौसर्वंविनश्यति भूमिःप्रतिष्ठाभूतानांभूमिरेवसनातनम् १७ अरण्यवासिनःसप्तसप्तैषांग्रामवासिनः सिंहा व्याघ्रावराहाश्चमहिषावारणास्तथा १८ ऋक्षाश्चवानराश्चैवसप्तारण्याःस्मृतानृप गोरजाविमनुष्याश्चअश्वाश्वतरगर्दभाः १९ एते ग्राम्याःसमाख्याताःपशवःसप्तसाधुभिः एतेवैपशवोराजन्ग्राम्यारण्याश्चतुर्दश २० यस्यभूमिस्तस्यसर्वंजगत्स्थावरजंगमम् तत्रा तिगृद्धाराजानोविनिघ्नंतीतरेतरम् २१ इतिश्रीमन्महाभारतेभीष्मपर्वणिभूवर्णनंनामचतुर्थोध्यायः ४

शायेन्चतुर्विंशतिः तदिदंकार्यकारण ससुदायात्मकंगायत्र्याख्यंब्रह्मगायत्रीवा इदंसर्वंभूतमित्युपक्रम्यसैषाचतुष्पदाषड्विधागायत्रीतदेतदृचाभ्यनूक्तंतावानस्यमहिमाततोज्यायांश्चपूरुषः पादोस्यसर्वा- भूतानित्रिपादस्यामृतंदिवीतिछांदोग्येउपसंहारदर्शनात् १५ १६ १७ १८ १९ २० यस्यभूमिरितिराजाहिसार्वभौमोराजसूयेनेष्ट्वास्वाराज्यंप्रा प्नोति अश्वमेधेनेष्ट्वाक्रमप्तुक्तिस्थानंप्राप्नोतीति यस्यकृत्स्नाभूमिस्तस्यइदंसर्वयज्ञद्वारावशेभवति तथाचवाजसनेयकेश्रूयतेपुरुषोहवैनारायणोऽकामयतात्यतिष्ठेयं सर्वाणिभूतान्यहमेवेदंसर्वस्यामितिसएतंपुरुषमेधंपंचरात्रयज्ञक्रतुमपश्यदित्यादिना २१ इतिश्रीमन्महाभारतेभीष्मप० टीकायांचतुर्थोध्यायः ४

एवंवक्ष्यमाणभगवद्गीतोपनिषदर्थज्ञानाधिकारार्थंकर्मणामनुष्ठेयत्वप्रकारांतरेणोपपाद्याधिकृतानामुत्पन्नात्मविविदिषाणामपि सूक्ष्मतमात्मतत्वग्रहणायोग्यता-
सिध्यर्थंस्थूलेभगवतोरूपेकृत्स्नब्रह्मांडात्मकेचित्तसंयमः कर्तव्यइत्याशयेनभुवनकोशंवर्णयति नदीनांपर्वतानांचेत्यादिनातत्सर्वंश्रुतवानसीत्यंतेनाध्यायानामष्टकेन
१ २ तत्रतावत्पंचेमानिमहाराजेत्यादिनातदेषांरूपमैश्वरमित्यंतेनसर्वंवियदादिकंभगवदुपादानकत्वात्कुंडलकटकन्यायेनभगवतोरूपमितिप्रतिपादयंति म
हाभूतानिपृथिव्यादीनितान्येवजगतीकृत्स्नब्रह्मांडरूपाणिपिंडरूपाणिच तत्स्थानिचसर्वाणिचैतन्यपदवाच्यानिसमानितुल्यान्येव बहुत्वंउपाधिभेदाभिप्रायेण
नहिकुंभद्रोण्याद्युपाधिषाकाशस्येवमशकमतंगजादिशरीरेषुचैतन्यस्यस्वतोविषमत्वंदृश्यते तस्मात्सर्वाणिजगतीस्थानिसमान्येव वक्ष्यतिचभगवान्पंडि-
ताःसमदर्शिनइति ३ भूमिरितिवायोरग्निरितिश्रुतेरग्निहेतुर्वायुरग्नेः परोद्रष्टव्यः गुणोत्तराणिपूर्वपूर्वापेक्षयाउत्तरोत्तरमेकैकगुणाधिकं इदंचआकाशाद्वायु

धृतराष्ट्रउवाच नदीनांपर्वतानांचनामधेयानिसंजय तथाजनपदानांचयेचान्येभूमिमाश्रिताः १ प्रमाणंचप्रमाणज्ञपृथिव्या
ममसर्वतः निखिलेनसमाचक्ष्वकाननानिचसंजय २ संजयउवाच पंचेमानिमहाराजमहाभूतानिसंग्रहात् जगतीस्था
निसर्वाणिसमान्याहुर्मनीषिणः ३ भूमिरापस्तथावायुरग्निराकाशमेवच गुणोत्तराणिसर्वाणितेषांभूमिःप्रधानतः ४
शब्दःस्पर्शश्चरूपंचरसोगंधश्चपंचमः भूमेरेतेगुणाःप्रोक्ताऋषिभिस्तत्ववेदिभिः ५ चत्वारोप्सुगुणाराजन्गंधस्तत्रनवि-
द्यते शब्दःस्पर्शश्चरूपंचतेजसोथगुणास्त्रयः शब्दःस्पर्शश्चवायोस्तुआकाशेशब्दएवतु ६ एतेपंचगुणाराजन्महाभूतेषुपं-
चसु वर्ततेसर्वलोकेषुयेषुभूताःप्रतिष्ठिताः ७ अन्योन्यंनाभिवर्ततेसाम्यंभवतिवैयदा ८

र्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवीतिश्रूयमाणजन्मक्रमाभिप्रायेणोक्तम् ४ शब्दादयोगुणाःप्रसिद्धाः ५ ६ एतेपंचेति महाभूतेषुपंचमहाभूतात्मकेषु
सर्वेषुलोकेषुभोग्यवस्तुषुशरीरादिघटांतेषु एतेपंचगुणाःसंति एतेकेयेषुगुणेषुभोक्तारोभूताः नित्यनिर्वृताश्चेतनाःपुरुषाःप्रतिष्ठिताः देहेंद्रियादीन्भोग्या-
नधिष्ठायचेतनाःशब्दादीनिभोग्यांतराणिभुंजते देहादीनामपिभोगोपकरणत्वाद्भोग्यत्वमेवनभोक्तृत्वमित्यर्थः ७ अन्योन्यमिति समस्यभावःसाम्यं-
ब्रह्मभावःसंमआत्मेतिविद्यात् निर्दोषंहिसमंब्रह्मेतिश्रुतिस्मृत्योर्ब्रह्मणिसमशब्ददर्शनात् भोक्तृभोग्ययोर्यदासुषुप्तिप्रलयसमाधिमोक्षेषुब्रह्मभावोभव
तितदातेउभेअन्योन्यंनाभिवर्तंते व्यवहारतोविद्यमानमपिभोग्यंभोक्तारंनोपसर्पति नापिभोक्ताऽलुप्यदृगपिभोगायतनस्यदेहेंद्रियादेरभावाद्भोग्यजातमु
पसर्पतीत्यर्थः ८

यदात्विति भोगप्रदकर्मोद्भवकालेविषमीभावंसाम्यात्प्रच्युतिंआविशंतिप्राप्नुवंति तदातएवभोक्तारोभोग्यपदार्थाश्चदेहैः स्वस्वरूपैः देहवंतः लब्धस्वरूपाभू- त्वातैरेवस्वैरूपैः परस्परंव्यतिरोहंति भोक्तारोभोग्येषुनिपतंति भोग्यार्थाश्चभोक्तरिसूक्ष्मरूपेणस्ववासनांजनयंतीत्यर्थः ९ आनुपूर्व्याभूम्यादिक्रमेणावि- नश्यंति जायंतेचअनुपूर्वशआकाशादिक्रमेण विपर्ययेणक्रमोऽतउपपद्यतेचेतिन्यायेनसृष्टिक्रमविपरीतत्वात्संहारक्रमस्य अतएवउत्पत्तिविनाशशीलत्वादेव सर्वाण्येतानिभोक्तृभोग्यान्यपरिमेयानिअनंतानिमरीचिकोदकवद्तुल्यत्वात् नहिमरीचिकोदकमियत्प्रमाणमिति परिमातुंशक्यम् यतएतान्यपरिमेयाणि नन् तस्मा- द्धेतोः एषांरूपंऐश्वरमेवनतुभौतिकंनह्यध्यस्तस्याधिष्ठानादन्यत्रूपमस्तिअतएवसर्वंखल्विदंब्रह्मआत्मैवेदंसर्वंब्रह्मैवेदंसर्वमितिसर्वस्यब्रह्मभावश्रवणमुपप- द्यतइत्यर्थः १० अपरिमेयत्वमेवाह तत्रतत्रेति सिद्धाअपियत्रब्रह्मांडंभित्वागच्छंतितत्रापिवासनामयाः धातवःव्यक्तयः पांचभौतिकादृश्यंतेऽतोऽपरिमेयाएवते एवंसत्यपि मनुष्याः गणकादयः तर्केणसूर्यगत्यादेशभेदेनदिनमानभेदपादच्छायाभेदादिनाचतेषांप्रमाणानि एतच्चोपलक्षणंआकारभेदस्यापि तथाहिकेचित्कंदुकाकारंकेचिच्चतुरस्रं- केचित्त्रिकोणंकेचिच्चक्राकारंभूमिसंस्थानंकल्पयंति तथाप्रमाणभेदोपिजंबुद्वीपपरिणाहगणकाः तद्यासः कुभुजंगसायकभुवः १५ ८१ सिद्धांशकेनाधिकाइतिवदंति

यदातुविषमीभावमाविशंतिपरस्परम् तदादेहैर्देहवंतोव्यतिरोहंतिनान्यथा ९ आनुपूर्व्याविनश्यंतिजायंतेचानुपूर्वशः सर्वाण्यपरि मेयाणितदेषांरूपमैश्वरम् १० तत्रतत्रहिदृश्यंतेधातवःपांचभौतिकाः तेषांमनुष्यास्तर्केणप्रमाणानिप्रचक्षते ११ अचिंत्याः खलुयेभावानतांस्तर्केणसाधयेत् १२

६७

पंचदशशतान्येकाशीतियोजनानियोजनचतुर्विंशांशसहिता- नि तथालक्षयोजनंतत्परिणाहइतिपुराणांतरे अपिअष्टादशसहस्राणिषट्शतानिचेतिवक्ष्यति ११ कस्तर्ह्यत्रसिद्धांतइत्याशंक्यानिर्वचनीयएवायमर्थो नतर्केणसाधयितुं- योग्यइत्याह अचिंत्याइति येभावाः जगज्जन्मोपादाननिमित्तपरिमाणधर्माधर्मादयः पदार्थाः चिंतयितुमयोग्यास्तांस्तर्केणनसाधयेत् नहितेतर्केणसाधयितुंशक्यंते तर्कां- तरेणतस्यबाधसंभवात् तर्काप्रतिष्ठानादितिन्यायाच्च अतएवास्यश्लोकस्योत्तरार्द्धमन्यत्रपठंति नाप्रतिष्ठिततर्केणगंभीरार्थस्यनिश्चयइति तथाहिकंदुकाकारेभुवनकोशेक- ल्प्यमानेयेकंदुकपृष्ठेकमठपृष्ठोपमेतिष्ठंति तेषांकियानपिदेशोजलपशुमनुष्याश्रययोग्योस्तीतिवक्तुंयुक्तं येतुतन्निितंबेतदधश्चवसंतितेषांगुरुत्ववतामर्थानांअधस्तादाश्रया- भावेनावश्यंपतनंभवतीतितावान्देशोरिक्तएवास्तीतिवक्तव्यंतथाच तदाश्रयातत्कृतनाद्वीपांतरकल्पनालोकदृष्टिविरुद्धेतिपामराअपि प्रतियंति ननुयथापृथिव्याअंतरिक्षे- ऽवस्थानशक्तिः दिगंबरादन्यैःसर्वैर्वादिभिः कल्प्यतेतथावयमपितस्याआकर्षणशक्तिमन्यांकल्पयामहेययासर्वदिक्स्थाः प्राणिनः पृथिवींपादाधस्थामेवमन्यंतेखंचोपरिस्थ- मितितर्हिलोकदृष्टिविरुद्धकल्पनापेक्षयासर्वप्राणिप्रत्यक्षस्वप्नमायेंद्रजालादितुल्यत्वेनैवास्याः कुतोनकल्प्यते ननुस्वप्नादिवदस्याः बाधोनदृश्यतइतिचेत् प्राक्ब्रह्मात्मज्ञानात्मादर्श्यं- किंनश्छिन्नंश्रुत्यातुज्ञाद्वैतंनविद्यते नेहनानास्तिकिंचनेत्यादिकयाब्रह्मदर्शनेनरज्जुदर्शनेनसर्पस्येवप्रपंचबाधआम्नायते तथाचनिष्कलंकात्श्रुतिप्रमाणात्ब्रह्माद्वैतमेवादर्त- व्यंनतुसकलंकात्तर्काज्जगतोनिर्वचनीयत्वमितिभावः १२

तर्हि किमस्य प्रमाणं का वा आकृतिस्तवाभिमतेत्याशंक्याह सुदर्शनमिति सुदर्शनो नाम जंबूवृक्षविशेषस्तन्नामांकितोऽयं द्वीपः सुदर्शनद्वीपः कृत्स्नं ब्रह्मांडमित्यर्थः तं प्रमाणत आकृतितश्च प्रकर्षेण वक्ष्यामि तुशब्दः पक्षांतरव्यावृत्त्यर्थः परिमंडलः परमाणुमात्रं परिमाणतो दुर्लक्ष्य इत्यर्थः एषोऽणुरात्मा चेतसा वेदितव्य इत्यात्मवदिति भावः परिमंडल इत्यस्य सर्वतो वृत्तरूपः कंदुकाकार इति व्याख्याने प्रागेव दोष उक्तः अथ चक्राकार इत्युच्यते चेन्न चिपिटाकारे तस्मिन्परिमंडलशब्दस्यायोगात् चक्रसंस्थित इत्यनेन चक्रवत्संस्थितं संस्थानमाकारोऽस्येति नेनैव सिद्धत्वाच्च अयं हि शब्दस्तार्किकाणां परमाणुपरिमाणे प्रसिद्धः न चानेन परिमाणेनोपेतं निरंशं वस्तु सिध्यति यस्य कस्याप्यल्पपरिमाणस्य एकादशदिगवच्छेद्यप्रदेशभेदवत्त्वेन तस्यापि निरंशत्वायोगात् न हि परमाणोः पूर्वदिगवच्छिन्नो देशः प्रतीच्याप्यवच्छिद्यत इति वक्तुं शक्यं दृष्टिविरोधात् तस्मात्परिमंडलशब्दो दुर्लक्ष्यसदृक्तमात्रवचनः तार्किकाणां परमाणुरपि तादृश एव तत्र पारिभाषिकपरिमाणकल्पनं प्रस्थानभेदापादनार्थं शून्यकारणतानिरासार्थं चेति दिक् एवं सुदर्शनद्वीपस्य परिमाणमुक्त्वा आकारमाह चक्रसंस्थित इति परिदृश्यमानराष्ट्राकार इत्यर्थः चक्रं राष्ट्रास्त्रयोरपीति विश्वः १३ तदेव संस्थान

(प्रकृतिभ्यः परं यत्तु तदचिंत्यस्य लक्षणम्) सुदर्शनं प्रवक्ष्यामि द्वीपं तु कुरुनंदन परिमंडलो महाराज द्वीपोऽसौ चक्रसंस्थितः १३ नदीजलप्रतिच्छन्नः पर्वतैश्चाभ्रसन्निभैः पुरैश्च विविधाकारै रम्यैर्जनपदैस्तथा १४ वृक्षैः पुष्पफलोपेतैः संपन्नधनधान्यवान् लवणेन समुद्रेण समंतात्परिवारितः १५ यथा हि पुरुषः पश्येदादर्शे मुखमात्मनः एवं सुदर्शनद्वीपो दृश्यते चंद्रमंडले १६ द्विरंशे पिप्पलस्तत्र द्विरंशे च शशो महान् सर्वौषधिसमावायः सर्वतः परिवारितः १७

माह द्वाभ्यां नदीति १४ १५ नन्वेवंविधस्य कथमतिसूक्ष्मत्वमुच्यते तत आह यथा हीति चंद्रमंडले चंद्राधिष्ठिते मनसीत्यर्थः यद्येतद्ब्रह्मांडं महाप्रमाणं स्यात् कथं तर्हि गिरिगुहैकदेशस्थो योगी स्वीये सूक्ष्मे हृदयावकाशे तत्कृत्स्नं आदर्शे मुखवत्पश्येत् नह्यल्पप्रमाणो सर्षपादो महाप्रमाणानां मेर्वादीनां संनिवेशो युज्यते प्रपंचस्य स्वप्नादिवदनिर्वचनीयत्वांगीकारं विनेति भावः १६ द्विरंश इति तत्र चंद्रमंडलाख्ये मनसि अंशे एकदेशे वृत्त्यानंत्यादनंतस्य मनस एकदेश एकाकारा सूक्ष्मा वृत्तिरंशस्तत्र द्विः कार्यकारणरूपेण स्थूलसूक्ष्मरूपेण वा द्विरावृत्तः पिप्पलो गीतासु वक्ष्यमाणः संसाराश्वत्थोऽस्ति सर्वमेतन्मनोमात्रमित्यर्थः द्विरंशे च शशो महान् चकारात्तत्रेत्यनुवर्तनेन तस्मिन्नेव मनसि महान् परमात्मा शश इव शशः प्लुतगतिः शीघ्रगामी मनसो जवीय इति तद्धावतोऽन्यानत्येतीति च श्रुतेः अंशे एकदेशे द्विर्वर्तते नियम्यनियामकभावेनेत्यर्थः तथा च कार्यकारणप्रपंचो जीव ईश्वरश्च परब्रह्मण्यधिष्ठाने मनसैव कल्पित इत्यर्थः १७ ५ ५ ५ ५ ५

अस्यशशस्यप्रत्यगभेदंवक्ष्यन्प्रपंचादिभ्यः पृथक्त्वमाह आपइति आपइत्यंबूप लक्षितंभूतपंचकमुच्यते आपः पुरुषवचसोभवंतीत्यादिश्रुतौतथादर्शनात् एतेनकृ
त्स्नंभूतभौतिकंकार्यंततः शशादन्यत् तर्हिकारणंवस्तुतदभिन्नंस्यादित्याशंक्याह शेषः संक्षेपउच्यते इतिसमस्तकार्यप्रलयेसतिशिष्यत इतिशेषः कारणंतदपिसंक्षेपः
कार्यस्यैवसूक्ष्मंरूपंआकुंचितावयवकूर्मसमानंउच्यते ऽतोऽव्याकृतंकारणमपिआपइवानात्मैवेत्यर्थः ततोव्याकृताव्याकृतात्द्वयात्अन्यः शशः शुद्धंब्रह्मतदेवअयं
प्रत्यगात्माजीवइत्युच्यतेवेदे तत्त्वमस्यहंब्रह्मास्मिअयमात्माब्रह्मेत्यादौपरमात्मनएवप्रत्यगात्मत्वमुच्यते नततोन्योजीवोनामकश्चिद्द्रष्टातुरस्तीत्यर्थः एतंप्रत्यगभि
न्नंपरमेश्वरंशशाख्यंसंक्षेपतः मयाप्रोच्यमानंशृणु जंबूइतिजंबूद्वीपः खंडः एकदेशोयस्यतस्यब्रह्मांडस्यनिर्माणेविस्तारे इत्यर्थः १८ इतिश्रीमन्महाभारतेभी

आपस्ततोन्याविज्ञेयाः शेषः संक्षेपउच्यते ततोन्यउच्यतेचायमेतंसंक्षेपतः शृणु १८ इतिश्रीमन्महाभार
तेभीष्मपर्वणिजंबूखंडवर्णनंनामपंचमोऽध्यायः ५ धृतराष्ट्रउ० उक्तोद्वीपस्यसंक्षेपोविधिवद्बुद्धिमंस्त्वया
तत्त्वज्ञश्चापिसर्वस्यविस्तरंब्रूहिसंजय १ यावान्भूम्यवकाशोयंदृश्यतेशशलक्षणे तस्यप्रमाणंप्रब्रूहिततोवक्ष्य
सिपिप्पलम् २

ष्मपर्वणिटीकायांपंचमोध्यायः ५ पिप्पलशशयोः स्वरूपप्रश्रवणे स्वस्यानधिकारंपश्यन्स्थूलमेवतावत्भगवतोरूपंश्रोतुमिच्छन् धृतराष्ट्रउवाच उक्तोद्वी
पस्येति द्वीपस्यविस्तरमितिसंबंधः १ यावानिति शशलक्षणेपरमात्मनः ज्ञापकेमायाशबलेहार्देब्रह्मणिमायाकल्पितोभूम्यवकाशोयावान् व्यवहारदृष्ट्यासत्यवत्प्र-
तीयमानोयोगिवरैर्दृश्यतेतस्यप्रमाणंप्रब्रूहि ननुकारणमेवादौज्ञातव्यंयत्ज्ञानात्सार्वज्ञ्यंभवतीतिवेदेप्रसिद्धंकिंद्वीपज्ञानेनेत्याशंक्याह ततोवक्ष्यसीतिपिप्पलमिति
शशंचवक्ष्यसीतिशेषः प्रागेवकारणज्ञानात्तत्त्वदृष्टिभूतिंकार्यमेववदेत्येतेनतत्रात्यंतमादरोभवतीतिभावः २ ७

प्रागायताः पूर्वपश्चिमसमुद्रस्पर्शिनः अत्रेयंशास्त्रानुभवयोरविरोधेनभूकल्पनाप्रतिभाति यथाहस्तमात्रस्यचतुरस्रस्यचतुर्विंशत्यंगुलानि परिणाहः षणवत्यंगुला
निपरिधिः किंचिन्यूनानिचतुस्त्रिंशदंगुलानिकर्णोभवति एवंअष्टादशसहस्राणिषट्शतानिचजंबूपर्वतसंज्ञितायाः भुवः प्रमाणमुक्तम् तदेवात्रपरिधित्वेनचत्वा
रिसहस्राणि षट्शतानि पंचाशच्चयोजनान्येकैको भुजइतितदेवसमचतुरस्रस्यविष्कंभप्रमाणं अस्यकर्णः शुल्बशास्त्रोक्तरीत्याषट्सहस्राणिपंचशतानिषट्स
प्ततिश्चयोजनानि तस्यास्यभूचतुरस्रस्यचतुर्भिः समुद्रैर्वेष्टितस्यकोणाविदिक्षुवर्तंते तेनदक्षिणस्यांदिशिरामसेतौद्वयोः समुद्रयोःसंधिः एवमितरास्वपिदिक्षु
समुद्रसंधयोज्ञेयाः यस्तत्रज्योतिर्विदांभूपरिधिः सप्तांगनंदाब्धियोजन ४९६७ संमितोभिमतः सएवास्माकंचतुरस्रविष्कंभः खबाणरसवेदमितः ४६५० यत्तु-
एतयोरंतरंसप्तेंदुराम ३१७ तदपियजमानेनोर्ध्वबाहुनाप्रपदोच्छ्रितेनवाउन्मितस्यसूत्रस्ययः पंचमोंशः सहस्तइतिविकल्पस्यकात्यायनादिभिरुक्तत्वात् ह-
स्तप्रमाणभेदकल्पनयायोजनबहुत्वाल्पत्ववचनेनसमाधेयम् तथाभूमेश्चतुरस्रत्वेपितन्मध्यस्थमत्युच्छ्रितंमेरुंप्रदक्षिणीकुर्वतः सूर्यस्यमार्गोमंडलाका

संजयउवाच॰ प्रागायतामहाराजषडेतेवर्षपर्वताः अवगाढाह्युभयतः समुद्रौपूर्वपश्चिमौ ३ हिमवान्हेमकूटश्चनिषधश्चनगोत्त
मः नीलश्चवैडूर्यमयः श्वेतश्चशशिसन्निभः ४ सर्वधातुपिनद्धश्चशृंगवान्नामपर्वतः एतेवैपर्वताराजन्सिद्धचारणसेविताः ५

रोऽस्तीतिनबौद्धाभिमतंसूर्यद्वयंकल्प्यंभवति अन्यत्सर्वंयुक्त्यविरुद्धंज्योतिर्विन्मतमेवात्रानुसर्तव्यंयत्तुपुराणेपंचाशत्कोटियोजनंभूगोलप्रमाणमित्युक्तं तदपिअ
चिंत्याः खलुयेभावाननांस्तर्केणसाधयेदित्यनेनैवप्रत्युक्तम् अव्यवस्थितत्वान्मतानांनिर्वचनीयवादएवशरणीयइत्येवंपरंयद्वासर्वत्रयत्प्रमाणंदृष्टंतद्विंशांशेनतद्बोध्यं
तेनपंचाशत्कोटिस्थानेसार्धकोटिद्वयविस्ताराभूमिः लक्षस्थानेऽपंचसहस्रविस्तारोजंबूद्वीपः नवसहस्रस्थानेसार्धचतुःशतयोजनायामंभरतखंडमितिअस्मिन्पक्षेउदाह
रिष्यमाणवैष्णवादिवाक्येजंबूद्वीपश्चतुर्दलकमलाकारः तस्याप्रांतपरिधिः षट्शताधिकान्यष्टादशयोजनसहस्राणि त्रयस्त्रिंशच्छतानिमध्यव्यासः तेनफलतः पंचस
हस्रव्यासताज्ञेया एवंसतियदाप्रागायतोहिमाचलः पूर्वपश्चिमसमुद्रौस्पृष्ट्वास्थितदाऽयंभरतवर्षस्त्रिकोणोभवतितेनपृथिवीत्रिकोणे तिलोकप्रवादोनुभवश्चानुसृतो
भवति अन्यथाभरतवर्षस्यधनुराकारत्वेभूमध्यरेखायाः लंकातः सेतुमार्गेणप्रस्थितायाः पुरीरक्षसांदेवकन्याथकांचीसितः पर्वतः पर्यलीवत्सगुल्मं पुरीचोज्जयिन्याह्वयाग
गराटंकुरुक्षेत्रमेषाभुवोमध्यरेखेतिस्मर्यमाणायामध्यरेखयाकुरुक्षेत्रस्यरामसेतुः सन्निहितोद्वारकाचदूरेस्यात् द्वारकासमीपेसेतुश्चदूरेइतिप्रत्यक्षमुपलभ्यतेभरतवर्षस्य
त्रिकोणमित्येषैवकल्पनासाधीयसीतिदिक् ३ ४ ५

एवंदक्षिणांदिशमारभ्ययावदुत्तरसमाप्तिषट्प्राक्पश्चिमायताः पर्वतास्तेभ्यससवर्षाणिभवंतिमध्येमध्येवासयोग्यानिस्थानानिभवंति तेषांस्थानानांवर्षाख्याना-
मंतरमाह तेषामिति विष्कंभोविस्तारः सहस्रशःशब्द एषशतशःशब्दपरः कर्तव्यः लंकाहिमालययोरनेकसहस्रयोजनांतराभावात् षष्ट्यधिकशतचतुष्कयोजनसं
मितस्यैवांतरस्यप्रसिद्धेः तत्रापिशतंसेतोःपरतः षष्ट्यधिकंत्रिशतंयोजनानिसेतुतोहिमालयइतिप्रत्यक्षसिद्धम् वर्षाणिवर्षंतिकामेसिंचंतिपूरयंतीतिवर्षा-
णिरम्यस्थानानि ६ वसंत्येषुतानिवर्षाणीतियोगांतरमाह वसंतीति हिमवतोदक्षिणेभारतंवर्षंउत्तरतोहेमवतंवर्षंद्वितीयम् हेमकूटनिषधयोर्मध्येहरिवर्षम् ७
निषधनीलयोर्मध्येमेरुः तस्यप्राक्माल्यवान् पूर्वसमुद्रावधिः ८ पश्चिमसमुद्रावधिर्गंधमादन इत्यर्थः परिमंडलशब्दस्यपूर्वोक्तएवार्थः अत्याश्चर्यमयो-

तेषामंतरविष्कंभोयोजनानिसहस्रशः तत्रपुण्याजनपदास्तानिवर्षाणिभारत ६ वसंतितेषुसत्वानिनानाजातीनिसर्वशः इदंतुभा
रतंवर्षंततोहैमवतंपरम् हेमकूटात्परंचैवहरिवर्षंप्रचक्षते ७ दक्षिणेनतुनीलस्यनिषधस्योत्तरेणतु प्रागायतोमहाभागमाल्यवा
न्नामपर्वतः ८ ततःपरंमाल्यवतःपर्वतोगंधमादनः परिमंडलस्तयोर्मध्येमेरुःकनकपर्वतः ९ आदित्यतरुणाभासोविधूमइवपा
वकः योजनानांसहस्राणिचतुराशीतिमुच्छ्रितः १० अधस्ताच्चतुराशीतिर्योजनानांमहीपते ऊर्ध्वमधश्चतिर्यक्चलोकानावृत्यतिष्ठ
ति ११ तस्यपार्श्वेष्वमीद्वीपाश्चत्वारःसंस्थिताविभो भद्राश्वःकेतुमालश्चजंबुद्वीपश्चभारत उत्तराश्चैवकुरवः कृतपुण्यप्रतिश्रयाः
१२ विहगःसुमुखोयस्तुसुपर्णस्यात्मजःकिल सवैविचिंतयामाससौवर्णान्वीक्ष्यवायसान् १३ मेरुरुत्तममध्यानामधमानांचप-
क्षिणाम् अविशेषकरोयस्मात्तस्मादेनंत्यजाम्यहम् १४ तमादित्योनुपर्येतिसततंज्योतिषांवरः चंद्रमाश्चसनक्षत्रोवायुश्चैवप्रद-
क्षिणः १५ सपर्वतोमहाराजदिव्यपुष्पफलान्वितः भवनैरावृतःसर्वैर्जांबूनदपरिष्कृतैः १६ तत्रदेवगणाराजन्गंधर्वासुरराक्षसाः
अप्सरोगणसंयुक्ताःशैलेक्रीडंतिसर्वदा १७ तत्रब्रह्माचरुद्रश्चशक्रश्चापिसुरेश्वरः समेत्यविविधैर्यज्ञैर्यजंतेऽनेकदक्षिणैः १८

मेरुः प्रतिक्षणंनवोनवइत्यर्थः ९ आदित्यतरुणोबालादित्यः १० चतुराशीतिसहस्रस्थानेद्विचत्वारिंशच्छतीउच्छ्रायोबोध्यः अधस्तात्भूमेर्गर्भे ११ तस्यपा
र्श्वेष्विति पार्श्वेषुचतुर्दिक्षु द्वीपाइवद्वीपाः नद्यंतरत्वात्वर्षाणिभद्राश्वादिसाहचर्याज्जंबूद्वीपशब्दोत्रभरतवर्षपरः तस्यतत्सारत्वज्ञापनार्थः तानेवस्तौतिकृतपु-
ण्यप्रतिश्रयाइत्यादिना कृताविहिताःपुण्यैःपुण्यवद्भिःप्रतिश्रयाआश्रमाःयेषुते १२तत्रकश्चित्खगःमेरुंत्यक्त्वागतइत्याह विहगइतिद्वाभ्याम्
एनंत्यजामित्युक्त्वाउत्तरान्कुरुनेवगच्छामीतिशेषः १३ १४ तंमेरुंआदित्योनुपर्येतिप्रदक्षिणीकरोति १५ १६ १७ १८ ८२

१९ २० काव्यः कविश्रेष्ठः शुक्रोरमतइतिशेषः तस्यकाव्यस्य २१ तस्मात् काव्यात् ततः कुबेरात् कलांशंषोडशभागस्यापिलेशम् २२ कर्णिकाराराजवृक्षाः तेषांव नम् २३ २४ २५ २६ क्षीरवत् श्वेताधारायस्याः सागंगा विश्वरूपाविश्वोविष्णुस्तद्रूपा तथाचस्मरंतियोसौसर्वगतोविष्णुश्चित्स्वरूपीनिरंजनः सएवद्रव रूपेणगंगांभोनात्रसंशयइति तयावप्रवेगेन मेरुप्राकारात् पतनजनितबलेनखनंत्यासह्रदउत्पादितइतिसंबंधः २८ २९ ३० रुवर्णवर्णाः गौराः ३१ निष्टसे तिपीतभास्वराइत्यर्थः ३२ ३३ अपरगंडिकाः अन्येगंधमादनस्यैवावयवभूताः बुद्बुदोपमाः क्षुद्रशैलाः गंडोभूषणबुद्बुदेइतिमेदिनी ३४ उत्पलवर्णेनआभा-

तुंबुरुर्नारदश्चैवविश्वावसुर्हहाहुहू अभिगम्यामरश्रेष्ठांस्तुष्टुवुर्विविधैस्तवैः १९ सप्तर्षयोमहात्मानः काश्यपश्चप्रजापतिः तत्रगच्छंति भद्रंतेसदापर्वणिपर्वणि २० तस्यैवमूर्द्ध्न्युशनाः काव्योदैत्यैर्महीपते हेमानितस्यरत्नानितस्यैमेरत्नपर्वताः २१ तस्मात्कुबेरोभग वांश्चतुर्थभागमश्नुते ततः कलांशंवित्तस्यमनुष्येभ्यः प्रयच्छति २२ पार्श्वेतस्योत्तरेदिव्यंसर्वतः कुसुमैश्चितम् कर्णिकारवनंरम्यं शिलाजालसमुद्गतम् २३ तत्रसाक्षात्पशुपतिर्दिव्यैर्भूतैः समावृतः उमासहायोभगवान्रमतेभूतभावनः २४ कर्णिकारमयींमालांबि भ्रत्पादावलंबिनीम् त्रिभिर्नेत्रैः कृतोद्योतस्त्रिभिः सूर्यैरिवोदितैः २५ तमुग्रतपसः सिद्धाः सुव्रताः सत्यवादिनः पश्यंतिनहिदुर्वृत्तैः श क्योद्रष्टुंमहेश्वरः २६ तस्यशैलस्यशिखरात्क्षीरधारानरेश्वर विश्वरूपापरिमिताभीमनिर्घातनिस्वना २७ पुण्यापुण्यतमैर्जुष्टागंगा भागीरथीशुभा प्लवंतीवप्रवेगेनह्रदेचंद्रमसः शुभे तयाह्युत्पादितः पुण्यः सह्रदः सागरोपमः २८ तांधारयामासतदादुर्धरांपर्वतैरपि शतंवर्षसहस्राणांशिरसैवपिनाकधृक् २९ मेरोस्तुपश्चिमेपार्श्वेकेतुमालोमहीपते जंबूखंडेतुतत्रैवमहाजनपदोनृप ३० आयुर्द शसहस्राणिवर्षाणांतत्रभारत सुवर्णवर्णाश्चनराः स्त्रियश्चाप्सरसोपमाः ३१ अनामयावीतशोकानित्यंमुदितमानसाः जायंतेमा नवास्तत्रनिष्टप्तकनकप्रभाः ३२ गंधमादनशृंगेषुकुबेरः सहराक्षसैः संवृतोप्सरसांसंघैर्मोदतेगुह्यकाधिपः ३३ गंधमादनपार्श्वेतुपरेत्वपर गंडिकाः एकादशसहस्राणिवर्षाणांपरमायुषः ३४ तत्रहृष्टानराराजंस्तेजोयुक्तामहाबलाः स्त्रियश्चोत्पलवर्णाभाः सर्वाः सुप्रियद र्शनाः ३५ नीलात्परतरंश्वेतंश्वेताद्धैरण्यकंपरम् वर्षमैरावतंराजन्नानाजनपदावृतम् ३६

तिताउत्पलवर्णाभाः ३५ नीलात्परतरमिति नीलोत्पलधरमित्यपिपाठः एवंहिमवतोदक्षिणेभरतवर्षंतदुत्तरेहैमवतंवर्षंहेमकूटादुत्तरेहरिवर्षम् निषधादुत्तरेनीलाच्चदक्षिणेमेरोः परितइलावृतमेकमेव चतुर्थवर्षम् अत्रैवकेचिद्भद्राश्वकेतुमालयोर्वर्षांतरत्वंप्रकल्प्यनववर्षाणीत्याचक्षते ततोनीलात्पर्वतात् उत्तरतः श्वेतंपंचमंवर्षंश्वेतात्पर्वतादुत्तरतोहैरण्य कंवर्षंषष्ठंततः शृंगवत्पर्वतात् ऐरावतंसप्तमंवर्षम् ३६ ६२ ६५ ६७ ६८ ६१

धनुःसंस्थेधनुष्कोटीसंस्थाशब्दः समासिवचनः संनिष्ठतेग्निहोत्रमित्यादिप्रयोगदर्शनात् तेनमिश्रितधनुःकोटिद्वयाकारे इत्यार्थः शार्ङस्यहिधनुषोद्वेकोटी एकीकृतेमध्येकिंचिन्नतंत्रिकोणंभवति अतएवरामसेतोधनुष्कोटिशब्देनैवरत्नाकरमहोदध्याख्यसमुद्रद्वयसंगमप्रदेशोव्यवह्रियते एवमाकारंदक्षिणेभरतवर्षंउत्तरे ऐरावतंच मध्येपंचेतिसप्तवर्षाणि ३७ ३८ समन्वितानिभिन्नभावेनसंगतानि ३९ हेमेतिहेमकूटएवकैलासः तस्योत्तरेमैनाकः तस्योत्तरतोहिरण्यशृंगः एतयोरंतरालेबिंदुसरोस्तीतिश्लोकत्रयार्थः ४० ४१ ४२ ४३ भूतपतिः रुद्रः ४४ ४५ पावनीसरस्वतीत्येका ४६ प्रभोरीश्वरस्यएषसप्तनद्यात्मकःसं

धनुःसंस्थेमहाराजद्वेवर्षेदक्षिणोत्तरे इलावृतंमध्यमंतुपंचवर्षाणिचैवहि ३७ उत्तरोत्तरमेतेभ्योवर्षमुद्रिच्यतेगुणैः आयुःप्रमाणमारोग्यंधर्मतःकामतोर्थतः ३८ समन्वितानिभूतानितेषुसर्वाणिभारत एवमेषामहाराजपर्वतैःपृथिवीचिता ३९ हेमकूटस्तुसुमहान् कैलासोनामपर्वतः यत्रवैश्रवणोराजन्गुह्यकैःसहमोदते ४० अस्त्युत्तरेणकैलासंमैनाकंपर्वतंप्रति हिरण्यशृंगःसुमहान्दिव्योमणिमयोगिरिः ४१ तस्यपार्श्वेमहद्दिव्यंशुभ्रंकांचनवालुकम् रम्यंबिंदुसरोनामयत्रराजाभगीरथः ४२ दृष्ट्वाभागीरथींगंगामुवासबहुलाःसमाः यूपामणिमयास्तत्रचैत्याश्चापिहिरण्मयाः तत्रेष्ट्वातुगतःसिद्धिंसहस्राक्षोमहायशाः ४३ स्रष्टाभूतपतिर्यत्रसर्वलोकैःसनातनः उपास्यतेतिग्मतेजायत्रभूतैःसमंततः ४४ नरनारायणौब्रह्मामनुःस्थाणुश्चपंचमः तत्रदिव्यात्रिपथगाप्रथमंतुप्रतिष्ठिता ४५ ब्रह्मलोकादपक्रांतासप्तधाप्रतिपद्यते वस्वोकसारानलिनीपावनीचसरस्वती ४६ जंबूनदीचशीताचगंगासिंधुश्चसप्तमी अचिंत्यादिव्यसंकाशाप्रभोरेषैवसंविधिः ४७ उपासतेयत्रशक्रंसहस्रयुगपर्यये दृश्यादृश्याचभवतितत्रतत्रसरस्वती ४८ एतादिव्याःसप्तगंगास्त्रिषुलोकेषुविश्रुताः रक्षांसिवैहिमवतिहेमकूटेतुगुह्यकाः ४९ सर्पानागाश्चनिषधेगोकर्णेचतपोधनाः ५० देवासुराणांसर्वेषांश्वेतःपर्वतउच्यते गंधर्वानिषधेनित्यंनीलेब्रह्मर्षयस्तथा ५१ शृंगवांस्तुमहाराजदेवानांप्रतिसंचरः इत्येतानिमहाराजसप्तवर्षाणिभागशः ५२ भूतान्युपनिविष्टानिगतिमंतिध्रुवाणिच तेषामृद्धिर्बहुविधादृश्यतेदैवमानुषी ५३

विधिः समीचीनंलोकोपकारार्थंविधानम्

एषैवेतिसंधिरार्षः कारुण्यात्परमेश्वरेणपावनाःपदार्थानिर्मिताइत्यर्थः ४७ ४८ ४९ ५० श्वेतःपर्वतः स्थानमितिशेषः गंधर्वावसंतीतिशेषः ५१ प्रतिसंचरःव्यवहारस्थानम् इतीति वर्षाणितत्रउपनिविष्टानिगतिमंतिजंगमानिध्रुवाणिस्थावराणिचसर्वाणिभूतान्येवसर्वंदृश्यंआश्रयाश्रितरूपंपांचभौतिकमेवेत्यर्थः ५२ ५३ ६ ६ ६ ६ ६ ६ ६

बुभूषता श्रेयः प्राप्तुमिच्छता श्रद्धेया अदृष्टेष्वर्थेषु श्रद्धावान्हि नत्प्राप्त्यर्थं चोदितानि कर्माणि करोति नत्वश्रद्दधान इत्यर्थः एवंभूतं संस्थानमुक्त्वा एतदेव परमात्मनः शरीरमिति चिंतनीयमित्याशयेनाह यांत्विति दिविमायाशबलेभवां दिव्यां मायिकीं शशस्य चिदात्मनः आकृतिं पिप्पलाख्यां ततो वक्ष्यसि पिप्पलमिति च पूर्वं त्वयैवोक्तत्वात् इदानीं पृच्छसि अवसरं प्राप्य वक्ष्यसि वर्तमानसामीप्ये वर्तमानवन्निर्देशः तामहं त्वया पृष्टामपि वक्ष्यामीति शेषः ५४ तामेवाह पार्श्वे इति भक्तस्यान्नादेः संग्रहस्थानं पार्श्वद्वयं यथा एवं कर्मसंचयस्थानं भरतवर्षं एकं परमेश्वरस्य दक्षिणपार्श्वत्वेन ज्ञेयं तथा ऐरावतवर्षमपि योगसंचयस्थानं उत्तरपार्श्वत्वेन ज्ञेयं तत्र हि ब्रह्मलोकच्युता योगभ्रष्टाः विदेहप्रकृतिलयाख्या एव जायंते ते च पूर्वसंस्कारात् पुनर्योगमभ्यस्यंति भरतवर्षे तु कर्मयोर्द्वयोरप्यनुष्ठानाय योग्यमिति दक्षिणकुक्षित्वेनाभ्यर्हितत्वमस्य सूचितं यथा लौकिके शशशरीरे कर्णौ अत्यकच्छिद्रं स्थानं तत्तुल्यौ परमेश्वरशरीरे नागद्वीपकाश्यपद्वीपौ क्रमेण दक्षिणोत्तरौ अर्चिरादिमार्गप्राप्यः सत्यलोकः योगिप्राप्यः धूमादिमार्गप्राप्यो देवलोकः कर्मभिः प्राप्यश्च विश्वकोशे नागे तु सीसके रंगे इत्युपक्रम्य श्रेष्ठे स्यादुत्तरस्थित इति सर्वोपरिस्थे श्रेष्ठे हिरण्यगर्भे नागशब्दप्रयोगदर्शनात्तस्य द्वीप इव द्वीपो लोकः इतरैरगम्य इति नागद्वीपः सत्यलोकः तथा कश्यं मद्यं स्फुरत्सोमादिरूपं मादकं क्रतौ ये-

अशक्यापरिसंख्यातुंश्रद्धेयातुबुभूषता यांतुपृच्छसिमांराजन्दिव्यामेतांशशाकृतिम् ५४ पार्श्वेशशस्यद्वेवर्षेउक्तेयेदक्षिणोत्तरे कर्णौतुनागद्वीपश्चकाश्यपद्वीपएवच ५५ ताम्रपर्णशिलोराजन्श्रीमान्मलयपर्वतः एतद्द्वितीयंद्वीपस्य दृश्यते-शशसंस्थितम् ५६ इतिश्रीमन्महाभारतेभीष्मपर्वणि षष्ठोऽध्यायः ६ ६ ६ ६

पिबंति ते कश्यपाः कर्मिणः तेषामयं काश्यपद्वीपः स्वर्गः एवं शशस्य कुक्षिकर्णानुसारेण ये ब्रह्मांडे उच्चप्रदेशास्ते कुक्ष्युपरिभागत्वेन ये चाधःप्रदेशास्ते कुक्षेरधोभागत्वेन च कल्पनीयाः तथा च श्रुतिः अग्निर्मूर्धा चक्षुषी चंद्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतांतरात्मेति अत्रापि चंद्रसूर्यपदेन कृष्णशुक्लमार्गावेव गृह्येते दिक्शब्देन च तत्प्राप्यौ शशकर्णस्थानीयौ देशभेदाविति ज्ञेयम् ५५ एवं शशस्य मायिकं बाह्यं प्रथमं रूपमुक्त्वा तद्वासनोत्थं द्वितीयमांतरं रूपमाह ताम्रेति रंजनात्मकत्वात् रक्तं रजस्ताम्रशब्दितं तत्प्रधानं मनो पिताम्रमेव तन्मयानि पर्णोपलक्षितानि वस्त्रान्नफलपुष्पादीनि शिलोपलक्षितानि हर्म्यादीनि च यत्रासौ ताम्रपर्णशिलः अत एव श्रीमान् मलयपर्वतः आरामेषु पर्वत इव उच्छ्रितः श्रेष्ठतम आराम इत्यर्थः मलयो देश आराम इति विश्वः आराममस्य पश्यंति न तं पश्यति कश्चनेति बृहदारण्यकषष्ठे प्राप्तप्रपंचे आरामपदप्रयोगदर्शनात् एतत् मलयरूपं द्वीपस्य जंबूखंडस्य द्वितीयं वासनामयं शशसंस्थितं शशरूपम् एतेन द्वावेव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चेति श्रुतिप्रसिद्धे स्थूलसूक्ष्मे परमेश्वरस्य द्वे रूपे चिंत्यत्वेन दर्शिते ते उभे धृतराष्ट्रेणापि चिंतनीये-
इति वक्तुराशयः ५६ इतिश्रीभा॰ भी॰ प॰ ६

एवमुक्तेपिध्यानमार्गेचित्तदोषेणानधिकारात् कर्मप्राप्यान्येवस्वर्गच्युतानांस्थानानिएच्छनिमेरोरिति १ २ मधुफलाः स्वादुफलाः ३ ४ ५ ६ शुक्लाभि
जनोविष्णुभक्तजनस्तेनसंपन्नास्तत्संगिनः ७ ८ ९ चक्रवाकोसहचरोपक्षिदंपती १० जहतिसममेवद्वावपिशरीरंत्यजनइत्यर्थः ११ १२ १३

धृतराष्ट्रउवाच मेरोरथोत्तरंपार्श्वंपूर्वंचाचक्ष्वसंजय निखिलेनमहाबुद्धेमाल्यवंतंचपर्वतम् १ संजयउवा० दक्षिणेनतुनील
स्यमेरोःपार्श्वेतथोत्तरे उत्तराःकुरवोराजन्पुण्याःसिद्धनिषेविताः २ तत्रवृक्षामधुफलानित्यपुष्पफलोपगाः पुष्पाणिचसुगंधीनि
रसवंतिफलानिच ३ सर्वकामफलास्तत्रकेचिद्वृक्षाजनाधिप अपरेक्षीरिणोनामवृक्षास्तत्रनराधिप ४ येक्षरंतिसदाक्षीरंषड्रसं-
चामृतोपमम् वस्त्राणिचप्रसूयंतेफलेष्वाभरणानिच ५ सर्वामणिमयीभूमिःसूक्ष्मकांचनवालुका सर्वर्तुसुखसंस्पर्शानिष्पंका
चजनाधिप ६ देवलोकच्युताःसर्वेजायंतेतत्रमानवाः शुक्लाभिजनसंपन्नाःसर्वेसुप्रियदर्शनाः ७ मिथुनानिचजायंतेस्त्रियश्चा-
प्सरसोपमाः तेषांतेक्षीरिणांक्षीरंपिबंत्यमृतसन्निभम् ८ मिथुनंजायतेकालेसमंतच्चप्रवर्द्धते तुल्यरूपगुणोपेतंसमवेषंतथैव-
च ९ एवमेवानुरूपंचचक्रवाकसमंविभो निरामयाश्चतेलोकानित्यंमुदितमानसाः १० दशवर्षसहस्राणिदशवर्षशतानिच जीवंति
तेमहाराजनचान्योन्यंजहत्युत ११ भारुंडानामशकुनास्तीक्ष्णतुंडामहाबलाः तान्निर्हरंतीहमृतान्दरीषुप्रक्षिपंतिच १२ उत्तराः
कुरवोराजन्व्याख्यातास्तेसमासतः मेरोःपार्श्वमहंपूर्वंवक्ष्याम्यथयथातथा १३ तस्यमूर्धाभिषेकस्तुभद्राश्वस्यविशांपते भद्रशाल
वनंयत्रकालाम्रश्चमहाद्रुमः १४ कालाम्रस्तुमहाराजनित्यपुष्पफलःशुभः द्रुमश्चयोजनोत्सेधःसिद्धचारणसेवितः १५ यत्रतेपु
रुषाःश्वेतास्तेजोयुक्तामहाबलाः स्त्रियःकुमुदवर्णाश्चसुंदर्यःप्रियदर्शनाः १६ चंद्रप्रभाश्चंद्रवर्णाःपूर्णचंद्रनिभाननाः चंद्रशीत
लगात्र्यश्चनृत्यगीतविशारदाः १७ दशवर्षसहस्राणितत्रायुर्भरतर्षभ कालाम्ररसपीतास्तेनित्यंसंस्थितयौवनाः १८ दक्षिणेनतुनी
लस्यनिषधस्योत्तरेणतु सुदर्शनोनाममहान्जंबूवृक्षःसनातनः १९ सर्वकामफलःपुण्यःसिद्धचारणसेवितः तस्यनाम्नासमाख्या
तोजंबुद्वीपःसनातनः २० योजनानांसहस्रंचशतंचभरतर्षभ उत्सेधोवृक्षराजस्यदिवस्पृङ्मनुजेश्वर २१ ध्र ध्र

मूर्धाभिषेकोमूर्धाभिषिक्तंमुख्यमितियावत् १४ १५ १६ १७ १८ १९ २० योजनानामितिअत्राप्येकादशशत्या
धिकोंशः पंचपंचाशत् २१ ध्र ध्र ध्र ध्र ध्र ध्र ध्र ध्र

एवंसतिसार्धसहस्रद्वयमरत्नीनांतस्यपरिणाहोयत्रतत्रसपादशतंअरत्नयः फलपरिणाहः युज्यते रसभेदिनांकर्कटीफलवत्पक्कतादशायांभेदशीलानाम्
२२ २३ २४ २५ २६ २७ गंडिकाक्षुद्रपर्वतः पंचषट्पंचाधिकाःषट्एकादशेत्यर्थः २८ महारजतंकांचनंतत्संकाशाः ब्रह्मलोकेति ये
इतः कर्मणाब्रह्मलोकंगतास्तेनतश्च्युताः संतोमाल्यवतिपर्वतेजन्मलब्ध्वाभूतानांरक्षणार्थंतपस्तप्त्वादिवाकरंप्रविशंतेतत्सामीप्यंप्राप्नुवंति २९ ३० ३१ तत्रापि
आदित्यलोकेनकृत्स्नंविराट्पुरुषंबहुकालमुपास्यचंद्रंमनसोऽधिष्ठातारंप्रविशंतिसूत्रात्मभावंप्राप्नुवंतीत्यर्थः ३२ इतिश्रीमन्महाभारतेभीष्मपर्वणि

अरत्नीनांसहस्रंचशतानिदशपंचच परिणाहस्तुवृक्षस्यफलानांरसभेदिनाम् २२ पतमानानितान्यूर्व्यांकुर्वंतिविपुलंस्वनम् मुं-
चंतिचरसंराजंस्तस्मिन्रजतसन्निभम् २३ तस्याजंब्वाःफलरसोनदीभूत्वाजनाधिप मेरुंप्रदक्षिणंकृत्वासंप्रयात्युत्तरान्कुरू-
न् २४ तत्रतेषांमनःशांतिर्नपिपासाजनाधिप तस्मिन्फलरसेपीतेनजराबाधतेचतान् २५ तत्रजांबूनदंनामकनकंदेवभूषणम्
इंद्रगोपकसंकाशंजायतेभास्वरंतुतत् २६ तरुणादित्यवर्णाश्चजायंतेतत्रमानवाः तथामाल्यवतःशृंगेदृश्यतेहव्यवाट्सदा ना-
म्नासंवर्तकोनामकालाग्निर्भरतर्षभ २७ तथामाल्यवतःशृंगेपूर्वपूर्वानुगंडिका योजनानांसहस्राणिपंचषण्माल्यवान्नृप २८ महार
जतसंकाशाजायंतेतत्रमानवाः ब्रह्मलोकच्युताःसर्वेसर्वेसर्वेषुसाधवः २९ तपस्तप्यंतितेतीव्रंभवंतिह्यूर्ध्वरेतसः रक्षणार्थंतुभूता
नांप्रविशंतिदिवाकरम् ३० षष्टिस्तानिसहस्राणिषष्टिरेवशतानिच अरुणस्याग्रतोयांतिपरिवार्यदिवाकरम् ३१ षष्टिवर्षसह-
स्राणिषष्टिमेवशतानिच आदित्यतापनप्तास्तेविशंतिशशिमंडलम् ३२ इतिश्रीमन्महाभारतेभीष्मपर्वणिसंहितायांसप्तमो
ध्यायः ७ धृतराष्ट्रउवाच वर्षाणांचत्वयाख्यातंपर्वतानांचसंजय आचक्ष्वमेयथातत्त्वंयेचपर्वतवासिनः १ दक्षिणेन-
तुश्वेतस्यनिषेधस्योत्तरेणतु वर्षंरमणकंनामजायंतेतत्रमानवाः २ शुक्लाभिजनसंपन्नाःसर्वेसुप्रियदर्शनाः निःसपत्नाश्चतेस-
र्वेजायंतेतत्रमानवाः ३ दक्षिणेनतुनीलस्यनिषेधस्योत्तरेणतु वर्षंहिरण्मयंनामयत्रहैरण्वतीनदी ४ यत्रचायंमहाराजपक्षिराट्
पतगोत्तमः यक्षानुगामहाराजधनिनःप्रियदर्शनाः ५ महाबलास्तत्रजनाराजन्मुदितमानसाः दशवर्षसहस्राणिशतानिदशपं
चच ६

टीकायांसप्तमोऽध्यायः ७ वर्षाणाम् १ दक्षिणेनत्विति यद्यपिश्वेतस्यदक्षिणेनीलः तस्यदक्षिणेनिषधस्तथापिनिषधोत्तरत्वम-
स्येवेत्यविरोधः रमणकंयत्पूर्वंनीलादुत्तरतः श्वेताद्दक्षिणतश्चश्वेतवर्षमित्युक्तंतस्यैवरमणकमितिसंज्ञांतरं दक्षिणेनतुनीलस्यनीलमाल्यवतोर्नीलगं
धमादनयोश्चसंधावित्यर्थः निषधस्योत्तरेणतथैवतयोरेवसंधिद्वयइत्यर्थः २ ३ ४ ५ ६ ७ ८ ९

७ शृंगाणिशृंगवतः षष्ठस्यवर्षपर्वतस्यसानूनि ८ ९ शृंगस्यशृंगवतः शृंगं शृंगवत् यस्मात्सर्वधातुविचित्रश्चशृंगवान्नामपर्वतइत्युक्तमहिम्नापर्वतेनपरि-
च्छिन्नंइदंऐरावताख्यंवर्षंतस्मात् अतः पूर्वोक्ताद्वर्षगणात् परंश्रेष्ठमिदंवर्षमित्यर्थः १० एतदेवाहनतत्रेत्यादिना ११ १२ अनिष्यंदाअस्वेदाः देवतुल्याइत्यर्थः
१३ १४ आदित्यतापतप्तास्तेविशंतिशशिमंडलमितिविराड्भावंत्यक्त्वासूत्रात्मभावंगच्छंतीत्युक्तंस्थूलसूक्ष्मरूपंकार्यद्वयं इदानींपिप्पलंतुवदिष्यसीत्युक्तःसं
जयोवसरंप्राप्यपिप्पलाख्यंकारणमप्याहक्षीरोदस्येति तत्राधिदैवंलवणेक्षुरसासर्पिदधिक्षीरशुद्धोदकानांसप्तसमुद्राणामुपान्त्यः क्षीरोदः अध्यात्मंअन्नमयः
कोशः आत्मा प्राणमयस्तुइं द्रियमयप्राणमयभेदेनद्विविधइतिद्वौचतुर्थोमनोमयः पंचमोविज्ञानमयः षष्ठआनंदमयः सर्वकारणभूतः सप्तमः शुद्धंब्रह्मेति त-
त्रक्षीरोदात्परतोमहाविष्णोर्जगज्जन्मादिहेतोः स्थानमस्तियदिदंदहराद्युपासकैः प्राप्यते यत्रारण्य श्चार्णवौयत्रप्रभुविमितंहिरण्मयंवेश्मयत्राश्वत्थः सोमवस

जीवंतितेमहाराजनित्यंमुदितमानसाः एकादशसहस्राणिवर्षाणांतेजनाधिप ७ आयुःप्रमाणंजीवंतिशतानिदशपंचच शृंगाणिच
विचित्राणित्रीण्येवमनुजाधिप ८ एकंमणिमयंतत्रयथैकंरौक्ममद्भुतम् सर्वरत्नमयंचैकंभवनैरुपशोभितम् तत्रस्वयंप्रभादेवीनित्यं
वसतिशांडिली ९ उत्तरेणतुशृंगस्यसमुद्रांतेजनाधिप वर्षमैरावतंनामतस्मात्शृंगवतःपरम् १० नतत्रसूर्यस्तपतिनजीर्यंतेचमानवाः
चंद्रमाश्चसनक्षत्रोज्योतिर्भूतइवावृतः ११ पद्मप्रभाःपद्मवर्णाःपद्मपत्रनिभेक्षणाः पद्मपत्रसुगंधाश्चजायंतेतत्रमानवाः १२ अनिष्पं
दाइष्टगंधानिराहाराजितेंद्रियाः देवलोकच्युताःसर्वेतथाविरजसोनृप १३ त्रयोदशसहस्राणिवर्षाणांतेजनाधिप आयुःप्रमाणंजीवं
तिनराभरतसत्तम १४ क्षीरोदस्यसमुद्रस्यतथैवोत्तरतःप्रभुः हरिर्वसतिवैकुंठःशकटेकनकामये १५ अष्टचक्रंहितद्यानंभूतयुक्तंम-
नोजवम् अग्निवर्णंमहातेजोजांबूनदविभूषितम् १६

नइत्यादिचिह्नमुक्तंश्रुतिप्रसिद्धं सप्रभुरंतर्यामीहरिः सर्वसंहर्तावैकुंठोऽकुंठितसामर्थ्यः शकटेशा-
कटवदचेतनेकनकामयेकनकवद्भास्वरज्योतिर्मयेअन्योभ्योपिदृश्यतइतिदीर्घः चिन्मयेशरीरेवसति १५ अस्यवस्तुवृत्यायद्यपिचिन्मयत्वंतथापिहिलोकप्रसिद्धं
अष्टचक्रंअष्टाभिर्भगवत्तनुभिः उह्यतइतिअष्टचक्रंयानंइहलोकपरलोकगतिसाधनंअष्टौचक्राणितुकर्मेंद्रियपंचकंज्ञानेंद्रियपंचकंमनआदिचतुष्कंप्राणपंचकंसूक्ष्मभूतपंचकं
अविद्याकामः कर्मचेतिपुर्यष्टकात्मकंलिंगंशकटवदचेतनमचलमपिभूतयुक्तंभूतेननित्यासिद्धेनब्रह्मणाअनुप्रविष्टंसत्मनोजवंशीघ्रगंभवतिप्राणनादिक्रियाः करो-
तीत्यर्थः अतएवश्रूयतेकोह्येवान्यात्कः प्राण्यात्यदेषआकाशआनंदोनस्यादिति अग्निवर्णंअग्निवत् वर्णोवर्णनायस्यअत्यंतसंसारदुःखप्रदमित्यर्थः महातेजः
अनेकविधज्ञानेंद्रियप्रधानंजांबूनदंदिव्यसुवर्णंचेतोहरणंवासनाजालंतेनविभूषितंतन्मयमित्यर्थः अधिदैवंतुस्पष्टएवार्थः १६ ५२ ५२ ५२

सप्रभुरितियोस्मिन् शकटेवसतिसएवसर्वेषांजीवानांप्रभुर्नियंताविभुर्व्यापकः संक्षेपः संहर्ताविस्तरः सम्यक्विस्वयिताकर्ताजीवरूपेणकारयिताईश्वररूपेण १७ एवमध्यात्माधिदैवरूपत्वमुक्त्वाधिभूताधियज्ञरूपत्वमिति तस्येवाहपृथिवीति सर्वेषांभूतानांसंबंधीयथाधिकारंनिर्वर्त्योयज्ञः सएव आस्यंतस्यहुताशनः विशेषतस्तुसयज्ञेनैवतृप्य तीतिभावः १८ एवंसंजयेनउक्तउपदिष्टोधृतराष्ट्रोमहामनाः महत्पिप्पलापरपर्यायविश्वरूपदर्शनयोग्यंमनोयस्यसतथाभूतोध्यानं सविकल्पसमाधिंअन्वगमत् संजयवाक्यश्रवणमनुप्राप्तवान् १९ तत्रचयथाऽर्जुनेनविश्वरूपदर्शनकालेभावीक्षत्रक्षयोदृष्टस्तद्वत्सोपिनरनारायणाभ्यांक्रियमाणंसर्वक्षत्रक्षयंदृष्ट्वास्वपुत्रान्प्रतिविचिंत्यपुनरेवाब्रवीत् तदेववचनमाहअसंशयमिति २० इहलोकेत्वदुक्तेजंबूखंडेशाश्वतंशश्वद्ध्रुवंमेर्वादिकमपिनास्तिकिंतु

सप्रभुःसर्वभूतानांविभुश्चभरतर्षभ संक्षेपोविस्तरश्चैवकर्ताकारयितातथा १७ पृथिव्यापस्तथाकाशंवायुस्तेजश्चपार्थिव सयज्ञःसर्वभूतानामास्यंतस्यहुताशनः १८ वैशंपायनउवाच एवमुक्तःसंजयेनधृतराष्ट्रोमहामनाः ध्यानमन्वगमद्राजापुत्रान्प्रतिजनाधिप १९ सविचिंत्यमहातेजाःपुनरेवाब्रवीद्वचः असंशयंसूतपुत्रकालःसंक्षिपतेजगत् २० सृजतेचपुनःसर्वंनेहविद्यतिशाश्वतं नरोनारायणश्चैवसर्वज्ञःसर्वभूतहृत् देवावैकुंठमित्याहुर्नराविष्णुमितिप्रभुम् २१ इतिश्रीमन्महाभारतेभीष्मपर्वणिजंबूखंडनिर्माणेअष्टमोऽध्यायः ८ धृतराष्ट्रउवाच यदिदंभारतंवर्षंयत्रेदंमूर्छितंबलम् तत्रातिमात्रलुब्धोयंपुत्रोदुर्योधनोमम १ यत्रगृद्धाःपांडुपुत्रायत्रमेसज्जतेमनः एतन्मेतत्त्वमाचक्ष्वत्वंहिमेबुद्धिमान्मतः २ संजयउवाच नतत्रपांडवागृद्धाः शृणुराजन्वचोमम गृद्धोदुर्योधनस्तत्रशकुनिश्चापिसौबलः ३ अपरेक्षत्रियाश्चैवनानाजनपदेश्वराः येगृध्राभारतेवर्षेनमृष्यंतिपरस्परम् ४ अत्रतेकीर्तयिष्यामिवर्षंभारतभारतं प्रियमिंद्रस्यदेवस्यमनोर्वैवस्वतस्यच ५ पृथोश्चराजन्वैन्यस्यतथेक्ष्वाकोर्महात्मनः ययातेरंबरीषस्यशिवेरौशीनरस्यच ६ ऋषभस्यतथैलस्यनृगस्यनृपतेस्तथा कुशिकस्यचदुर्धर्षगाधेश्चैवमहात्मनः ७ सोमकस्यचदुर्धर्षदिलीपस्यतथैवच अन्येषांचमहाराजक्षत्रियाणांबलीयसां ८

सर्वंदृष्टनष्टस्वभावंसंकल्पमात्रोत्थं किंतर्हिशाश्वतमस्तिनरोनारायणश्चेतिजीवेश्वरावेवशाश्वतौनेत्याहउभयंमिलित्वाएकएवसर्वज्ञःसर्वभूतकृद्हृच्च तमेवेश्वरंदेवावैकुंठंआहुः अधिदैवं सएववैकुंठाधिपतिरित्युच्यतइत्यर्थः नराजीवास्तुतमेवविष्णुं अध्यात्मंअंतःप्रविष्टंजनानांशास्तारंअष्टचक्रस्यशकटस्यचालकंआहुः तथापिप्रभुंकृत्वापिलेपशून्यंअतईश्वरस्यचिकीर्षितः क्षत्रक्षयोनास्मद्दोषजइतिभावः २१ इतिभीष्मपर्वणिटी॰अष्ट॰यः ८ यदिदं १ गृद्धाःलोभयुक्ताः एतत् एतस्यमेमह्यंतत्त्वंयथार्थं २ ३ ४ प्रियमितिकर्मभूमित्वादिंद्रादीनामिदंप्रियं ५ ६ अग्रेस्पष्टार्थोग्रंथः ७ ८ ६९

९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०

सर्वेषामेवराजेंद्रप्रियंभारतभारतम् तत्तेवर्षंप्रवक्ष्यामियथायथमरिंदम श्रृणुमेगदतोराजन्यन्मांत्वंपरिपृच्छसि ९ महेंद्रोमल-
यःसह्यःशक्तिवानृक्षवानपि विंध्यश्चपारियात्रश्चसप्तैतेकुलपर्वताः १० तेषांसहस्रशोराजन्पर्वतास्तेसमीपतः अविज्ञाताःसा-
रवंतोविपुलाश्चित्रसानवः ११ अन्येततोपरिज्ञाताह्रस्वाह्रस्वोपजीविनः आर्याम्लेंच्छाश्चकौरव्यतैर्मिश्राःपुरुषाविभो १२ नदींपि
बंतिविपुलांगंगांसिंधुंसरस्वतीम् गोदावरींनर्मदांचबाहुदांचमहानदीम् १३ शतद्रुंचंद्रभागांचयमुनांचमहानदीम् दृषद्वतींविपा-
शांचविपापांस्थूलवालुकाम् १४ नदींवेत्रवतींचैवकृष्णावेणींचनिम्नगाम् इरावतींवितस्तांचपयोष्णींदेविकामपि १५ वेदस्मृतां
वेदवतींत्रिदिवामिक्षुलांकृमिम् करीषिणींचित्रवाहांचित्रसेनांचनिम्नगाम् १६ गोमतींधूतपापांचगंडकींचमहानदीम् कौशिकीं
त्रिदिवांकृत्यांनिचितांलोहतारिणीम् १७ रहस्यांशतकुंभांचशरयूंचतथैवच चर्मण्वतींवेत्रवतींहस्तिसोमांदिशंतथा १८ शराव-
तींपयोष्णींचवेणांभीमरथीमपि कावेरींचुलुकांचापिवाणींशतबलीमपि १९ नीवारांमहितांचापिसुप्रयोगांजनाधिप पवित्रांकुं-
डलींसिंधुंराजनींपुरमालिनीम् २० पूर्वाभिरामांवीरांचभीमामोघवतींतथा पाशाशिनींपापहरांमहेंद्रांपाटलावतीम् २१ करी
षिणीमसिक्नींचकुशचीरांमहानदीम् मकरींप्रवरांमेनांहेमांघृतवतींतथा २२ पुरावतीमनुष्णांचशैव्यांकापींचभारत सदानीरा
मधृष्यांचकुशधारांमहानदीम् २३ सदाकांतांशिवांचैवतथावीरवतीमपि वस्त्रांसुवस्त्रांगौरींचकंपनांसहिरण्वतीम् वरांवीरक
रंभांचापिपंचमींचमहानदीम् २४ रथचित्रांज्योतिरथांविश्वामित्रांकपिंजलाम् उपेंद्रांबहुलांचैवकुवीरामंबुवाहिनीम् २५ विनदीं
पिंजलांवेणांतुंगवेणांमहानदीम् विदिशांकृष्णवेणांचताम्रांचकपिलामपि २६ खलुंसुवामांवेदाश्वांहरिश्रावांमहोपमाम् शीघ्रांच
पिच्छलांचैवभारद्वाजींचनिम्नगाम् २७ कौशिकींनिम्नगांशोणांबाहुदामथचंद्रमाम् दुर्गामंत्रशिलांचैवब्रह्मबोध्यांबृहद्वतीम् २८
यवक्षामथरोहींचतथाजांबूनदीमपि सुनसांतमसांदासींवसांचवरुणामसीम् २९ नीलांधृतिमतींचैवपर्णाशांचमहानदीम् मान
वींवृषभांचैवब्रह्ममेध्यांबृहद्वतीम् ३० एताश्चान्याश्चबहुधामहानद्योजनाधिप सदानिरामयांकृष्णांमंदगांमंदवाहिनीम् ३१

२१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२

ब्राह्मणींचमहागौरींदुर्गामपिचभारत चित्रोपलांचित्ररथांमंजुलांवाहिनींतथा ३२ मंदाकिनींवैतरिणींकोशांचापिमहानदीम् शुक्तिम-
तीमनिंगांचपुष्पवेण्युत्पलावती ३३ लोहित्यांकरतोयांचतथैववृषकाह्वयाम् कुमारीमृषिकूल्यांचमारिषांचसरस्वतीम् ३४ मंदाकि-
नींसुपुण्यांचसर्वांगंगांचभारत विश्वस्यमातरःसर्वाःसर्वाश्चैवमहाफलाः ३५ तथानद्यस्त्वप्रकाशाःशतशोथसहस्रशः इत्येताःस
रितोराजन्समाख्यातायथास्मृति ३६ अतऊर्ध्वंजनपदान्निबोधगदतोमम तत्रेमेकुरुपांचालाःशाल्वामाद्रेयजांगलाः ३७ शूरसे-
नाःपुलिंदाश्चबोधामालास्तथैवच मत्स्याःकुशाद्याःसौशल्याःकुंतयःकांतिकोशलाः ३८ चेदिमत्स्यकरूषाश्चभोजाःसिंधुपुलिंदकाः
उत्तमाश्चदशार्णाश्चमेकलाश्चोत्कलैःसह ३९ पांचालाःकोशलाश्चैवनैकपृष्ठाधुरंधराः बोधामद्रकलिंदाश्चकाशयोपरकाशयः ४० ज
ठराःकुकुराश्चैवसदशार्णाश्चभारत कुंतयोवंतयश्चैवतथैवापरकुंतयः ४१ गोमंतामंदकाःखंडाविदर्भारूपवाहिकाः अश्वकाश्चोत्त
राश्चैवगोपराष्ट्राकरीतयः ४२ अधिराज्यकुशाद्यश्चमल्लराष्ट्रंचकेवलम् वारवास्यापवाहाश्चवक्रावक्रातयःशकाः ४३ विदेहामगधाः
स्वक्षामलयाविजयास्तथा अंगावंगाःकलिंगाश्चयकृल्लोमानएवच ४४ मल्लाःसुदेष्णाःप्रल्हादामाहिकाःशशिकास्तथा बाल्हीका
वाटधानाश्चआभीराःकालतोयकाः ४५ अपरांताःपरांताश्चपंचालाश्चर्ममंडलाः अटवीशिखराश्चैवमेरुभूताश्चमारिष ४६ उ
पावृत्तानुपावृत्ताःस्वराष्ट्राःकेकयास्तथा कुट्टापरांतामाहेयाःकक्षाःसामुद्रनिष्कुटाः ४७ अंधाश्चबहवोराजन्नंतर्गिर्यास्तथैवच
बहिर्गिर्यंगमलजामगधामानवर्जकाः ४८ मह्युत्तराःप्रावृषेया भार्गवाश्चजनाधिप पुंड्राल्भार्गाःकिराताश्चसुदेष्टायामुनास्तथा
४९ शकानिषादानिषधास्तथैवानर्तनैर्ऋताः दुर्गालाःप्रतिमत्स्याश्चकुंतलाःकुशलास्तथा ५० तीरग्रहाःशूरसेना ईजकाःकन्य
कागुणाः तिलभारासमीराश्चमधुमत्ताःसुकंदकाः ५१ काश्मीराःसिंधुसौवीरागांधारादर्शकास्तथा अभीसाराउलूताश्चशैव
लाबाल्हिकास्तथा ५२ दर्वीचवानवादर्वावातजामरथोरगाः बाहुवाद्याश्चकौरव्यसुदामानःसमुल्लिकाः ५३ बभ्राःकरीषका
श्चापिकुलिंदोपत्यकास्तथा वानायवादशार्णाश्चरोमाणःकुशबिंदवः ५४

५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५

६६ ६७ ६८ यथागुणबलमिति यथागुणांसत्वादिगुणान्अनतिक्रम्यतद्वत्यथाबलंशौर्यंवाऽनतिक्रम्यत्रिवर्गस्यधर्मार्थकामात्मकस्यमहाफलंउत्कृ-
ष्टफलंहैरण्यगर्भपदप्राप्त्यंतं सम्यगनुष्ठितासम्यक्पालिताभूमिर्दुह्येतप्रपूरयेत् धेनुरिवकामान्अन्यांश्चदुग्धेइतिकामधुक् ६९ गृध्यंतिअभिकांक्षांकुर्वंति

कच्छागोपालकक्षाश्चजांगलाःकुरुवर्णकाः किरातावर्बराःसिद्धावैदेहास्ताम्रलिप्तकाः ५५ औंड्रापौंड्राःसैसिकताःपार्वतीयाश्चमारि
ष अथापरेजनपदादक्षिणाभरतर्षभः ५६ द्राविडाःकेरलाःप्राच्याभूषिकावनवासिकाः कर्णाटकामाहिषकाविकल्पामूषकास्त
था ५७ जिल्लिकाःकुंतलाश्चैवसौहृदानभकाननाः कोकुट्टकास्तथाचोलाःकोंकणामालवानकाः ५८ समंगाःकारकाश्चैवकुकुरांगार
माषिषाः ध्वजिन्युत्सवसंकेतास्त्रिगर्ताःशाल्वसेनयः ५९ बकाःकोकबकाःप्रोष्ठाःसमवेगवशास्तथा तथैवविंध्यचुलिकाःपुलिंदाकल्क
लैःसह ६० मालवामल्लवाश्चैवतथैवापरवल्लभाः कुलिंदाःकालदाश्चैवकुंडलाकरटास्तथा ६१ मूषकास्तनवालाश्चसनीयाघटसृं-
जयाः अलिंदापाःशिवाटाश्चतनयाःसुनयास्तथा ६२ ऋषिकाविदर्भाःकाकास्तंगणाःपरतंगणाः उत्तराश्चापरेम्लेंच्छाःक्रूराभर
तसत्तम ६३ यवनाश्चीनकांबोजादारुणाम्लेंच्छजातयः सकृद्ग्राहाःकुलत्थाश्चहूणाःपारसिकैःसह ६४ तथैवरमणाश्चीनास्तथैव
दशमालिकाः क्षत्रियायोनिवेशाश्चवैश्यशूद्रकुलानिच ६५ शूद्राभीराश्चदरदाःकाश्मीराःपशुभिःसह खाशीराश्चांतचाराश्च
पल्हवागिरिगह्वराः ६६ आत्रेयाःसभरद्वाजास्तथैवस्तनपोषिकाः प्रोषकाश्चकलिंगाश्चकिरातानांचजातयः ६७ तोमराहंसमार्गाश्च
तथैवकरभंजकाः एतेचान्येजनपदाःप्राच्योदीच्यास्तथैवच ६८ उद्देशमात्रेणमयादेशाःसंकीर्तिताविभो यथागुणबलंचापित्रिव
र्गस्यमहाफलम् दुह्येनधेनुःकामधुक्भूमिःसम्यगनुष्ठिता ६९ तस्यांगृध्यंतिराजानःशूराधर्मार्थकोविदाः तेत्यजंत्याहवेप्राणान्व-
सुगृद्धास्तरस्विनः ७० देवमानुषकायानांकामंभूमिःपरायणम् अन्योन्यस्यावलुंपंतिसारमेयायथामिषम् ७१ राजन्याभरतश्रेष्ठ-
भोक्तुकामावसुंधराम् नचापितृप्तिःकामानांविद्यतेद्यापिकस्यचित् ७२ तस्मात्परिग्रहेभूमेर्यतंतेकुरुपांडवाः साम्नाभेदेनदानेन
दंडेनैवचभारत ७३

वसुगृध्नाः धनलुब्धाः ७० देवकायानांयज्ञेनमानुषकायानामन्नप्रसवेनभूमिःपरायणंशरणम् ७१ ७२ तस्मात्अतृ-
मत्वात् ७३

एवमधिलोकंभूमिजयफलमुक्तंअथाध्यात्मंभूमिजयफलमाहपितेति अच्छिद्रंसंपूर्णंदर्शनंयस्याःसाभूमिः योगमार्गरीत्याकात्स्न्येनदृष्टासतीपित्रादिवदिहभौतिके
भ्यः आघातेभ्यःपातिवज्रकायत्वंप्रयच्छतीत्यर्थः स्वंस्वस्थंसूर्यादीनांपदंद्यौःस्वर्गपदंचसैवभवतितत्प्रापयतीत्यर्थः ७४ इतिभारतेभीष्मपर्वणिटीकायांनव



पिताभ्राताचपुत्राश्चखंद्यौश्चनरपुंगव भूमिर्भवतिभूतानांसम्यगच्छिद्रदर्शना ७४ इतिश्रीमन्महाभारतेभीष्मपर्वणिनदीदेशा-
दिनामन्नवमोऽध्यायः ९ धृतराष्ट्रउवाच भारतस्यास्यवर्षस्यतथाहैमवतस्यच प्रमाणमायुषःसूतबलंचापिशुभाशुभं
१ अनागतमतिक्रांतंवर्तमानंचसंजय आचक्ष्वमेविस्तरेणहरिवर्षंतथैवच २ संजयउवाच चत्वारिभारतेवर्षेयुगानिभरत
र्षभ कृतंत्रेताद्वापरंचतिष्यंचकुरुवर्द्धन ३ पूर्वंकृतयुगंनामततस्त्रेतायुगंप्रभो संक्षेपाद्वापरस्याथततस्तिष्यंप्रवर्तते ४ चत्वारिच
सहस्राणिवर्षाणांकुरुसत्तम आयुःसंख्याकृतयुगेसंख्यातराजसत्तम ५ तथात्रीणिसहस्राणित्रेतायांमनुजाधिप द्विसहस्रेद्वा
परेतुभुवितिष्ठंतिसांप्रतम् ६ नप्रमाणस्थितिर्ह्यस्तितिष्येस्मिन्भरतर्षभ गर्भस्थाश्चम्रियंतेत्रतथाजाताम्रियंतिच ७ महाबलाम-
हासत्वाःप्रज्ञागुणसमन्विताः प्रजायंतेचजाताश्चशतशोथसहस्रशः ८ जाताःकृतयुगेराजन्धनिनःप्रियदर्शनाः प्रजायंतेच-
जाताश्चमुनयोवैतपोधनाः ९ महोत्साहामहात्मानोधार्मिकाःसत्यवादिनः प्रियदर्शनावपुष्मंतोमहावीर्याधनुर्धराः १० वरार्हा-
युधिजायंतेक्षत्रियाःशूरसत्तमाः त्रेतायांक्षत्रियाराजन्सर्वेवैचक्रवर्तिनः ११ आयुष्मंतोमहावीराधनुर्धरवरायुधि जायंतेक्षत्रि-
याःशूरास्त्रेतायांवशवर्तिनः १२ सर्ववर्णाश्चजायंतेसदाचैवंचद्वापरे महोत्साहावीर्यवंतःपरस्परजयैषिणः १३ तेजसाऽल्पेन
संयुक्ताःक्रोधनाःपुरुषानृप लुब्धाअनृतकाश्चैवतिष्येजायंतिभारत १४ ईर्ष्यामानस्तथाक्रोधोमायासूयातथैवच तिष्येभव-
तिभूतानांरागोलोभश्चभारत १५ संक्षेपोवर्ततेराजन्द्वापरेस्मिन्नराधिप गुणोत्तरंहैमवतंहरिवर्षंततथैवच १६ इतिश्री
मन्महाभारतेभीष्मपर्वणिजंबूखंडवर्णनेदशमोध्यायः १० धृतराष्ट्रउवाच जंबूखंडस्त्वयाप्रोक्तोयथावदिहसंजय
विष्कंभमस्यप्रब्रूहिपरिमाणंतुतत्वतः १ समुद्रस्यप्रमाणंचसम्यगच्छिद्रदर्शन शाकद्वीपंचमेब्रूहिकुशद्वीपंचसंजय २

मोध्यायः ९ भारतस्येति १ २
तिष्यंकलियुगं ३ ४ ५ ६ ७ प्रजायंतेप्रजांजनयंति ८ ९ वपुष्मंतःप्रशस्तदेहाः १० ११ १२ सर्ववर्णाःपरस्परजयैषिणोजायंतइतिसंबंधः १३ १४ ई
र्ष्यापरोत्कर्षासहिष्णुत्वं मानःस्वस्मिन्पूज्यताबुद्धिः क्रोधोभिज्वलनं मायाकपटं असूयापरगुणेषुदोषाविष्करणं रागोविषयेषुप्रीतिः लोभस्तल्लिप्सा १५ संक्षे
पोगुणानामितिशेषः १६ इतिभा॰ भी॰ दशमः १० जंबू १ २

३ ग्रहंराहुम् ४ अष्टादशसहस्राणिषट्शतानिचयोजनानिविष्कंभः चतुर्दलकमलाकारस्यजंबूद्वीपस्यपत्रांतपरिधिः तादृशविस्तारएवपिंडप्रमाणमंतर्भाव्यपर्वताकृतित्वात्जंबुपर्वतइत्युच्यते ५ लावणस्येति क्षेत्रफलतः पंचसहस्रायामत्वात्जंबूद्वीपस्यतदुभयतः पंचपंचभिः सहस्रैः समुद्रस्यविष्कंभोविस्तारः द्विगुणितः तेनससमुद्रस्यद्वीपस्यपंचदशसहस्रयोजनोव्यासः द्विगुणः दशसहस्रयोजनः परिमंडलश्चेदुभयतः समुद्रवेष्टनेनसहचत्वारिंशत्सहस्रः एवंतृतीयोशीतिसहस्रः चतुर्थः षष्टि

शाल्मलिंचैवतत्वेनक्रौंचद्वीपंतथैवच ब्रूहिगावल्गणेसार्धंराहोःसोमार्कयोस्तथा ३ संजयउवाच राजन्सुबहवोद्वीपायैरिदंसंततंजगत् सप्तद्वीपान्प्रवक्ष्यामिचंद्रादित्यौग्रहं तथा ४ अष्टादशसहस्राणियोजनानांविशांपते षट्शतानिचपूर्णानिविष्कंभोजंबुपर्वतः ५ लावणस्यसमुद्रस्यविष्कंभोद्विगुणःस्मृतः नानाजनपदाकीर्णोमणिविद्रुमचित्रितः ६ नैकधातुविचित्रैश्चपर्वतैरुपशोभितः सिद्धचारणसंकीर्णःसागरःपरिमंडलः ७ शाकद्वीपंचवक्ष्यामियथावदिहपार्थिव शृणुमेत्वंयथान्यायंब्रुवतःकुरुनंदन ८ जंबूद्वीपप्रमाणेनद्विगुणःसनराधिप विष्कंभेणमहाराजसागरोपिविभागशः ९ क्षीरोदोभरतश्रेष्ठयेनसंपरिवारितः तत्रपुण्याजनपदास्तत्रनम्रियतेनरः १० कुतएवहिदुर्भिक्षंक्षमातेजोयुताहिते शाकद्वीपस्यसंक्षेपोयथावद्भरतर्षभ उक्तएवमहाराजकिमन्यच्छ्रोतुमिच्छसि ११ धृतराष्ट्रउवाच शाकद्वीपस्यसंक्षेपोयथावदिहपूर्वशः उक्तएषमहाप्राज्ञविस्तरंब्रूहितत्वतः १२ संजयउवाच तथैवपर्वताराजन्सप्तात्रमणिभूषिताः रत्नाकरास्तथानद्यस्तेषांनामानिमेशृणु १३ अतीवगुणवत्सर्वंतत्रपुण्यंजनाधिप देवर्षिगंधर्वयुतःप्रथमोमेरुरुच्यते १४ प्रागायतोमहाराजमलयोनामपर्वतः ततोमेघाःप्रवर्तंतेप्रभवंतिचसर्वशः १५ ततःपूर्वेणकौरव्यजलधारोमहागिरिः यत्रनित्यमुपादत्तेवासवःपरमंजलम् १६ ततोवर्षंप्रभवतिवर्षकालेजनेश्वर उच्चैर्गिरीरैवतकोयत्रनित्यंप्रतिष्ठितं १७ रेवतीदिविनक्षत्रंपितामहकृतोविधिः उत्तरेणतुराजेंद्रश्यामोनाममहागिरिः १८ नवमेघप्रभःप्रांशुःश्रीमानुज्ज्वलविग्रहः ततःश्यामत्वमापन्नाजनाजनपदेश्वर १९ धृतराष्ट्रउवाच सुमहान्संशयोमेद्यप्रोक्तोयंसंजयत्वया प्रजाःकथंसूतपुत्रसंप्राप्ताःश्याममतामिह २०

सहस्राधिकंलक्षम् पंचमोलक्षत्रयंविंशतिसहस्राणिषष्ठःलक्षषट्कंचत्वारिंशत्सहस्राणिसप्तमोद्वादशलक्षाण्यशीतिसहस्राणिएतेषांसंकलनेपंचविंशतिलक्षाणिपंचत्रिंशत्सहस्राणियोजनानिसप्तानांद्वीपानांससमुद्राणांविस्तारः ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ रेवतीज्योतिर्मंडलरूपेणादिविबंभ्रम्यमाणापिदिव्येनरूपेणात्रापिवर्तते एवंविधिर्मर्यादापितामहेनकृता १८ १९
२०

पतगवर्णंव्याचष्टेनयोरितिमिश्रोवर्णः पतगइत्यर्थः २१ कारणगुणाःकार्यगुणानारभंतइतिन्यायेनश्यामपर्वतप्रभवः श्यामवर्णःशाकाद्यन्नपरिणामेनमनुष्याअपि श्यामत्वंगताइत्यर्थः यस्मात्श्यामोगिरिस्तस्मात्तस्थानंश्यामोवर्णःप्रवृत्तइत्यर्थः २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२



संजयउवाच सर्वेष्वेवमहाराजद्वीपेषुकुरुनंदन गौरःकृष्णाश्चपतगस्तयोर्वर्णांतरेनृप २१ श्यामोयस्मात्प्रवृत्तोवैतस्माच्छ्यामोगिरिः स्मृतः ततःपरंकौरवेंद्रदुर्गशैलोमहोदयः २२ केशरीकेशरयुतोयतोवातःप्रजायते तेषांयोजनविष्कंभोद्विगुणःप्रविभागशः २३ वर्षाणि तेषुकौरव्यसप्तोक्तानिमनीषिभिः महामेरुर्महाकाशोजलदःकुमुदोत्तरः २४ जलधारोमहाराजसुकुमारइतिस्मृतः रेवतस्यतुकौमा रःश्यामस्यमणिकांचनः २५ केदारस्याथमोदाकीपरेणतुमहापुमान् परिवार्यतुकौरव्यदैर्घ्यंह्रस्वत्वमेवच २६ जंबूद्वीपेनसंख्यात स्तस्यमध्येमहाद्रुमः शाकोनाममहाराजप्रजायस्यसदानुगा २७ तत्रपुण्याजनपदाःपूज्यतेयत्रशंकरः तत्रगच्छंतिसिद्धाश्चचार णादेवतानिच धार्मिकाश्चप्रजाराजंश्चत्वारोतीवभारत २८ वर्णाःस्वधर्मनिरतानचस्तेनोऽत्रदृश्यते दीर्घायुषोमहाराजजरामृत्युविव र्जिताः २९ प्रजास्तत्रविवर्धंतेवर्षास्विवसमुद्रगाः नद्यःपुण्यजलास्तत्रगंगाचबहुधागता ३० सुकुमारीकुमारीचशीताशीवेणिकातथा महानदीचकौरव्यतथामणिजलानदी ३१ चक्षुर्वर्धनिकाचैवनदीभरतसत्तम तत्रप्रवृत्ताःपुण्योदानद्यःकुरुकुलोद्वह सहस्राणांश तान्येवयतोवर्षतिवासवः ३२ नतासांनामधेयानिपरिमाणंतथैवच शक्यतेपरिसंख्यातुंपुण्यास्ताहिसरिद्वराः ३३ तत्रपुण्याजनप दाश्चत्वारोलोकसंमताः मृगाश्चमशकाश्चैवमानसामंदगास्तथा ३४ मृगाब्राह्मणभूयिष्ठाःस्वकर्मनिरतास्तथा मशकेषुतुराजन्या धार्मिकाःसर्वकामदाः ३५ मानसाश्चमहाराजवैश्यधर्मोपजीविनः सर्वकामसमायुक्ताःशूराधर्मार्थनिश्चयाः ३६ शूद्राश्चमंदगा स्तत्रपुरुषाधर्मशीलिनः नतत्रराजाराजेंद्रनदंडोनचदंडिकाः स्वधर्मेणैवधर्मज्ञास्तेरक्षंतिपरस्परम् ३७ एतावदेवशक्यंतुतत्रद्वीपेप्र- भाषितुम् एतदेवचश्रोतव्यंशाकद्वीपेमहौजसि ३८ इतिश्रीमन्महाभारतेभीष्मपर्वणिशाकद्वीपवर्णनेएकादशोऽध्यायः ११

संजयउवाच उत्तरेषुचकौरव्यद्वीपेषुश्रूयतेकथा एवंतत्रमहाराजब्रुवतश्चनिबोधमे १ घृततोयःसमुद्रोऽत्रदधिमंडोदकःपरः सु रोदःसागरश्चैवतथान्योजलसागरः २ परस्परेणद्विगुणाःसर्वेद्वीपानराधिप पर्वताश्चमहाराजसमुद्रैःपरिवारिताः ३ गौरस्तुम- ध्यमेद्वीपेगिरिर्मानःशिलोमहान् पर्वतःपश्चिमेकृष्णोनारायणसखोनृप ४

३३ ३४ ३५ ३६ ३७ ३८

इतिश्रीभारतेभीष्मपर्वणिटीकायांएकादशोऽध्यायः ११ उत्तरेषु १ २ ३ मानःशिलोमनःशिलामयः ४

५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८

तत्ररत्नानिदिव्यानिस्वयंरक्षतिकेशवः प्रसन्नश्चाभवत्तत्रप्रजानांव्यदधत्सुखम् ५ कुशस्तंभःकुशद्वीपेमध्येजनपदैःसह सं
पूज्यतेशाल्मलिश्चद्वीपेशाल्मलिकेनृप ६ क्रौंचद्वीपेमहाक्रौंचोगिरीरत्नचयाकरः संपूज्यतेमहाराजचातुर्वर्ण्येननित्यदा ७ गोमं
तःपर्वतोराजन्सुमहान्सर्वधातुकः यत्रनित्यंनिवसतिश्रीमान्कमललोचनः ८ मोक्षिभिःसंगतोनित्यंप्रभुर्नारायणोहरिः कुश
द्वीपेतुराजेंद्रपर्वतोविद्रुमैश्चितः ९ स्वनामनामादुर्द्धर्षोद्वितीयोहेमपर्वतः द्युतिमान्नामकौरव्यतृतीयःकुमुदोगिरिः १० चतुर्थःपुष्प
वान्नामपंचमस्तुकुशेशयः षष्ठोहरिगिरिर्नामषडेतेपर्वतोत्तमाः ११ तेषामंतरविष्कंभोद्विगुणःपर्वभामशः औद्भिदंप्रथमंवर्षंद्वि-
तीयंवेणुमंडलम् १२ तृतीयंसुरथाकारंचतुर्थंकंबलंस्मृतम् धृतिमत्पंचमंवर्षंषष्ठंवर्षंप्रभाकरम् १३ सप्तमंकापिलंवर्षंसप्तैते
वर्षलंभकाः एतेषुदेवगंधर्वाःप्रजाश्चजगतीश्वर १४ विहरंतेरमंतेचनतेषुम्रियतेजनः नतेषुदस्यवःसंतिम्लेच्छजात्योपिवानृ
प गौरप्रायोजनःसर्वःसुकुमारश्चपार्थिव १५ अवशिष्टेषुसर्वेषुवक्ष्यामिमनुजेश्वर यथाश्रुतंमहाराजतदव्यग्रमनाःशृणु १६
क्रौंचद्वीपेमहाराजक्रौंचोनाममहागिरिः क्रौंचात्परोवामनकोवामनादंधकारकः १७ अंधकारात्परोराजन्मैनाकःपर्वतोत्तमः
मैनाकात्परतोराजन्गोविंदोगिरिरुत्तमः १८ गोविंदात्परतोराजन्निबिडोनामपर्वतः परस्तुद्विगुणस्तेषांविष्कंभोवंशवर्धन १९
देशांस्तत्रप्रवक्ष्यामितन्मेनिगदतःशृणु क्रौंचस्यकुशलोदेशोवामनस्यमनोनुगः २० मनोनुगात्परश्चोष्णोदेशःकुरुकुलोद्वह
उष्णात्परःप्रावरकःप्रावारादंधकारकः २१ अंधकारकदेशात्तुमुनिदेशःपरःस्मृतः मुनिदेशात्परश्चैवप्रोच्यतेदुंदुभिस्वनः २२
सिद्धचारणसंकीर्णोगौरप्रायोजनाधिप एतेदेशामहाराजदेवगंधर्वसेविताः २३ पुष्करेपुष्करोनामपर्वतोमणिरत्नवान् तत्रनित्यं
प्रवसतिस्वयंदेवःप्रजापतिः २४ तंपर्युपासतेनित्यंदेवाःसर्वेमहर्षयः वाग्भिर्मनोनुकूलाभिःपूजयंतोजनाधिप २५ जंबूद्वीपात्प्र
वर्ततेरत्नानिविविधान्युत द्वीपेषुतेषुसर्वेषुप्रजानांकुरुसत्तम २६ ब्रह्मचर्येणसत्येनप्रजानांहिदमेनच आरोग्यायुःप्रमाणाभ्यां-
द्विगुणंद्विगुणंततः २७ एकोजनपदोराजन्द्वीपेष्वेतेषुभारत उक्ताजनपदायेषुधर्मश्चैकःप्रदृश्यते २८ ईश्वरोदंडमुद्यम्यस्वय
मेवप्रजापतिः द्वीपानेतान्महाराज रक्षंस्तिष्ठतिनित्यदा २९ सराजासशिवोराजन्सपितासपितामहः गोपायतिनरश्रेष्ठप्रजाःस
जडपंडिताः ३० १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ५९

३१ चतुरस्रंचतुर्दलकमलाकारंजंबूमंडलमितिशेषः तस्यपूर्वंआस्रांतपरिधिरुक्तः अष्टादशसहस्राणिषट्शतानिचभारतेतिइहपत्रमध्यमंडलपरिधिस्त्रयस्त्रिंश च्छतयोजनइत्युच्यते तत्रश्चपंचसहस्रीतोयावान्पत्राग्रभागोबहिर्दृष्टस्तावानेवत्रयस्त्रिंशतोग्रेपंचसहस्रीतोगर्भेभागउनइतिज्ञेयम् ३२ तत्रपत्रसंधिस्थानेषुचतुर्षु ३३ तस्यगजचतुष्टयस्यपृथिव्याआश्रयभूतस्य तत्कस्योपरिवर्ततेइतिदुर्वचंतेनईश्वरशक्त्यैवदिग्गजाः ध्रियंतइतिभावः सः गजसमूहः ३४ वातरज्जुभिर्गजाबद्धा

भोजनंचात्रकौरव्यप्रजाःस्वयमुपस्थितम् सिद्धमेवमहाबाहोतद्धिभुंजंतिनित्यदा ३१ ततःपरंसमानामदृश्यतेलोकसंस्थितिः चतुरस्रंमहाराजत्रयस्त्रिंशत्तुमंडलम् ३२ तत्रतिष्ठंतिकौरव्यचत्वारोलोकसंमताः दिग्गजाभरतश्रेष्ठवामनैरावतादयः ३३ सुप्रतीकस्तथाराजन्प्रभिन्नकरटामुखः तस्याहंपरिमाणंतुनसंख्यातुमिहोत्सहे असंख्यातःसनित्यंहितिर्यगूर्ध्वमधस्तथा ३४ तत्रवैवायवोवांतिदिग्भ्यःसर्वाभ्यएवहि असंबद्धामहाराजतान्निगृह्णंतितेगजाः ३५ पुष्करैःपद्मसंकाशैर्वर्कसद्भिर्महाप्रभैः शतधापुनरेवाशुतेतान्मुंचंतिनित्यशः ३६ श्वसद्भिर्मुच्यमानास्तुदिग्गजैरिहमारुताः आगच्छंतिमहाराजततस्तिष्ठंतिवैप्रजाः ३७ धृतराष्ट्रउवाच परोवैविस्तरोत्यर्थंत्वयासंजयकीर्तितः दर्शितंद्वीपसंस्थानमुत्तरंब्रूहिसंजय ३८ संजयउवाच उक्ताद्वीपामहाराजग्रहान्वैशृणुतत्वतः स्वर्भानोःकौरवश्रेष्ठयावदेवप्रमाणतः ३९ परिमंडलोमहाराजस्वर्भानुःश्रूयतेग्रहः योजनानांसहस्राणिविष्कंभोद्वादशास्यवै ४० परिणाहेनषट्त्रिंशद्विपुलत्वेनचानघ षष्टिमाहुःशतान्यस्यबुधाःपौराणिकास्तथा ४१ चंद्रमास्तुसहस्राणिराजन्नेकादशःस्मृतः विष्कंभेनकुरुश्रेष्ठत्रयस्त्रिंशत्तुमंडलम् ४२ एकोनषष्टिविष्कंभंशीतरश्मेर्महात्मनः सूर्यस्त्वष्टौसहस्राणिद्वेचान्येकुरुनंदन ४३ विष्कंभेणततोराजन्मंडलंत्रिंशतासमम् अष्टपंचशतंराजन्विपुलत्वेनचानघ ४४ श्रूयतेपरमोदारःपतगोसौविभावसुः एतत्प्रमाणमर्कस्यनिर्दिष्टमिहभारत ४५ सराहुश्छादयत्येतौयथाकालंमहत्तया चंद्रादित्यौमहाराजसंक्षेपोयमुदाहृतः ४६ इत्येतत्तेमहाराजपृच्छतःशास्त्रचक्षुषा सर्वमुक्तंयथातत्वंतस्माच्छममवाप्नुहि ४७ यथोद्दिष्टंमयाप्रोक्तंसनिर्माणमिदंजगत् तस्मादाश्वसकौरव्यपुत्रंदुर्योधनंप्रति ४८ श्रुत्वेदंभरतश्रेष्ठभूमिपर्वमनोनुगः श्रीमान्भवतिराजन्यःसिद्धार्थःसाधुसंमतः आयुर्बलंचकीर्तिश्चतस्यतेजश्चवर्धते ४९

इत्येतन्मतांतरंतदपिदूषयतितत्रेति प्रत्यक्षवायोरेवनिग्रहंतेकुर्वंतीत्याहतानिति ३५ पुष्करैःशुंडाग्रैः ३६ ३७ उत्तरंसूर्येंदुराहुप्रमाणम् ३८ ३९ ४० परिणाहेनपरिधिनाषट्त्रिंशत्सहस्राणिविपुलत्वेनततोप्याधिक्येनषष्टियोजनानिपरिणाहएवेत्यर्थः ४१ ४२ ४३ ४४ पतगःशीघ्रगःविभावसुःसूर्यः ४५ ४६ ४७ ४८ ४९ ६

५० ५१ इतिश्रीमन्महाभारतेभीष्मपर्वणिभारतभावदीपेजंबूखंडार्थ प्रकाश टीकायांद्वादशोध्यायः १२ अथगावल्गणिः १ २ ३ ककुदंराज्ञांम ध्येध्वजतुल्यंककुत्स्त्रीककुदोप्यस्त्रीवृषांगेराट् ध्वजेंबरेइतिमेदिनी धामतेजः ४ ५ ६ अपसंभ्रमोनिर्भयः ७ ८ ९ १० ११

यःश्रृणोतिमहीपालः पर्वणीदंयतव्रतः प्रीयंतेपितरस्तस्यतथैवचपितामहाः ५० इदंतुभारतंवर्षंयत्रवर्तामहेवयम् पूर्वैःप्रवर्तितंपु ण्यंतत्सर्वंश्रुतवानसि ५१ इतिश्रीमन्महाभारतेभीष्मपर्वणिजंबूखंडवर्णनंनामद्वादशोऽध्यायः १२ वैशंपायनउवाच अथगावल्गणिर्विद्वान्संयुगादेत्यभारत प्रत्यक्षदर्शीसर्वस्यभूतभव्यभविष्यवित् १ ध्यायतेधृतराष्ट्रायसहसोत्पत्यदुःखितः आचष्ट निहतंभीष्मंभारतानांपितामहम् २ संजयउवाच संजयोहंमहाराजनमस्तेभरतर्षभ हतोभीष्मःशांतनवोभरतानांपितामहः ३ ककुदंसर्वयोधानांधामसर्वधनुष्मताम् शरतल्पगतःसोद्यशेतेकुरुपितामहः ४ यस्यवीर्यंसमाश्रित्यद्यूतंपुत्रस्तवाकरोत् सशेतेनि हतोराजन्संख्येभीष्मःशिखंडिना ५ यःसर्वान्पृथिवीपालान्समवेतान्महामृधे जिगायैकरथेनैवकाशिपुर्यांमहारथः ६ जामदग्न्यंरणे- रामंयोयुध्यदपसंभ्रमः नहतोजामदग्न्येनसहतोद्यशिखंडिना ७ महेंद्रसदृशःशौर्येस्थैर्येचहिमवानिव समुद्रइवगांभीर्येसहिष्णुत्वे- धरासमः ८ शरदंष्ट्रोधनुर्वक्त्रःखड्गजिह्वोदुरासदः नरसिंहःपितातेद्यपांचाल्येननिपातितः ९ पांडवानांमहासैन्यंयंदृष्ट्वोद्यतमाहवे प्रावेपतभयोद्विग्नंसिंहंदृष्ट्वेवगोगणः १० परिरक्ष्यससेनांतांदशरात्रंप्रवीरहा जगामास्तमिवादित्यःकृत्वाकर्मसुदुष्करम् ११ यःसश- क्रइवाक्षोभ्योवर्षन्बाणान्सहस्रशः जघानसुधियोधानामर्बुदंदशभिर्दिनैः १२ सशेतेनिहतोभूमौवातभग्नइवद्रुमः तवदुर्मंत्रितेराजन्य- थानार्हःसभारत १३ इतिश्रीमन्म० भीष्मप० भीष्ममृत्युश्रवणेत्रयोदशोऽध्यायः १३ धृतराष्ट्रउवाच कथंकुरूणामृषभोहतो- भीष्मःशिखंडिना कथंरथात्सन्यपतत्पितामेवासवोपमः १ कथमासंश्चमेपुत्राहीनाभीष्मेणसंजय बलिनादेवकल्पेनगुर्वर्थेब्रह्मचा रिणा २ तस्मिन्हतेमहाप्राज्ञेमहेष्वासेमहाबले महासत्त्वेनरव्याघ्रेकिमुआसीन्मनस्तव ३ आर्तिंपरामाविशतिमनःसंश्रुत्यमेहतम् कुरूणामृषभंवीरमकंपंपुरुषर्षभम् ४ केतंयांतमनुप्राप्ताःकेवास्यासन्पुरोगमाः केतिष्ठन्केन्यवर्तंतकेभ्यवर्तंतसंजय ५ केशूरारथ- शार्दूलमच्युतंक्षत्रियर्षभम् तथाऽनीकंगाहमानंसमरेपृष्ठतोऽन्वयुः यस्तमोऽर्कइवापोहन्परसैन्यममित्रहा ६ सहस्ररश्मिप्रतिमःपरे षांभयमादधत् अकरोद्दुष्करंकर्मरणेपांडुसूनेषुयः ७

अर्बुदंकोटिदशकं लक्षंवापूर्वमयुतस्यंप्रत्यहंप्रतिज्ञातान् १२ १३ इतिभा० भीष्म पर्वणिटीकायांत्रयोदशोध्यायः १३ कथम् १ २ ३ ४ ५ ६ ७ ८

अस्यत्वमंतिकेस्थित्वासर्वदृश्वानसीतिशेषः ८ ९ १० प्रचिन्वंतंपुष्पवदाददानम् ११ समंचेष्टतम्रियमाणपशुवद्धस्तपादविक्षेपंकृतवत् १२ १३
१४ १५ १६ १७ १८ १९ २० २१ २२ आजहुःत्यक्तवंतः २३ २४ २५ मौर्वीघोषेस्तनयित्नुर्ग

ग्रसमानमनीकानियएनंपर्यवारयत् कृतिनंतंदुराधर्षंसंजयास्यत्वमंतिके ८ कथंशांतनवंयुद्धेपांडवाःप्रत्यवारयन् निकृंतंतमनीका-
निशरदंष्ट्रंतरस्विनं॰९ चापव्यात्ताननंघोरमसिजिह्वंदुरासदं अनर्हंपुरुषव्याघ्रंह्री॰मंतमपराजितम् पातयामासकौंतेयःकथंतमजितंयु
धि १० उग्रधन्वानमुग्रेषुंवर्तमानंरथोत्तमे परेषामुत्तमांगानिप्रचिन्वंतमथेषुभिः ११ पांडवानांमहत्सैन्यंयंदृष्ट्वोद्यंतमाहवे कालाग्नि
मिवदुर्धर्षंसमचेष्टतनित्यशः १२ परिकृष्यससेनांतुदशरात्रमनीकहा जगामास्तमिवादित्यःकृत्वाकर्मसुदुष्करम् १३ यःसशक्रइवा
क्षय्यंवर्षंशरमयंक्षिपन् जघानयुधियोधानामर्बुदंदशभिर्दिनैः १४ सशेतेनिहतोभूमौवातभग्नइवद्रुमः ममदुर्मंत्रितेनाजौयथानार्ह-
तिभारतः १५ कथंशांतनवंदृष्ट्वापांचालानामनीकिनी प्रहर्तुमशकत्तत्रभीष्मंभीमपराक्रमम् १६ कथंभीष्मेणसंग्रामंप्रकुर्वन्पांडुनंद
नाः कथंचनाजयद्भीष्मोद्रोणेजीवतिसंजय १७ कृपेसन्निहितेतत्रभारद्वाजात्मजेतथा भीष्मःप्रहरतांश्रेष्ठःकथंसनिधनंगतः १८
कथंवातिरथस्तेनपांचाल्येनशिखंडिना भीष्मोविनिहतोयुद्धेदेवैरपिदुरासदः १९ यःस्पर्धतेरणेनित्यंजामदग्न्यंमहाबलम् अजितं-
जामदग्न्येनशक्रतुल्यपराक्रमम् २० तंहतंसमरेभीष्मंमहारथकुलोदितम् संजयाचक्ष्वमेवीरंयेनशर्मनविद्महे २१ मामकाःकेमहे
ष्वासानाजहुःसंजयाच्युतम् दुर्योधनसमादिष्टाःकेवीराःपर्यवारयन् २२ यच्छिखंडिमुखाःसर्वेपांडवाभीष्ममभ्ययुः कच्चित्तेकुरवः
सर्वेनाजहुःसंजयाच्युतम् २३ अश्मसारमयंनूनंहृदयंसुदृढंमम यच्छ्रुत्वापुरुषव्याघ्रंहतंभीष्मंनदीर्यते २४ तस्मिन्सत्यंचमेधाच
नीतिश्चभरतर्षभे अप्रमेयाणिदुर्धर्षेकथंसनिहतोयुधि २५ मौर्वीघोषस्तनयित्नुःपृषत्कपृषतोमहान् धनुर्ह्रादमहाशब्दोमहामेघ
इवोन्नतः २६ योऽभ्यवर्षतकौंतेयान्सपांचालान्ससृंजयान् निघ्नन्पररथान्वीरोदानवानिववज्रभृत् २७ इष्वस्त्रसागरंघोरंबाणग्रा-
हंदुरासदम् कार्मुकोर्मिणमक्षय्यमद्वीपंचलमप्लवम् २८ गदाऽसिमकराभासंहयावर्तंगजाकुलम् पदातिमत्स्यकलिलंशंखदुंदु-
भिनिःस्वनम् २९ हयान्गजपदातींश्चरथांश्चतरसाबहून् निमज्जयंतंसमरेपरवीरापहारिणम् ३० विदह्यमानंकोपेनतेजसाऽच-
परंतपम् वेलेवमकरावासंकेवीराःपर्यवारयन् ३१ जैन्मेघइव पृषत्कपृषतोबाणबिंदुः धनुषेवह्रादरूपोमहाशब्दोऽशनिध्वनिरूपोयस्य २६ २७ १९
कार्मुकोर्मिणंचापोर्मिमंतंअद्वीपंनिराश्रयंअप्लवंतरणोपायहीनम् २८ २९ ३० ३१ ७ ७ ७

३२ अपासेधन्न्यवारयन् ३३ ३४ ३५ ३६ ३७ यः प्रजापतेर्दक्षादेः परमेष्ठीपरमेपदेनिष्ठनीतितथाहिरण्यगर्भइवतस्मिन्निनिशेषः ३८
३९ ४० ४१ पुत्रलक्ष्मणिपुत्रोत्तमे लक्ष्मचिन्हेप्रधानेचेतिविश्वः ४२ प्रोक्तंलोकाख्यातं ४३ सर्वास्त्रविनयोपेतंसर्वास्त्रशिक्षायुक्तं विनयानुबलायांस्त्रीक्षि

भीष्मोयदकरोत्कर्मसमरेसंजयारिहा दुर्योधनहितार्थायकेनदास्यपुरोऽभवन् ३२ केऽरक्षन्दक्षिणंचक्रंभीष्मस्यामिततेजसः पृष्ठ
तःकेपरान्वीरानपासेधन्यतव्रताः ३३ केपुरस्तादवर्तन्तरक्षंतोभीष्ममंतिके केऽरक्षंस्तुत्तरंचक्रंवीरावीरस्ययुध्यतः ३४ वामेचक्रेव-
र्तमानाःकेऽघ्नन्संजयसृंजयान् अग्रतोऽग्र्यमनीकेषुकेऽभ्यरक्षन्दुरासदम् ३५ पार्श्वतःकेऽभ्यरक्षंतगच्छंतोदुर्गमांगतिम् समू
हेकेपरान्वीरान्प्रत्ययुध्यंतसंजय ३६ रक्षमाणःकथंवीरैर्गोप्यमानाश्चतेनते दुर्जयानामनीकानिनाजयंस्तरसायुधि ३७ सर्वलोके-
श्वरस्येवपरमेष्ठीप्रजापतेः कथंप्रहर्तुमपितेशेकुःसंजयपांडवाः ३८ यस्मिन्द्वीपेसमाश्वस्ययुध्यंतेकुरवःपरैः तन्निमग्नंनरव्याघ्रं
भीष्मंशंससिसंजय ३९ यस्यवीर्यंसमाश्रित्यममपुत्रोबृहद्बलः नपांडवानगणयत्कथंसनिहतःपरैः ४० यःपुराविबुधैःसर्वैःसहा
य्येयुद्धदुर्मदः कांक्षितोदानवान्घ्नद्भिःपितामममहाव्रतः ४१ यस्मिन्जातेमहावीर्येशंतनुर्लोकविश्रुतः शोकंदैन्यंचदुःखंचप्राजहत्पुत्र
लक्ष्मणि ४२ प्रोक्तंपरायणंप्राज्ञंस्वधर्मनिरतंशुचिम् वेदवेदांगतत्त्वज्ञंकथंशंससिमेहतम् ४३ सर्वास्त्रविनयोपेतंशांतंदांतंमन
स्विनम् हतंशांतनवंश्रुत्वामन्येशेषंहतंबलम् ४४ धर्मादधर्मोबलवान्संप्राप्तइतिमेमतिः यत्रवृद्धंगुरुंहत्वाराज्यमिच्छंतिपांडवाः ४५
जामदग्न्यःपुरारामःसर्वास्त्रविदनुत्तमः अंबार्थमुद्यतःसंख्येभीष्मेणयुधिनिर्जितः ४६ तमिंद्रसमकर्माणंककुदंसर्वधन्विनाम् हतं
शंससिमेभीष्मंकिंनुदुःखमतःपरम् ४७ असकृत्क्षत्रियव्राताःसंख्येयेनविनिर्जिताः जामदग्न्येनरामेणपरवीरनिघातिना न
हतोमेमहाबुद्धिःसहतोद्यशिखंडिना ४८ तस्मान्नूनंमहावीर्याद्भार्गवाद्युद्धदुर्मदात् तेजोवीर्यबलैर्भूयाञ्छिखंडीद्रुपदात्मजः ४९
यःशूरंकृतिनंयुद्धेसर्वशास्त्रविशारदम् परमास्त्रविदंवीरंजघानभरतर्षभम् ५० केवीरास्तममित्रघ्नमन्वयुःशस्त्रसंसदि शंसमे
तद्यथाचासीद्युद्धंभीष्मस्यपांडवैः ५१ योषेवहतवीरामेसेनापुत्रस्यसंजय अगोपमिवचोद्भ्रांतंगोकुलंतद्बलंमम ५२ पौरुषंसर्व-
लोकस्यपरंयस्मिन्महाहवे परासक्तेनतस्तस्मिन्कथमासीन्मनस्तदा ५३ जीवितेप्यद्यसामर्थ्यंकिमिवास्मासुसंजय घातयित्वामहा
वीर्यंपितरंलोकधार्मिकम् ५४ अगाधसलिलेमग्नांनावंदृष्ट्वेवपारगाः भीष्मेहतेभृशंदुःखान्मन्येशोचंतिपुत्रकाः ५५

क्षायांप्रणतोपुमानि
तिमेदिनी ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ परासक्तेपरलोकप्रिये ५३ ५४ ५५ ५६

५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ ६७ ६८



अद्रिसारमयंनूनंहृदयंममसंजय यच्छ्रुत्वापुरुषव्याघ्रंहतंभीष्मंनदीर्यते ५६ यस्मिन्नस्त्राणिमेधाचनीतिश्चपुरुषर्षभे अप्रमेयाणि-
दुर्धर्षकथंसनिहतोयुधि ५७ नचास्त्रेणनशौर्येणतपसामेधया नच नधृत्यानपुनस्त्यागान्मृत्योःकश्चिद्विमुच्यते ५८ कालोनूनंमहावीर्यः
सर्वलोकदुरत्ययः यत्रशांतनवंभीष्मंहतंशंससिसंजय ५९ पुत्रशोकाभिसंतप्तोमहद्दुःखमचिंतयन् आशंसेहंपरंत्राणंभीष्माच्छांतनु-
नंदनात् ६० यदादित्यमिवापश्यत्पतितंभुविसंजय दुर्योधनःशांतनवंकिंतदाप्रत्यपद्यत ६१ नाहंस्वेषांपरेषांवाबुध्यासंजयचिंतयन् शे-
षंकिंचित्प्रपश्यामिप्रत्यनीकेमहीक्षिताम् ६२ दारुणःक्षत्रधर्मोयमृषिभिःसंप्रदर्शितः यत्रशांतनवंहत्वाराज्यमिच्छंतिपांडवाः ६३ वयंवा
राज्यमिच्छामोघातयित्वामहाव्रतम् क्षत्रधर्मेस्थिताःपार्थानापराध्यंतिपुत्रकाः ६४ एतदार्येणकर्तव्यंकृच्छ्रास्वापत्सुसंजय पराक्रमःप
राशक्तिस्तत्तुतस्मिन्प्रतिष्ठितम् ६५ अनीकानिविनिघ्नंतंह्रीमंतमपराजितम् कथंशांतनवंतातपांडुपुत्रान्यवारयन् ६६ यथायुक्तान्यनी
कानिकथंयुद्धंमहात्मभिः कथंवानिहतोभीष्मःपितासंजयमेपरैः ६७ दुर्योधनश्चकर्णश्चशकुनिश्चापिसौबलः दुःशासनश्चकितवोहते
भीष्मेकिमब्रुवन् ६८ यच्छरीरैरुपस्तीर्णांनरवारणवाजिनाम् शरशक्तिमहाखड्गतोमराक्षांमहाभयाम् ६९ प्राविशन्कितवामंदाःसभां
युद्धविशारदाः प्राणद्यूतेप्रतिभयेकेदीव्यंतनरर्षभाः ७० केजीयंतेजितास्तत्रकृतलक्ष्यानिपातिताः अन्येभीष्माच्छांतनवात्तन्ममाचक्ष्व
संजय ७१ नहिमेशांतिरस्तीहश्रुत्वादेवव्रतंहतम् पितरंभीमकर्माणंभीष्ममाहवशोभिनम् ७२ आर्तिमेहृदयेरूढांमहतींपुत्रहानिजाम्
त्वंहिमेसर्पिषेवाग्निमुद्दीपयसिसंजय ७३ महांतंभारमुद्यम्यविश्रुतंसार्वलौकिकम् दृष्ट्वाविनिहतंभीष्मंमन्येशोचंतिपुत्रकाः ७४ श्रोष्या
मितानिदुःखानिदुर्योधनकृतान्यहम् तस्मान्मेसर्वमाचक्ष्वयद्वृत्तंतत्रसंजय ७५ यद्वृत्तंतत्रसंग्रामेमंदस्याबुद्धिसंभवम् अपनीतंसुनीतं
यत्तन्ममाचक्ष्वसंजय ७६ यत्कृतंतत्रसंग्रामेभीष्मेणजयमिच्छता तेजोयुक्तंकृतास्त्रेणशंसतत्त्वाप्यशेषतः ७७ यथातदभवद्युद्धंकुरु
पांडवसेनयोः क्रमेणयेनयस्मिंश्चकालेयच्चयथाभवत् ७८ इतिश्रीमन्महाभारतेभीष्मपर्वणिधृतराष्ट्रप्रश्नेचतुर्दशोऽध्यायः १४
संजयउवाच त्वद्युक्तोऽयमनुप्रश्नोमहाराजयथाऽर्हसि नतुदुर्योधनेदोषमिममासक्तुमर्हसि १ यआत्मनोदुश्चरितादशुभंप्राप्नुया-
न्नरः एनसातेननान्यंसउपाशंकितुमर्हति २ महाराजमनुष्येषुनिंद्यंयःसर्वमाचरेत् सवध्यःसर्वलोकस्यनिंदितानिसमाचरन् ३



६९ ७० ७१ ७२ ७३ ७४ ७५ ७६ ७७ ७८ इतिभा॰भी॰टीकायांचतुर्दशः १४ त्वद्युक्तइति आसक्तुंआसंजयितुं १ एनसापापेन २ ३

४ ५ ६ ७ ८ व्युत्थितस्यउत्थास्त्रवर्तिनउत्पत्तिः कारणंतस्यविज्ञानं ९ १० व्यूढेषुव्यूहरचनयास्थितेषु ११ १२ १३ १४

निकारोनिकृतिप्रज्ञैः पांडवैस्त्वत्प्रतीक्षया अनुभूतः सहामात्यैः क्षांतश्चसुचिरंवने ४ हयानांचगजानांचराज्ञांचामिततेजसाम् प्रत्यक्षंय न्मयादृष्टंदृष्टंयोगबलेनच ५ शृणुतत्पृथिवीपालमाचशोकेमनः कृथाः दिष्टमेतत्पुरानूनमिदमेवनराधिप ६ नमस्कृत्वापितुस्तेहंपारा शर्यायधीमते यस्यप्रसादाद्दिव्यंतत्प्राप्तंज्ञानमनुत्तमम् ७ दृष्टिश्चातींद्रियाराजन्दूराच्छ्रवणमेवच परचित्तस्यविज्ञानमतीतानागतस्य च ८ व्युत्थितोत्पत्तिविज्ञानमाकाशेचगतिः शुभा अस्त्रैरसंगोयुद्धेषुवरदानान्महात्मनः ९ शृणुमेविस्तरेणेदंविचित्रंपरमाद्भुतम् भर- तानामभूद्युद्धंयथातल्लोमहर्षणम् १० तेष्वनीकेषुयत्तेषुव्यूढेषुचविधानतः दुर्योधनोमहाराजदुःशासनमथाब्रवीत् ११ दुःशासनरथा- स्तूर्णंयुज्यंतांभीष्मरक्षिणः अनीकानिचसर्वाणिशीघ्रंत्वमनुचोदय १२ अयंसमामभिप्राप्तोवर्षपूगाभिचिंतितः पांडवानांससैन्यानांकु रूणांचसमागमः १३ नातःकार्यतमंमन्येरणेभीष्मस्यरक्षणात् हन्याद्गुप्तोह्यसौपार्थान्सोमकांश्चससृंजयान् १४ अब्रवीच्चविशुद्धात्मा नाहंहन्यांशिखंडिनम् श्रूयतेस्त्रीह्यसौपूर्वंतस्माद्वर्ज्योरणेमम १५ तस्माद्भीष्मोरक्षितव्योविशेषेणेतिमेमतिः शिखंडिनोवधेयत्ताः सर्वे तिष्ठंतुमामकाः १६ तथाप्राच्याः प्रतीच्याश्चदाक्षिणात्योत्तरापथाः सर्वशस्त्रेषुकुशलास्तेरक्षंतुपितामहम् १७ अरक्ष्यमाणंहिवृ- कोहन्यात्सिंहंमहाबलम् मासिंहंजंबुकेनेवघातयामः शिखंडिना १८ वामंचक्रंयुधामन्युरुत्तमौजाश्चदक्षिणम् गोप्तारौफाल्गुनस्यैतौ फाल्गुनोपिशिखंडिनः १९ संरक्ष्यमाणः पार्थेनभीष्मेणचविवर्जितः यथानहन्याद्गांगेयंदुःशासनतथाकुरु २० इतिश्रीमन्महाभा रतेभीष्मपर्वणिदुर्योधनदुःशासनसंवादेपंचदशोऽध्यायः १५ संजयउवाच ततोरजन्यांव्युष्टायांसशब्दः समभून्म हान् क्रोशतांभूमिपालानांयुज्यतांयुज्यतामिति १ शंखदुंदुभिघोषैश्चसिंहनादैश्चभारत हयहेषितनादैश्चरथनेमिस्वनैस्तथा २ गजानांबृंहतांचैवयोधानांचापिगर्जताम् क्ष्वेलितास्फोटितोत्क्रुष्टैस्तुमुलः सर्वतोभवत् ३ उदतिष्ठन्महाराजसर्वंयुक्तमशेषतः सूर्योदयेमहत्सैन्यंकुरुपांडवसेनयोः ४ राजेंद्रतवपुत्राणांपांडवानांतथैवच दुष्प्रधृष्याणिचास्त्राणिसशस्त्राणिकवचानिच ५ ततः प्रकाशेसैन्यानिसमदृश्यंतभारत त्वदीयानांपरेषांचशस्त्रवंतिमहांतिच ६ तत्रनागारथाश्चैवजांबूनदपरिष्कृताः विभ्राजमानादृश्यं तेमेघाइवसविद्युतः ७ रथानीकान्यदृश्यंतनगराणीवभूरिशः अतीवशुशुभेतत्रपितातेपूर्णचंद्रवत् ८ १५ १६ १७ १८ १९

२० इतिभा० भी० टीकायांपंचदशोऽध्यायः १५ १ २ ३ युक्तंसन्नद्धं अशेषतः सर्वप्रकारैः ४ ५ ६ ७ ८ [illegible]

१ वागुराकाराः परेषांबंधनार्थमित्यर्थः १० ११ १२ १३ नलबद्धाः तलंज्याघातत्राणंबद्धंयैस्तेकलापिनः तूणवंतः १४ १५ १६ १७ १८



धनुर्भिर्ऋष्टिभिः खड्गैर्गदाभिशक्तितोमरैः योधाः प्रहरणैःशुभ्रैस्तेषुनीकेषवस्थिताः ९ गजाः पदातारथिनस्तुरगाश्चविशांपते व्यतिष्ठन्वागुराकाराःशतशोथसहस्रशः १० ध्वजाबहुविधाकाराव्यदृश्यंतसमुच्छ्रिताः स्वेषांचैवपरेषांचद्युतिमंतःसहस्रशः ११ कांचनामणिचित्रांगाज्वलंतइवपावकाः अर्चिष्मंतोव्यरोचंतध्वजारोहाःसहस्रशः १२ महेंद्रकेतवःशुभ्रामहेंद्रसदनेष्विव सन्नद्धास्तेप्रवीराश्चददृशुर्युद्धकांक्षिणः १३ उद्यतैरायुधैश्चित्रास्तलबद्धाःकलापिनः ऋषभाक्षामनुष्येंद्राश्चमूमुखगताबभुः १४ शकुनिःसौबलःशल्यआवंत्योथजयद्रथः विंदानुविंदौकैकेयाःकांबोजश्चसुदक्षिणः १५ श्रुतायुधश्चकालिंगोजयत्सेनश्चपार्थिवः बृहद्बलश्चकौरव्यःकृतवर्माचसात्वतः १६ दशैतेपुरुषव्याघ्राःशूराःपरिघबाहवः अक्षौहिणीनांपतयोयज्वानोभूरिदक्षिणाः १७ एतेचान्येचबहवोदुर्योधनवशानुगाः राजानोराजपुत्राश्चनीतिमंतोमहारथाः १८ सन्नद्धाःसमदृश्यंतस्वेष्वनीकेष्ववस्थिताः बद्धकृष्णाजिनाःसर्वेबलिनो-युद्धशालिनः १९ हृष्टादुर्योधनस्यार्थेब्रह्मलोकायदीक्षिताः समर्थादशवाहिन्यःपरिगृह्यव्यवस्थिताः २० एकादशीधार्तराष्ट्रीकौरवाणांमहाचमूः अग्रतःसर्वसैन्यानांयत्रशांतनवोग्रणीः २१ श्वेतोष्णीषंश्वेतछत्रंश्वेतवर्माणमच्युतम् अपश्याममहाराजभीष्मंचंद्रमिवोदितम् २२ हेमतालध्वजंभीष्मंराजतेस्यंदनेस्थितम् श्वेताभ्रइवतीक्ष्णांशुंददृशुःकुरुपांडवाः २३ सृंजयाश्चमहेष्वासाधृष्टद्युम्नपुरोगमाः जृंभमाणंमहासिंहंदृष्ट्वाक्षुद्रमृगायथा २४ धृष्टद्युम्नमुखाःसर्वेसमुद्विविजिरेमुहुः एकादशैताःश्रीजुष्टावाहिन्यस्तवपार्थिव पांडवानांतथासप्तमहापुरुषपालिताः २५ उन्मत्तमकरावर्तौमहाग्राहसमाकुलौ युगांतेसमवेतौद्वौदृश्येतेसागराविव २६ नैवनस्तादृशोराजन्दृष्टपूर्वोनचश्रुतः अनीकानांसमेतानांकौरवाणांतथाविधः २७ इतिश्रीमन्महाभारतेभीष्मपर्वणिसैन्यवर्णनंनामषोडशोऽध्यायः १६

संजयउवाच यथासभगवान्व्यासःकृष्णद्वैपायनोऽब्रवीत् तथैवसहिताःसर्वेसमाजग्मुर्महीक्षितः १ ६२ ६२ ६२ ६२ ६२

बद्धकृष्णाजिनाइतियुद्धेमरणदीक्षांकृतवंतइत्यर्थः १९ २० २१ २२ २३ २४ २५ २६ तथाविधःसंमर्दइतिशेषः २७ इतिश्रीमन्महाभारतेभीष्मपर्वणिटीकायांषोडशोऽध्यायः १६ यथासः १ ६२ ६२

मघाविषयगः सोमस्तद्दिनं प्रत्यपद्यतेति मघा पित्र्यं नक्षत्रं तस्य विषयो देशः पितृलोकस्तद्गतः सोमः कुरुपांडवयुद्धारंभदिनमुक्तं भारतसावित्र्यां हेमंते प्रथमे मासि शुक्लपक्षे त्रयोदशी प्रवृत्तं भारतं युद्धं नक्षत्रे मयदैवते प्रथमे मार्गशीर्षे अत्र त्रयोदशीशब्देन तद्युक्ता चतुर्दश्येव ग्राह्या अर्जुनेन हतो भीष्मो माघमासे सिताष्टमीति त्रयोदश्यां तु मध्याह्ने भारद्वाजो निपातित इति तत्रैव युद्धस्य दशमे पंचदशे चाह्नि हतयोर्भीष्मद्रोणयोरष्टमीत्रयोदशीसंयोगदर्शनात् अत्र पुष्येपि माघशब्दो मकारायनाभिप्रायेण तदानीं तत्संभवात् असिताष्टमीति च्छेदः अन्यथा सप्तमीद्वादश्योरेव तयोर्हननं प्राप्नोति यत्तु अमावास्यायां दुर्योधनहननं तत्रैवोक्तं तत्राप्यमावास्याशब्दः इष्टिदिने प्रतिपद्येव प्रयुक्तो वेदितव्यः यमदैवत इति भरणी न ग्राह्या किंतु युग्मदैवतं मृगशीर्षमेव ग्राह्यं तस्य हि पूर्वदलं शक्रदैवत्यादासुरं उत्तरार्द्धं तु बुधदैवत्यत्वाद्दैवम् तेन तत्रासुराणां सुपर्वणां देवानामभ्युदय श्वसिष्यति किंच चत्वारिंशदह्नान्यद्य द्वे च मे निःसृतस्य वै पुष्येण संप्रयातोस्मि श्रवणे पुनरागत इति युद्धारंभादष्टादशेह्नि तीर्थयात्रात आगतस्य बलदेवस्य वचनात् श्रवणे युद्धसमाप्तिर्दृश्यते ततः प्राचीनेऽष्टादशर्क्षे मृगशीर्ष एव युद्धारंभः संभवति न त्वेकविंशे भरण्याम् अष्टादशदिनमध्ये नक्षत्रत्रयक्षयस्य कल्पयितुमयुक्तत्वात् कार्तिकीकृत्तिकायोगानुपातेन चतुर्दश्यां मृगस्यैव संभावनाच्च एतेन युद्धारंभं प्रकृत्य मघाविषयगः सोमस्तद्दिनं प्रत्यपद्यतेति भीष्मपर्वणि संजयवाक्यान्मघायां युद्धारंभ इत्यपि निरस्तम् बलदेववाक्यविरुद्धत्वात् शब्दार्थस्तु मघापदेन तत्सहचराः पितरो लक्ष्यंते तेन युद्धे मृतानां उत्तमदेहप्रदानार्थं चंद्रमास्तदा पितृलोके सन्निहितो भूदिति स्वर्गिणां

## मघाविषयगः सोमस्तद्दिनं प्रत्यपद्यत दीप्यमानाश्च संपेतुर्दिवि सप्त महाग्रहाः २

दिव्यदेहलाभश्च तदधीन इति शास्त्रप्रसिद्धः तथा द्वादश्यां रात्रियुद्धे चंद्रोदयकाले त्रिभागमात्रशेषायां रात्रौ युद्धमवर्ततेत्युक्तं तत्र त्रिभागेत्यस्य त्रिमुहूर्तशेषायामित्यर्थः तथा अष्टपंचाशतं रात्र्यः शयानस्याद्य मे गता इति भीष्मवचनं तु माघोयं समनुप्राप्तः त्रिभागमात्रः पक्षोयं इति वाक्यशेषानुसारात् अशतं शतहीनं यथा स्यात्तथा अष्टपंच अष्टपंचाशद्रात्रयो व्यतीता इति व्याख्येयं विलोमशोधनात् अष्टपंचाशदूनं शतं रात्रयो द्वाचत्वारिंशद्रात्रयो व्यतीता इत्यर्थः तथा च पौषकृष्णाष्टमीतो माघशुक्लपंचम्यां तावती दिनसंख्या पूर्यते पक्षस्य च तृतीयो भागो गतो भवति तत्राप्येकतिथिक्षयात् पंचम्याः द्विचत्वारिंशत्तमत्वं ज्ञेयं शेषो भवितुमर्हतीत्यत्र कार्यशेषो देहत्यागादिरेव शेषो न तु पक्षशेष इति व्याख्या ज्ञेया तत्रायं निष्कर्षः कार्तिकशुक्लद्वादश्यां रेवत्यां कृष्णप्रयाणम् ततो मार्गशीर्षकृष्णापंचम्यां पुष्ये सेनयोर्निर्याणम् ततः पंचम्या उपरि षष्ठीमारभ्य सप्त दिनानि गणयित्वा तदुपर्यष्टमेह्नि अमावास्या भवतीत्यनेन त्रयोदशदिनात्मकोयं कृष्णपक्षो महोत्पातजनक इति सूचितं क्षीणयोश्च तिथ्योः पक्षांतरे पुनर्वृध्या संख्यापूरणं भवतीति मार्गशीर्षकृष्णापंचमीमारभ्य पौषशुक्लप्रतिपत् द्विचत्वारिंशी तिथिः भवतीति बलदेववाक्योक्तादिनसंख्या नक्षत्रसंख्या चानुगृहीता भवति यत्तु सप्तमाच्चापि दिवसादमावास्या भविष्यति संग्रामं योजयेत्तत्र तां ह्याहुः शक्रदेवताम् प्रयाध्वं वै कुरुक्षेत्रं पुष्यो द्येति पुनः पुनरिति दुर्योधनवाक्यं तत्र संग्राममित्यनेन संग्रामे जयसाधनं धारावधादिकं तस्यां योजयेदित्युक्तं शक्रदेवतामित्यनेन तस्यां ज्येष्ठानक्षत्रयोग उच्यते स च तिथिद्वयक्षयात्तत्रासंभवन्नपि तत्र तिथिवदेव नक्षत्रक्षयाद्वा तिथिनक्षत्रयोराद्यंतयोगाद्वा ज्ञेय इति सर्वं समंजसं महाग्रहाः राहुकेतोरूपग्रहत्वात्सप्तैव २

३ ववाशिरेशब्दंकृतवंतः ४ ५ ६ ७ ८ ९ १० अयोनिधनंअयसाशस्त्रेणमरणम् ११ १२ १३ १४ १५ १६ १७ ता



द्विधाभूतइवादित्यउदयेप्रत्यदृश्यत ज्वलंत्याशिखयाभूयोभानुमानुदितोरविः ३ ववाशिरेचदीप्तायांदिशिगोमायुवायसाः लिप्समानाः शरीराणिमांसशोणितभोजनाः ४ अहन्यहनिपार्थानांवृद्धःकुरुपितामहः भरद्वाजात्मजश्चैवप्रातरुत्थायसंयतौ ५ जयोस्तुपांडुपुत्राणामित्यूचतुररिंदमौ युयुधातेतवार्थाययथाससमयःकृतः ६ सर्वधर्मविशेषज्ञःपितादेवव्रतस्तव समानीयमहीपालानिदंवचनमब्रवीत् ७ इदंवःक्षत्रियाद्वारंस्वर्गायापावृतंमहत् गच्छध्वंतेनशक्रस्यब्रह्मणःसहलोकताम् ८ एषवःशाश्वतःपंथाःपूर्वैःपूर्वतरैःकृतः संभावयध्वमात्मानमव्यग्रमनसोयुधि ९ नाभागोथययातिश्चमांधातानहुषोनृपः संसिद्धाःपरमंस्थानंगताःकर्मभिरीदृशैः १० अधर्मःक्षत्रियस्यैष यद्व्याधिमरणंगृहे यदयोनिधनंयातिसोस्यधर्मःसनातनः ११ एवमुक्तामहीपालाभीष्मेणभरतर्षभ निर्ययुःस्वान्यनीकानिशोभयंतोरथोत्तमैः १२ सतुवैकर्तनःकर्णःसामात्यःसहबंधुभिः न्यासितःसमरेशस्त्रंभीष्मेणभरतर्षभ १३ अपेतकर्णाःपुत्रास्तेराजानश्चैवतावकाः निर्ययुःसिंहनादेननादयंतोदिशोदश १४ श्वेतैश्छत्रैःपताकाभिर्ध्वजवारणवाजिभिः तान्यनीकानिशोभंतेगजैरथपदातिभिः १५ भेरीपणवशब्दैश्चदुंदुभीनांचनिःस्वनैः रथनेमिनिनादैश्चबभूवाकुलितामही १६ कांचनांगदकेयूरैःकार्मुकैश्चमहारथाः भ्राजमानाव्यराजंतसाग्नयःपर्वताइव १७ तालेनमहताभीष्मःपंचतारेणकेतुना विमलादित्यसंकाशस्तस्थौकुरुचमूपतिः १८ येत्वदीयामहेष्वासाराजानोभरतर्षभ अवर्तंतयथादेशंराजञ्छांतनवस्यते १९ सतुगोवासनःशैब्यःसहितःसर्वराजभिः ययौमातंगराजेनराजार्हेणपताकिना २० पद्मवर्णस्त्वनीकानांसर्वेषामग्रतःस्थितः अश्वत्थामाययौयत्तःसिंहलांगूलकेतुना २१ श्रुतायुश्चित्रसेनःपुरुमित्रोविविंशतिः शल्योभूरिश्रवाश्चैवविकर्णश्चमहारथः २२ एतेसप्तमहेष्वासाद्रोणपुत्रपुरोगमाः स्यंदनैर्वरवर्माणोभीष्मस्यासन्पुरोगमाः २३ तेषामपिमहोत्सेधाःशोभयंतोरथोत्तमान् भ्राजमानाव्यरोचंतजांबूनदमयाध्वजाः २४ जांबूनदमयावेदीकमंडलुविभूषिता केतुराचार्यमुख्यस्यद्रोणस्यधनुषासह २५ अनेकशतसाहस्रमनीकमनुकर्षतः महान्दुर्योधनस्यासीन्नागोमणिमयोध्वजः २६ तस्यपौरवकालिंगकांबोजाःससुदक्षिणाः क्षेमधन्वाचशल्यश्चतस्थुःप्रमुखतोरथाः २७ स्यंदनेनमहार्हेणकेतुनावृषभेणच प्रकर्षन्निवसेनाग्र्यंमागधस्यकृपोययौ २८



लेनभुजभूतेन १८ १९ गोवासनः तद्देशयः २० २१ २२ २३ २४ २५ २६ २७ २८ ६१

अंगपतिनाकर्णपुत्रेणवृषकेतुना २९ वराहेणकेतुमुख्येनेतिसंबंधः ३० ३१ . ३२ ३३ ३४ निष्केणकंठाभरेण ३५ ३६ ३७ ३८

तदंगपतिनागुप्तंकृपेणत्वमनस्विना शारद्वतश्चघनमरव्यंप्राच्यानांस्कमहद्बलम् २९ अनीकप्रमुखेतिष्ठन्वराहेणमहायशाः शुभ्रशुभ्रेकेतुमुख्येनराजनेनजयद्रथः ३० शतंरथसहस्राणांतस्यासन्वशवर्तिनः अष्टौनागसहस्राणिरथानामयुतानिषट् ३१ ततःसिंधुपतिनाराज्ञापालितंध्वजिनीमुखं अनंतरथनागाश्वमशोभतमहद्बलम् ३२ षष्ट्यारथसहस्रैस्तुनागानामयुतेनच पतिःसर्वकलिंगानांययौकेतुमनासह ३३ तस्यपर्वतसंकाशाव्यरोचंतमहारथाः यंत्रतोमरतूणीरपताकाभिःसुशोभिताः ३४ शुभ्रशुभ्रेकेतुमुख्येनपावकेनकलिंगकः श्वेतच्छत्रेणनिष्केणचामरव्यजनेनच ३५ केतुमानपिमातंगंविचित्रपरमांकुशम् आस्थितःसमरेराजन्मेघस्थइवभानुमान् ३६ तेजसादीप्यमानस्तुवारणोत्तममास्थितः भगदत्तोययौराजायथावज्रधरस्तथा ३७ गजस्कंधगतावास्तांभगदत्तेनसंमितौ विंदानुविंदावावंत्यौकेतुमंतमनुव्रतौ ३८ सरथानीकवान्व्यूहोहस्त्यंगोनृपशीर्षवान् वाजिपक्षःपतत्युग्रःप्रहसन्सर्वतोमुखः ३९ द्रोणेनविहितोराजन्राज्ञाशांतनवेनच तथैवाचार्यपुत्रेणबाल्हीकेनकृपेणच ४० इतिश्रीमन्महाभारतेभीष्मपर्वणिसैन्यवर्णनंनामसप्तदशोऽध्यायः १७ संजयउवाच ततोमुहूर्तात्तुमूलःशब्दोहृदयकंपनः अश्रूयतमहाराजयोधानांप्रयुयुत्सताम् १ शंखदुंदुभिघोषैश्चवारणानांचबृंहितैः नेमिघोषैरथानांचदीर्यतीववसुंधरा २ हयानांहेषमाणानांयोधानांचैवगर्जताम् क्षणेनैवनभोभूमिःशब्देनापूरितंतदा ३ पुत्राणांतवदुर्धर्षपांडवानांतथैवच समकंपंतसैन्यानिपरस्परसमागमे ४ तत्रनागारथाश्चैवजांबूनदविभूषिताः भ्राजमानाव्यदृश्यंतमेघाइवसविद्युतः ५ ध्वजाबहुविधाकारास्तावकानांनराधिप कांचनांगदिनोरेजुर्ज्वलिताइवपावकाः ६ स्वेषांचैवपरेषांचसमदृश्यंतभारत महेंद्रकेतवःशुभ्रामहेंद्रसदनेष्विव ७ कांचनैःकवचैर्वीराज्वलनार्कसमप्रभैः सन्नद्धाःसमदृश्यंतज्वलनार्कसमप्रभाः ८ कुरुयोधवराराजन्विचित्रायुधकार्मुकाः उद्यतैरायुधैश्चित्रैस्तलबद्धाःपिनाकिनः ऋषभाक्षामहेष्वासाश्चमूमुखगताबभुः ९ पृष्ठगोपास्तुभीष्मस्यपुत्रास्तवनराधिप दुःशासनोदुर्विषहोदुर्मुखोदुःसहस्तथा १० विविंशतिश्चित्रसेनोविकर्णश्चमहारथः सत्यव्रतःपुरुमित्रोजयोभूरिश्रवाःशलः ११ रथाविंशतिसाहस्रास्तथैषामनुयायिनः अभीषाहाःशूरसेनाःशिबयोथवसातयः १२ शाल्वामत्स्यास्तथांऽबष्ठास्त्रैगर्ताःकैकयास्तथा सौवीराःकैतवाःप्राच्याःप्रतीच्योदीच्यवासिनः १३ छ छ छ छ

३९ ४० इतिश्रीभारतेभीष्मपर्वणिटीकायांसप्तदशोध्यायः १७ ततः १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३

१४ १५ शतानामयुतानिषट् षट्शतान्ययुतगुणानिषष्टिलक्षाणीतियावत् १६ १७ १८ इतिश्रीभीष्मपर्वणिटीकायांअष्टादशोऽध्यायः १८ अक्षौहिण्य-
इति १ २ ३ संहतानिति अल्पैः संहत्यैवयोद्धव्यंबहुभिस्तुविशकलितैरपियोद्धुंशक्यमित्यर्थः ४ ५ व्यूह्यव्यूहंकुरु ६ ७ ८ ९



द्वादशैतेजनपदाः सर्वेशूरास्तनुत्यजः महतारथवंशेनतेरक्षंतिपितामहम् १४ अनीकंशतसाहस्रंकुंजराणांतरस्विनाम् मागधोयेननृपतिस्तद्रथानीकमन्वयात् १५ रथानांचक्ररक्षाश्चपादरक्षाश्चदंतिनां अभवन्वाहिनीमध्येशतानामयुतानिषट् १६ पादाताश्चाग्रतोऽगच्छन्धनुश्चर्मासिपाणयः अनेकशतसाहस्रानखरप्रासयोधिनः १७ अक्षौहिण्योदशैकाचतवपुत्रस्यभारत अदृश्यंतमहाराजगंगेवयमुनांतरा १८ इतिश्रीमन्महाभारतेभीष्मपर्वणिसैन्यवर्णनेअष्टादशोऽध्यायः १८ धृतराष्ट्रउवाच अक्षौहिण्योदशैकाचव्यूढादृष्ट्वायुधिष्ठिरः कथमल्पेनसैन्येनप्रत्यव्यूहतपांडवः १ योवेदमानुषंव्यूहंदैवंगांधर्वमासुरम् कथंभीष्मंसकौंतेयः प्रत्यव्यूहतसंजय २ संजयउवाच धार्तराष्ट्राण्यनीकानिदृष्ट्वाव्यूढानिपांडवः अभ्यभाषतधर्मात्माधर्मराजोधनंजयम् ३ महर्षेर्वचनात्तातवेदयंतिबृहस्पतेः संहतान्योधयेदल्पान्कामंविस्तारयेद्बहून् ४ सूचीमुखमनीकंस्यादल्पानांबहुभिः सह अस्माकंचतथासैन्यमल्पीयः सुतरांपरैः ५ एतद्वचनमाज्ञायमहर्षेर्व्यूहपांडव एतच्छ्रुत्वाधर्मराजंप्रत्यभाषतपांडवः ६ एषव्यूहामितेव्यूहंराजसत्तमदुर्जयम् अचलंनामवज्राख्यंविहितंवज्रपाणिना ७ यः सवातइवोद्धूतः समरेदुःसहः परैः सनःपुरोयोत्स्यतेवैभीमः प्रहरतांवरः ८ तेजांसिरिपुसैन्यानांमृद्गन्पुरुषसत्तमः अग्रेऽग्रणीर्यास्यतिनोयुद्धोपायविचक्षणः ९ यंदृष्ट्वाकुरवः सर्वेदुर्योधनपुरोगमाः निवर्तिष्यंतिसंत्रस्ताः सिंहंक्षुद्रमृगायथा १० तंसर्वेसंश्रयिष्यामः प्राकारमकुतोभयाः भीमंप्रहरतांश्रेष्ठंदेवराजमिवामराः ११ नहिसोऽस्तिपुमाँल्लोकेयः संक्रुद्धंवृकोदरम् द्रष्टुमत्युग्रकर्माणंविषहेतनरर्षभम् १२ एवमुक्त्वामहाबाहुस्तथाचक्रेधनंजयः व्यूह्यतानिबलान्याशुप्रययौफाल्गुनस्तथा १३ संप्रयातान्कुरून्दृष्ट्वापांडवानांमहाचमूः गंगेवपूर्णास्तिमितास्पंदमानाव्यदृश्यत १४ भीमसेनोग्रणीस्तेषांधृष्टद्युम्नश्चवीर्यवान् नकुलः सहदेवश्चधृष्टकेतुश्चपार्थिवः १५ विराटश्चततः पश्चाद्राजाऽथाऽक्षौहिणीवृतः भ्रातृभिः सहपुत्रैश्चसोऽभ्यरक्षत्पृष्ठतः १६ चक्ररक्षौतुभीमस्यमाद्रीपुत्रौमहाद्युती द्रौपदेयाः ससौभद्राः पृष्ठगोपास्तरस्विनः १७ धृष्टद्युम्नश्चपांचाल्यस्तेषांगोप्तामहारथः सहितः पृतनाशूरैरथ-मुख्यैः प्रभद्रकैः १८ शिखंडीतुततः पश्चादर्जुनेनाभिरक्षितः यत्तोभीष्मविनाशायप्रययौभरतर्षभ १९ ५ ५



१० ११ १२ १३ स्पंदमानाकिंचिच्चलंती १४ १५ १६ १७ १८ १९ ५ ५ ५

२० २१ धृतराष्ट्रस्यदायादा इत्यनेनतवैवैतेभागइतिसूचयति २२ २३ २४ २५ २६ २७ २८ २९ वारणाराजानमन्वयुरितिसंबंधः अचलाः
निष्कंपाः ३० जीमूताःपर्वताः जीमूतोद्रावितिमेदिनी ३१ ३२ ३३ ३४ ३५ प्रावात्प्रववौसएषतःसबिंदुः ३६ वाताःरूक्षावायवः ३७

पृष्ठतोप्यर्जुनस्यासीद्युयुधानोमहाबलः चक्ररक्षौतुपांचाल्यौयुधामन्यूत्तमौजसौ २० कैकेयोधृष्टकेतुश्चचेकितानश्चवीर्यवान् भीमसेनोग
दांबिभ्रद्वज्रसारमयींदृढाम् चरन्वेगेनमहतासमुद्रमपिशोषयेत् २१ एतेतिष्ठंतिसामात्याःप्रेक्षंतस्तेजनाधिप धृतराष्ट्रस्यदायादाइ
तिबीभत्सुरब्रवीत् २२ भीमसेनंतदाराजन्दर्शयस्वमहाबलम् ब्रुवाणंतुतथापार्थंसर्वसैन्यानिभारत २३ अपूजयंस्तदावाग्भिरनुकू-
लाभिराहवे राजातुमध्यमानीकेकुंतीपुत्रोयुधिष्ठिरः २४ बृहद्भिःकुंजरैर्मत्तैश्चलद्भिरचलैरिव अक्षौहिण्याथपांचाल्योयज्ञसेनोमहामनाः
विराटमन्वयात्पश्चात्पांडवार्थपराक्रमी २५ तेषामादित्यचंद्राभाःकनकोत्तमभूषणाः नानाचिन्हधराराजन्रथेष्वासन्महाध्वजाः २६ स
मुत्सार्यततःपश्चाद्धृष्टद्युम्नोमहारथः भ्रातृभिःसहपुत्रैश्चसोऽभ्यरक्षद्युधिष्ठिरम् २७ त्वदीयानांपरेषांचरथेषुविपुलान्ध्वजान् अभि
भूयार्जुनस्यैकोरथेतस्थौमहाकपिः २८ पादातास्त्वग्रतोगच्छन्नसिशक्त्यृष्टिपाणयः अनेकशतसाहस्राभीमसेनस्यरक्षिणः २९ वार
णादशसाहस्राःप्रभिन्नकरटामुखाः शूराहेममयैर्जालैर्दीप्यमानाइवाचलाः ३० क्षरंतइवजीमूतामहार्हाःपद्मगंधिनः राजानमन्वयुः
पश्चाज्जीमूताइववार्षिकाः ३१ भीमसेनोगदांभीमांप्रकर्षन्परिघोपमां प्रचकर्षमहासैन्यंदुराधर्षोमहामनाः ३२ तमर्कमिवदुष्प्रेक्ष्यंत
पंतमिववाहिनीं नशेकुःसर्वयोधास्तेप्रतिवीक्षितुमंतिके ३३ वज्रोनामैषसव्यूहोनिर्भयःसर्वतोमुखः चापविद्युद्ध्वजोघोरोगुप्तोगांडी
वधन्वना ३४ यंप्रतिव्यूह्यतिष्ठंतिपांडवास्तववाहिनीम् अजेयोमानुषेलोकेपांडवैरभिरक्षितः ३५ संध्यांतिष्ठत्सुसैन्येषुसूर्यस्योदय-
नंप्रति प्रावात्सपृषतोवायुर्निरभ्रेस्तनयित्नुमान् ३६ विष्वग्वाताश्चविववुर्नीचैःशर्करकर्षिणः रजश्चोद्धूयतमहत्तमआच्छादयज्जग-
त् ३७ पपातमहतीचोल्काप्राङ्मुखीभरतर्षभ उद्यंतंसूर्यमाहत्यव्यशीर्यतमहास्वना ३८ अथसज्जीयमानेषुसैन्येषुभरतर्षभ निष्प्र
भोऽभ्युद्यतेसूर्यःसघोषंभूश्चचालच ३९ व्यशीर्यतसनादाचभूस्तदाभरतर्षभ निर्घाताबहवोराजन्दिक्षुसर्वासुचाभवन् ४० प्रादुरा
सीद्रजस्तीव्रंनप्राज्ञायतकिंचन ध्वजानांधूयमानानांसहसामातरिश्वना ४१ किंकिणीजालबद्धानांकांचनस्रग्वरांबरैः महतांसपताका
नामादित्यसमतेजसाम् ४२ सर्वंझणझणीभूतमासीत्तालवनेष्विव एवंतेपुरुषव्याघ्राःपांडवायुद्धनंदिनः ४३ आहत्यआस्फाल्य ३८

३९ ४० ४१ ४२ ४३

मज्जानइतिनोऽस्माकंयोधानांमज्जाः धातुविशेषान्ग्रसंतइवेतियोज्यंभीमसेनंदृष्ट्वाव्यवस्थिताइतिसंबंधः ४४ इतिश्री महाभारतेभी॰ टीकायांएकोनविंशोऽध्यायः १९ भीष्मोनेतानिर्वोढायेषांतेभीष्मनेत्राः १ मेवंपुष्कलंयथास्यात्तथाब्रूहिमेवमितिमीवतेः पुष्ट्यर्थस्य यजिरूपंगौडास्त्विह पाठांतरंकल्पयंतिसर्वंमेत ब्रूहिमेत्वं



व्यवस्थिताः प्रतिव्यूह्यतवपुत्रस्यवाहिनीम् ग्रसंतइवमज्जानोयोधानांभरतर्षभ दृष्ट्वाग्रतोभीमसेनंगदापाणिमवस्थितम् ४४ इतिश्रीमन्महाभारतेभीष्मपर्वणिएकोनविंशोऽध्यायः १९ धृतराष्ट्रउवाच सूर्योदयेसंजयकेनुपूर्वंयुयुत्सवोहृष्यमाणाइवासन् मामकावाभीष्मनेत्राः समीपेपांडवावाभीमनेत्रास्तदानीम् १ केषांजघन्यौसोमसूर्यौसवायूकेषांसेनांश्वापदाश्चाभषंत केषांयूनांमुखवर्णाः प्रसन्नाः सर्वंमेत्वंब्रूहिमेवंयथावत् २ संजयउवाच उभेसेनेतुल्यमिवोपयातेउभेव्यूहेहृष्टरूपेनरेंद्र उभेचित्रेवनराजिप्रकाशेतथैवोभेनागरथाश्वपूर्णे ३ उभेसेनेबृहत्योभीमरूपेतथैवोभेभारतदुर्विषह्ये तथैवोभेस्वर्गजयायसृष्टेतथैवोभेसत्पुरुषोपजुष्टे ४ पश्चान्मुखाः कुरवोधार्तराष्ट्राः स्थिताः पार्थाः प्राङ्मुखायोत्स्यमानाः दैत्येंद्रसेनेवचकौरवाणांदेवेंद्रसेनेवचपांडवानाम् ५ चक्रेवायुः पृष्ठतः पांडवानांधार्तराष्ट्रान्श्वापदाव्याहरंति गजेंद्राणांमदगंधांश्चतीव्रान्नसेहिरेतवपुत्रस्यनागाः ६ दुर्योधनोहस्तिनंपद्मवर्णंसुवर्णकक्षंजालवंतंप्रभिन्नं समास्थितोमध्यगतः कुरूणांसंस्तूयमानोबंदिभिर्मागधैश्च ७ चंद्रप्रभंश्वेतमथातपत्रंसौवर्णस्रग्भ्राजतिचोत्तमांगे तंसर्वतः शकुनिः पार्वतीयैः सार्धंगांधारैर्यातिगांधारराजः ८ भीष्मोऽग्रतः सर्वसैन्यस्यवृद्धः श्वेतच्छत्रः श्वेतधनुः सखड्गः श्वेतोष्णीषः पांडुरेणध्वजेनश्वेतैरश्वैः श्वेतशैलप्रकाशैः ९ तस्यसैन्येधार्तराष्ट्राश्चसर्वेबाल्हीकानामेकदेशः शलश्च येचांबष्ठाः क्षत्रियायेचसिंधोस्तथासौवीरापंचनदाश्चशूराः १० शोणैर्हयैरुक्मरथोमहात्माद्रोणोधनुष्पाणिरदीनसत्वः आस्तेगुरुः प्रायशः सर्वराज्ञांपश्चाच्चमूमींद्रइवाभियाति ११ वार्धक्षत्रिः सर्वसैन्यस्यमध्येभूरिश्रवाः पुरुमित्रोजयश्च शाल्वामत्स्याः केकयाश्चेतिसर्वेगजानीकैर्भ्रातरोयोत्स्यमानाः १२ शारद्वतश्चोत्तरधूर्महात्मामहेष्वासोगौतमश्चित्रयोधी शकैः किरातैर्यवनैश्चसार्धंनदाचमूमुत्तरतोभियाति १३ संसप्तकानामयुतंरथानामृत्युर्जयोवाऽर्जुनस्येतिसृष्टाः येनार्जुनस्तेनराजन्कृतास्त्राः प्रयातारस्तेत्रिगर्ताश्चशूराः १४ साग्रंशतसहस्रंतुनागानांतवभारत नागेनागेरथशतंशतमश्वारथेरथे १५ अश्वेऽश्वेदशधानुष्काधानुष्केदशचर्मिणः एवंव्यूढान्यनीकानिभीष्मेणतवभारत १६ संव्यूह्यमानुषंव्यूहंदैवंगांधर्वमासुरं दिवसेदिवसेप्राप्तेभीष्मः शांतनवोग्रणीः १७ महारथौघविपुलः समुद्रइवघोषवान् भीष्मेणधार्तराष्ट्राणांव्यूहः प्रत्यङ्मुखोयुधि १८

यथावदिति २ व्यूहेस्वेस्वेइतिशेषः ३ ४ ५ ६ ७ ८ ९ १० भूमींद्रइवपर्वतइवअप्रकंप्यइत्यर्थः ११ १२ १३ येनयत्रतेनतत्र १४ १५ १६ १७ १८ ६९

अनंतरूपाबह्वीत्वदीयानतुपांडवानांसेनाबह्वीनथापितांबृहतीमेवमन्येइतिसंबंधः १९ इतिश्रीभीष्मपर्वणिटीकायांविंशोऽध्यायः २० बृहतीम् १ २ ३ ४ उत्थानंजयः

अनंतरूपाध्वजिनीनरेंद्रभीमात्वदीयानतुपांडवानाम् तांचैवमन्येबृहतींदुष्प्रधर्षायस्यनेताकेशवश्चार्जुनश्च १९ इतिश्रीमन्महा-
भारतेभीष्मपर्वणिसैन्यवर्णनेविंशोऽध्यायः २० संजयउवाच बृहतींधार्तराष्ट्रस्यसेनांदृष्ट्वासमुद्यतां विषादमगमद्राजाकुंतीपुत्रो
युधिष्ठिर १ व्यूहंभीष्मेणचाभेद्यंकल्पितंप्रेक्ष्यपांडवः अभेद्यमिवसंप्रेक्ष्यविवर्णोऽर्जुनमब्रवीत् २ धनंजयकथंशक्यमस्माभिर्योद्धुमाहृ
वे धार्तराष्ट्रैर्महाबाहोयेषांयोद्धापितामहः ३ अक्षोभ्योऽयमभेद्यश्चभीष्मेणामित्रकर्षिणा कल्पितःशास्त्रदृष्टेनविधिनाभूरिवर्चसा ४
तेवयंसंशयंप्राप्ताःससैन्याःशत्रुकर्षिणः कथमस्मान्महाव्यूहादुत्थानंनोभविष्यति ५ अथार्जुनोऽब्रवीत्पार्थंयुधिष्ठिरममित्रहा विषण्ण
मिवसंप्रेक्ष्यतवराजन्ननीकिनीम् ६ प्रज्ञयाभ्यधिकाञ्छूरान्गुणयुक्तान्बहूनपि जयंत्यल्पतरायेनतन्निबोधविशांपते ७ तत्रतेकारणंरा
जन्प्रवक्ष्याम्यनसूयवे नारदस्तमृषिर्वेदभीष्मद्रोणौचपांडव ८ एतमेवार्थमाश्रित्ययुद्धेदेवासुरेऽब्रवीत् पितामहःकिलपुरा महेंद्रादी-
न्दिवौकसः ९ नतथाबलवीर्याभ्यांजयंतिविजिगीषवः यथासत्यानृशंसाभ्यांधर्मेणैवेनचानघ १० ज्ञात्वाधर्ममधर्मंचलोभंचोत्तममास्थि
ताः युध्यध्वमनहंकारायतोधर्मस्ततोजयः ११ एवंराजन्विजानीहिध्रुवोऽस्माकंरणेजयः यथातुनारदःप्राहयतःकृष्णस्ततोजयः १२ गु-
णभूतोजयःकृष्णेपृष्ठतोऽभ्येतिमाधवम् तद्यथाविजयश्चास्यसन्नतिश्चापरेगुणाः १३ अनंततेजागोविंदःशत्रुपूगेषुनिर्व्यथः पुरुषःस
नातनमयोयतःकृष्णस्ततोजयः १४ पुराह्येषहरिर्भूत्वाविकुंठोऽकुंठसायकः सुरासुरानवस्फूर्जन्नब्रवीत्केजयंत्विति १५ कथंकृष्णं
जयेमेतियैरुक्तंतत्रतैर्जितम् तत्प्रसादाद्धित्रैलोक्यंप्राप्तंशक्रादिभिःसुरैः १६ तस्यतेनव्यथांकांचिदिहपश्यामिभारत यस्यतेजयमा
शास्तेविश्वभुक्त्रिदिवेश्वरः १७ इतिश्रीमन्महाभारतेभीष्मपर्वणियुधिष्ठिरार्जुनसंवादेएकविंशतितमोऽध्यायः २१
संजयउवा० ततोयुधिष्ठिरोराजास्वांसेनांसमनोदयत् प्रतिव्यूहन्ननीकानिभीष्मस्यभरतर्षभ १ यथोद्दिष्टान्यनीकानिप्रत्यव्यूहंत-
पांडवाः स्वर्गपरममिच्छंतःस्वयुद्धंकुरुनानघाः २ मध्येशिखंडिनोऽनीकंरक्षितंसव्यसाचिना धृष्टद्युम्नश्चरन्नग्रेभीमसेनेनपालि
तः ३ अनीकंदक्षिणंराजन्युयुधानेनपालितम् श्रीमतासात्वताग्र्येणशक्रेणेवधनुष्मता ४ महेंद्रयानप्रतिमंरथंतुसोपस्करंहाटकर
त्नचित्रम् युधिष्ठिरःकांचनभांडयुक्तंसमास्थितोनागपुरस्यमध्ये ५ ५ ६ ७ ८ ९ १० ११ १२ गुणभूतोदासभूतः १३ १४

अकुंठसायकःअप्रतिहतायुधः १५ १६ १७ इतिश्री०टीकायांएकविंशः २१ ततो १ २ ३ ४ पुरस्यमध्येस्थिमइदानीमानीतमितिभावः तत्रविदितंवा ५

न्येववाभवंतिसविक्षेपः आविशेषेभ्योलिंगमात्रंप्रविविक्षतोपिलयविक्षेपोस्तः लिंगमात्रात्पुरुषंप्रविविक्षतोपिसोस्तः तावेतौलयविक्षेपौहेयौ-
श्रयेते लयविक्षेपरहितंमनः कृत्वास्फुनिश्चलम् यदायात्यमनीभावंतदातत्परमंपदमिति एतेषुत्रिषुलीनेषाद्यः स्फुस एवहितीयोविगलितदेहा
हंकारत्वाद्विदेहसंज्ञः तृतीयः प्रकृतीलयइति एतयोःसमाधिर्गौणः अतएवसूत्रितंभवप्रत्ययोविदेहप्रकृतिलयानां भवप्रत्ययोजन्मांतर
हेतुरेषांसमाधिर्भवति यद्वाजन्मांतरे एतेषांजन्मनेवसमाधिसिद्धिः पक्षिणामाकाशगमनसिद्धि वद्भवतीतिसूत्रार्थः सर्वथापितेषांसद्योमुक्तिर्नास्तीतिसि
द्धंयदातुअस्मितामात्रस्यापिनिर्विकल्पेचिन्मात्रेलयोभवतितदायंविद्वान्कैवल्यंधर्ममेघसमाध्याख्यमनुभवति यमधिकृत्यश्रूयतेक्षणमेकंक्रतुशत
स्यचतुः समस्तायत्फलंतदवाप्नोतीति अयमेवमोक्षाख्यः परंअयनंप्राप्यंस्थानंयस्यसमुनिर्मोक्षपरायणइत्युच्यतेयतोस्यामेवावस्थायांयोगीजीव
न्मुक्तइत्युच्यते विगतेच्छाभयक्रोधइतिपादः प्रागेवव्याख्यातः यएवंभूतःससदामुक्तः बंधप्रतीतिकालेपिसमुक्तएवास्तिअज्ञानमात्रव्यवधाना-

भोक्तारंयज्ञतपसांसर्वलोकमहेश्वरम् सुहृदंसर्वभूतानांज्ञात्वामांशांतिमृच्छति २९ इतिश्रीमहाभारतेभी-
ष्मपर्वणिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसंवादेसन्न्यासयोगोनामपंचमोऽध्यायः ५

न्मुक्तेः एतेनाहंकारादेर्बंधस्यकालत्रयेपिअसत्वोक्त्यामिथ्यात्वंदर्शितम् २८ एवंसमाहितचित्तेनकिंविज्ञेयमित्युच्यतेभोक्तारमिति सोपाधिकेनरू
पेणयज्ञानांतपसांचकर्तृरूपेणदेवतारूपेणचभोक्तारंतथासर्वेषांभूतानांहिरण्यगर्भादीनामपिमहांतंव्यापकंईश्वरंईशितारमंतर्यामिणंसुहृदंसर्व
भूतानांप्राणिनांप्रत्युपकारनिरपेक्षतयाउपकारिणं सर्वप्रत्ययसाक्षिणंनारायणंमांप्रत्यगभेदेनज्ञात्वासाक्षात्कृत्यतद्भावंप्राप्यशांतिमनुपाध्यव
स्थांनिरुपाख्यांकैवल्यसंज्ञांऋच्छतिप्राप्नोति एवंचसोपाधिब्रह्मभावप्राप्तिपूर्विकैवनिरुपाधिप्राप्तिरितिगम्यते यथोक्तंवार्तिकसारे सोपाधि-
र्निरुपाधिश्चद्वेधाब्रह्मविदुच्यते सोपाधिकस्यात्सर्वात्मानिरुपाख्योनुपाधिकः जक्षन्क्रीडन्रतिंप्राप्तइतिसोपाधिकस्यतु छांदोग्येसर्वकामाप्तिः
सार्वात्म्यात्स्पष्टमीरिता अहमन्नंतथान्नादः श्लोककार्यप्यहोअहं इतितत्वविदःसामगानसर्वात्मताश्रुता अत्रापिचक्रदृष्टांतात्सोपाधिस्तत्वविद्भुनः
अपूर्वानपराद्युक्त्याश्रोष्यतेनिरुपाधिकइति २९ इतिनैलकंठीयेभारतभावदीपेभीष्मपर्वणिगीतार्थप्रकाशेटीकायांपंचमोऽध्यायः ५

पूर्वाध्यायांतेसूत्रितंध्यानयोगंविवरीतुमिच्छन् तत्राधिकारहेतुत्वात्कर्मयोगंतावत्स्तौतिद्वाभ्याम् अनाश्रितइति यःकर्मणांफलंअनाश्रितोऽनपेक्ष
माणः कार्यंअवश्यकर्तव्यंनित्यंकर्मकरोतिसएवफलसंकल्पत्यागात्सन्यासीचयोगीचभवतिनतुनिरग्निस्त्रोविधितः श्रौतस्मार्तकर्मत्यागीस
एवसन्यासीनापिअक्रियस्त्यक्तवाङ्मनःकायक्रियएववायोगीति १ केनसाम्येनायंसन्यासीयोगीचेतिस्तूयतेऽतआह यमिति योहित्यक्तसर्वसं
कल्पःससन्यासीनादृशश्चध्यानयोगीअतोनतयोर्भेदः निःसंकल्पस्तटस्थस्तिष्ठेदेतन्मोक्षणमितिमैत्रायणीयोपनिषच्छ्रुतस्यमोक्षलक्षणस्यनिःसं-
कल्पत्वस्योभयत्रापितुल्यत्वात् अतोयमपिकर्मयोगीफलसंकल्पत्यागात् निःसंकल्पत्वसाम्यात्सन्यासीयोगीचभवतीतिस्तूयतइत्यर्थः योगाधि-
कारसिद्धयेनिष्कामकर्माण्यनुष्ठेयानीतिश्लोकद्वयतात्पर्यम् २ तत्रकर्मानुष्ठानस्यावधिमाह आरुरुक्षोरिति यावद्धियोगंयमनियमाद्यष्टांगोपेतम-
त्योत्कंव्यादारोढुमिच्छतितावत्कर्माण्यनुष्ठेत तस्यआरुरुक्षोर्मुनेरारुरुक्षाकारणंतीव्रवैराग्योत्पादनद्वाराकर्मभवति तस्यैवयोगारूढस्ययोगांगानु

श्रीभगवानुवाच अनाश्रितःकर्मफलंकार्यंकर्मकरोतियः ससन्यासीचयोगीचननिरग्निर्नचाक्रियः १ यंसन्यासमिति
प्राहुर्योगंतंविद्धिपांडव नह्यसन्यस्तसंकल्पोयोगीभवतिकश्चन २ आरुरुक्षोर्मुनेर्योगंकर्मकारणमुच्यते योगारूढस्यतस्यै
वशमःकारणमुच्यते ३ यदाहिनेंद्रियार्थेषुनकर्मस्वनुषज्जते सर्वसंकल्पसन्यासीयोगारूढस्तदोच्यते ४ उद्धरेदात्मनात्मा
नंनात्मानमवसादयेत् आत्मैवह्यात्मनोबंधुरात्मैवरिपुरात्मनः ५ बंधुरात्मात्मनस्तस्ययेनात्मैवात्मनाजितः अनात्मनस्तुश
त्रुत्वेवर्तेतात्मैवशत्रुवत् ६

ष्ठानेप्रयत्नस्यविक्षेपासहस्ययोगारोहेकर्मणांशमःसन्यासःकारणंउच्यते नहिकर्मसुव्यापृतोनन्यचित्तत्त-
यायोगमनुष्ठातुमीष्टे ३ ननुयोगपदेनमुख्ययावृत्यानिर्बीजःसमाधिरुच्यतेतमारूढस्यकर्मणांत्यागःस्वतःसिद्धत्वादविधेयइत्याशंक्यप्रकृ
तेयोगारूढपदस्यार्थमाह यदाहीति इंद्रियार्थेषुशब्दादिषुरमणीयेषुकर्मसुचतत्प्राप्तिसाधनेषुनदर्शनमननसज्जनेवैराग्यदार्ढ्यात्सक्तोनभ
वतिनापिमनसाइदंमेभूयात् एतदर्थमहमिदंकर्मकुर्यामितिसंकल्पयतितादृशश्चसर्वसंकल्पसन्यासीयदाभवतितदायोगारूढइत्युच्यते
यथातीव्रबुभुक्षयोपेतोन्यत्रनीरागोव्यासंगांतरंत्यक्त्वाभोजनारूढएवभवति तथातीव्रारुरुक्षावान्सर्वत्रवीतरागस्त्यक्तसर्वकर्मायोगारूढ-
एवभवति तावत्कर्माणिकर्तव्यानिततःपरंत्याज्यानीत्यर्थः ४ उद्धरेदिति एवंक्रमेणकर्मद्वाराचित्तशुद्धिंसंपाद्ययोगारूढोऽभ्यासवैराग्यब-
लेनआत्मानंउद्धरेत् आत्मैवह्यात्मनोबंधुः नपुत्रादयउद्धर्तुंक्षमाः आत्मैवरिपुरात्मनः नत्वन्येशत्रवःसंसारेमज्जयितुमेतंक्षमाइत्यर्थः ५ आत्मा
मनःआत्मनामनसा अनात्मनअजितत्वेनसआत्मामनएवशत्रुः ६ ५ ५ ५ ५ ५ ५

मनसोजयेफलमाह जितात्मनइति शीतोष्णादिषुप्राप्तेषुजितात्मनः निर्विकारचित्तस्यआत्माचित्तंपरंउत्कर्षेणसमाहितः समाधिंप्राप्तोभवति अतः
समाधिसिध्यर्थंमनोजेतव्यमेवेत्यर्थः ७ समाधिसिद्धेरपिकिंफलमतआह ज्ञानेति ज्ञानंशास्त्रोपदेशजाबुद्धिः विज्ञानंशास्त्रार्थध्यानजप्रमा-
रूपोनुभवः ताभ्यांतृप्तः संजातालंप्रत्ययआत्माचित्तंयस्यसज्ञानविज्ञानतृप्तात्माअतएवकूटस्थोऽप्रकंप्यः संसारतापानास्कंदितोभव-
तीतिसमाधिफलं अस्यलोकप्रसिध्दंलक्षणमाह विजितेंद्रियइति समलोष्टाश्मकांचनइति एवंविधोयोगीसयुक्तः प्राप्तयोगइत्युच्यतेविद्वद्भिः
८ समत्वमेवस्तौतिसुहृदिति सुहृत्प्रत्युपकारमनपेक्ष्यउपकर्ता मित्रंस्नेहवान् अरिःशत्रुः उदासीनः उभयत्रपक्षपातशून्यः मध्यस्थः उभ
यहितैषीद्वेष्यआत्मनोऽप्रियः बंधुः संबंधीनेषुपुण्यकृत्सुपापेषुपापचारेषुकस्यकिंकर्मेत्यनालोचयन्तेषुसर्वेषुयः समबुद्धिः स विशिष्यते ९
योगीति योगीयोगाभ्यासपरः रहसिएकांते स्थितः सन्आत्मानंबुद्धिंयुंजीतसमादध्यात् सततमितिनैरंतर्यमुक्तंनिराशीः योगसिद्धेरन्यदप्रार्थया

जितात्मनः प्रशांतस्यपरमात्मासमाहितः शीतोष्णसुखदुःखेषुतथामानापमानयोः ७ ज्ञानविज्ञानतृप्तात्माकूटस्थोविजितेंद्रि
यः युक्तइत्युच्यतेयोगीसमलोष्टाश्मकांचनः ८ सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु साधुष्वपिचपापेषुसमबुद्धिर्विशिष्य
ते ९ योगीयुंजीतसततमात्मानंरहसिस्थितः एकाकीयतचित्तात्मानिराशीरपरिग्रहः १० शुचौदेशेप्रतिष्ठाप्यस्थिरमासनमात्म
नः नात्युच्छ्रितंनातिनीचंचैलाजिनकुशोत्तरं ११ तत्रैकाग्रंमनःकृत्वायतचित्तेंद्रियक्रियः उपविश्यासनेयुंज्याद्योगमात्मविशुद्ध
ये १२

नः तदेकनिष्ठइतियावत्तेनसत्कारउक्तः एकाकीअसहायः सन्न्यासीत्यर्थः यतोस्थिरीकृतौचित्तंमनः आत्मासेंद्रियंशरीरंयेनसयतचित्तात्मा तथाअप-
रिग्रहः एकाकित्वेपिकथापुस्तकादिबहुपरिग्रहशून्यः १० योगंयुंजीतेत्युक्तं तत्कथमित्याकांक्षायांतदंगान्यासनादीन्याह शुचौदेशेइत्यादिना शु
चौस्वभावतः संस्कारतोवापुण्येदेशेस्थानेप्रतिष्ठाप्यकृस्थितंकृत्वास्थिरंनिश्चलंआस्तेस्मिन्नित्यासनंस्थंडिलंनिश्चलमित्यनेनमृन्मयमेवस्थंडिलंन-
तुकाष्ठमयपीठंआत्मनइतिपरासनव्यावृत्त्यर्थं नात्युच्छ्रितंनात्युच्चं नातिनीचं चैलाजिनकुशाःउत्तरेउपर्युपरियस्यतच्चैलाजिनकुशोत्तरं अजिनादुप
रिचैलंकुशेभ्यउपरिअजिनंस्थंडिलस्योपरिकुशाइत्यर्थः ११ प्रतिष्ठाप्यकिंकुर्यादितितत्राह तत्रेतितत्रासनेपद्मस्वस्तिकाद्यन्यतमेनासनेनोपविश्ययताःनि
गृहीताः चित्तस्यक्रियाःविषयाणांस्मरणानि इंद्रियक्रियास्तेषांग्रहणंयेनासोयतचित्तेंद्रियक्रियः अतएवबाह्याभ्यंतरविषयानुपरक्तनयाएकंध्येयमेवप्र
त्यक्त्वंअग्रेयस्यस्फुरतिनान्यत् तदेकाग्रंकृत्वंतरानंतरितब्रह्मैकाकारवृत्तिप्रवाहिकृत्वाआत्मविशुध्दयेचित्तशुद्ध्यर्थंयोगंवृत्तिप्रवाहस्यापिनिरोधंयुंज्यात्
अनुतिष्ठेत् चित्तस्यस्थैर्यतापादनेन १२ ६

आसनेउपविश्येत्युक्तंतत्कथमित्यतआह सममिति कायःशरीरमध्यंशिरःग्रीवाचकायशिरोग्रीवंसमंमूलाधारमारभ्यमूर्धांतंअवक्रंअचलंनिष्कंपंधारय न्स्थिरः भूत्वासंप्रेक्ष्यनासिकाग्रंस्वमितिनासिकाग्रावेक्षणंनविधीयते किंतुनिमीलनेलयभयंउन्मीलनेविक्षेपभयमतोदिशोपिरूप्यादिविक्षेपकवि षयदर्शनभयादनवलोकयन्नर्द्धोन्मीलितेनेत्रआसीतेतिउत्तरेणान्वयः १३ एवमासनेउपविष्टेनयत्कर्तव्यंतदाह प्रशांतात्मेति योयुक्तोयोगीब्रह्म चारिव्रतेभैक्ष्यचर्यायांस्थितःसन्न्यासीत्यर्थः मच्चित्तोमयिपरमेश्वरेचित्तंयस्यसएवंभूतोमय्येवमनःसंयम्यमत्परआसीतसप्रशांतात्माभूत्वाविगत भीर्भवतीतियोजनाभवतिहिकश्चिदात्मनोन्यमीश्वरंमत्वातच्चित्तस्तमेवाराध्यत्वेनाभिगतः नत्वेवचमनसःसंयमंकरोतिनतुसतत्परः तमेवपरम पुरुषार्थतयाप्राप्यत्वेनमन्यतेकिंतु तत्प्रीत्याऽन्यदेवफलंकामयते अयंतुमच्चित्तोमय्येवमनःसंयम्यमत्परोमामेवसर्वांतरंप्रत्यगद्वयंकामयतइति यतोमत्परोऽतएवप्रशांतात्माप्रकर्षेणबाह्याभ्यंतरविषयत्यागेनसमाधिसुखास्वादत्यागेनचशांतउपरतआत्माचित्तंयस्यसोस्मितामात्रावशेषोविगत-भीर्भवतिइयमेवावस्थासत्वपुरुषान्यताख्यातिरितिब्रह्मसाक्षात्कारइतिचविकल्प्यतेसर्वथातस्यांसिद्धायांपुरुषःपरमपुरुषार्थभाग्भवति १४

समंकायशिरोग्रीवंधारयन्नचलंस्थिरः संप्रेक्ष्यनासिकाग्रंस्वंदिशश्चानवलोकयन् १३ प्रशांतात्माविगतभीर्ब्रह्मचारिव्रतेस्थितः मनःसंयम्यमच्चित्तोयुक्तआसीतमत्परः १४ युंजन्नेवंसदात्मानंयोगीनियतमानसः शांतिंनिर्वाणपरमांमत्संस्थामधिगच्छति १५ नात्यश्नतस्तुयोगोऽस्तिनचैकांतमनश्नतः नचातिस्वप्नशीलस्यजाग्रतोनैवचार्जुन १६ अस्याःफलमाह

युंजन्निति एवमनेनप्रकारेणसदानिरंतरंदीर्घकालंचआत्मानोमनोयुंजन्समादधानोयोगीनियतंख्यातिफलादपिनिगृहीतंमानसंयेनसनियतमा नसः शांतिंपरंवैराग्यबलात् ख्यातिमपिनिरुध्यनिर्विकल्पंपदंनिर्वाणंमोक्षस्तदेवपरमानिष्ठायस्याःशांतेः तांमत्संस्थांमय्येवसंस्थाएकीभावेना वस्थानंसमाप्तिर्वायस्यास्तांअधिगच्छतिप्राप्नोति ख्यातिफलंचसूत्रकृतादर्शितंप्रसंख्यानेप्यकुसीदस्यसर्वथाविवेकख्यातेर्धर्ममेघःसमाधिरि ति तत्परंपुरुषख्यातेर्गुणवैतृष्ण्यमिति सत्वपुरुषान्यताख्यातिमात्रात्सर्वज्ञातृत्वंसर्वभावाधिष्ठातृत्वंचेतिसूत्रत्रयेणप्रसंख्यानेध्यानेअकुसीदस्य वणिजइवफलानिच्छोःसर्वथाविवेकख्यातिरेवभवतितस्याश्चफलंधर्ममेघःसमाधिः सचप्रागेवव्याख्यातः ततोवैराग्यंपरंपरसंज्ञंपुरुषख्यातेः फलंतस्यलक्षणंगुणेषुदिव्यादिव्यविषयेषुवैतृष्ण्यं एतस्यैवह्निनांतरीयकंफलंकैवल्यमितियोगाविदंति तृतीयसूत्रोक्तंफलंसर्वज्ञादिकंतुअभि-प्रेत्यश्रूयते कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातंभवतीतिसर्वस्यवशीसर्वस्येशानःसर्वस्याधिपतिरित्यादिकं १५ एवंयोगाभ्यासनिष्ठस्या हारादिनियममाहद्वाभ्याम् नात्यश्नतइति एकांतंअतिशयेन अतिजाग्रतइत्यत्राप्यतिशब्दोयोज्यः १६

युक्ताः परिमिताः आहारादयो यस्य सतथा १७ निर्वाणपरमांशांतिं प्राप्तस्य लक्षणान्याह यदेत्यादिभिः षड्भिः विनियतं विशेषेण एकाग्रताभूमेरपि नियतं निरुद्धं आत्मनि प्रत्यगात्मन्येवावतिष्ठते न त्वा स्मितादिरूपेण उद्रिच्यते तदा योगी सर्वेभ्यः जाग्रत्स्वप्नसबीजसमाधिषूपस्थितेभ्यः त्यक्तोपेपंच-मीसार्वत्स्यप्राप्स्येव तान् प्राप्यतेषु निस्पृहो भवति तदा युक्तो निर्विकल्प इत्युच्यते १८ एकाग्रतावस्थायां योगचित्तस्योपरममाह यथेति नेंगते न चलति तद्वत् यतं चतच्चित्तं च यतचित्तं तस्य एकाग्रतां प्राप्तं चित्तं निर्वातप्रदीपवन्न चलतीत्यर्थः आत्मनो योगं समाधिं युंजतोनुतिष्ठतः १९ यत्रेति एवमेकाग्रीभूतं चित्तं सत् योगसेवया निरुद्धं यत्र यस्यामवस्थायां उपरमते विलीनं भवति यत्र वा आत्मना चित्तेन आत्मानं निर्विकल्पं पश्यन्नात्मनि तुष्यति न बाह्यार्थे तुष्टिं भजते २० किंच सुखमिति आत्यंतिकं अनंतं यत्सुखं तत्केवलं बुद्धिग्राह्यं सोषुप्तसुखवत् यतोऽतींद्रियम् इंद्रियागोचरं यत्र सुखे स्थितोऽयं न वेत्ति वेद्याभावात् न किंचिदनुभवति नापि तत्त्वतश्चलति बुद्धितादात्म्याध्यासकाले चलतीवेति भाति परंतु तत्त्वतो न चलति तथा च श्रुतिर्ध्याय-

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगो भवति दुःखहा १७ यदा विनियतं चित्तमात्मन्येवावतिष्ठते निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा १८ यथा दीपो निवातस्थो नेंगते सोपमा स्मृता योगिनो यतचित्तस्य युंजतो योगमात्मनः १९ यत्रोपरमते चित्तं निरुद्धं योगसेवया यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति २० सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः २१ यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते २२ तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् स निश्चयेन योक्तव्यो योगोनिर्विण्णचेतसा २३ ५

तीव लेलायतीवेति इवशब्दं प्रयुंजानाध्यानादेरतात्विकत्वं दर्शयति बुद्धौ ध्यायत्यां ध्यायतीवेति लेलायत्यां लेलायतीवेति श्रुत्यर्थः यद्वा तत्सुखं यत्र अयं वेत्ति अनुभवतीति संबंधः यत्रेत्यादिभिन्नं वाक्यं २१ दुःखेन शस्त्रपातादिलक्षणेन गुरुणा महता २२ तमिति यत्रोपरमते चित्तमित्यादिना उक्तलक्षणं तं दुःखसंयोगस्यापि अंतः करणसंबंधस्य वियोगमेव संतं विरुद्धलक्षणया योगसंज्ञितं विद्यात् योगफलमुपसंहृत्य पुनर्निश्चयानिर्वेदयोः साधनत्वविधानपूर्वकं तमेव शनकैस्तोपि पथ्यं वदितव्यमिति न्यायेन विधत्ते स इत्यादिना स योगः निश्चयेन अध्यवसायेन अनिर्विण्णं निर्वेदरहितं चेतो यस्य तेन योक्तव्योऽभ्यसनीयः यद्वा शांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदिति श्रुतिविहितं श्रुत्यंतरदृष्टश्रद्धाचित्तपदोपेतं शमादिषट्कमत्र क्रमतो विधीयते तत्र निश्चयेनेति गुरुवेदवाक्यादौ फलावश्यंभावनिश्चयलक्षणा श्रद्धात्र निश्चयपदेन गृह्यते तथा निर्विण्णं चेतसेति वैराग्येन द्वंद्वसहिष्णुत्वलक्षणा तितिक्षा विधीयत इति ज्ञेयं २३

अथशमदमोपरमसमाधानानिक्रमेणश्लोकद्वयेनविधत्तेसंकल्पेतिसंकल्पइदंमेभूयादितिचेतोवृत्तिः ततउद्भवोयेषांतान्काम्यमानान्विषयान्अ-
शेषतोवासनोच्छेदपूर्वकंसंकल्पनिरोधेनत्यक्त्वा एतेनांतरिंद्रियनिग्रहलक्षणःशमउक्तः बाह्येंद्रियनिग्रहलक्षणंदममाह मनसैवेति विषयदोष-
दर्शिनामनसैवसर्वतःसर्वप्रकारेणश्रोत्रादिकमिंद्रियग्रामंसमंततःसर्वेभ्योविषयेभ्योविनियम्यउपरमेदित्युत्तरेणान्वयः २४ शनैःशनैरिति भू-
मिकाजयक्रमेणदिव्यादिव्यविषयेभ्यःउपरमेत्व्यावृत्तोभवेत् कथंधृतिगृहीतयाबुध्येति धृतिः धृत्यायययाधारयतेमनःप्राणेंद्रियक्रियाः योगेनाव्य
भिचारिण्याधृतिःसापार्थसात्विकीत्युक्तलक्षणातयागृहीतयावशीकृतयाबुद्ध्याउपरमेत् तथाएवमुपरतंमनःआत्मनिस्वरूपेसंस्थाप्यनतुदृश्ये-
द्रष्टरिवात्ततथाआत्मैकाकारमेकाग्रमित्यर्थः द्रष्टृदृश्योपरक्तंचित्तंसर्वार्थम् सर्वार्थतैकार्थतयोःक्षयोदयौचित्तस्यैकाग्रतापरिणामइतिसूत्रितमे
काग्र्यंप्रापयेत् सूत्रार्थस्तुअहमिदंपश्यामीत्यनुभवेहिद्रष्टादृश्यंदर्शनंचभासतेतत्रदर्शनभानमप्रत्याख्येयमतोद्रष्टरिदृश्येचोपरक्तंचित्तंसर्वार्थ-
मितितनुदर्शनोपरक्ततापिसर्वार्थतायांगणितानतदभावेचित्तस्यनाशापत्तेः द्रष्टुर्दृश्योपरागाभावेतुएकार्थतदुच्यते यथास्वप्नेतत्रहिदृश्यंनास्तीतिपा

संकल्पप्रभवान्कामांस्त्यक्त्वासर्वानशेषतः मनसैवेंद्रियग्रामंविनियम्यसमंततः २४ शनैःशनैरुपरमेद्बुद्ध्याधृतिगृहीत-
या आत्मसंस्थंमनःकृत्वानकिंचिदपिचिंतयेत् २५ यतोयतोनिश्चरतिमनश्चंचलमस्थिरं ततस्ततोनियम्यैतदात्मन्येव
वशंनयेत् २६

मराणामपिप्रसिद्धम् द्रष्टापिनास्तितदाइंद्रियाणामभावात् आत्मेंद्रियमनोयुक्तंभोक्तेतिश्रुत्यैवभोक्तृत्वस्येंद्रियसन्नियोग
शिष्टत्वात् किंतु द्रष्टृदृश्यवासनावासितंचित्रपटसदृशमेकंमनएवास्तितच्चस्वयंज्योतिषापुरुषेणभास्यमानंजाग्रद्वत्स्वप्नेपिदृष्टृदृश्योपरागेप्रकाश
यतितद्वासनावासितत्वात् एवंसतियदासर्वार्थतायाःक्षयःएकार्थतायाउदयश्चतदाचित्तस्यैकाग्रतारूपःपरिणामोभवतीतितदेवमात्मसंस्थंमनःकृ
त्वेतिसंप्रज्ञातसमाधिरुक्तः तत्रापिपूर्वाभ्यासवशयात्चित्तस्यद्रष्टृदृश्योपरागोवासनामयोभातीतितन्निवारणेनअसंप्रज्ञातसमाधिमाह नकिं
चिदपिचिंतयेदितिध्यातृध्यानध्येयविभागमपिनस्मरेत् किंतु अखंडैकरससंविदात्मनास्फुरन्नवतिष्ठेदित्यर्थः २५ शनैःशनैरित्येतद्व्याचष्टे
यतोयतइति त्रिभिः यतोयतोहेतोर्यंयंविषयंगृहीतुंमनोनिश्चरतिबहिर्गच्छतिततस्ततः तत्रतत्रदोषदर्शनेनततस्ततोविषयात्एतन्मनोनि-
यम्यप्रत्याहृत्यआत्मनि स्वरूपेएववशंनयेत् पर्यवस्थापयेत् एतेनपूर्वार्द्धंव्याख्यातम् २६ ५ ५ ५ ५

एवमात्मवशेमनसिकिंस्यादित्याशंक्याह प्रशांतेति हि यस्मात् एनंप्रशांतमनसंप्रशांतमनसमांतराणांचविषयाणांत्यागात् शांतरजसंप्रक्षीणमोहादिक्लेशप्रकर्षेणउप
रतंचेतसंयोगिनंएकाग्रताभूमौउत्तमंसुखंसंप्रज्ञातसमाधिफलभूतंउपैतिभौतिकानांबाह्यानांमानोरथिकानांचनाशेनशांतरजसं ब्रह्मभूतंसद्रूपं अकल्मषंधर्माधर्मवर्जितं यथोक्तंयोगभाष्येयस्त्वेकाग्रेचेतसिसद्भूतमर्थंप्रद्योतयतिक्षिणोतिचक्लेशान्कर्मबंधनानिश्लथयतिनिरोधमभिमुखीकरोतिसंप्रज्ञातोयोगइत्याख्यायतइति एतेनात्मसंस्थंमनःकृत्वेतिव्याख्यानम् २७ अस्यफलमाह युंजन्निति एवमनेनप्रकारेणयोगीआत्मा

प्रशांतमनसंह्येनंयोगिनंसुखमुत्तमम्‌ उपैतिशांतरजसंब्रह्मभूतमकल्मषम् २७ युंजन्नेवंसदात्मानंयोगीविगतकल्मषः सुखेनब्रह्मसंस्पर्शमत्यंतंसुखमश्नुते २८

नंमनोयुंजन् समादधानः विगतकल्मषोनिरस्ताविद्यादिक्लेशः सुखेनअनायासेनब्रह्मसंस्पर्शंनिर्विशेषंब्रह्मणऐक्यंत्रिविधोपाधिप्रविलयात् अश्नुतेप्राप्नोति कीदृशंब्रह्मसंस्पर्शंअत्यंतंअंतोद्रष्टृदृश्यंभावेनपरिच्छेदः तमतिक्रांतंनिर्विशेषंसुखंपरमानंदैकरूपम् एतेननकिंचिदपिचिंतयेदितिचतुर्थपादोव्याख्यातः २८



श्रीकृष्णाभ्यांनमः ५ ५ ५ ५ ५ ५ ५ ५

द्विविधस्यापियोगस्यफलमाह सर्वेति सोपाधिर्निरुपाधिश्चद्वेधाब्रह्मविदुच्यते सोपाधिकः स्यात्सर्वात्मानिरुपाख्योऽनुपाधिकइतिवार्तिकोक्तरीत्यासंप्र ज्ञातेआत्मनः सर्वात्म्यमनुभवन्योगीसर्वभूतेषुउपादानतयास्थितंआत्मानंईक्षतेपश्यति तथाअसंप्रज्ञातेसर्वाणिभूतानिब्रह्मादिस्तंबपर्यंतानिआत्म- न्येकतांगतानिरज्वामिवाध्यस्तसर्पदंडधारादीनि तद्वत्पश्यति योगयुक्तात्मायोगेनसमाहितचित्तः अस्यैवव्युत्थानावस्थामाह सर्वत्रेति सर्वेषुब्रह्मांडा- दिस्थावरांतेषुविषमेषुभूतेषुसमंनिर्विशेषंब्रह्मात्मैकत्वविषयंदर्शनंयस्यससर्वत्रसमदर्शनः तथाचश्रुतयः यस्तुसर्वाणिभूतानिआत्मन्येवानुपश्यति सर्वभूतेषुचात्मानंततोनविजुगुप्सते सर्वस्यात्माभवतिसर्वमस्यात्माभवति ब्रह्मदाशाब्रह्मदासाब्रह्मेमेकितवाउत इदंसर्वंयदयमात्मेत्यादयएतमर्थंमति यत्तुयोयोगयुक्तात्मायोवासर्वत्रसमदर्शनः सआत्मानमीक्षतइतियोगिसमदर्शिनावात्मेक्षणाधिकारिणावुक्तौ यथाहिचित्तवृत्तिनिरोधः साक्षिसाक्षात्कार- हेतुः तथाजडविवेकेनसर्वानुस्यूतचैतन्यपृथक्करणमपितेनावश्यंयोगएवापेक्षितइति तन्न समाहितोभूत्वात्मन्येवात्मानंपश्यतिततस्तुतंपश्यतिनिष्कलं- ध्यायमानः इत्यादिश्रुतिभिः समाधिध्यानापरपर्याययोगस्यैवात्मदर्शनेहेतुत्वप्रतिपादनात् तत्कारणंसांख्ययोगाभिपन्नम् विद्यामेतांयोगविधिंच-

सर्वभूतस्थमात्मानंसर्वभूतानिचात्मनि ईक्षतेयोगयुक्तात्मासर्वत्रसमदर्शनः २९ ५

कृत्स्नमितिलिंगाच्चज्ञानयोगयोः समुच्चयावगमात् नचश्रौतयौक्तिकमात्राज्जडाजडयोः देहात्मनोः पृथक्करणंसंभवति सोपाधिकस्यभ्रमस्यउपा धिनिवृत्तिमंतरेणनिवृत्त्यसंभवात् आदर्शाद्यनिवृत्तावपिप्रतिबिंबादिभ्रमनिवृत्त्यापत्तेः अतएवाधिष्ठानज्ञानदार्ढ्येसतितत्रकल्पितस्यचित्तस्यतद्दृ श्यस्यचादर्शनमनायासेनैवोपपद्यतइतिनिरस्तम् योगंविनाधिष्ठानज्ञानस्यैवासंभवात् यदाहदक्षः स्वसंवेद्यंहितद्ब्रह्मकुमारीस्त्रीसुखंयथा अयो गीनैवजानातिजात्यंधोहियथाघटमिति यत्तूक्तंभगवत्पूज्यपादैः ब्रह्मविदः कुत्रापियोगापेक्षांनव्युत्पादयांबभूवुरिति तदथातोब्रह्मजिज्ञासेत्यत्राथश ब्दसूचितमुमुक्षुविशेषणीभूतसाधनचतुष्टयांतर्गतंशमाद्यपेयंसमाधिमद्दृष्ट्वोक्तमितितद्दोषः द्वौक्रमावितिवसिष्ठवाक्यतात्पर्यंतुपरस्परनिरपेक्ष- मार्गद्वयोपगमेनान्यः पंथाइतिश्रुतिबाधापत्त्याप्रतिपत्तिक्रमभेदमात्रपरतयाप्रागेववर्णितमितिदिक् किंच योगप्रकरणेयोगानपेक्षमार्गोनप्रतिपाद- नमसंगतं नचतत्सूत्रकोत्रकश्चिच्छब्दोवर्ततेसंभवतिवाउक्तयुक्तेरतोयोवासमदर्शनइतिवापदाध्याहारोप्यसंगतइतिदिक् २९ ५

५ श्रीकृष्ण ५ ५ ५ ५ ५ ५ ५

अस्यात्मैकत्वदर्शनास्यापिफलमाह योमामिति सर्वत्रास्मच्छब्दः प्रत्यगात्मपरः योयोगीआत्मानंसर्वत्रपश्यतिसर्वंचात्मनिपश्यति तस्ययोगिनः ज्ञानआत्मानप्रणश्यतिअदर्शनंनगच्छतिज्ञानआत्मानपुनस्तिरोभवति सरुन्नष्टस्यमूलाज्ञानस्यबीजाभावेनपुनरुदयाऽसंभवादित्यर्थः ननुकार्यकारणसंघाताभिमानिनाशुक्तिरूप्यवद्ब्रह्मण्यध्यस्तेनतदभिमानत्यागपूर्वकंज्ञातंस्वाधिष्ठानभूतंब्रह्मभातितिरोधापिबुध्येरस्तत्पक्षपातित्वात् ब्रह्मदृष्ट्यातुमुक्तजीवस्यनिरन्वयोच्छेदोभवतीत्याशंक्याह सचमेनप्रणश्यतीति सचविद्वान्मेममनप्रणश्यतिनातिरोभवति मदभिन्नत्वात् भवेदेतदेवंयदिजीवोमयिअध्यस्तोवाममविकारोवाभवेत् तदानिरन्वयोच्छेदंप्राप्नुयात् अहमेवतुसः तत्वमस्यहंब्रह्मास्मिअयमात्माब्रह्मेत्यादिशास्त्रात् तस्माद्युक्तमुक्तंसचमेनप्रणश्यतीति ३० यस्मात्सर्वात्मकत्वदर्शीअहमेवअतोनास्यमोक्षःप्रतिबध्यतइत्याह सर्वभूतेति सर्वोपादानतयासर्वेषुभूतेषुसत्तारूपेणस्फुरणरूपेणचास्थितंमांपरमात्मानंएकत्वंजीवब्रह्मणोरैक्यमास्थितः सन्भजतिनिर्विकल्पेनसमाधिनासेवतेसयोगीव्युत्थानदशायांप्रारब्ध-

योमांपश्यतिसर्वत्रसर्वंचमयिपश्यति तस्याहंनप्रणश्यामिसचमेनप्रणश्यति ३० सर्वभूतस्थितंयोमांभजत्येकत्वमास्थितः सर्वथावर्तमानोपिसयोगीमयिवर्तते ३१ आत्मौपम्येनसर्वत्रसमंपश्यतियोऽर्जुन सुखंवायदिवादुःखंसयोगीपरमोमतः ३२ अर्जुनउवाच योऽयंयोगस्त्वयाप्रोक्तःसाम्येनमधुसूदन एतस्याहंनपश्यामिचंचलत्वात्स्थितिंस्थिरां ३३ चंचलंहिमनःकृष्णप्रमाथिबलवद्दृढं तस्याहंनिग्रहंमन्येवायोरिवसुदुष्करम् ३४

कर्मवशात् बाधितानुवृत्त्यादेहमारूढःसर्वथासर्वप्रकारेणयाज्ञवल्क्यादिवत्कर्मत्यागेनवावसिष्ठजनकादिवद्विहितकर्मणावादत्तात्रेयादिवन्निषिद्धकर्मणावावर्तमानोपिव्यवहरन्नपिमय्येववर्ततेनमत्तश्च्युतोभवतियतोदेवेभ्योपिनास्यभयमितिश्रूयते तस्यहनदेवाश्चनाभूत्याईशतआत्माह्येषांसभवतीतिचनेत्यव्ययमप्यर्थे देवाअपितस्यब्रह्मविदः अभूत्यैअनैश्वर्यायनईशतेनसमर्थाभवंतियतोयमेषामात्मेतिश्रुत्यर्थः सनपुनःसंसारीपूर्ववद्भवतीत्यर्थः ३१ यद्यपिनिषिद्धकर्मणापिआत्मविन्नबध्यतेतथापिशीलवानेवयोगीश्रेष्ठइत्याह आत्मौपम्येनेति यथास्वस्यसुखमिष्टंदुःखमनिष्टंतद्वत्परस्यापीतिबुध्वायोऽन्यस्मैदुःखंनप्रयच्छति असौऽहिंसकःपरमोयोगीमतइत्यर्थः ३२ साम्ययोगमशक्यंमन्वानउपायांतरबुभुत्सयाऽर्जुनउवाच योऽयमिति योऽयंयोगस्त्वयासाम्येनप्रोक्तोऽहिंसाप्राधान्येनसन्यासपूर्वकतयावर्णितःहेमधुसूदनतस्ययोगस्यसर्ववृत्तिनिरोधरूपस्यस्थितिंनपश्यामिमनसश्चंचलत्वादितिशेषः ३३ एतदेवोपपादयति चंचलंहीति प्रमाथिबहुदस्कवदेकस्यप्रमथनशीलं ३४

मनसोदुर्ग्रहत्वमभ्युपेत्य श्रीभगवानउवाच यद्यप्येवंतथापिअभ्यासवैराग्यसमुचिताभ्यांदुर्निग्रहमपिमनोनिगृह्यते तत्रअभ्यासोनामकस्यांचित् चित्तभूमौसमानप्रत्ययावृत्तिः वैराग्यंतुदृष्टादृष्टेषुभोगेषुसत्साधनेषुदोषदर्शनेनवैतृष्ण्यं तत्रयथाकेदारिकः केदारेषुकुल्याजलंसंचारयन् एकस्य द्वारंपिधायापरस्योद्घाटयतितद्वत्वैराग्येणविषयस्रोतः खिलीक्रियतेअभ्यासेनकल्याणस्रोतउद्घाट्यतइतिद्वयोरपिआवश्यकत्वम् तथाचसू त्रं अभ्यासवैराग्याभ्यांतन्निरोधइति ३५ असंयतात्मनाअजितचित्तेन वश्यात्मनाजितचित्तेनउपायतः अभ्यासवैराग्यरूपात् ३६ मनसोदु- र्निग्रहत्वाद्योगसिद्धौविघ्नंपश्यन्नर्जुनउवाच हेकृष्णयोगात्कर्मयोगाच्चलितमानसस्त्यक्तकर्मासन्न्यासीत्यर्थः श्रद्धयाउपेतोयोगमार्गेप्रविष्टोपि अयतिः आयुषोल्पत्वाद्वावैराग्यदौर्बल्याद्वाअल्पप्रयत्नः अलवणायवागूरितिवदत्राल्पार्थेनञ् सकदाचित्योगसंसिद्धिंयोगफलंसम्यग्दर्शनम प्राप्यमृतश्चेत्कांगतिंगच्छति ३७ कच्चिदिति कच्चिन्नोभयविभ्रष्टः कर्ममार्गाद्योगमार्गाच्चविभ्रष्टः छिन्नाभ्रमिवपूर्वमपरंवामेघमप्राप्यमध्येएवनश्य

श्रीभगवानुवाच असंशयंमहाबाहोमनोदुर्निग्रहंचलम् अभ्यासेनतुकौंतेयवैराग्येणचगृह्यते ३५ असंयतात्मनायो गोदुःप्रापइतिमेमतिः वश्यात्मनातुयततशक्योवाप्तुमुपायतः ३६ अर्जुनउवाच अयतिःश्रद्धयोपेतोयोगाच्चलित- मानसः अप्राप्ययोगसंसिद्धिंकांगतिंकृष्णगच्छति ३७ कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिवनश्यति अप्रतिष्ठोमहाबा- होविमूढोब्रह्मणःपथि ३८ एतन्मेसंशयंकृष्णच्छेत्तुमर्हस्यशेषतः त्वदन्यःसंशयस्यास्यछेत्तानह्युपपद्यते ३९ श्रीभग- वानुवाच पार्थनैवेहनामुत्रविनाशस्तस्यविद्यते नहिकल्याणकृत्कश्चिद्दुर्गतिंतातगच्छति ४० प्राप्यपुण्यकृतांलोकानुषि त्वाशाश्वतीःसमाः शुचीनांश्रीमतांगेहेयोगभ्रष्टोऽभिजायते ४१ अथवायोगिनामेवकुलेभवतिधीमतां एतद्धिदुर्लभतरंलो केजन्मयदीदृशं ४२

ति तद्वत्अप्रतिष्ठोनिराश्रयः हेमहाबाहोविमूढोब्रह्मणःपथिब्रह्मप्राप्तिमार्गे ३८ एतत् एतंसंशयमन्यत् ३९ अत्रोत्तरंश्री भगवानुवाच पार्थेति हेतातेतिवात्सल्यात्संबोधयति तस्यइहविनाशोनीचयोनिप्राप्तिः अमुत्रविनाशोनरकप्राप्तिस्तदुभयमपिनजायतेहियतः क- ल्याणकृत्शुभकृत्दुर्गतिंनैवप्राप्नोति ४० इहामुत्रचतस्यमहत्त्वमेवास्तीत्याहप्राप्येतिउषित्वावासंकृत्वाशाश्वतीः समाः नित्यान्वत्सरान् योग भ्रष्टोरागीचेदल्पकालाभ्यस्तयोगश्चेत्श्रीमतांगेहेजायते तत्रापिश्रीमदवतीत्याशंक्यशुचीनामित्युक्तं शुचयोहिसत्कार्येष्वेवश्रेयसुपयुंजानाः पूर्वापेक्षयामहत्तरंस्थानमासादयंतीत्यर्थः ४१ सयोगीविरक्तश्चिराभ्यस्तयोगोवाचेत्तस्यगतिमाह अथवेति ४२ ६ ६ ६

अत्रविविधेपिजन्मनि पूर्वदेहिकं पूर्वदेहेप्रासंबुद्धिसंयोगंयावतीयोगभूमिः पूर्वजन्मनिजितातत्रचयावान्बुद्धिलाभोजातस्तावंतंबुद्धिसंयोगंपूर्वाभ्यासाद्त्येनैवाभ्यासेनलभतेततः तस्मादपिभूयस्यांबह्व्यांसंसिद्धौऊर्ध्वभूमिलाभार्थमित्यर्थः यततेयत्नंकरोति ४३ कुतोयततेऽशिक्षितोपीत्यतआह पूर्वेति अवशोपिप्रन्हादादिवत्पित्रादिभिरन्यथानीयमानोपितेनैवपूर्वाभ्यासेनबलवतान्हियतेयोगप्रवणःक्रियतेयतः योगस्यजिज्ञासुरज्ञानमात्रमिच्छन्नयः भवतिसोऽपिशब्दब्रह्मकर्मकांडंवेदमपिअतिक्रम्यवर्तते किंपुनःपित्राद्याज्ञाम् इत्थंपूर्वाभ्यासबलंयन्महांतमपिपित्र्यादियत्नंवृथाकरोतीत्यर्थः ४४ एवंयोगभ्रष्टगतिमुक्त्वायोविषयैर्ह्रीयमाणोपिप्रयत्नेनयोगमेवाभ्यसितुंप्रवर्ततेतस्यगतिमाह प्रयत्नादिति प्रयत्नात्प्रकृष्टात्हठाद्वायुनिरोधादिरूपात्खेचर्यादिमुद्राविशेषाभ्यासात्योयतमानःससंशुद्धकिल्बिषोनिःपापोभवतियदाहमनुःप्राणायामैर्दहेदेनइतिहठयोगानांसर्वेषांपापनिरसनरूपयोगित्वंनतुसाक्षात्कारेसाक्षात्साधनमित्यर्थः अतएवसः अनेकैर्जन्मभिः संसिद्धःप्राप्तयोगोभूत्वाततः परांगतिंमोक्षंयाति एतेनचक्षुश्चैवांतरेभ्रुवोरितिपंचमांतेयत्सूत्रितंतन्

तत्रतंबुद्धिसंयोगंलभतेपौर्वदेहिकम् यततेचततोभूयः संसिद्धौकुरुनंदन ४३ पूर्वाभ्यासेनतेनैवन्हियतेह्यवशोपिसः जिज्ञासुरपियोगस्यशब्दब्रह्मातिवर्तते ४४ प्रयत्नाद्यतमानस्तुयोगीसंशुद्धकिल्बिषः अनेकजन्मसंसिद्धस्ततोयातिपरांगतिम् ४५ तपस्विभ्योऽधिकोयोगीज्ञानिभ्योपिमतोधिकम् कर्मिभ्यश्चाधिकोयोगीतस्माद्योगीभवार्जुन ४६ योगिनामपिसर्वेषांमद्गतेनांतरात्मना श्रद्धावान्भजतेयोमांसमेयुक्ततमोमतः ४७ इतिश्रीमन्महाभारतेभीष्मप॰ श्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसंवादेअध्यात्मयोगोनामषष्ठोऽध्यायः ६ ३० ५ ५

द्व्याख्यातम् ४५ एवंयोगिनंस्तौति तपस्विभ्यइति तपस्विनोत्रकृच्छ्रचांद्रायणमासोपवासादिकर्तारः ज्ञानिनश्चशास्त्रीयपांडित्यवंतःकर्मिणोऽग्निहोत्राद्यनुष्ठातारः तेभ्यःसर्वेभ्योयोगीयतोधिकस्तस्माद्योगीभवार्जुन ४६ समासः कर्मप्रधानस्त्वंपदार्थविवेकः अतः परंउपासनाप्राधान्येनतत्पदार्थंनिरूपयितुकामस्तदुपासनांमहाफलत्वेनस्तौतियोगिनामितिदेवमेवापरेयज्ञमित्यादिनापंचमाध्यायप्रोक्ताः द्वादशयोगाःस्तद्वतांयोगिनांसर्वेषांमध्येयोमद्गतेनमयिवासुदेवेसमर्पितेनअंतरात्मनाचित्तेनश्रद्धावान्सन्मांभजतेसमेममयुक्ततमोऽनिशयेनयुक्तःश्लाघ्योमनोभिप्रेतः तस्मान्मद्भक्तोभवेतिभावः ४७ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूनुश्रीनीलकंठकृतेभारतभावदीपेभीष्मपर्वणिभगवद्गीतासूपनि॰ योगशास्त्रेषष्ठोऽध्यायः ६ ३० ५ ५ ५ ५ ५ ५

पूर्वाध्यायांतेयोमांभजतेसमेयुक्ततमोमतइत्युक्तंतत्रकीदृशंपूर्वोक्तनिष्कामयोगापेक्षयाविलक्षणंतवभजनंकेनवागुणेनपूर्वयोगापेक्षयातस्ययुक्ततमत्व
मित्येतामर्जुनस्याशकांस्वयमेवपरिहरन् श्रीभगवानुवाच मयीति कश्चिद्राजाश्रयोधनमानासक्तमनाभवतिअयंतुमदाश्रयेणमामेवपरमपुरुषा-
र्थभूतंप्राप्तुमिच्छन्नित्यर्थः ईदृशोयोगंयुंजन्समाधिमनुतिष्ठन् त्वंपदार्थविवेककालेयद्यपिसार्वज्ञमस्तिसर्वभूतस्थमात्मानमित्यादिवचनात्तथापि
स्वस्मादन्यईश्वरोऽस्तिनवेतिपातंजलकापिलयोर्विवादस्तार्किकमीमांसकयोर्वासेश्वरनिरीश्वरयोर्मतभेदात्संशयः कारणाज्ञानाच्चसमग्रंतत्सार्व-
ज्ञमितिमत्वाआह असंशयंसमग्रमितिमांतत्पदार्थमीश्वरंयथाज्ञास्यसितत्तंप्रकारंशृणु अत्रवक्ष्यमाणरीत्यासर्वंब्रह्मवासुदेवात्मकंइतिभजनेवै-
लक्षण्यंकारणज्ञातृत्वमस्ययोगिनः पूर्वयोग्यपेक्षयाऽधिगम्यमितिभावः १ एतदेवाह ज्ञानमिति ज्ञानंशुद्धंप्रज्ञानघनंब्रह्मसत्यंज्ञानमनंतंब्रह्मवि-
ज्ञानमानंदंब्रह्मेतिश्रुतेस्तुभ्यमहंवक्ष्यामि अशेषतः साधनकलापसहितंकिंवचनमात्रजेनपरोक्षज्ञानेनशब्दस्यस्वविषयेपरोक्षज्ञानजनकत्वनि-
यमादित्याशंक्याह सविज्ञानंअनुभवसहितं दशमस्त्वमसीत्यादौशब्दादप्यपरोक्षज्ञानोत्पत्तिदर्शनात् कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातमिति

श्रीभगवानुवाच मय्यासक्तमनाः पार्थयोगंयुंजन्मदाश्रयः असंशयंसमग्रंमांयथाज्ञास्यसितच्छृणु १ ज्ञानंतेहंसविज्ञान
मिदंवक्ष्याम्यशेषतः यज्ज्ञात्वानेहभूयोऽन्यत्ज्ञातव्यमवशिष्यते २ मनुष्याणांसहस्रेषुकश्चिद्यततिसिद्धये यततामपिसिद्धा
नांकश्चिन्मांवेत्तितत्वतः ३ भूमिरापोऽनलोवायुःखंमनोबुद्धिरेवच अहंकारइतीयंमेभिन्नाप्रकृतिरष्टधा ४ एकविज्ञानात्सर्वविज्ञानप्रति-
ज्ञांश्रौतीमेवदर्शयतियत्ज्ञात्वेति जगत्कारणाधिष्ठानस्यज्ञानरूपस्यब्रह्मणोज्ञानेसंशयोच्छेदात् सर्वस्यात्ममात्रत्वेनज्ञातव्यानवशेषोयुक्तइत्यर्थः २ एतदेवज्ञानंदौ
र्लभ्यप्रदर्शनेनस्तौतिमनुष्याणांइति यततांयतमानानां ३ एवमेकविज्ञानात्सर्वविज्ञानंप्रतिज्ञायतदुपपत्तयेसर्वस्यजडाजडप्रपंचस्यज्ञानात्मकब्रह्मप्रभवत्वमाह
त्रिभिः भूमिरिति अत्रभूम्यादिपदैस्तत्तत्कारणान्येवगृह्यंतेप्रकृतिरित्यधिकारात्स्थूलभूम्यादेश्चविकृतिमात्रत्वात् तथाचभूमिरितिगंधतन्मात्रंआपइतिरसतन्मा-
त्रं अनलइतिरूपतन्मात्रं वायुरितिस्पर्शतन्मात्रं खमितिशब्दतन्मात्रं मनइतितत्कारणमहंकारः बुद्धिरितिसमष्टिबुद्धिर्महत्तत्वं अहंकरोत्यनेनेत्यहंकारोमूलप्रकृ
तिः करणेघञोदुर्लभत्वेप्यगत्याबाहुलकात्तद्बोध्यं इयंमेमत्तःअभिन्नाअपृथक्सिद्धाशुक्तिशकलादिवरजतं अष्टधाऽष्टप्रकाराप्रकृतिःजडप्रपंचोपादानभूता
यद्वानात्राव्यक्तमहदहंकारपंचतन्मात्राण्येवाष्टौसांख्याभिमताएवप्रकृतयोग्राह्याइतिनियमोस्ति मनसाह्येवपश्यति मनसाशृणोतीतिमनसइंद्रियांतरप्रकृति
त्वश्रवणेननवापिप्रकृतयः तथाचैवंयोज्यं इयंमेमदभिन्नाप्रकृतिरव्याकृताख्याभूम्यादिभेदेनाष्टधेति मूलप्रकृतेरत्रभूम्यादिभिः सहपाठाज्जन्यत्वमवग-
म्यतेनसांख्यानामिवाजन्यत्वंतस्मादव्यक्तमुत्पन्नंत्रिगुणंद्विजसत्तमेतिअव्यक्तंपुरुषेब्रह्मनिष्कलेसंप्रलीयतइतिचतस्याअपिप्रभवप्रलययोःस्मरणात् ४

एवंक्षेत्रात्मिकांप्रकृतिमुक्त्वाक्षेत्रज्ञात्मिकांनामाह अपरेयमिति इयंप्रागुक्तासाअपराअश्रेष्ठाजडत्वात् इतस्तुविलक्षणामन्यांपरांचेतनत्वेनमदंनन्यत्वात्
उत्कृष्टांमेमत्संबंधिनींप्रकृतिंजीवभूतांप्राणधारणनिमित्तभूतांक्षेत्रज्ञाख्यांविद्धिजानीहिहेमहाबाहोययाप्रकृत्याअंतःप्रविष्टयाइदंजगत्स्थावरजंगमशरीरा
त्मकंधार्यते ५ एतदिति एतेपरापरेक्षेत्रक्षेत्रज्ञरूपेप्रकृतीयोनिःउत्पत्तिलयस्थानंएषांतानि एतद्योनीनिभूतानिचतुर्विधानिइत्येतदुपधारयसम्यग्जानी-
हि किंपातंजलानामिवएतेप्रकृतीईश्वरादन्येइत्याशंक्याहाहमिति कृत्स्नस्यस्वस्वप्रकृतिसहितस्यजगतोजडाजडारूपस्यप्रभवःप्रभवत्यस्मादितिप्रभवः
उत्पत्तिकारणंतथाप्रलीयतेऽस्मिन्निति प्रलयः लयस्थानंचअतस्तेउभेअपिप्रकृतीमत्तोनातिरिच्येते ६ एवमेकविज्ञानात्सर्वविज्ञानंप्रकृतंआत्मनोज
गदुपादानत्वेनोपपाद्यततएवात्मनोनिर्विकारत्वहानेप्राप्तेप्राह मत्तइति कारणान्मृदादेःपरंपृथक्भूतंघटादिव्यवहारेतयोर्भेदानुभवात् परतरंतुगवाश्वा-
दिमृदनुपादानकत्वात् एवंब्रह्मणःपरतरंतदनुपादानकंकिंचिदपिनास्तिहेधनंजय एवंप्रपंचेब्रह्माव्यतिरेकंप्रदर्श्यब्रह्मणिप्रपंचव्यतिरेकंसदृष्टांतमाह
मयीति मयिसद्रूपेणस्फुरणरूपेणचसूत्रवत्सर्वत्रानुस्यूतेयदिदंसर्वमणिगणवत्परस्परव्यावृत्तंतत्प्रोक्तंतेनव्यावृत्तेभ्योऽनुवृत्तंभिन्नमितिन्यायेनप्रपंचा

अपरेयमितस्त्वन्यांप्रकृतिंविद्धिमेपराम् जीवभूतांमहाबाहोययेदंधार्यतेजगत् ५ एतद्योनीनिभूतानिसर्वाणीत्युपधारय
अहंकृत्स्नस्यजगतःप्रभवःप्रलयस्तथा ६ मत्तःपरतरंनान्यत्किंचिदस्तिधनंजय मयिसर्वमिदंप्रोतंसूत्रेमणिगणाइव ७
रसोऽहमप्सुकौंतेयप्रभास्मिशशिसूर्ययोः प्रणवःसर्ववेदेषुशब्दःखेपौरुषंनृषु ८ पुण्योगंधःपृथिव्यांचतेजश्चास्मिविभा
वसौ जीवनंसर्वभूतेषुतपश्चास्मितपस्विषु ९

तीतोनममविकारित्वमित्यर्थः ७ नन्वेवंप्रपंचपरमात्मनोर्मणिसूत्रवदुपादानोपादेयभावोपिन
स्यात् नहिउपादानंचअननुवृत्तंचेतिघटतेमृद्घटादावदर्शनादित्याशंक्यस्वप्रमायेंद्रजालरज्जूरगतुल्यत्वंप्रपंचस्योपपाद्योभयमप्यविरुद्धमित्युपपादि-
तंचेदयमकस्मादुद्विग्नोभविष्यतीतिमत्वादृष्टांतांतरैरेवानुवृत्तिव्यावृत्तीचिज्जडयोर्दर्शयतिरसइतियथारसोप्सुएकमप्यपरमाणुमपरित्यज्यानुस्यू-
तोदृश्यतेरसरूपेमयिआपःप्रोताः एवंप्रभायांचंद्रादयःप्रोताःप्रणवेसर्ववेदाःप्रोताः तद्यथाशंकुनासर्वाणिपर्णानिसंतृणानि एवमोंकारेणसर्वावाक्
संतृणाइतिप्राङ्मात्रेप्रणवानुस्यूतिश्रवणात्संतृणानिसंग्रथितानि एवमाकाशेशब्दःसारभूतस्तस्मिन्मयिखंप्रोतंएवंपुरुषेषुसारंपौरुषंशौर्यंधैर्यादि-
रूपंतत्रपुरुषाःप्रोताः एवमग्रेपिद्रष्टव्यं ८ पुण्यइतिरसादिष्वपिद्रष्टव्यंअपुण्यस्यसर्वस्याविद्यामात्रविलसितत्वात् विभावसौवह्नौतेजःपरमशक्तिः
जीवंत्यनेनेतिजीवनमन्नंविराजंतत्रहिसर्वाणिभूतानिप्रोतानि अन्येतुजीवनंआयुरितिव्याचक्षते तपश्चेतितपोधर्मःतद्रूपेमयितपस्विनःप्रोताः
एवमग्रेपिद्रष्टव्यं ९

बीजंकारणंसर्वभूतानांपिंडब्रह्मांडात्मकानांबीजेमयिपिंडादिकंप्रोतंकनकेकुंडलादिवत् सनातनंनित्यंबीजांतरादनुत्पन्नं बुद्धिरूपेमयिबुद्धिमंतःप्रोताः तेजःप्रागल्भ्यंतद्रूपेमयिप्रगल्भ्याः प्रोताः १० बलरूपेमयिबलवंतःप्रोताः कामरागविवर्जितंकामस्तृष्णारागः रंजना तौहिआविद्यकौअतोनिरविद्यस्यबलवर्जितं एवंधर्माविरुद्धकामरूपेमयितादृशाःकामवंतःप्रोताः ११ सात्विकाः धर्मज्ञानवैराग्यैश्वर्यादयः राजसाः लोभप्रवृत्त्यादयः तामसाः निद्रालस्यादयः तान्सर्वान्मत्तएवरसतन्मात्रादिरूपात्सूत्रात्मनोनिर्गताइतिविद्धिनन्वेवंतवसर्वजगदात्मनोविकारित्वापत्त्याकूटस्थ्यहानिरित्याशंक्याह नत्वहंतेषुतेमयीति येषुबादयःप्रोतास्तेषुसूत्रावयवभूतेषुरसादिषुअनृतजडरूपेषुअबाधितात्मचिन्मात्ररूपोघटशरावोदंचनादाविवमृत्नास्मिअनृतस्यास्यसत्तास्फुरणेएवस्वकीयेमयच्छामिनत्वनृतात्माभवामीत्यर्थः तेतुमय्येवाध्यस्तामदनन्याः यथारज्वामध्यस्ताः सर्पादयोरज्व

बीजंमांसर्वभूतानांविद्धिपार्थसनातनम् बुद्धिर्बुद्धिमतामस्मितेजस्तेजस्विनामहम् १० बलंबलवतांचाहंकामरागविवर्जितम् धर्माविरुद्धोभूतेषुकामोस्मिभरतर्षभ ११ येचैवसात्विकाभावाराजसास्तामसाश्चये मत्तएवेति तान्विद्धिनत्वहंतेषुतेमयि १२ त्रिभिर्गुणमयैर्भावैरेभिःसर्वमिदंजगत् मोहितंनाभिजानातिमामेभ्यःपरमव्ययं १३

न्न्याः तदनन्यत्वमारंभणशब्दादिभ्यइतिन्यायात् अनन्यत्वव्यतिरेकेणाभावः नखल्वनन्यत्वमित्यभेदंब्रूमः किंतुभेदंव्यासेधामःकुतः आरंभणशब्दात् वाचारंभणंविकारोनामधेयमितिविकारस्यवागालंबनत्वेनस्वप्नमायेंद्रजालिकविषयसाम्यश्रुतेः नहिआत्मनोविचित्रप्रपंचात्मत्वेतेमयीत्यंशाविरोधेपिनत्वहंतेष्वित्यंशोविरोधपरिहारोयुज्यतेकार्यस्यकारणात्मकत्वावश्यंभावात् तस्माद्विवर्तवादाश्रयेणैवब्रह्मणोजगदुपादानत्वकूटस्थत्वेनिर्वहतइतिसाधूक्तंनत्वहंतेषुतेमयीति १२ कथंतर्हिस्थूलसूक्ष्मप्रपंचबाधेनजनाआत्मानंनावगच्छंतीत्याशंक्याह त्रिभिरिति एभिःपूर्वोक्तैस्त्रिभिस्त्रिविधैःभावैःप्रकाशप्रवृत्तिनियमाद्यैर्गुणमयैःसत्वरजस्तमोगुणविकारैःइदंचराचरंप्राणिजातंजगच्छब्दवाच्यंमोहितंसत् एभ्योगुणेभ्यःपरंमांनजानाति यथारज्वांसर्पभ्रमेणव्याकुलःसर्पात्परांरज्जुंनजानाति तद्वत् परत्वेहेतुःअव्ययंएतेभावाःपरिणामित्वात्व्ययवंतःअहंतुतद्विपरीतःसाक्षीइत्यव्ययः १३

देवस्यजीवरूपेणलीलयाक्रीडतोममसंबंधिनीयंदैवीहिप्रसिद्धापिंडब्रह्मांडरूपेणविततनाएषाममचिन्मात्रस्यमायामामहंनजानामीतिसाक्षिप्रत्यक्षत्वेनापलापानर्हाअनृतस्यप्रपंचस्येंद्रजालादेरिवप्रकाशिकागुणमयीसत्वरजस्तमोगुणमयीदुरत्ययादुरतिक्रमायेमामेवसर्वभूतस्थंभगवंतंवासुदेवंप्रपद्यंतेविषयीकुर्वंतितएवैनांमायांतरंतिअधिष्टानज्ञानेनैवसमूलस्यभ्रमस्योच्छेदोभवतिनतुज्ञानांतरेणवावृत्तिनिरोधेनवेत्यर्थः अयमर्थःजीवेश्वरविभागशून्येशुद्धचिन्मात्रेकल्पितोमयादर्पणः चित्प्रतिबिंबरूपंजीवंवशीकृत्यबिंबचैतन्यमनुरुध्यप्रचलति अयस्कांतमनुरुध्येवलोहशलाका इदमेवईश्वराधीनत्वंमायाद्वारासर्वस्रष्टृत्वमपि तथाचश्रुतिः अस्मान्मायीसृजतेविश्वमेतत्तस्मिंश्चान्योमाययासन्निरुद्धइति तथाचैकैवमायाजीवेश्वरयोरुपाधिर्दर्पणइवबिंबप्रतिबिंबयोः बिंबप्रतिबिंबभवनाक्रांतमुभयानुस्यूतंशुद्धचिन्मात्रमन्यत्तत्तृतीयमुक्तंप्राप्यं जीवेश्वरौचउपाधिपक्षपातदशायांअल्पज्ञत्वसर्वज्ञत्वशास्यत्वशासितृत्वादिभावंभजेते तावेवतदभावेउपाधिप्रचारदर्शिनौउदासीनबोधरूपतयाजीवसाक्षीश्वरसाक्षीतिशब्दाभ्यांव्यवह्रियेते एवंचजीवः ईश्वराराधनावाप्तप्रत्यक्त्वज्ञानेनमायायांनष्टायांतत्कार्यस्यापिनाशेनसाक्षाद्भावात्साक्षित्वमपिपरित्यज्यबिंबप्रतिबिंबानुस्यूतंशुद्धंतृतीयंचैतन्यंप्राप्नोतीतितदिदमुक्तंदैवीमायेतिचैकस्याएवजीवेश्वरसंबंधित्वंजीवस्येश्वरभजनेनमायातरणमितिच १४ कुतस्तर्हिसर्वेत्वांप्रपद्यमायांनतरंतीत्याशंक्याह नमामिति यतोदुष्कृतिनः अतश्चित्तशुध्यभावान्मूढाः आत्मानात्मविवेकहीनाः अतएवनराधमाः मांनप्रपद्यंतेकुतोदुष्कृतिनः यतोमाययाअपहृतंनिरस्तंज्ञानंअखंडसंविद्रूपंब्रह्मयेषांतेपहृतज्ञानाः एतेनमायायाआवरणशक्तिरुक्ता किंच आसुरंअसुराणांविरोचनादीनांभावंचित्ताभिप्रायंआत्मैवाहमहमप्यात्मेत्यादिनाश्रुतंदेहेंद्रियसंघातएवसम्यक्संतर्पणीयइत्येवंविधंआश्रिताः एतेनमायायाविक्षेपशक्तिरुक्ता तदेवमाययास्वरूपानंदंआवृत्यदेहात्म्यभ्रमेजनितेसतितदभिमानाद्देहादिपुष्ट्यर्थंदुष्कृतंकुर्वंतितेनचमूढाःसंतोनराधमामांनप्रपद्यंतेसर्वानर्थमूलंमायैवेत्यर्थः १५ येतुसत्यपिदेहाद्यध्यासेप्रतोबिभ्यतिम- त्प्रीत्यर्थंसुकृतमेव वाचरंतितेपिचतुर्विधाः नकेवलंसर्वेमदेककामाइत्याशयेनाह चतुर्विधाइतिआर्तः पीडितःपीडापरिहारार्थीजिज्ञासुः स्वाज्ञाननाशार्थीअर्थार्थीधनाद्यर्थीज्ञानीचेतिचतुर्विधामांभजंते १६

दैवीह्येषागुणमयीममायादुरत्यया मामेवयेप्रपद्यंतेमायामेतांतरंतिते १४ नमांदुष्कृतिनोमूढाः प्रपद्यंतेनराधमाः मायया पहृतज्ञानाआसुरंभावमाश्रिताः १५ चतुर्विधाभजंतेमांजनाःसुकृतिनोर्जुन आर्तोजिज्ञासुरर्थार्थीज्ञानीचभरतर्षभ १६

किंसर्वेपिसमाएतेस्कृतिनइतिसाधारण्येनविशेषणादतआह तेषामिति तेषांमध्येज्ञानीविशिष्यते यतोनित्ययुक्तः आर्तादयोहिकामिनः कामपूर्तौन मद्भजनेयुक्ताभवंतिअयंतुनित्ययुक्तएकभक्तिश्चएकभावेनभजनंकरोति तथाहिआर्तारोगिणः सूर्यंभजंतेजिज्ञासवः सरस्वतींअर्थार्थिनः कुबेरादी निति तेषांतत्तत्कामार्थित्वेनानेकभक्तत्वंदृश्यते तस्यनित्ययुक्तत्वे एकभक्तित्वेचहेतुःहियतः ज्ञानिनोहमत्यर्थंप्रियः आत्मत्वादेव आत्माचप्रियःनि रुपाधिप्रेमगोचरत्वात् तदेतत्प्रेयःपुत्रात्प्रेयोन्यस्मात्सर्वस्मादांतरोयमात्मेतिश्रुतेश्च सचज्ञानीममप्रियः भक्तानांदुर्लभत्वादितिभावः १७ उदा राइति सर्वेप्येतेउदाराउत्कृष्टाएवज्ञानीतुममआत्मैवेतिममंमतंनिश्चितं हियतः सः युक्तात्माअहमेवभगवान्वासुदेवइत्यभेदेनमयिसमाहितचि- त्तः मामेवअनुत्तमांश्रेष्ठांगतिंआस्थितः नतुमत्तोन्यदारोग्यादिकंकामयानोमद्भक्तिंकरोति किंतु मत्प्राप्त्यर्थमेवमांभजतइत्यर्थः १८ किंच वासुदे-

तेषांज्ञानीनित्ययुक्तएकभक्तिर्विशिष्यते प्रियोहिज्ञानिनोत्यर्थमहंसचममप्रियः १७ उदाराःसर्वएवैतेज्ञानीत्वा- त्मैवमेमतम् आस्थितःसहियुक्तात्मामामेवानुत्तमांगतिं १८ बहूनांजन्मनामंतेज्ञानवान्मांप्रपद्यते वासुदेवःसर्वमि- तिसमहात्मासुदुर्लभः १९ कामैस्तैस्तैर्हृतज्ञानाःप्रपद्यंतेऽन्यदेवताः तंतंनियममास्थायप्रकृत्यानियताःस्वया २० यो योयांयांतनुंभक्तःश्रद्धयार्चितुमिच्छति तस्यतस्याचलांश्रद्धांतामेवविदधाम्यहम् २१ सतयाश्रद्धयायुक्तस्तस्याराधन- मीहते लभतेचततःकामान्मयैवविहितान्हितान् २२

वः सर्वमितिज्ञानवान्योबहूनांजन्मनामंतेचरमजन्मनि मांप्रपद्यतेसम्यग्द- र्शनेनापरोक्षीकरोति समहात्माब्रह्मभूतः सुदुर्लभइतियोजना १९ अन्येतु तैस्तैःकामैःपुत्रपश्वादिविषयैर्हृतज्ञानाः हृतंदूरीकृतंज्ञानंविवेको येषांते अन्यदेवताअहमेतस्याआराधनेनेदंफलमवाप्नवानीतिभेदबुध्याप्रपद्यंतेइंद्रादीन्तंतंनियमंचतुर्दश्युपवासादिकंआस्थायस्वयाप्रकृत्याव क्ष्यमाणविधयादेव्याआसुर्यावानियताः २० किंच योयोभक्तः सात्विकोराजसस्तामसोवायांयांतनुंतादृशीमेवदेवादिरूपांयक्षरक्षोरूपांभूत- प्रेतरूपांवा श्रद्ध यातादृश्यैवअर्चितुमिच्छतितस्यभक्तस्यतामेवश्रद्धांसात्विकींराजसींतामसींवाहंसर्वेश्वरोऽचलांविदधामि २१ ततश्च- सतयाश्रद्धयायुक्तःसन् तस्याः मूर्तेः आराधनंससाधनंवशीकरणमीहते इच्छतिततश्चकामान्विषयान्लभते मयैवविहितान् आज्ञापितान् हितान्ईप्सितान् एतेनसर्वासांदेवतानांस्वाज्ञावशवर्तित्वंदर्शितं २२

अल्पेअथयत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यन्मनुतेऽन्यद्विजानातितदल्पमितिश्रुतेः हेतंअल्पंतत्रैवमेधायेषांतेबाह्यार्थाभिलाषिणइत्यर्थः तेषांतत्फलं-
अंतवत्सर्वस्यबाह्यार्थस्यांतवत्वादेव तुशब्दोऽभेदेनेश्वरभक्तेभ्योविभेदार्थः यतोदेवयजोदेवान्यजंतेइतिदेवयजः तेदेवान्अंतवत्युक्तानेवयांति एवं
यक्षरक्षोभक्ताः यक्षादीनेवयांतिभूतप्रेतभक्ताश्चभूतादीनेवेत्यपिद्रष्टव्यं मद्भक्तास्तुमामेवानंतंयांति अतस्तेऽनंतफलभाजइत्यर्थः २३ एवंतर्-
हिंकुतस्त्वामेवसर्वेनप्रतिपद्यंतइत्याशंक्याज्ञानादित्याह अव्यक्तमिति अव्यक्तंसर्वोपाधिशून्यत्वेनअस्पष्टमपिवास्देवशरीरेणव्यक्तिमाप-
न्नंअस्मदादिवच्छरीराभिमानिनंमामबुद्धयोमन्यंतेयतः ममपरंभावंपरत्वंउत्कृष्टत्वंअजानंतः उत्कृष्टत्वमेवविशिनष्टि अव्ययंनव्येतीत्यव्ययं
अविनाशि अनुत्तमंयस्मादन्यत्उत्कृष्टंचनास्तिनिरतिशयमखंडैश्वर्यरूपमित्यर्थः २४ कुतस्त्वद्विषयमज्ञानंलोकस्येत्यतआह नाहमिति हे-
योगयोगिन् अर्शआद्यच्प्रत्ययांतोयंयोगशब्दः अहंतत्पदार्थः सर्वस्ययोगिनस्त्वंपदार्थमात्राभिज्ञस्यनप्रकाशोस्मि तत्रहेतुःमायासमावृतइति

अंतवत्तुफलंतेषांतद्भवत्यल्पमेधसाम् देवान्देवयजोयांतिमद्भक्तायांतिमामपि २३ अव्यक्तंव्यक्तिमापन्नंमन्यंतेमाम
बुद्धयः परंभावमजानंतोममाव्ययमनुत्तमम् २४ नाहंप्रकाशःसर्वस्ययोगमायासमावृतः मूढोऽयंनाभिजानातिलो
कोमामजमव्ययम् २५ वेदाहंसमतीतानिवर्तमानानिचार्जुन भविष्याणिचभूतानिमांतुवेदनकश्चन २६ इच्छाद्वे-
षसमुत्थेनद्वंद्वमोहेनभारत सर्वभूतानिसंमोहंसर्गेयांतिपरंतप २७

भाष्येतुयोगोयुक्तिः गुणानांघटनंसैवयोगमाया चित्त
समाधिर्वायोगोभगवतस्तत्कृतामायेतिभगवत्संकल्पवशवर्तिनीमायेत्यर्थः उत्तरार्धःस्पष्टार्थः २५ ननुत्वदभिन्नंलोकंत्वन्मायामोहयतिचे-
त्वांकुतोनमोहयतीत्यतआह वेदाहमिति सत्यंसत्यपिलोकस्यममचाभेदेपिऔपाधिकभेदस्यसत्वात्उपाधिधर्माभिमानित्वाल्लोकोमूढः तदभा
वाच्चाहंसर्वज्ञइतिविशेषः अक्षरार्थःस्पष्टः २६ केनपुनर्निमित्तेनातीतादीनिभूतानिनजानंतीत्याशंक्याह इच्छेति इच्छारागः द्वेषः ताभ्यां-
समुत्थितोद्वंद्वमोहः शोभनाशोभनसत्यासत्यनित्यानित्यात्मानात्मसुविपर्ययः अशोभनेशोभनबुद्धिः शोभनेवाशोभनबुद्धिरित्येवंरूपस्तेन
हेभारतभरतान्वय सर्वभूतानिसर्गेसृष्टिविषयेमोहंअविवेकंयांतिहेपरंतप अयंभावः योहिस्रष्टेरुपादानस्वरूपंचतत्वतोजानातिसब्रह्मावि-
त्सर्वज्ञत्वादतीतादीन्जानातिसृष्टेःचसर्वेषांमोहोस्ति अशोभनेस्त्र्यादौशोभनाध्यासात् असत्येप्रपंचेसत्यत्वाध्यासात्सत्येचात्मनोऽसत्यत्वे-
सत्यत्वाध्यासात् अनित्येस्वर्गादौनित्यत्वाध्यासात् अनात्मनिदेहादावात्माध्यासात् अतोविपर्ययेणसृष्टिज्ञानंप्रतिबद्धंतेनचसार्वज्ञ्यंनजायतेस्मदादी
नामिति २७

केषांतर्हिसार्वज्ञ्यंभवतीत्याशंक्याह येषांत्विति द्वाभ्यांयेषांपुनः जनानांपुण्यकर्मणांपापंअंतगतंअंतंनाशंप्राप्तं द्वितीयाश्रितेतिसमासः तेद्वंद्व मोहउक्तलक्षणस्तेननिर्मुक्ताः संतः प्रथमंदृढव्रताः शमदमादिदार्ढ्यभाजोभूत्वामांभजंते २८ ततश्चजरामरणयोः प्रवाहात्आत्मनोमो- क्षायमामाश्रित्यमद्विसमाहितचेतसोभूत्वायेयतंतियतंतेज्ञानलाभायवेदांतश्रवणादौ तेनतत्सर्ववेदांतप्रसिद्धंकृत्स्नंब्रह्मविदुः विराडाद्युपासकास्त्वकृत्स्न ब्रह्मविदः सूत्रकारणयोर्निष्कलस्यचाज्ञानात् श्रीगोपालबालोपासकास्तुतत्पदलक्ष्यंकृत्स्नब्रह्मविदोऽ तस्तेअध्यात्मादिकंकात्स्न्येनजानंतीतिसर्वविदोभवं तीत्यर्थः अनेनयज्ज्ञात्वानेहभूयोऽन्यत्ज्ञातव्यमवशिष्यतइत्येकविज्ञानात्सर्वविज्ञानप्रतिज्ञायापूर्वक्तातस्याउपसंहारोदर्शितः अध्यात्मंआत्मनिशरी- रेस्थितंप्रत्यगात्मविषयंवस्तुशुद्धत्वं पदार्थमित्यर्थः कर्मचतत्वंपदार्थज्ञानयोःसाधनंश्रवणादिकंसर्वंविदुः २९ एवंतत्पदार्थविवेकंसद्योमुक्तिहे- तुंसमाप्यतत्प्राप्त्युपायभूतान्युपासनानिक्रममुक्तिफलानिविस्तरेणवक्तुकामः संक्षेपेणसूत्रयतिसाधिभूतेति अधिभूतंचअधिदैवंचताभ्यांसहितंसा-

येषांत्वंतगतंपापंजनानांपुण्यकर्मणां तेद्वंद्वमोहनिर्मुक्ताभजंतेमांदृढव्रताः २८ जरामरणमोक्षायमामाश्रित्ययतंतिये ते ब्रह्मतद्विदुःकृत्स्नमध्यात्मंकर्मचाखिलं २९ साधिभूताधिदैवमांसाधियज्ञंचयेविदुः प्रयाणकालेपिचमांतेविदुर्युक्तचेतसः ३० इतिश्रीमन्महाभा० भीष्मप० श्रीमद्भगवद्गीतासूपनि० विज्ञानयोगोनामसप्तमोऽध्यायः ७ ३१ ५ ५

अर्जुनउवाच किंतद्ब्रह्मकिमध्यात्मंकिंकर्मपुरुषोत्तम अधिभूतंचकिंप्रोक्तमधिदैवंकिमुच्यते १ अधियज्ञः कथंकोऽत्रदेहेऽस्मि न्मधुसूदन प्रयाणकालेचकथंज्ञेयोऽसिनियतात्मभिः २

धिभूताधिदैवं तथाऽधियज्ञेनसहितंसाधियज्ञंचमांये विदुःउपासते तेयुक्तचेतसः यतः नित्यंसमाहितचित्तास्ततोमांप्रयाणकालेपिसर्वजनव्यामोहकेपिदुःखेभावनादार्ढ्यान्मरणकालेपितस्यज्ञानस्यप्रमोषोनभवत्यतोभगवतिनैरंतर्येणदृढा- भावनाकर्तव्येतिभावः अधिभूतादिपदार्थंतुभगवानेवव्याख्यास्यतीतितेनोक्तवंतोवयम् ३० इतिनैलकंठीयेभारतभावदीपेभीष्मपर्वणिगीतासुसप्तमोऽ ध्यायार्थप्रकाशः ७ ३१ पूर्वस्मिन्नध्यायेमायोपहितंब्रह्मजगत्कारणमुक्तंतच्चउत्तमानामनुपाधिब्रह्मप्रतिपत्तौउपलक्षणम् मध्यमानामुपास्यंचेतिम- त्वाप्रतिपत्तव्यब्रह्मतद्विषयएकउपासनाविषयाश्चषट् एवंसप्तप्रश्नविषयास्तेब्रह्मतद्विदुरित्यध्यायांतेसार्द्धश्लोकेनभगवतासूत्रितस्तद्वृत्तिरूपोयमध्या यआरभ्यते तत्रसूत्रितानांब्रह्मादिशब्दानामर्थंबुभुत्सुरर्जुनउवाच किमितिकिंतत्कृत्स्नंब्रह्मेतिप्रथमः प्रश्नः शेषः स्पष्टार्थः १ अधियज्ञः कोऽ त्र कइतिस्वरूपप्रकथनंज्ञेयइतिपदापकर्षेणतत्तदुपासनाप्रकारप्रश्नश्चेतिद्वयंमिलित्वा एकएवप्रश्नः शेषंस्पष्टम् २ ५ ५ ५

५ ५ ५ ५ ५ ५ ५ ५ ५ ५ ५

क्रमेणेषांप्रश्नानामुत्तरमाह अक्षरमित्यादिभिस्त्रिभिः तत्रकिंतद्ब्रह्मेतिअस्योत्तरंअक्षरंपरमंब्रह्मेति यत्परमंअक्षरंतद्ब्रह्मेतियोजना अक्षरशब्दस्यवर्णेषुरूढत्वात्ओमित्येतदक्षरमित्यादिश्रुतौओमित्येकाक्षरंब्रह्मेतिस्मृतौचदर्शनेनात्रापिप्रणवस्याक्षरशब्देनग्रहणेप्रसक्तेपरमितिविशेषणंप्रणवस्यपरब्रह्मत्वासंभवात् अतश्चएतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घमितिश्रुतिप्रसिद्धमखंडैकरसंब्रह्मअक्षरशब्दितंतद्ब्रह्मेतिप्राज्ञः यद्वाअक्षरशब्देनजीवः कूटस्थोऽक्षरउच्यतेउत्तमः पुरुषस्त्वन्यइतिगीतासुक्षरंप्रधानममृताक्षरंहरः क्षरात्मानावीशतेदेवएकइतिश्रुतौच कूटस्थपदेनामृतपदेनचविशेषितस्याक्षरपदस्यजीववाचित्वदर्शनात् अमृतोऽक्षरमित्यपेक्षितेउत्वाभावश्छांदसः तथाचाक्षरंजीवाख्यंपरमंब्रह्म परममितिविशेषणेनसोपाधिकस्यपूर्वाध्यायोक्तव्यावृत्तिः नहिजीवस्यसोपाधिकस्यब्रह्मभावः संभवतिव्यावर्तकोपाधौमायादर्पणेजायतितयोरभेदायोगात् किंतद्ब्रह्मेतिप्रश्नेपरममितिविशेषणाभावेपितेब्रह्मतद्विदुः कृत्स्नमितिप्रश्नोत्थापकेसूत्रेपरमत्ववाचिनाकृत्स्नपदेनब्रह्म-

श्रीभगवानुवाच अक्षरंब्रह्मपरमंस्वभावोऽध्यात्ममुच्यते भूतभावोद्भवकरोविसर्गः कर्मसंज्ञितः ३ अधिभूतंक्षरोभावः पुरुषश्चाधिदैवतम् अधियज्ञोहमेवात्रदेहेदेहभृतांवर ४

णोविशेषितत्वादतोपिब्रह्मणः परमामितिविशेषणंयुज्यतएव प्रश्नेपितच्छब्देनकृत्स्नत्वस्यैवग्रहात् ततश्चकिंतत्कृत्स्नंब्रह्मेतिप्रश्नेयदक्षरंजीवाख्यंतदेवअपेतोपाधिसंबंधंसतत्कृत्स्नंब्रह्मेतितत्वमसीतिमहावाक्यार्थः प्रतीचोब्रह्मभावः प्रतिपादितोभवतीतिहृद्यं तथा स्वोऽनागंतुकोभावः स्वरूपंस्वभावः शुद्धस्त्वंपदार्थः सोध्यात्मंउच्यते भाष्येतुतस्यैवपरस्यब्रह्मणः प्रतिदेहंप्रत्यगात्मभावः स्वोभावः स्वभावोध्यात्ममुच्यतेअध्यात्मशब्देनाभिधीयतेइति विसर्गः देवतोद्देशेनद्रव्यत्यागात्मकोयागः सकर्मसंज्ञितः तमेवविशिनष्टिभूतेतिभूतानांभावः सात्विकादिः स्वभावः उद्भवश्चतयोः करणात्भूतभावोद्भवकरः तथाहिबुद्धिः कर्मानुसारिलंभावस्यस्मर्यते तथाउद्भवोपिकर्मतएवस्मर्यते अग्नौप्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततः प्रजाइति ३ क्षरोभावोजनिमद्वस्तु कर्मफलभूतंतत्साधनभूतंचतदधिभूतमित्युच्यते अधिदैवतंपुरुषः सर्वासुपूर्षुवसतीतिसर्वकरणानुग्राहकः सकलदेवतात्माहिरण्यगर्भः अधियज्ञोयज्ञाभिमानीविष्णुरंतर्यामीसोहमेवदेहेस्मिहेदेहभृतांवर ४ ५ ५ ५ ५ ५

अत्रषट्प्रश्नाउत्तरेषुप्रथमेजीवस्यब्रह्मभावउक्तः तंजानतांप्रयाणमेवनास्तिनतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतेब्रह्मैवसन्ब्रह्माप्येतिइतिश्रु-
तेःद्वितीयेशुद्धस्त्वंपदार्थउक्तः तत्ज्ञानस्यापिवस्तुतत्त्वविषयत्वान्नतत्रभावनापेक्षास्तीतिनभावनाफलभूतकालेतत्स्मृत्ययोऽपेक्ष्यते तृतीयचतुर्थ-
योस्तुकर्मतत्साधनफलभूतंचजन्यंवस्तूक्तम् तत्रापिनभावनापेक्षास्तिअंतकालेप्रबलेनैवकर्मणाचित्तस्यावरोधात्तत्साधनफलभूतस्यैवस्मरणा
वश्यंभावेनतत्रभावनायावैयर्थ्यात् परिशेषात्अंत्ययोरेवकार्यकारणब्रह्मणोःसोपाधिकनिरुपाधिकयोरन्यतरस्यभावनासद्दृढाचेदंतकालेत-
त्संसंगोऽवश्यंभावीतितयोरन्यतररूपंपरमात्मानंस्मरन्यःकलेवरंमुक्त्वाऽर्चिरादिमार्गेणप्रयातिसः ब्रह्मलोकप्राप्तिद्वाराक्रमेणमद्भावंमोक्षंया
तीत्याह अंतकालेचेति स्पष्टायोजना नास्त्यत्रसंशयइति सोपाधिकब्रह्मोपास्तिंप्रकृत्यशतंचैकाचहृदयस्यनाड्यस्तासांमूर्द्धानमभिनिःसृ-
तैका तयोर्ध्वमायन्नमृतत्वमेतिविष्वगन्याउत्क्रमणेभवंतीतितदुपासकस्यगतिपूर्वकस्यामृतत्वस्यश्रवणात् यस्तुशुद्धत्वंपदार्थरूपमध्यात्मं-
वस्तुमात्रंवेदअसौब्रह्मात्मैक्यज्ञानाभावान्नतस्यप्राणाउत्क्रामंतीत्येतद्वाक्यविषयोनभवतिकिंतुशतंचैकाचेत्येतस्यैवविषयः ननुतस्याप्युपासक

अंतकालेचमामेवस्मरन्मुक्त्वाकलेवरम् यःप्रयातिसमद्भावंयातिनास्त्यत्रसंशयः ५ यंयंवापिस्मरन्भावंत्यजत्यंतेक
लेवरम् तंतमेवैतिकौंतेयसदातद्भावभावितः ६

त्वात्कथमेतदितिचेत् नहिकल्याणकृत्कश्चिद्दुर्गतिंतातगच्छतीतिन्यायेनतस्यो
भयभ्रष्टत्वासंभवात् कठवल्लीषुनिष्कलप्रत्यगात्मविदंकेवलंयोगिनंप्रकृत्यशतंचैकाचेत्याम्नातात्त्व वेदांतविज्ञानसुनिश्चितार्थाःसन्न्यासयो-
गाद्यतयःशुद्धसत्वाः तेब्रह्मलोकेतुपरांतकालेपरामृतात्परिमुच्यंतइतिश्रुतेः निश्चितार्थानांशोधितत्वंपदार्थानामेवक्रममुक्तिरवगम्यते नचा
त्रसुनिश्चितार्थाइत्यनेनब्रह्मात्मैक्यनिश्चयवंतोगृहीतुंशक्याः तेषांगत्यभावस्यप्रोक्तत्वात् नाप्युपासकाः असंभवात् उपासनाहिनामअत
स्मिंस्तद्बुद्धिः यथाशालग्रामेविष्णुबुद्धिरेवंसूत्रविराडंतर्यामिष्वात्मबुद्धिरितिनतद्वंतःसुनिश्चितार्थाइतिवक्तुंशक्यम् तस्मादध्यात्मविदांब्रह्मा
त्मैक्यस्यानवगमात्अनुपासकत्वेनांत्यप्रत्ययाभावेपिअर्चिरादिगतिप्राप्तिरस्तीतिसर्वमनवद्यम् ५ नकेवलंकार्यकारणब्रह्मणोरेवभावनां
त्यप्रत्ययवशात्तद्भावप्राप्तिहेतुरपितुकीटकस्यजीवतएवभावनाबलात्भाव्यवस्तुभावप्राप्तिर्दृश्यतेनंदिकेश्वरस्यचस्मर्यते सहिमहादेवंभाव
यन्तत्सारूप्यंदेहांतरंविनैवप्राप्तइतियोगशास्त्रेपिप्रसिद्धम् तत्रकिमुवक्तव्यंअंत्यप्रत्ययवशाद्देहांतरेभाव्यभावप्राप्तिरस्तीतिमत्वातमेवा
र्थमन्यत्रापिदर्शयति यंयमिति तद्भावभावितः भाव्याकारवासनयाजितइत्यर्थः ६

यस्मादेवंतस्मात्सर्वेषुकालेषुमामनुस्मरअंतकालेमत्स्मृत्यामद्भावप्राप्त्यर्थम् युध्यचेतिचकारात्कर्मोपास्त्योः समुच्चयोवगम्यतेज्ञानकर्मसमुच्चय
कर्तरिचतदुभयानुष्ठातरिएकस्मिन्नेवाधिकारिणिकर्तृत्वप्रत्ययकृतविरोधाभावात् मयिअर्पितेमदेकनिष्ठतांनीतेमनोबुद्धीयेनसमर्प्यर्पित-
मनोबुद्धिस्त्वंअसंशयंमामेवैष्यसिप्राप्स्यसिअंतकालेस्मरणेनेतिशेषः ७ एतदेवश्लोकत्रयेणविवृणोतिअभ्यासेति अभ्यासयोगयुक्तेन त-
त्रस्थितोयत्नोऽभ्यासइतिसूत्रितोभ्यासः तत्रध्येयेवस्तुनिचित्तस्यस्थिरीकरणार्थोयत्नः सचविजातीयप्रत्ययानंतरितसजातीयप्रत्ययप्रवाही
करणरूपः सोऽभ्यासः तत्रभाव्योविषयः सिद्धः विष्णुप्रतिमादिर्विराडादिर्वा असिद्धस्तुमानसप्रतिमादिः तत्रासिद्धेमनसः प्रतिमाका-
रणसंपादनेनतत्रस्थैर्यसंपादनेचेतिविषयभेदात् द्विगुणोयत्नः कर्तव्योभवति सिद्धेतुचित्तस्थिरीकरणार्थएकएवयत्नः तत्रयथास्वतः स्व-
च्छः स्फटिकः जपाकुसुमपरागाल्लोहितः स्फटिकइति तत्रलोहित्याध्यासः तत्प्राबल्यात्तत्रैवस्फटिकधीप्रमोषेपद्मरागत्वाध्यासः पद्मरा
गेपिचंद्रिकायांइंद्रनीलत्वाध्यासस्तत्रैवतदानीमेवकिंचिद्दूरस्थेऽतिहीनोपलत्वाध्यासइतिउत्तरोत्तराध्यासक्रमेणशुद्धएकएवस्फटिकः पंच-
विधोभवतिएवंस्वतःशुद्धंचैतन्यम् मायोपरागात्तदेवेश्वरः मायाप्राबल्येतस्यैवेश्वरत्वांशप्रमोषेतत्रैवसूत्रात्माध्यासः सूत्रेपिअज्ञानदार्ढ्याद्वि

**तस्मात्सर्वेषुकालेषुमामनुस्मरयुध्यच मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ७ अभ्यासयोगयुक्तेनचेतसाना**
**न्यगामिना परमंपुरुषंदिव्यंयातिपार्थानुचिंतयन् ८**

राडध्यासः ततएवविराडेकदेशेषुशरीरादिषुआत्मत्वभ्रमः तत्रयथाघ
टांतर्गतः प्रदीपः घटमात्रंभासयतिघटाच्छिद्राद्बहिर्गतः कंचित्स्वप्रभयासंसृष्टंविषयमवभासयति सर्वात्मनाघटाद्बहिर्गतस्तुकृत्स्नंभवनोद
रवर्तिपदार्थजातंप्रकाशयतितद्वत् देहांतर्गताचितिर्देहमात्रंभासयतिदेहच्छिद्राच्चक्षुरादेर्बहिर्गतासतीनत्संनिकृष्टंकंचिद्विषयरूपंरूपा
दिकमवभासयति सर्वात्मनागुरूक्तयुक्त्यादेहकृतपरिच्छेदाभिमानेत्यक्तेतुअपरिछिन्नासतीकृत्स्नंविराडात्मानमवभासयति यथोक्तंबा
ह्यग्रंथेषपिमणिहुतवहतारासोमसूर्यादयोपिक्षितिविषयमिहाल्पंबाह्यमुद्योतयंति सहजलयसमुत्थं द्योतयेज्ज्योतिरंतस्त्रिभुवनमपिसू-
क्ष्मस्थूलभेदंक्रमेणेतिसहजलयः स्वाभाविकःदेहकृतपरिच्छेदाभिमानस्तस्यलयमात्रादेवउत्थितं क्रमेणसंकल्पक्रमेणसदीक्षणामात्रा
भिनिर्वृत्तत्वात्सर्वस्यप्राक्संकल्पादसत्वात् तथाचश्रुतिः सयदिपितृलोककामोभवतिसंकल्पादेवास्यपितरः समुत्तिष्ठंतीतिश्रुतेः दोष
निमित्तंरूपादयोविषयाः संकल्पकृताइत्यक्षपादसूत्राच्चदोषाः रागादयः तदेवंप्रकाशमानेविराजिअहमेवेदंसर्वोस्मीतिमन्यते सोऽस्य
परमोलोकइतिशास्त्रप्रामाण्यादुपासकेनगृहीतोऽहंग्रहः यद्यपिवस्तुतत्वापेक्षयाभ्रांतिरूपस्तथापिस्वाभाविकाद्देहाहंग्रहात्सत्यरू

पः यथास्फटिकेहीनोपलत्वग्रहापेक्षयाइंद्रनीलत्वग्रहस्तद्वत् यथाचस्फटिकेप्रणिधीयमानंचक्षुरुत्तरोत्तरोपलविशिष्टोइंद्रनील-
त्वंबाधित्वापद्मरागत्वंतद्बाधेनलोहितस्फटिकत्वंतद्बाधेनशुद्धत्वंचावगच्छति एवंगुरूक्तयुक्त्याप्रत्यगात्मनिप्रणिधीयमानंमनोऽ-
स्यबाह्यंबाह्यंरूपमपोह्यआंतरेऽवतिष्ठते चरमंविशुद्धंरूपंप्राप्यतुस्वयमेवविलीयते यथोक्तंयेनत्यजसितत्यजेति येनमनसात्यज
सिविराडादिभावंतदपिमनःत्यजेत्यर्थः तदेवंनित्यव्यवहारापेक्षयासिद्धेषुविराट्सूत्रांतर्यामिषुमनसःस्थिरीकरणार्थोयत्नोऽभ्यासस्तत्फ
लभूतोयोगःसमाधिः ध्येयवस्तुन्येवचेतसःस्थैर्यंतेनगुणायुक्तंयच्चेतस्तेननान्यगामिनाअनन्यगामिनानेकधेतिवत्समासः तेनचेतसापर
मंसर्वोत्कृष्टंपरमंनिरस्ताशेषदोषंयत्सर्वेषांपुरस्तात्सर्वान्पाप्मनऔषत्तस्मात्पुरुषइतिनिर्वचनात् दिव्यंद्योतमानंअनुचिंतयन्अहमेवभगवा
न्सर्वात्मावासुदेवइतिसंततंआचार्योपदेशमनुध्यायन्तमेवनदीसमुद्रन्यायेनयातिहेपार्थ तथाचश्रुतिः यथानद्यःस्यंदमानाःसमुद्रेऽस्तं

कविंपुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः सर्वस्यधातारमचिंत्यरूपमादित्यवर्णंतमसःपरस्तात् ९

गच्छंतिनामरूपेविहाय तथाविद्वान्पुण्यपापेविधूयपरात्परंपुरुषमुपैतिदिव्यमितिपरात्सूत्रात्परंअंतर्यामिणम् ८ तदेवंउपासनायाः
स्वरूपमुक्त्वाउपास्यस्वरूपमाह कविमिति कविंक्रांतदर्शिनंसर्वज्ञंपुराणंचिरंतनंअनुशासितारंजगतोंतर्यामिणंअणोःसूक्ष्मादप्याकाशा-
देःअणीयांसंसूक्ष्मतरंयोऽनुस्मरेत्अनुचिंतयेत् सर्वस्यकर्मफलस्यधातारंविभागेनप्रदातारंअचिंत्यरूपंनास्यरूपंविद्यमानमपिकेनचि
च्चिंतयितुंशक्यम् आदित्यवर्णंआदित्यस्येवनित्यप्रकाशरूपोवर्णोदीप्यमानतायस्यतंआदित्यवर्णम् सर्वजगदवभासकमित्यर्थः तमसः
देहेंद्रियादावनात्मनिआत्मनिनामरूपाऽविद्यातःपरस्तात्पराचीनम् सतिदेहाभिमानेनप्रकाशतेयोगयुक्त्यात्यक्तेतुतस्मिन्स्वयमेवप्रका
शतइत्यर्थः ९

उपासनायाः फलमाह प्रयाणेति प्रयाणकालेमनसाऽचलेनवृत्त्यंतरवर्जितेन भक्त्याभगवतिवासुदेवेआराध्यत्वबुद्ध्यायुक्तोयोगबले
नयोगः मनःप्राणेंद्रियक्रियानिरोधः हृदयपुंडरीकेतेषांवशीकरणमित्यर्थः तस्यैवबलेनचयुक्तोभूमिकाजयक्रमेणप्रागेवमूलाधारादि
ब्रह्मरंध्रांतस्थानेषुआरोहावरोहक्रमेणसंचारितपवनोंऽतकालेभ्रुवोर्मध्येआज्ञाचक्रेप्राणंआवेश्यसुषुम्नयानाड्यामूलाधारादुत्थापन-
पूर्वकंसम्यक्निवेश्यस्थापयित्वा स्थापनप्रयोजनंतुअन्यविस्मरणपूर्वकंदिव्यपुरुषचिंतनम् तच्चभ्रूमध्यादुपर्युन्नीयमानेवायौमनो
मूर्च्छामापद्यतइतितस्यामवस्थायांनभवतीत्यंत्यप्रत्ययस्तत्रैवसंपाद्यस्ततोऽर्चिरादिमार्गपर्वणाऽमानवस्यपुरुषस्यस्थानविशेषेप्राप
कस्यप्राप्यस्थानस्यच तस्मिन्नेवस्मरणंकर्तव्यंतद्वासनावासितंमनः भ्रूमध्याद्योगिनाऊर्ध्वयानाड्या उत्क्षिप्तेप्राणेसुक्षेषुवब्रह्मांड
खर्परंभित्वाप्रचलितेसतिमनोलब्धवृत्तिकंभूत्वापूर्वसंस्कारप्राबल्यात्योगमाहात्म्याच्चदिव्योपाध्युपेतमर्चिरादिपर्वदेवताभिरभि
पूज्यमानंउत्तरोत्तरंस्थानंप्रत्येतिवाह्यमानममानवेनचपुरुषेणसंगच्छमानंतेनचयथाभिलषितंस्थानंप्रापितमानंदंपश्यति तदिदमु-
क्तंभ्रुवोर्मध्येसम्यक्प्राणंआवेश्येति सएवंकृत्वायोगीकविंपुराणमित्युक्तलक्षणंपरंपुरुषंहिरण्यगर्भाख्यंसर्वस्यभूतजातस्यजनयितारं-

प्रयाणकालेमनसाऽचलेनभक्त्यायुक्तोयोगबलेनचैव भ्रुवोर्मध्येप्राणमावेश्यसम्यक्सतंपरंपुरुषमुपैतिदिव्यं १०
यदक्षरंवेदविदोवदंतिविशंतियद्यतयोवीतरागाः यदिच्छंतोब्रह्मचर्यंचरंतितत्तेपदंसंग्रहेणप्रवक्ष्ये ११ नारायणादिशब्द

प्रतिपाद्यंउपैति समीपेप्राप्नोतिनतल्लोकंप्राप्नोतीत्यर्थः नहिपौराणिकानामिववैदिकानामंतेब्रह्म विष्णुरुद्रलोकानांउपर्युपरिकल्पनास्तिकिंतर्हि
सर्वेहिरण्यगर्भलोकाख्येसत्यलोकएवांतर्भवंति पराहिसोपासनकर्मार्जिताहिरण्यगर्भप्राप्यंतेबृहदारण्यकेतद्भाष्यादौचस्पष्टं १० भ्रुवोर्मध्येप्रा
णमावेश्येत्युक्तंतत्किंकृत्वाकर्तव्यंतत्कृत्वाचकिंकर्तव्यमित्येतद्द्वयंवदिष्यन्तत्रप्रतीकत्वेनचिंत्यंप्रणवंनावद्वाच्यवाचकयोरभेदाविवक्षयास्तौतियद
क्षरमिति यदक्षरंप्रणवाख्यंवाचकंवेदविदोवेदादौवदंति यद्वा यदक्षरंब्रह्मतद्वाच्यंएतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमनण्वह्रस्वम-
दीर्घमित्येवंलक्षणंवावेदविदोउपनिषद्विदोवदंतियच्चयतयोविशंतिब्रह्मप्रतीकत्वेनशरणीकुर्वंतिपक्षेसम्यग्दर्शनेसरित्सागरन्यायेनयत्प्रविं-
शंतियतयः यत्अक्षरमिच्छंतोब्रह्मचर्यंचरंतीतिपक्षद्वयेपिसमानं तत्तेपदंवर्णत्रयात्मकंपदनीयंवास्थानंविष्णोः परमंपदंसंग्रहेणवक्ष्ये अयंचवा
च्यवाचकयोरभेदः श्रुतिच्छाययागम्यते अन्यत्रधर्मादन्यत्राधर्मादितिसर्वधर्मातीतंब्रह्मप्रकृत्यसर्वेवेदायत्पदमामनंतितपांसिसर्वाणिचयद्वदंति य
दिच्छंतोब्रह्मचर्यंचरंतितत्तेपदंसंग्रहेणब्रवीम्योमित्येतदित्योंकारेणोपसंहारात्फलंचप्रतिभावात्ॐकारप्रतीकत्वेनप्रकल्प्यतद्द्वाराशब्दशबलंवा
ब्रह्मप्रतिपत्तव्यं तथाचश्रुत्यंतरेएतद्वैसत्यकामपरंचापरंचब्रह्मयदोंकारइत्युपक्रम्यतस्मादेवंविद्वानेतेनैवायतनेनैकतरमन्वेतीतिदृष्टंआयतनंशालग्रामवत्प्रतीकंते

भ्रुवोर्मध्येकथंप्राणंआवेशयेदित्यतआह सर्वेति सर्वाणिशब्दादिविषयग्रहणद्वाराणींद्रियाणिसंयम्यनिगृह्यतथाहृदिमनोपिनिरुध्यतेषां-
कंचुकभूतंप्राणंमूर्द्धन्यनाड्यासुषुम्नाख्ययामूर्ध्निभ्रुवोर्मध्येआधाय कथंयोगधारणांयोगशास्त्रोक्तांधारणांमनसोदेशविशेषनिबंधिनींआस्थि
तः अनुतिष्ठन्सन् १२ मूर्ध्निप्राणमाधायकिंकुर्यादतआह ओमितिओंकाररूपंएकाक्षरंएकंचतदक्षरंचवर्णोब्रह्मचतत्व्याहरन्उच्चरन्मांचब्रह्मभूतं अनु-
स्मरन्योहिदेवदत्तंस्मृत्वातन्नामव्याहरतितस्मैदेवदत्तोऽभिमुखोभवत्येवंब्रह्मणोनामोच्चारणेनसन्निहितनरंव्यापकंब्रह्मसाधकस्यसन्निधी
यते सन्निहितेचब्रह्मणियः देहंत्यजन्म्रियमाणः प्रयाति ऊर्ध्वनाड्यायातिसपरमांगतिंसन्निकृष्टब्रह्मरूपांयाति ब्रह्मेवप्रकृत्यश्रूयते एषा
स्यपरमागतिरेषास्यपरमासंपदेषोऽस्यपरमआनंदइति तामेवगतिंशुद्धंब्रह्मैवप्राप्नोति ब्रह्मलोकप्राप्तिद्वारा १३ इयंगतिरतीवदुर्लभेति-
मामंस्थाइत्याह अनन्येतिनास्तिअन्यत्रचेतोयस्यासोअनन्यचेताइत्यनेनस्मरणेनआदरउच्यते सततमितिनैरंतर्ययोमांस्मरतिनित्यशइतिदीर्घका

सर्वद्वाराणिसंयम्यमनोहृदिनिरुध्यच मूर्ध्न्याधायात्मनःप्राणमास्थितोयोगधारणाम् १२ ओमित्येकाक्षरंब्रह्म-
व्याहरन्मामनुस्मरन् यःप्रयातित्यजन्देहंसयातिपरमांगतिम् १३ अनन्यचेताःसततंयोमांस्मरतिनित्यशः तस्या
हंसुलभःपार्थनित्ययुक्तस्ययोगिनः १४ मामुपेत्यपुनर्जन्मदुःखालयमशाश्वतम् नाप्नुवंतिमहात्मानःसंसिद्धिं-
परमांगताः १५ आब्रह्मभुवनाल्लोकाःपुनरावर्तिनोऽर्जुन मामुपेत्यतुकौंतेयपुनर्जन्मनविद्यते १६

लत्वंयावज्जीवंस्मरतीत्य
र्थः तस्याहंसुलभःपार्थनित्ययुक्तस्यनित्यंयोगिनामावश्यकेयुक्ताहारविहारादौयमनियमादौचयुक्तस्यावहितस्ययोगिनोयोगमनुतिष्ठतः १४
तल्लाभेपिकिंस्यादतआह मामिति मामुपेत्यपुनर्द्वितीयवारंजन्मनाप्नुवंति यज्जन्मदुःखानामालयभूतंमूढदृष्ट्याकिंचित्सुखालयत्वेपिअशा
श्वतंनश्वरंतुच्छमित्यर्थः केनाप्नुवंति महात्मानः योगेनजितचित्ताअतएवपरमांसंसिद्धिंमोक्षंगताअगताअपिप्रत्यासन्नत्वाद्गताएव तथा
ब्रह्मलोकगतान्प्रकृत्यस्मर्यते ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरेपरस्यांतेकृतात्मनः प्रविशंतिपरंपदमिति प्रतिसंचरेब्राह्मप्रलये पर-
स्यचतुर्मुखस्यअंतेनाशे १५ तद्लाभेपिकिंस्यादतआह आब्रह्मेति आब्रह्मभुवनात्ब्रह्मलोकमभिव्याप्यब्रह्मलोकेनसहैवेत्यर्थः लो-
काःपुनरावर्तिनःपुनरावृत्तिस्वभावाः हेऽर्जुनशेषंस्पष्टम् अत्रेयंव्यवस्थोपक्रममुक्तिफलाभिर्दहरादिविद्याभिर्ब्रह्मलोकंगतास्तेतत्रैव-
ज्ञानंप्राप्यब्रह्मणासहमुच्यंते येतुपंचाग्निविद्यादिभिर्ब्रह्मलोकंगतास्ते नुपासितपरमेश्वराः पुनरावर्तंतइति १६ ८२ ८

आवृत्तिभाजांकालपरिच्छेदमाह सहस्रेतियुगशब्दोत्रचतुर्युगपर्यायः चतुर्युगसहस्रंतुब्रह्मणोदिनमुच्यतइतिपुराणांतरेदर्शनात् सहस्रंचतुर्युगानिपर्यंतोवसानंयस्यतच्चतुर्युगसहस्रंब्रह्मणोदिनम् रात्रिरपितावतीत्याहरात्रिमिति अत्रापिचतुर्युगसहस्राणांअंतेभवतितांचतुर्युगसहस्रांतांतेप्रसिद्धाअहोरात्रविदोजनाविदुः १७ किंब्रह्मणोह्निजायतेकिंवारात्राविल्यतआह अव्यक्तादिति अत्रेदंनंदिनसृष्टिप्रलययोः प्रकृतत्वादव्यक्तशब्देननाव्याकृतंवियदादिकारणमिहग्राह्यंतदाआकाशादीनांसत्वात् किंतर्हिप्रजापतेः स्वापावस्थैवेहाव्यक्तशब्दार्थःअयंभावः प्रजापतेः स्वापकालेतत्कल्पितःस्थावरजंगमप्रपंचः सर्वोपितदीयेऽज्ञानेऽव्याकृताख्येलीयतेरात्र्यागमे तथादिवसागमेपुनस्ततएवयथापूर्वमाविर्भवति एवंदृष्टिसृष्टिन्यायेना स्मत्कल्पितोऽप्ययंवियदादिप्रपंचोऽस्मत्सुप्तौलीयते अस्मत्प्रबोधेयथापूर्वंप्रादुर्भवतीति १८ कृतहानाकृताभ्यागमदोषापत्तुत्तयेबंधमोक्षशास्त्रप्रवृत्तिसाफल्यायअविद्यादिवशात्त्वावशोऽयंभूत-

सहस्रयुगपर्यंतमहर्यद्ब्रह्मणोविदुः रात्रिंयुगसहस्रांतांतेऽहोरात्रविदोजनाः १७ अव्यक्ताद्व्यक्तयः सर्वाः प्रभवंत्यहरागमे रात्र्यागमेप्रलीयंतेतत्रैवाव्यक्तसंज्ञके १८ भूतग्रामःसएवायंभूत्वाभूत्वाप्रलीयते रात्र्यागमेऽवशः पार्थप्रभवत्यहरागमे १९ परस्तस्मात्तुभावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः यःससर्वेषुभूतेषुनश्यत्सुन विनश्यति २०

ग्रामः पुनः पुनर्भूत्वापुनः पुनः प्रलीयतइत्याह वैराग्योत्पादनार्थंभूतग्रामइति अहरागमेभूत्वाभूत्वारात्र्यागमेप्रलीयतइतियोजना सएवभूत्वाप्रलीयतेनान्योऽभिनवोभवतीत्यर्थः कुतः यतोवशः अविद्याकामकर्माधीनस्तस्मात्सर्वानर्थबीजभूतायाअविद्यायाविद्ययाउच्छेदेजन्ममरणप्रवाहविच्छेदायावश्ययतितव्यमित्यर्थः १९ एवंब्रह्मभुवनांतानामावृत्तिंव्याख्याययत्प्राप्तानामावृत्तिर्नास्ति तदक्षरंपरमंब्रह्मेत्यपक्रांतंवक्तुंलक्षयति परस्तस्मादितित्रिभिः परइति तस्माद्व्यक्तात् भूतग्रामबीजभूतादविद्यालक्षणात् अनृतात् अन्योअत्यंतविलक्षणोभावः सत्तातुशब्दात्परामिमतसत्तासामान्यंवारयति तस्यसामान्यादिभ्योव्यावृत्तत्वात् अस्यचसर्वत्रानुगतत्वात् सनातनोनित्यैकरूपः उपाधिमान्हिउपाधिविक्रिययानित्यंविक्रीयतइवभातिअयंत्वनुपाधित्वान्नित्यैकरूपएव यः सः भावः सर्वेषुभूतेषुवियदादिषुनश्यत्सुनविनश्यति केवलसत्तारूपत्वात् एतेनतस्यकालत्रयाबाध्यत्वंनित्यत्वंचोक्तम् २० ७ ७ ७ ७ ७ ७

अव्यक्तोनव्यज्यतइतिदृश्यत्वंनिरस्तंअक्षरोऽश्नुतेव्याप्नोतीतित्रिविधपरिच्छेदशून्यत्वमुक्तं तंभावंपरिमांगतिंब्रह्मलोकांतागतिरपरमाकार्यत्वा त् इयंतुपरमाकार्यकारणातीतत्वात् आहुः एषास्यपरमागतिरित्याद्याः श्रुतयः यंभावंप्राप्यननिवर्ततेपुनःसंसारेनपततितदितिविधेयापेक्षंक्ली बत्वंसएवममविष्णोःपरमंउपाध्यस्पृष्टंधामप्रकाशः तद्विष्णोःपरमंपदमितिश्रुतिप्रसिद्धंनिष्कलंब्रह्म २१ एवंज्ञेयंप्रत्यगभिन्नंब्रह्मउक्काजग त्कारणमुपासनीयमितोऽन्यदित्याह पुरुषइति तुशब्दः पूर्ववैलक्षण्यद्योतनार्थः हेपार्थ योऽयंभक्त्याआराधनेनउपासनेनेति यावत्कीदृश- याअनन्ययानास्त्यन्योयस्यांसातयाउपास्योपासकभेदमंतरेणाअहंग्रहरूपयेत्यर्थः तयाभक्त्यायोलभ्यःसपरः पूर्वोक्तादव्याकृतानानुगतादक्ष रादन्यः कारणात्मेतियावत् लभ्यत्वादेवास्यान्यत्वमपिनस्यात्माचलभ्यश्चेतियुज्यते अस्यकारणत्वमेवाह यस्येति यस्यपुरुषस्यांतस्थानिबी जेद्रुमइवसर्वाणिवियदादीनिस्थावरजंगमानिच येनचइदंसर्वंततंव्याप्तमुपादानत्वात्सभक्त्यालभ्यइतियोजना २२ पूर्वोक्तानामोंकारद्वारास-

अव्यक्तोक्षरइत्युक्तस्तमाहुःपरमांगतिम् यंप्राप्यननिवर्तंतेतद्धामपरमंमम २१ पुरुषःसपरःपार्थभक्त्यालभ्यस्त्व नन्यया यस्यांतस्थानिभूतानियेनसर्वमिदंततम् २२ यत्रकालेत्वनावृत्तिमावृत्तिंचैवयोगिनः प्रयातायांतितंकालंव- क्ष्यामिभरतर्षभ २३ अग्निर्ज्योतिरहःशुक्लः षण्मासाउत्तरायणम् तत्रप्रयातागच्छंतिब्रह्मब्रह्मविदोजनाः २४ धूमो रात्रिस्तथाकृष्णः षण्मासादक्षिणायनम् तत्रचांद्रमसंज्योतिर्योगीप्राप्यनिवर्तते २५ शुक्लकृष्णेगतीह्येतेजगतःशा श्वतेमते एकयायात्यनावृत्तिमन्ययावर्ततेपुनः २६ नैतेसृतीपार्थजानन्योगीमुह्यतिकश्चन तस्मात्सर्वेषुकालेषुयो गयुक्तोभवार्जुन २७

गुणब्रह्मविदांक्रममुक्तिभाजांब्रह्मप्रतिपत्तयेउत्तरोमार्गोवक्तव्यइत्यतआह यत्रेति आवृत्तिमार्गोपन्यासोऽनावृ त्तिमार्गस्तुत्यर्थः योगिनइतियोगिनः कर्मिणश्चोच्यंतेतेषांयथायोग्यंमार्गद्वयविभागः शेषंस्पष्टम् २३ तत्रोपासकानांदेवयानंपंथानमाहाग्नि रिति अग्निर्ज्योतिरित्यर्चिरभिमानिनीदेवतालक्ष्यते एवंअहरित्यहरभिमानिनी एवंशुक्लपक्षस्यषण्मासस्संमितस्योत्तरायणस्यचाभिमा- निन्योदेवतेएव एतच्चान्यासामप्युपलक्षणंतत्रप्रयाताउत्क्रांताः ब्रह्मकार्यंब्रह्मतद्द्वारापरंचगच्छंतिब्रह्मविदोब्रह्मोपासकाजनाः २४ एते- नधूमोरात्रिरित्येषोऽपिधूमादिमार्गः कर्मिणामपक्वयोगिनांचउचितआवृत्तिफलश्चव्याख्यातः २५ उक्तौमार्गावुपसंहरति शुक्लेति शुक्ला ज्ञानहेतुत्वादर्चिरादिगतिः तदभावात्कृष्णाधूमादिगतिः एकयाशुक्लया अन्ययाकृष्णया २६ एतेसृतीमार्गौआवृत्त्यनावृत्तिफलेजानन्यो गीनमुह्यति योगभ्रष्टोऽयतिरल्पप्रयत्नश्चयोगीनभवति कश्चनकोपि यस्मादेवंतस्मात्सर्वेष्वित्यादिस्पष्टम् २७ ७ ७ ७

पुनः श्रद्धाविशुद्धये योगं स्तौति वेदेष्विति वेदेषु सम्यगधीतेषु यज्ञेषु तपःसु च सम्यगनुष्ठितेषु दानेषु च सम्यग्दत्तेषु यत्पुण्यं तत्फलं चेतिपु
ण्यफलं सर्वेषु समुच्चितेषु यत्प्रदिष्टं शास्त्रेषु तत्सर्वं योगी अत्येति अतिक्रामति कावार्यं ब्रह्मलोकं प्राप्नोति इत्यत आह यत् स्थानं निर्विशेषं ब्रह्म उ-
पैति प्राप्नोति च क्रमेणेत्यर्थः आद्यं नतु केनचिन्निर्मितं तदनेनाध्यायेन ध्येयस्तत्पदार्थो व्याख्यातः अग्रिमेध्याये ज्ञेयम् ब्रह्म व्याख्यास्य
ति २८ इति नैलकंठीये भारतभावदीपे भीष्मपर्वणि गीतार्थप्रकाशेऽष्टमोऽध्यायः ८ ३२ पूर्वाध्याये किंतत् ब्रह्मेत्यादि सप्तप्रश्ना
अक्षरं ब्रह्म परममित्यादिना संक्षिप्य व्याख्याता यां तज्ज्ञानस्य पृथक्प्रयोजनाकांक्षायां कर्मविदां आधिभौतिकं धूमादिमार्गप्राप्यं स्थान-
मिति निरूपणेन प्राप्यप्रापकादिविभागो दर्शितः तेन कर्माधिभूते व्याख्याते तथा सूत्रांतर्यामिणोरुपासकस्यार्चिरादिमार्गेण क्रममु-
क्तिस्थानप्राप्तिरिति उक्तं तेन आधिदैवाधियज्ञौ व्याख्यातौ ओमित्येकाक्षरमित्यादिना अंतकाले कथं ज्ञेयोसीत्यस्योत्तरं व्याख्यानम् त-

वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् २८
इति श्रीम॰ भीष्मप॰ भगवद्गीतासू॰ पुरुषोत्तमयोगो नाम अष्टमोध्यायः ८ ३२ श्रीभगवानुवाच इदं तु ते गुह्यतमं
प्रवक्ष्याम्यनसूयवे ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् १

देवं ध्येयब्रह्मविद्या सांगा निरूपिता परिशिष्टमाद्यं ज्ञेयब्रह्मवि
षयं प्रश्नद्वयं किं तद्ब्रह्म किमध्यात्ममिति तद्विवरणाय नवमोध्याय आरभ्यते न केवलं अर्चिरादिगतिप्राप्या कालांतरे एव मुक्तिरस्ति किं त्विहैव सद्योमुक्ति
रस्तीति विशेषं वक्तुं श्रीभगवानुवाच इदं तु ते इति इदं वक्ष्यमाणं तु पूर्वस्मात् ध्येयात् विलक्षणं ज्ञेयं ते तुभ्यं गुह्यतमम् अतिगोप्यं प्रवक्ष्यामि अनसूयवे अ-
सूया गुणेषु दोषाविष्करणं तद्रहिताय ज्ञानं ज्ञप्तिमात्रस्वरूपं ब्रह्म विज्ञानेन अनुभवेन सहितं नतु केवलं पारोक्ष्येण यत् ज्ञानं ज्ञात्वा साक्षात्कृत्य अशुभा-
त्संसारात् मोक्ष्यसे अत्र यत्समादौ ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषत इति प्रतिज्ञातं यस्य च विज्ञानाय शाखाचंद्रन्यायेनोपलक्षणीभूतं जगत्कारणं ब्र
ह्म तत्रैव निरूपितं यद्विज्ञानेऽधिकारसंपत्यर्थं तस्यैव सगुणस्योपासनमुक्तं तदिह सर्वशेषीभूतं ब्रह्म वक्तव्यमिति तथैव प्रतिजानीते वचनमात्रेणैवात्रापरोक्षं-
ज्ञानं जायत इति तच्च तत्रैव व्युत्पादितं न प्रस्मर्तव्यम् १ ६९

एतदेवस्तौति राजविद्येति विद्यानांराजाइतिराजविद्या अध्यात्मविद्या गुह्यानांराजाइतिराजगुह्यं राजदंतादिषुपरमित्युपसर्जनस्यपर
निपातः पवित्रंपावनंउत्तमंपूर्वापरदुरितनाशाश्लेषहेतुत्वात्प्रायश्चित्ताद्यपेक्षयाश्रेष्ठम् प्रत्यक्षावगमंप्रत्यक्षंनित्यापरोक्षंयत्प्रत्यगात्मवस्तु
तदेवयाथात्म्येनावगम्यतेऽनेनेतिप्रत्यक्षावगमम् प्रत्यक्षेणसुखादिवदवगमोयस्येतिवा अस्मिन्पक्षेविज्ञानसहितमितिविशेषणस्यश्लो
कांतरस्थत्वान्नतेनपौनरुक्त्यदोषः तर्हिअपूर्वत्वाभावान्निष्फलंस्यादतआह धर्म्यंधर्मायहितंतथाहिक्षणमपिप्रत्यगात्माकारवृत्तौसत्यां
श्रूयतेक्षणमेकंक्रतुशतस्यचतुःससत्यायत्फलंतदवाप्नोतीति तर्हिदुःसाध्यंस्यान्नेत्याहसुसुखंकर्तुमितिकर्तुंसंपादयितुंआविष्कर्तुंसुसु
खंअनायाससाध्यंअज्ञानापनयमात्रसिद्धत्वात् तर्हिआशुविनाशिफलंचेद्व्ययंवस्तुमात्रविषयत्वात् अनंतफलं नतुकर्मफलवन्नश्य
ति २ तर्हिकुतएतत्ज्ञानंसर्वेनसंपादयंतीत्याहाश्रद्दधानाइतिस्पष्टार्थःश्लोकः ३ एवंस्तुत्वाऽभिमुखीकृत्ययद्वक्तव्यंतदाह मयेति मया
इदंसर्वंजगत्ततंव्याप्तंउपादानत्वात्कनकेनेवकुंडलादीनि ननुप्रागेवैतदुक्तंअहंसर्वस्यजगतः प्रभवः प्रलयस्तथेतितथाचराजविद्ये-
त्यादिस्तुतिरस्थानेएवस्तुतास्यात्वक्तव्यविशेषाभावादितिचेत्अत्रब्रूमः यथायतोवाइमानिभूतानिजायंते येनजातानिजीवंतियत्प्र-

राजविद्याराजगुह्यंपवित्रमिदमुत्तमम् प्रत्यक्षावगमंधर्म्यंसुसुखंकर्तुमव्ययम् २ अश्रद्दधानाःपुरुषाधर्मस्यास्य
परंतप अप्राप्यमांनिवर्तंतेमृत्युसंसारवर्त्मनि ३ मयाततमिदंसर्वंजगदव्यक्तमूर्तिना मत्स्थानिसर्वभूतानिनचाहंते
ष्ववस्थितः ४

यंत्यभिसंविशंतितद्विजिज्ञासस्वतद्ब्रह्मेतिज्ञेयस्यब्रह्मणोलक्षणंजगज्जन्मादिहेतुत्वमुक्त्वातस्यानुगमंअन्नादिश
ब्दशब्दितेषुविराडादिषुदर्शयति अन्नाद्ध्येवखल्विमानिभूतानिजायंतेप्राणाद्ध्येवेत्यादिनातस्यनिर्णयवाक्यंतुआनंदाद्ध्येवखल्वि-
मानिभूतानिजायंतइति सैषाभार्गवीवारुणीविद्येतितत्रैवविद्यायाः पर्यवसानाभिधानात् एवमिहापिसप्तमेभूमिरापोनलोवायु-
रित्यादिनासर्वभूतात्मकस्यविराजोजगज्जन्मादिहेतुत्वंप्रदर्श्यपश्चादहं सर्वस्यजगतः प्रभवः प्रलयस्तथेत्यनेनमायाशबलेपितत्प्र-
दर्श्यइदानींशुद्धेप्रत्यगात्मन्येवतद्दर्शयतिस्थूलारुंधतीन्यायेनप्रतिपत्तिसौकार्यार्थमितिगम्यतेराजविद्येत्यादिनास्तुतत्वात् यथाक-
श्चिद्दुर्लक्ष्यांसूक्ष्मामरुंधतींदिदर्शयिषुस्तत्समीपस्थांस्थूलांतारामरुंधतीतिग्राहयति ततस्तामपोह्यनेयमरुंधतीकिंतु ततः सूक्ष्मांत
त्समीपस्थाम् तद्द्वितीया मरुंधतीमितिग्राहयति एवंपूर्वांपूर्वांप्रत्याख्यायअंतेउक्तासैवमुख्यारुंधतीतिग्राहयतिप्रति
पद्यतेचानेनैवक्रमेणप्रतिपत्ता एवमिहापिकार्यकारणप्रतिपत्तिद्वाराअकार्यकारणस्यशुद्धस्यप्रतिपत्तिर्युक्ताअतएवभगवान्प्रा

प्यकारेमयाततमिदंसर्वमित्यत्रमयाममयः परोभावस्तेनततंव्याप्तमितिव्याचख्योनत्वहंसर्वस्यजगतः प्रभवइत्यत्रममयः परोभावः स-
सर्वस्यजगतः प्रभवइतिसचभगवतः कारणात्मनः परोभावः परमानंदएवतेनैवचेदंततम् आनंदाद्ध्येवेत्युदाहृतश्रुतेस्तस्यैवजगदुपादा-
नत्वेनतदीयसत्तास्फूर्तिभ्यांजगतोव्याप्तत्वात् अतएवअव्यक्तमूर्तिनेतिविशेषणम् मायाशबलंहिकारणंबुद्धिग्राह्यत्वात्करणगोचरः शुद्धं
हिबुद्धेः परत्वात्करणागोचरइति किंभूताकारेणानंदः परिणमतइत्यतआह मत्स्थानीति मयिप्रत्यगानंदेरज्वांस्रक्सर्पदंडधारादयइव स-
र्वभूतानिस्थितानिअतोमत्स्थानीत्युपचारादुच्यंते अधिष्ठानाध्यस्तयोर्वास्तवसंबंधायोगात् एतदेवाह नचेति नचाहंपरमानंदस्तेषुभूतेष्वे-
वस्थितोस्मिघटादाविवमृत् अपरिणामित्वादेव ४ एवमभ्युपगतंआनंदस्यजगद्विवर्ताधिष्ठानत्वंतदप्यपवदति नचमत्स्थानीति अयंभा-
वः अस्यहेंद्रजालस्ययदुपादानकारणम् अज्ञानंतदुपाश्रित्यब्रह्मकारणमुच्यतेतिवार्त्तिकोक्तेरज्ञानमेवजगत्कारणंतच्चतुच्छंअहंचासंगः
ततश्चतुच्छतरेणतत्कार्येणभूतसंघेननममासंगस्यआधाराधेयभावसंबंधः अनिर्वचनीयोप्यस्ति आहतंहिरज्वादिकमनिर्वचनीयेनसर्पादि
नासंबंध्यते अहंतुसर्वदाऽनावृतसाक्षिरूपत्वात्संबंधशून्यइतिनचमत्स्थानिभूतानीत्युक्तमिति ननुसाक्षिणस्तवब्रह्मणोप्यवास्तु रवीनेति-

नचमत्स्थानिभूतानिपश्यमेयोगमैश्वरम् भूतभृन्नचभूतस्थोममात्माभूतभावनः ५ ९

प्रतीच्येवभूतसंबंधानुभवात्कथंनचमत्स्थानीत्युक्तिरित्याशंक्याहपश्यमेयोगमैश्वरमिति मेममभूतेः सहयोगंयुक्तिंघटनांपश्यऐश्वरंई
श्वरेणमायाविनानिर्मितंगगनेगंधर्वनगरेणेव अतएवममकारणशरीरस्यआत्माप्रत्यगानंदः भूतभृत्भूतस्थोनचकारोप्यर्थेभिन्नक्रमश्च-
स्वामिवगंधर्वनगरभृदपितत्स्थंनतस्यतदाकारेणपरिणामासंभवात् एवंरूपोपिपरानंदरूपोममात्मासभूतभावनः भूतानांप्राह्लिकरः एत
स्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति कोह्येवान्यात्कः प्राण्यात्यदेषआकाशआनंदोनस्यादित्यादिश्रुतिभ्यः आकाशेअव्याकृता-
ख्येस्वाधिष्ठानभूतआनंदोऽनुस्यूतोनस्यात्तर्हिप्राणापानक्रियांकश्चिदपिनकुर्यात् कारणगतंजाड्यंकार्येपिस्यात् आकाशेआनंदानुवेधे-
तुकारणस्यचेतनत्वात्कार्यमपिचेतनावत्स्यादितिश्रुत्यर्थः बृहदारण्यकेपियदूर्ध्वंगार्गिदिवोयदवाक्पृथिव्यायदंतराद्यावापृथिवीइमे य-
द्भूतंचभवच्चभविष्यच्चेत्याचक्षतआकाशएवतदोतंचप्रोतंचेतिमायाविनसर्वस्योतत्वप्रोतत्वमुक्त्वाकस्मिन्नुखल्वाकाशओतश्चप्रोतश्चेत्य
स्योत्तरंएतस्मिन्नुखल्वक्षरेगार्गिआकाशओतश्चप्रोतश्चेत्यस्थूलादिलक्षणस्याक्षरस्याकाशाधारत्वमुक्तम् तस्माद्युक्तमुक्तमाकाशशरीरे-
णभवताकारेणोपाधिनिष्कृष्टचिन्मात्राभिप्रायेणममात्माभूतभावनइति ५ ९ ९ ९ ९

श्लोकद्वयोक्तेऽर्थेदृष्टांतमाह यथेति यथालोकेआकाशेस्थितोनित्यंसदावायुःसर्वत्रगः परिमाणतश्चमहान् तथासर्वाणिभूतानिसर्वगतेमयि-
असंश्लेषेणैवस्थितानीत्येवमुपधारयेतिप्रांचः किंतद्ब्रह्मेति प्रश्नोत्तरमुक्तंअक्षरंपरमंब्रह्मेति अक्षरसंज्ञःशुद्धः त्वंपदार्थएवनिरुपाधिकं
ब्रह्मेत्युक्तंतत्रनिरुपाधिकंब्रह्मश्लोकद्वयेनव्याख्यातम् इदानींतस्याक्षराख्येनजीवेनाभेदंसदृष्टांतमाह यथेति वायुःसूत्रात्मा वायुर्वैगोतम
तत्सूत्रमितिश्रुतेः सर्वत्रगइतिसमष्टिलिंगत्वात्तस्यसर्वगतत्वम् महानितिबाह्यवायुव्यावृत्त्यर्थं सयथाआकाशस्थितः अव्याकृताकाशेस्वका
रणेस्थितः नित्यमितिकालत्रयेऽपितस्याकाशसंबंधउक्तः सर्वाणिभूतानिउपाधिनिष्कृष्टत्वंपदार्थरूपीचेतनवर्गः बहुत्वंलोकाभिप्रायेण यथा
कार्यंसर्वंउत्पत्तेः प्राक्नाशादूर्ध्वंमध्येचस्वकारणेएवाभेदेनतिष्ठति एवंसर्वोपिजीववर्गउपाध्युत्पत्तेःप्राक्तन्नाशादूर्ध्वंमध्येवाघटाकाशोमहाकाशा
दिवपरस्माद्ब्रह्मणःकालत्रयेपिनातिरिच्यतइत्यर्थः एतेनजीवब्रह्माभेदकथनेनस्वभावोऽध्यात्ममुच्यतइतियत्प्रागुक्तंब्रह्मैवजीवइतितद्वि-

यथाकाशस्थितोनित्यंवायुःसर्वत्रगोमहान् तथासर्वाणिभूतानिमत्स्थानीत्युपधारय ६ सर्वभूतानिकौंतेयप्र
कृतिंयांतिमामिकाम् कल्पक्षयेपुनस्तानिकल्पादौविसृजाम्यहम् ७ प्रकृतिंस्वामवष्टभ्यविसृजामिपुनःपुनः
भूतग्राममिमंकृत्स्नमवशंप्रकृतेर्वशात् ८ नचमांतानिकर्माणिनिबध्नंतिधनंजय उदासीनवदासीनमसक्तंते-
षुकर्मसु ९

वृतम् ६ नन्वेवंउपाधिरहितस्यैवब्रह्मणिलयश्चेदुपाधेःकागतिरित्याशंक्याह सर्वेति सर्वाणिभूतानिस्थावरजंग
मशरीराणिमामिकांममप्रायाविनः प्रकृतिंत्रिगुणात्मिकांअपरांसूक्ष्मभूम्याद्यात्मिकांयांतिप्रविशंति कदायांति कल्पक्षये पुनश्चता
न्येवभूतानिप्रकृतौसूक्ष्माविवसंस्कारात्मनास्थितानिएकतांगतानिकल्पादौविसृजामिविविधरूपेणसृजाम्यहंकारणात्मामायावी ७
एतदेवाह प्रकृतिमिति एवमविद्यालक्षणांस्वांप्रकृतिंअवष्टभ्यआश्रित्यतांविनाकेवलस्यस्रष्टृत्वासंभवात् इमंभूतग्रामंपुनःपुनर्विविधं
सृजामि किंभूतंप्रकृतेर्वशात्स्वभाववशात्अवशंरागद्वेषाद्यधीनम् ८ ननुविषमांसृष्टिंकुर्वतस्तववैषम्यनैर्घृण्येस्यातामतआह नचे-
ति तानिविषमसृष्टिरूपाणिकर्माणिमांननिबध्नंति तत्रहेतुः उदासीनवत्आसीनमितियथापर्जन्योनबीजविशेषेषुरागंकेषुचिद्द्वेषंचाकृ
त्वाउदासीनःसन्वर्षति एवंईश्वरोपिपुण्यवत्सुरागंपापिषुद्वेषंचाकुर्वन्जगत्सृजतितत्तदसाधारणकर्मबीजवशात्तेतेविभिन्नंफलंप्राप्नु-
वंतीतिनेश्वरस्यवैषम्यादीत्यर्थः ९ ५ ५ ५ ५ ५ ५ ५ ५

नन्वविसृजामिउदासीनवदासीनमितिपरस्परविरुद्धमुच्यतइत्याशंक्याह मयेति मयाकूटस्थेनअध्यक्षेणअयस्कांतकल्पेनप्रवर्त्तकेनप्रकृतिः चराचरंजगत्सूयतेउत्पादयति अनेनअध्यक्षत्वेनैवहेतुनाहेकौंतेयजगद्विपरिवर्ततेजन्माद्यवस्थारूपभ्रमति अयस्कांतवदहमुदासीनश्चसृष्टिप्रवर्तकश्चभवामीतिभावः तथाचमंत्रवर्णः एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मा कर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेताकेवलोनिर्गुणश्चेति एकस्यैवदेवस्यसर्वाध्यक्षत्वंसाक्षित्वंचप्रतिपादयति १० एवंभूतंमांसंतंमूढाःअवजानंतियतोमानुषींतनुंआश्रितंमनुष्यदेहेनव्यवहरंतम् ममपरंप्रकृष्टंभावंतत्वंअजानंतः भूतानांमहेश्वरंमामवजानंतीतिसंबंधः ११ मदवज्ञानाच्चतेमोघाशाः वृथैवआशिषोयेषांतेमोघाशाः तथामोघकर्माणः निष्फलोद्योगाः मोघज्ञानाः निष्फलज्ञानाः यतोविचेतसः निर्विवेकाः यतोराक्षसींआसुरींचरजस्तमःप्रधानांमोहिनींमोहकरींप्रकृतिंश्रिताः छिंधिभिंधिपिबखादपरस्वमपहरेत्येवंशीलाःक्रूरकर्माणोभवंतीत्यर्थः १२ तथा येमहात्मानः अक्षुद्रचित्ताःस्त

मयाध्यक्षेणप्रकृतिःसूयतेसचराचरम् हेतुनानेनकौंतेयजगद्विपरिवर्तते १० अवजानंतिमांमूढामानुषींतनुमाश्रितम् परंभावमजानंतोममभूतमहेश्वरम् ११ मोघाशामोघकर्माणोमोघज्ञानाविचेतसः राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिताः १२ महात्मानस्तुमांपार्थदैवींप्रकृतिमाश्रिताः भजंत्यनन्यमनसोज्ञात्वाभूतादिमव्ययम् १३ सततंकीर्तयंतोमांयतंतश्चदृढव्रताः नमस्यंतश्चमांभक्त्यानित्ययुक्ताउपासते १४ ज्ञानयज्ञेनचाप्यन्येयजंतोमामुपासते एकत्वेनपृथक्त्वेनबहुधाविश्वतोमुखम् १५

पूर्वेभ्योऽत्यंतंविलक्षणाः मांभजंति यतोदैवींप्रकृतिंसत्वप्रधानांआश्रिताः अनन्यमनसः एकाग्रचेतसः किंगतानुगतिकतयादंभेनवाभजंतिनकिंतर्हिमांभूतादिंसर्वभूतकारणंअव्ययंमत्वाज्ञात्वाभजंति १३ भजनस्वरूपमाह सततमिति यतंतः इंद्रियोपसंहारशमदमादिषुप्रयतमानाः दृढान्यहिंसादीनिव्रतानियेषांतेदृढव्रताः नमस्यंतश्चमांहृदयेशयंप्रतिमादिरूपंवाभक्त्यानित्ययुक्तानित्यमवहिताःसंतउपासते १४ ज्ञानयज्ञेननिर्विकल्पसमाधिनापातंजलाः एकत्वेनअहमेवभगवान्वासुदेवइत्यभेदेनौपनिषदाः पृथक्त्वेनअयमीश्वरोममस्वामीतिबुद्ध्याप्राकृताः अन्येपुनर्बहुधाबहुप्रकारंविश्वतोमुखंसर्वैर्हरिः यत्किंचिद्दृष्टंतद्भगवत्स्वरूपमेवयच्छ्रुतंतत्तन्नामैवयद्दत्तंभक्षितंवातत्तदर्पितमेवेत्येवंरूपंविश्वतोमुखंयथास्यात्तथामांउपासते १५ ५ ५

५ श्रीराम ५ ५ ५ ५ ५ ५ ५ ५ ५

इदमेवोपासनंविवृणोति अहमिति क्रतुः संकल्पोदेवताध्यानरूपः यज्ञः श्रौतः स्मार्तश्चदेवतोद्देशेनद्रव्यत्यागः स्वधापितृणामन्नंऔषधंम नुष्याणामन्नम् मंत्रोयेनदीयतेसः आज्यंहविः अग्निर्हुतंप्रक्षेपक्रिया इदंसर्वंयस्मादहमेवातस्तेषांविश्वतोमुखंउपासनंयुक्ततरमित्यर्थः १६ धाताकर्मफलानांकर्ता वेद्यंवेदितव्यंब्रह्मपवित्रंपावनंतपआदिकम् १७ गतिर्मुक्तप्राप्यंस्थानम् भर्त्ताकर्मफलदानेनपोषकः प्रभुः अंतर्यामीसाक्षीकृताकृतावेक्षकः निवसंत्यस्मिन्निति निवासआश्रयोयजमानादिः शरणंरक्षकः सुहृत्उपकारमनपेक्ष्यउपकर्ता प्रभ वउत्पत्तिस्थानंप्रलयोलयस्थानं स्थानंस्थितिस्थानम् निधानंकर्मफलसमर्पणस्थानंकालांतरेफलप्रसवार्थम् बीजंप्ररोहकारणम् प्र रोहधर्मिणाम्अव्ययंयावत्संसारभावित्वात् १८ अहंतपामिआदित्योभूत्वाअहंवर्षंवृष्टिः तांनिगृण्हामिअष्टसुमासेषुकेश्चिद्रश्मिभिः

अहंक्रतुरहंयज्ञः स्वधाहमहमौषधम् मंत्रोहमहमेवाज्यमहमग्निरहंहुतम् १६ पिताहमस्यजगतोमाताधातापि तामहः वेद्यंपवित्रमोंकारऋक्सामयजुरेवच १७ गतिर्भर्त्ताप्रभुःसाक्षीनिवासःशरणंसुहृत् प्रभवःप्रलयःस्थानं निधानंबीजमव्ययम् १८ तपाम्यहमहंवर्षंनिगृण्हाम्युत्सृजामिच अमृतंचैवमृत्युश्चसदसच्चाहमर्जुन १९ त्रै- विद्यामांसोमपाःपूतपापायज्ञैरिष्ट्वास्वर्गतिंप्रार्थयंते तेपुण्यमासाद्यसुरेंद्रलोकमश्नंतिदिव्यान्दिविदेवभोगान् २० तेतंभुक्त्वास्वर्गलोकंविशालंक्षीणेपुण्येमर्त्यलोकेविशंति एवंत्रयीधर्ममनुप्रपन्नागतागतंकामकामालभं ते २१

उत्सृजामिचचतुर्षुमासेषुकेश्चिदिति अमृतंजीवनंमृत्युर्मरणंअमृतंदेवान्नंवा सत्साधु असदसाधु एतत्सर्वंअहमेवअतस्तेषाविश्व तोमुखंममभजनंकुर्वतांसर्वरूपेणाहंअनुग्रहंकरोमीतिभावः १९ येपुनरुक्तेषुप्रकारेषुअन्यतमेनापिमांनभजंतेतेकेवलंकर्मठाः कांग तिंप्राप्नुवंतीतिशृणु त्रैविद्याइतितिस्रः ऋग्यजुःसामरूपाः विद्यायेषांतेत्रिविद्याः तएवत्रैविद्याःसोमपाः सोमपायिनोयाज्ञिकाः यज्ञैर्मांइ ष्ट्वास्वर्गतिंफलंप्रार्थयंते दिव्यान्अप्राकृतान् संकल्पमात्रोपनतान्दुःखासंभिन्नान् २० त्रयीवेदत्रयीतस्यामुक्तंधर्मंत्रयीधर्मंकाम्ययज्ञम् कामकामाः विषयकामुकाः गतागतंयातायातंलभंते तथाचश्रुतिः प्लवाह्येतेअदृढायज्ञरूपाअष्टादशोक्तमवरंयेषुकर्म एतच्छ्रेयोयेभिनंदं तिमूढाजरामृत्युंतेपुनरेवापियंतीति अष्टादशषोडशऋत्विजः यजमानः पत्नीचेतिद्वौ २१ ५ ५ ५ ५

एवंकर्मिणामावृत्तिंफलंचउक्त्वाभक्तानामपिमद्भजनेनैवसर्वसिद्धिरित्याह अनन्याइति नास्तिअन्यउपास्योयेषांअहमेवभगवान्वासुदेवइति अभेदेनचिंतयंतइत्यर्थः येजनाःपर्युपासते परितःसाकल्येनकार्त्स्न्येनाद्वैतदृष्ट्येत्यर्थः उपासते तेषांनित्याभियुक्तानांसततमभियोगिनांयो- गः अप्राप्तस्यअन्नादेर्योगभूमिकायावाप्रापणंक्षेमः तस्यैवप्राप्तस्यसंरक्षणंतदुभयंअहमेववहामिनिर्वहामि तैरन्नाद्यर्थंवायोगभूमिषू- र्ध्वोर्ध्वभूमिलाभार्थंवाचिंतानकर्तव्येत्यर्थः अनन्यचेतसांतेषांमदभिन्नत्वात्सर्वंसेत्स्यतीत्यर्थः तथाचोक्तंज्ञानीत्वात्मैवमेमतइति २२ अ- विधिपूर्वकंविधिरभेदबुद्धिस्तद्राहित्यादविधिपूर्वकत्वंतदीयभजनस्य २३ हि यतः सर्वयज्ञानामहमेवसर्वदेवतारूपेणभोक्ताप्रभुःफल दाताच एवंसतितेमांप्रत्यगभिन्नंतत्वेनयाथातथ्येननजानंतिअतश्च्यवंतिज्ञाननिष्ठामलब्ध्वासंसारगर्तेपतंति २४ सर्वभक्ताः यथाभज-

अनन्याश्चिंतयंतोमांयेजनाःपर्युपासते तेषांनित्याभियुक्तानांयोगक्षेमंवहाम्यहम् २२ येप्यन्यदेवताभक्तायजंते श्रद्धयान्विताः तेपिमामेवकौंतेययजंत्यविधिपूर्वकम् २३ अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवच नतुमामभिजानंति तत्वेनातश्च्यवंतिते २४ यांतिदेवव्रतादेवान्पितॄन्यांतिपितृव्रताः भूतानियांतिभूतेज्यायांतिमद्याजिनोपिमाम् २५ पत्रंपुष्पं फलंतोयंयोमेभक्त्याप्रयच्छति तदहंभक्त्युपहृतमश्नामिप्रयतात्मनः २६ यत्करोषियदश्नासियज्जुहोषिददासियत् य त्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणम् २७ शुभाशुभफलैरेवंमोक्ष्यसेकर्मबंधनैः सन्न्यासयोगयुक्तात्माविमुक्तोमामुपे ष्यसि २८

तंप्राप्नुवंति स्वाराध्यसान्निध्यंमित्याहयांतीति भूतार्थमिज्यायेषांतेभूतेज्याः २५ मद्भक्ति रति सुकरादेवतांतरभक्तिस्तु बहुवित्तव्ययायाससाध्येत्याशयेनाह पत्रमिति भक्तिरेवकेवलंममापेक्षितानान्यदितिभावः भक्त्युपहृतंभक्त्यासमर्पितम् २६ अतः सर्वम दर्पणंकुर्वित्याह यत्करोषिगमनादिकंतद्भगवतएवप्रदक्षिणादिकंकरोमीतिमत्प्रीत्यर्थमेवतदर्पणंकुर्विति एवंवचनादिष्वपिनामकीर्त्तनादि दृष्ट्याऊह्यम् २७ एवंकुर्वतःफलमाह शुभाशुभेति शुभाशुभफलैः कर्मरूपैर्बंधनैः एवंकुर्वन्त्वंमोक्ष्यसेभगवदर्पणबुध्यायत्किंचि त्कर्मकुर्वतः कर्मलेपोनास्तीत्यर्थः अयमेवोक्तलक्षणः कर्मफलसन्न्यासरूपोयोगः तत्रयुक्तात्मासमाहितचित्तः सन्विमुक्तःकर्मबंधने- र्विमुक्तः सन्मांसर्वेषांप्रत्यगात्मानंउपेष्यासि २८

यतोभक्तानेवानुगृण्हातिनेतरानित्यतोरागद्वेषवान्भगवानित्यतआह समोऽहमिति यथाग्निःरागादिशून्योपिसमीपस्थानामेवशीतंना शयतिनदूरस्थानांतद्वत्सर्वत्रसमोप्यहंशरणागतानामेवबंधंनाशयामिनान्येषामित्यर्थः अतोनममरागोद्वेषोवेतिभावः मयितेतेषुचाप्यहं- भक्ताअनन्यशरणतयामय्येववर्तंते अहमपितेष्वेववर्तेअभक्तचित्तानांरागाद्याक्रांततत्वेनतत्रममविशेषतोऽभिव्यक्तिर्नास्तीतिभावः २९ भक्तेर्माहात्म्यमाह अपिचेदिति अत्यंतपापिष्ठोऽपिमांयद्यनन्यचेताःसन्भजते तथापिससाधुरेवमंतव्यःहियतःससम्यग्व्यवसि तःसम्यग्वृत्तः ३० सम्यग्व्यवसितत्वादेवक्षिप्रंशीघ्रंधर्मात्माभवतिशांतिंचशश्वत् निगच्छतिप्राप्नोतिहेकौंतेयत्वमेवमदाज्ञयाप्रतिजानी- हिप्रतिज्ञांकुरुमेममभगवतोहरेर्भक्तोननश्यतीति ३१ किंच हेपार्थहिप्रसिद्धंमांव्यपाश्रित्यआश्रित्ययेऽत्यंतपापयोनयः स्त्र्यादयस्तेऽपिप-

समोऽहंसर्वभूतेषुनमेद्वेष्योऽस्तिनप्रियः येभजंतितुमांभक्त्यामयितेतेषुचाप्यहम् २९ अपिचेत्सुदुराचारोभ जतेमामनन्यभाक् साधुरेवसमंतव्यःसम्यग्व्यवसितोहिसः ३० क्षिप्रंभवतिधर्मात्माशश्वच्छांतिंनिगच्छति कौं तेयप्रतिजानीहिनमेभक्तःप्रणश्यति ३१ मांहिपार्थव्यपाश्रित्ययेऽपिस्युःपापयोनयः स्त्रियोवैश्यास्तथाशूद्राः स्तेपियांतिपरांगतिम् ३२ किंपुनर्ब्राह्मणाःपुण्याभक्ताराजर्षयस्तथा अनित्यमसुखंलोकमिमंप्राप्यभजस्व- माम् ३३ मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु मामेवैष्यसियुक्त्वैवमात्मानंमत्परायणः ३४ इतिश्रीमन्महा भारतेभीष्म॰ श्रीमद्भगवद्गीतासूपनि॰ कृष्णार्जुनसंवादेराजविद्याराजगुह्ययोगोनामनवमोऽध्यायः ९ ३३ ६९

रांगतिंयांति ३२ ब्राह्मणादयःपुनःपुण्याः मदाश्रयेणपरांगतिंयांतीत्यत्रकिंचित्रंअतस्त्वंइमंमृत्युलोकंअनित्यंनश्वरंअसुखंसुखलेशहीनंप्रा प्यमांपरमात्मानंभजस्वलोकांतरभजनंनभवतीत्यर्थः तथाचश्रुतिः इहचेदवेदीदथसत्यमस्तिनचेदवेदीर्महतीविनष्टिरिति ३३ भजनप्रकारंदर्श यति मन्मनाइति मय्येवमनोयस्यनपुत्रादौसमन्मनाः ममैवभक्तोनराजादेर्धनाद्यर्थंसमद्भक्तः मद्याजीमदर्थमेवयजतेनस्वर्गाद्यर्थंसमद्याजी तादृशोभव मामेवनमस्कुरुशरणंव्रजनत्वन्यान् एवमनेनप्रकारेणयुक्त्वायोगंकृत्वामामेवात्मानंसर्वांतरंएष्यसिप्राप्स्यसि अभेदेनघटाकाशइव महाकाशं यतोमत्परायणअहमेवसर्वोपाधिशून्यश्चिदात्मापरंसर्वोत्कृष्टंअयनंप्राप्यंयस्यसमत्परायणः तथाचश्रूयतेयथानद्यःस्यंदमानाःस- मुद्रेऽस्तंगच्छंतिनामरूपेविहाय तथाविद्वान्नामरूपाद्विमुक्तः परात्परंपुरुषमुपैतिदिव्यमिति ३४ इतिश्रीनैलकंठी॰भा॰भी॰गीतासुनवमोऽध्यायः ९

ससमेत्वंत्पदवाच्योऽर्थोनिरूपितः तदुपासनाच्चक्रमसुक्तिरित्यष्टमेप्रोक्तंनवमेतत्पदलक्ष्यार्थउक्तस्तत्प्राप्तयेचविश्वतोमुखंसर्वत्रभगवद्भाव-
नात्मकंभगवद्भजनमुक्तंतद्रागद्वेषकलुषितमनसामशक्यमितिमन्वानोभगवांस्तात्सिद्धयेस्वविभूतीः केषुचिद्देवपदार्थेषुभगवद्बुद्धिविधाना
र्थास्तावदुपदिशतिदशमे तत्फलभूतंविश्वतोमुखस्योपासनंतेनचविश्वरूपदर्शनमेकादशे द्वादशेपुनस्तत्पदलक्ष्यस्याव्यक्तस्योपासनम्
तदुपासकलक्षणानिचोक्त्वाऽउपासनाकांडंतत्पदार्थशोधनार्थंसमापयिष्यति तत्रवात्सल्यात्स्वयमेवश्रीभगवानुवाच भूयएवेति हेमहा-
बाहोभूयः प्रागुक्तमपिपुनर्मेपरमंनिरतिशयवस्तुनः प्रकाशकंवचः शृणुप्रीयमाणायअमृतपानादिवमद्वचनात्प्रीतिमनुभवते वक्ष्यामि
हितकाम्ययाअनवहितेच्छया १ दुर्ज्ञेयत्वाच्चमत्स्वरूपस्याहंत्वांब्रवीमीत्याह नमेइति प्रभवंप्रकृष्टभवंऐश्वर्यम् वियदादिसृष्टिसामर्थ्यंन-
विदुः तत्रहेतुः अहमिति अयंभावः देहोत्पत्त्यनंतरंहिदेवादीनांबुध्यादिलाभः नचार्वाचीनैर्बुध्यादिभिः स्वोत्पत्तिप्राक्कालीनोर्थः परिच्छे

श्रीभगवानुवाच भूयएवमहाबाहोशृणुमेपरमंवचः यत्तेहंप्रीयमाणायवक्ष्यामिहितकाम्यया १ नमेविदुःसु
रगणाःप्रभवंनमहर्षयः अहमादिर्हिदेवानांमहर्षीणांचसर्वशः २ योमामजमनादिंचवेत्तिलोकमहेश्वरम् असं
मूढःसमर्त्येषुसर्वपापैःप्रमुच्यते ३ बुद्धिर्ज्ञानमसंमोहःक्षमासत्यंदमःशमः सुखंदुःखंभवोऽभावोभयंचाभ-
यमेवच ४

त्तुंशक्यतइति पदार्थःस्पष्टः २ कस्तर्हित्वांवेत्तीत्यतआह यइतियः असंमूढः समांवेत्तिसएवचसर्वपापैः प्रमु-
च्यतइतिसंबंधः जडाजडयोर्बुध्यात्मनोरेकीभावेनअन्योन्याध्यासलक्षणेनमूढः तद्विपरीतोसंमूढः तत्वज्ञानेनबाधिताध्यासः सएवा-
त्मवित्वात् इतरस्यजनिमनुभवन्मांप्रत्यगात्मानंलोकमहेश्वरंअनादिं कारणंतच्छून्यंअतएवाजंअजातंवेत्ति सः सर्वैः कृतैः क्रियमा
णैर्वापापैःप्रमुच्यतेमर्त्येषुमध्ये ३ मममहेश्वरत्वादेवमत्तोबुद्ध्यादयोभवंतीत्याह बुद्धिरिति बुद्धिः अंतःकरणस्यसूक्ष्मार्थावबोधनेसाम
र्थ्यम् ज्ञानंआत्मानात्मादिपदार्थावबोधः असंमोहः प्रत्युत्पन्नेषुबोद्धव्येषुअव्याकुलतयाविवेकपूर्विकाप्रतिपत्तिः क्षमाआकृष्टस्यताडि-
तस्यवाअविकृतचित्तता सत्यंप्रमाणेनावगतस्यार्थस्ययथार्थत्वेनभाषणम् दमोबाह्येंद्रियनियमः शमोमनोनिग्रहः सुखंआल्हादः दुःखं
तापः भवउत्पत्तिः भावःसत्ता अभावः तद्विपर्ययः भयंत्रासः अभयमेवचतद्विपरीतम् ४ ५ ५ ५ ५

अहिंसाप्राणिनामपीडा समतामित्रामित्रादौसमचित्तता तुष्टिःसंतोषः लब्धेऽर्थेपर्याप्तबुद्धिः तपइंद्रियसंयमपूर्वकंशरीरपीडनम् दानंयथा-शक्तिसंविभागः यशोधर्मनिमित्ताकीर्तिः अयशोऽधर्मनिमित्ताऽकीर्तिः एतेबुध्यादयोविंशतिभावाः मत्तएवप्राणिनांभवंतिपृथग्विधाःप्रत्येकंनानाप्रकाराः ततउत्तमगुणलाभायाहमेवत्वयाशरणीकरणीयइतिभावः ५ एतदेवशिष्टाचारप्रदर्शनेनद्रढयतिमहर्षयइतिसप्त-भृग्वाद्याः चत्वारःसनकादयश्चपूर्वेप्रसिद्धाः महर्षयइतिसंबंधः तथामनवश्चचतुर्दशप्रसिद्धाः तेसर्वेमानसाः हिरण्यगर्भरूपस्यममम-नसएवोद्भूताः अयोनिजाः जाताउत्पन्नाइमाः चतुर्विधाः अयंलोकश्चतदाधारभूतः तदुभयंयेषांयत्संबंधिसंततिर्येषांसंततिरित्यर्थः यद्वायेषामितिषष्ठीपंचम्यर्थे येभ्यइमाः प्रजाअयंलोकश्चजातइत्यर्थः तेपिमद्भावाः मय्येवभावोमनोयेषांते प्रसिद्धमहिमानोऽप्येतेयतोमामेवो-पासतेऽतस्त्वमपिमामुपास्वेतिभावः ६ उपास्तावधिकारिणमाह एतामिति एतांवक्ष्यमाणांविभूतिंयोगंचविश्वतोमुखेभगवतिमनःसमाधा-नंयस्तत्त्वतोवेत्तिसम्यगनुष्ठातुंज्ञातुंचसमर्थोभवतिसःअविकंपेनअचलेनानिर्विकल्पकेनषष्ठाध्यायोक्तेनयोगेनमद्विषयेणसमाधिनायुज्य

अहिंसासमतातुष्टिस्तपोदानंयशोऽयशः भवंतिभावाभूतानांमत्तएवपृथग्विधाः ५ महर्षयः सप्तपूर्वेचत्वारोमनवस्तथा मद्भावामानसाजातायेषांलोकइमाःप्रजाः ६ एतांविभूतिंयोगंचममयोवेत्तितत्त्वतः सोऽविकंपेनयोगेनयुज्यतेनात्रसंशयः ७ अहंसर्वस्यप्रभवोमत्तःसर्वंप्रवर्तते इतिमत्वाभजंतेमांबुधाभावसमन्विताः ८ मच्चित्तामद्गतप्राणाबोधयंतःपरस्परम् कथयंतश्चमांनित्यंतुष्यंतिचरमंतिच ९

तेनतमथ्यकृतकृत्योभवति नात्रसंशयइति-प्रवृत्त्यतिशयार्थमुच्यते भगवद्वचसिसंशयासंभवात् ७ उपासनास्वरूपमाहद्वाभ्याम् अहमितिबुधाः मांप्रत्यगात्मानंइतिमत्वाभजंतेइतिकथंअहमेवसर्वस्यजगतःप्रभवउत्पत्तिः मत्तः मदनुग्रहंप्राप्यैवसर्वंबुध्यादिकंस्वस्वकार्यायप्रवर्तते अहमेवजगत्कर्तांतर्यामीचेतिअहंग्रहेणात्मानंउपासीतेतिभावः भावसमन्विताः भावनायुक्ताः एतच्चोत्तरार्थः ८ एवंध्यानेभावनाप्रकारमुक्त्वाव्युत्थानेतमाह मच्चित्ताइतिअहमेवचित्तेयेषांतेमच्चित्ताः तथाहमेवगतोविद्यमानोयेषुतेमद्गतास्तथाविधाः प्राणाइंद्रियाणियेषांते मद्गतप्राणाः चित्तेनेंद्रियैर्वायत्कृत्यतेतत्सर्वप्रत्यगात्मावासुदेवइतिभावयंतइत्यर्थः इममेवार्थंपरस्परंबोधयंतः श्रुतियुक्तिप्रदर्शनेसमानानांसमुदायेज्ञापयंतः कथयंतश्चशि-ष्यान्प्रति तुष्यंतितेनैवज्ञानेननतुमिष्टान्नादिनारमंतिचनतुस्त्र्यादावित्यर्थः ९ ५ ५ ५ ५

श्रीसाम्बसदाशिव ५ ५ ५ ५ ५ ५ ५

उपासनायाः फलमाह तेषामिति सततयुक्तानांनित्योत्साहवतांप्रीतिः प्रेमातत्पूर्वकंभजतांसेवमानानांतेभ्योददामितंबुद्धियोगंज्ञानरूपंयो-
गंसमाधिज्ञाननिष्ठामित्यर्थः तांददामि येनययानिष्ठयातेमामुपयांतिसमुद्रमिवनद्योऽभेदेनप्रविशंति १० किंच तेषांभक्तानामुपर्यनुकंपा
र्थंनस्वप्रयोजनसिद्ध्यर्थम् राजवत् बुद्धियोगप्रदानेनअज्ञानजंअविवेकादुत्थितंमिथ्याप्रत्ययलक्षणंमोहांधकारंतमोनामकंसर्वानर्थनिदा-
नंमूलाज्ञाननाशेननाशयामि आत्मभावस्थः आत्मनोभावोंतःकरणगृहंतत्स्थेनज्ञानरूपेनभास्वताप्रबलेनअयंभावः तत्वमसीतिवाक्यजा
ब्रह्माकारांतःकरणवृत्तिः स्वोत्पत्तयेश्रवणमननध्यानानिशमादीनिकर्माणिचापेक्षतेयथादीपः स्वोत्पत्तयेतैलवर्त्यादीन् उत्पन्नातुतमो-
नाशेनस्वविषयप्रकाशनार्थम् संप्रत्ययावृत्तिलक्षणंप्रसंख्यानंचकर्मभिरुपकारंवानापेक्षते नहिज्ञानेघटेतदाकारप्रत्ययावृत्तिर्वाकर्मा-
पेक्षावातज्ज्ञानदार्ढ्यायापेक्ष्यतेप्रमाणव्याप्तिमात्रसापेक्षत्वाज्ज्ञानस्य तस्मात् येउत्पन्नज्ञानानामपिप्रसंख्यानापेक्षांकर्मभिरुपकारापेक्षांच

तेषांसततयुक्तानांभजतांप्रीतिपूर्वकम् ददामिबुद्धियोगंतंयेनमामुपयांतिते १० तेषामेवानुकंपार्थमहमज्ञानजं
तमः नाशयाम्यात्मभावस्थोज्ञानदीपेनभास्वता ११ अर्जुनउवाच परंब्रह्मपरंधामपवित्रंपरमंभवान् पुरुषंशा
श्वतंदिव्यमादिदेवमजंविभुम् १२ आहुस्त्वामृषयःसर्वेदेवर्षिर्नारदस्तथा असितोदेवलोव्यासःस्वयंचैवब्रवीषि-
मे १३ सर्वमेतदृतंमन्येयन्मांवदसिकेशव नहितेभगवन्व्यक्तिंविदुर्देवानदानवाः १४ स्वयमेवात्मनात्मानंवेत्थत्वं
पुरुषोत्तम भूतभावनभूतेशदेवदेवजगत्पते १५ वक्तुमर्हस्यशेषेणदिव्याह्यात्मविभूतयः याभिर्विभूतिभिर्लो-
कानिमांस्त्वंव्याप्यतिष्ठसि १६

वदंतितेबलादेवमोक्षस्यकृतकृत्यतामनित्यतांचप्रार्थयंतीइतिदिक् ११ एतांविभूतिंयोगंचेत्यादिना
विभूतिज्ञानस्यफलोदर्कंश्रुत्वातत्प्राप्त्युत्सुकः प्रथमंस्तुत्वाभगवंतमार्जवयन्नर्जुनउवाच परमिति परंब्रह्मतत्वपरमुपास्यं तदेवब्रह्मत्वं
विद्धिनेदंयदिदमुपासतइतिश्रुतेः परंधामज्योतिः तत्वपरंवृत्तिरूपंज्ञानम् तस्यधीर्ह्रीर्भीरित्येतत्सर्वंमनएवेतिश्रुतेर्वृत्तिरूपत्वात् परमं
पवित्रंनतुतीर्थादिवदपरमंभवान्तत्रमानमाह पुरुषमितिसार्द्धेनपुरुषंदेहांतस्थं शाश्वतंनित्यंदिव्यंदिविहार्दाकाशेआविर्भूतम् आदि
भूतम् आदिदेवंसूत्रात्मनोप्याद्यं अतएवअजम् विभुंव्यापकं त्वांऋषयआहुरितिसंबंधः १२ १३ व्यक्तिंप्रभवं १४ हेभूतभावनभू
तानांभावक १५ एवंस्तुत्वामनोबुभुत्सितमाह वक्तुमिति १६ ७ ७ ७ ७ ७

कथमितियोगऐश्वर्यंतद्वन्हेयोगिन् त्वांकथंचर्मचक्षुषाविद्यांनकथमपीतिविश्वरूपदर्शनस्यदौर्लभ्यंमन्वानः कतिपयेष्वेवस्थानेषुभगवं-
तंचिंतयिष्यामिविश्वरूपदर्शनेधिकारसिध्यर्थमित्याशयेनाह केष्विति १७ योगंवैश्वरूप्यम् विभूतिंध्यानालंबनम् अमृतंअमृतस्यमो-
क्षस्यसाधनम् १८ अत्रोत्तरंश्रीभगवानुवाच हंतेति हंतइदानीम् हंतेत्यनुमतौवा हियाःपुराणांतरेष्वपिश्रेष्ठत्वेनप्रसिद्धाः विभूतयस्ताः
कथयामीतियोजना प्राधान्यतइतियोगोपकारित्वेनविभूतयइहप्राधान्येनयोगस्तुसंक्षेपेणैवोच्यतेतस्याग्रेवक्ष्यमाणत्वादितिभावः अ-
न्यथायोगंविभूतिंचकथयेतिपृष्टेविभूतिमात्रकथनेन वाहितचित्तत्वंभगवतःस्यात् नास्त्यंतोविस्तरस्यमेविभूतीनामितिविपरिणामेना-
नुषंजनीयम् १९ संक्षेपेणयोगमाह अहमिति हेगुडाकेशहेजितनिद्रहेघनकेशेतिवाअहंवासुदेवआत्माअततीत्यात्माव्यापकः अतए
वसर्वेषांभूतानामाशयः एकीभावस्थानंजलानामिवकासारोजलाशयस्तद्वदहंसर्वभूताशयःस्थितः अचलः शर्परेखरिवाविसर्गलोपोव-

कथंविद्यामहंयोगिंस्त्वांसदापरिचिंतयन् केषुकेषुचभावेषुचिंत्योसिभगवन्मया १७ विस्तरेणात्मनोयोगंविभूतिं
चजनार्दन भूयःकथयतृप्तिर्हिशृण्वतोनास्तिमेऽमृतम् १८ श्रीभगवानुवाच हंततेकथयिष्यामिदिव्याह्यात्मविभू
तयः प्राधान्यतःकुरुश्रेष्ठनास्त्यंतोविस्तरस्यमे १९ अहमात्मागुडाकेशसर्वभूताशयस्थितः अहमादिश्चमध्यंचभूता
नामंतएवच २० आदित्यानामहंविष्णुर्ज्योतिषांरविरंशुमान् मरीचिर्मरुतामस्मिनक्षत्राणामहंशशी २१ वेदानांसामवे
दोऽस्मिदेवानामस्मिवासवः इंद्रियाणांमनश्चास्मिभूतानामस्मिचेतना २२ रुद्राणांशंकरश्चास्मिवित्तेशोयक्षरक्षसां
वसूनांपावकश्चास्मिमेरुःशिखरिणामहं २३

क्तव्यइतिवार्तिकेनपक्षेविसर्गलोपः भाष्येतुसर्वेषांभूतानामाशयेंतर्हृदिस्थितइतिव्याख्यानम्
सर्वभूताशयत्वादेवअहंआदिःजन्मकारणंमध्यंस्थितिकारणम् भूतानांअंतःलयस्थानं सर्वमिदंब्रह्मांडंमय्येवास्तीतिभावः २० योगमुक्त्वाविभूती-
राह आदित्यानामित्यादिनायावदध्यायसमाप्ति आदित्यानांद्वादशानांमध्येविष्णुनामाआदित्योहं वामनावतारोवाज्योतिषामग्न्यादीनांमध्येरविः
अंशुमान्अत्यंतंप्रतपनशीलोनिदाघमध्यान्हेतीव्रतापवानहमेवेत्यर्थः मरुतांसप्तसप्तकानांमध्येमरीचिरहम् नक्षत्राणांताराणां अत्रप्रायेणनि-
र्धारणेषष्ठी भूतानामस्मिचेतनेत्यादौसंबंधेऽपिशशीचंद्रमाः २१ सामवेदोगानेनरमणीयत्वात् वासवःदेवराजत्वात् मनइंद्रियांतरप्रवर्तकत्वात्-
चेतनाधीवृत्तिः चिदभिव्यक्तिहेतुत्वात् एतेवेदादीनांमध्येश्रेष्ठाः २२ रुद्राणांएकादशानाम् वसूनांअष्टानांशिखरिणिरत्नविशेषास्तद्वतांमध्येमे
रुरहम् २३

पुरोधसांपुरोहितानांबृहस्पतिंदेवराजपुरोहितत्वात् सेनानीनांसेनापतीनांस्कंदः कार्तिकेयः सरसांजलाशयानाम् २४ एकंअक्षरंओंका
रारव्यम् जपयज्ञोहिंसाशून्यत्वात् स्थावराणांस्थितिमताम् २५. २६. अमृतोद्भवंअमृतमथनावसरेउद्भवोयस्यतम् २७ प्रजनोऽपत्य-
जनपिताकंदर्पः कामः नतुवृथामैथुनरूपः २८ नागानांसर्पावांतरभेदाना यादसांजलचराणां संयमतांनियमनकर्तॄणाम् २९ कल-
यताम् गणनंकुर्वतां ३० पवतांपावयितॄणांवेगवतांवा रामोदाशरथिः रामादीनांपरमेश्वराणामपिविभूतिमध्येगणनंध्यानार्थम् झषा
णांमत्स्यादीनांमकरोजातिभेदः स्रोतसांनदीनाम् ३१ सर्गाणांभौतिकानाम् भूतानामादिरंतइतिप्रागेवोक्तत्वात् विद्यानांचतुःषष्टिसं-

पुरोधसांचमुरव्यंमांविद्धिपार्थबृहस्पतिम् सेनानीनामहंस्कंदः सरसामस्मिसागरः २४ महर्षीणांभृगुरहंगिराम
स्म्येकमक्षरम् यज्ञानांजपयज्ञोस्मिस्थावराणांहिमालयः २५. अश्वत्थः सर्ववृक्षाणांदेवर्षीणांचनारदः गंधर्वाणां-
चित्ररथः सिद्धानांकपिलोमुनिः २६. उच्चैःश्रवसमश्वानांविद्धिमाममृतोद्भवम् ऐरावतंगजेंद्राणांनराणांचनराधिप
म् २७ आयुधानामहंवज्रंधेनूनामस्मिकामधुक् प्रजनश्चास्मिकंदर्पः सर्पाणामस्मिवासुकिः २८ अनंतश्चास्मि
नागानांवरुणोयादसामहम् पितॄणामर्यमाचास्मियमः संयमतामहम् २९ प्रल्हादश्चास्मिदैत्यानांकालः कलय-
तामहम् मृगाणांचमृगेंद्रोऽहंवैनतेयश्चपक्षिणाम् ३० पवनः पवतामस्मिरामः शस्त्रभृतामहम् झषाणांमकरश्चा
स्मिस्रोतसामस्मिजान्हवी ३१ सर्गाणामादिरंतश्चमध्यंचैवाहमर्जुन अध्यात्मविद्याविद्यानांवादः प्रवदतामहम्
३२ अक्षराणामकारोऽस्मिद्वंद्वः सामासिकस्यच अहमेवाक्षयः कालोधाताहंविश्वतोमुरवः ३३

रव्यानांमध्येअध्यात्मवि
द्याबंधच्छेदहेतुत्वात् प्रवदतांप्रवक्तृद्वारेणवदनभेदाएववादजल्पवितंडाइहगृह्यंते तेषांमध्येवादस्तत्वनिर्णयार्थत्वादहम् ३२ अक्षराणां-
मध्येऽकारः अकारोवैसर्वावागितिश्रुतेः सामासिकस्यसमासस्यसमुदायस्यमध्येहंद्वंद्वोऽस्मिउभयपदार्थप्रधानत्वादितिभाष्यं समंए
कत्रासनंसमासोविदुषांवागुरुशिष्याणांवामंत्रार्थकथार्थएकत्रावस्थानम् तत्रविदितमर्थजातंसामासिकम् चातुरर्थिकष्ठकुठस्येकइति
इकादेशः यस्येतिचेत्यलोपः तस्यमध्ये द्वंद्वोरहस्योऽर्थोऽहम् द्वंद्वंरहस्येतिसूत्रेद्वंद्वशब्दस्यरहस्यवाचित्वंशाब्दिकप्रसिद्धम् अक्षयः क्ष-
यहीनः कालः क्षणादिः परोवाईश्वरः कालस्यापिकालोऽस्मि धाताकर्मफलप्रदः विश्वतोमुरवः सर्वप्राणितृप्त्यातृप्यामीत्यर्थः ३३ ६७

सर्वहरः प्रलयकालिकोमृत्युरस्मिभविष्यतांभाविकल्याणानांउद्भवऐश्वर्योत्कर्षोहम् कीर्त्यादिसप्तकमप्यहंयासांसंश्रयमात्रेणमनुष्ये-
षुकृतार्थताबुद्धिर्भवति ३४ बृहत्सामत्वामिद्धिहवामहइत्यस्यामृचिगीयमानंसामपृष्ठस्तोत्रेविनियुक्तंइंद्रदैवत्यंतत्सान्मांमध्येहमस्मि-
छंदसांमध्येगायत्रीद्विजत्वसंपादनात्सोमाहरणाच्चश्रेष्ठाहमस्मि कुसुमाकरोवसंतः ३५ व्यवसायोनिश्चयउद्यमोवा ३६ वृष्णीनांयादवानाम् उ
शनाशुक्रः ३७ दमयतांराजादीनांदमनसाधनंदंडोऽहमस्मिजिगीषतांजेतुमिच्छतांजयसाधनंनीतिरस्मि मौनंवाचोनिग्रहः ३८ सर्वभूतानांबी-
जमित्यनेनसर्वभूतानिमद्विभूतिरितिदर्शितम् तदेवोपपादयतिनतदस्तीति मयाविनाभूतंकिमपिनास्ति उपादयस्यउपादानमंतरेणास्थित्यसंभ-

मृत्युः सर्वहरश्चाहमुद्भवश्चभविष्यताम् कीर्तिः श्रीर्वाक्चनारीणांस्मृतिर्मेधाधृतिःक्षमा ३४ बृहत्सामतथासाम्नांगाय
त्रीछंदसामहम् मासानांमार्गशीर्षोऽहमृतूनांकुसुमाकरः ३५ द्यूतंछलयतामस्मितेजस्तेजस्विनामहम् जयोऽस्मिव्य-
वसायोऽस्मिसत्वंसत्ववतामहम् ३६ वृष्णीनांवासुदेवोऽस्मिपांडवानांधनंजयः मुनीनामप्यहंव्यासः कवीनामुशनाकविः
३७ दंडोदमयतामस्मिनीतिरस्मिजिगीषताम् मौनंचैवास्मिगुह्यानांज्ञानंज्ञानवतामहम् ३८ यच्चापिसर्वभूतानांबीजं
तदहमर्जुन नतदस्तिविनायत्स्यान्मयाभूतंचराचरम् ३९ नांतोऽस्तिममदिव्यानांविभूतीनांपरंतप एषतूद्देशतःप्रो-
क्तोविभूतेर्विस्तरोमया ४० यद्यद्विभूतिमत्सत्वंश्रीमदूर्जितमेववा तत्तदेवावगच्छत्वंममतेजोंऽशसंभवम् ४१ अथ
वाबहुनैतेनकिंज्ञातेनतवार्जुन विष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगत् ४२ इतिश्रीमन्महाभारतेभीष्मप
र्वं० श्रीमद्भगवद्गीतासूपनिषत्सुब्रह्म० श्रीकृष्णार्जुनसंवादेविभूतियोगोनामदशमोऽध्यायः १० ३४ ६

वात् ३९ नांतोस्तीतिउद्देशतः एकदेशेनविभूतेर्विस्तरोविस्तारोमयाप्रोक्तः ४० सर्वभूतानांबीजमहंइत्युक्त्यास्वस्यसार्वात्म्योक्तेः सर्वस्ववि
भूतिरित्युक्तमेवतथापिनग्रहणाशक्तंप्रतिप्राह यद्यदिति यद्यत्सत्वंप्राणिविभूतिमत् ऐश्वर्ययुक्तं श्रीर्लक्ष्मीः शोभावातद्युक्तं ऊर्जितंबला
द्यतिशययुक्तम् तत्तत्सर्वंममतेजसः चिच्छक्तेरंशसंभवंअंशात्संभूतंत्वमवगच्छजानीहि लोकेयदतिरमणीयंतद्भगवतोरूपमितिध्याये-
दित्यर्थः ४१ उत्तमाधिकारिणमुद्दिश्याह अथवेति मूढान्प्रत्येतदुक्तंत्वंतुएतावदेवविद्धि एकांशेन एकदेशेनाहमिदंविष्टभ्यव्याप्यस्थितोऽस्मि
पादोस्यविश्वाभूतानीतिश्रुतेः तस्मात्परिच्छिन्नंदर्शनंत्यक्त्वासर्वत्रब्रह्मबुद्धिमेवकुर्वित्याशयः ४२ इतिनैलकंठीयेभा० भी० गीतासुदशमोऽध्यायः १०

पूर्वस्मिन्नध्याये योगो विभूतिश्च व्याख्येयत्वेन प्रतिज्ञातो एतां विभूतिं योगं च मम यो वेत्तीति आत्मनो योगं विभूतिं च जनार्दन भूयः कथयेतीत रेण च श्रोतव्यत्वेन प्रार्थितो तत्र अहमात्मा गुडाकेश सर्वभूताशयस्थित इति संक्षेपेण योगो भगवतः सर्वभूताधारत्वलक्षण उक्तः प्राग्विभूतिकथनात् तदंते च विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् इति कुसूलेन धान्यमिव मयेदं जगद्विष्टब्धमित्युक्त्या स एव स्मारितः तदेव भगवतः सर्वभूताधारत्वं साक्षात्कर्तुकामोऽर्जुन उवाच मदनुग्रहायेति मयि अनुग्रहोऽनुकंपा तदर्थं मदनुग्रहाय परमं संघः शोकमोहनिवर्तकत्वेन उत्कृष्टं गुह्यं गोप्यं अध्यात्मसंज्ञितं आत्मानात्मविवेकार्थं शास्त्रं अध्यात्मं तत्संज्ञितं यत्त्वया च अशोच्यानन्वशोच इत्यादिना षष्ठाध्यायपर्यंतं त्वंपदार्थशुद्धिप्रधानं नायं हंति न हन्यते इत्यात्मनोऽकर्तृत्वाभोक्तृत्वप्रतिपादकं तेन मम मोहः अविवेको यं विशेषेण गतो नष्टः अत्र प्रथमे पादेऽक्षराधिक्यमार्षम् १ भवेति तथा सप्तमाध्यायमारभ्य दशमपर्यंतं त्वया भूतानां भवाप्ययावपि उक्तो अहं सर्वस्य जगतो मत्तः सर्वं प्रवर्तत इति तावपि मया विस्तरशः त्वत्तः श्रुतौ हे कमलपत्राक्ष अव्ययं माहात्म्यमपि न च मां तानि कर्माणि लिंपतीति विषमसृष्टिकर्तुरपि

अर्जुन उवाच मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम्। यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम १ भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया। त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् २ एवमेतद्यथात्थ त्वमात्मानं परमेश्वर। द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ३ मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो। योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ४

वैषम्यनैर्घृण्यदोषो नास्ति जगत्कर्तुरपि विकारगंधो नास्तीत्येवमादिरूपं तत्पदार्थशुद्धिप्रधानं श्रुतमित्यनुषंगः २ एवमिति यच्च त्वं विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्यात्मानं जगदाधारमात्थ तद पि इत्थमेव न मम अत्र संभावनास्ति हे परमेश्वर तेन तव रूपं ऐश्वरं ईश्वरस्येदं विश्वात्मकं मायामयमित्यर्थः हे पुरुषोत्तम क्षराक्षरातीत विश्वरूपं मायामयं वास्तवं तु रूपं मायातीतमित्यैश्वरमिति पुरुषोत्तमेति च पदाभ्यां लभ्यते तथा च वक्ष्यति मायाह्येषा मया सृष्टा यन्मां पश्यसि नारद सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसीति उक्तं च स्वरूपमभिप्रेत्य अव्यक्तोयमचिंत्योयमिति ३ मन्यस इति हे योगेश्वर योगानां योगिनामीश्वर तद्रूपं यदि मया द्रष्टुं शक्यमिति मन्यसे यदि मयि तद्दर्शनाधिकारं पश्यसि तर्हि दर्शयतस्तर्हि मे मह्यं अव्ययं मायामयं आत्मानं दर्शय मायामयत्वादेवास्याव्ययत्वं मायायां हि सर्वं सर्वात्मकं सर्वदास्तीति प्रसिद्धं यथोक्तं वसिष्ठेन वर्तमानमतीतं च भविष्यत्स्थूलमण्वपि तथा दूरमदूरं च निमेषः कल्प इत्यपि चिदात्मनि स्थितान्येव पश्य मायाविजृंभितं न हि मरुमरीचिसरसी क्रमशः शुष्यति अतो मायामयत्वादेवास्य ऐश्वरस्य रूपस्याव्ययत्वम् ४ ५ ५ ५ ५ ५

एवंप्रार्थितः सन्भगवान्उवाचपश्येति शतशइत्यादिनाअनंतानीत्युक्तं नानावर्णानिनानाकृतीनिच ५ दिव्यानितावदाह पश्यादित्यानिति अदृ
ष्टपूर्वाणिआश्चर्याणिअद्भुतानिचतुर्मुखपंचमुखषण्मुखादीनि ६ हेगुडाकेशजितनिद्रइहममदेहेएकस्थंएकस्मिन्नेवावयवेनखाग्रमात्रेस्थितं
कृत्स्नंवर्तमानंजगत्पश्य यत्चान्यत्अतीतमनागतंविप्रकृष्टंव्यवहितंस्थूलंसूक्ष्मंवातत्सर्वमिहपश्य ७ यत्तूक्तंमन्यसेयदितच्छक्यंमयाद्रष्टु-
मितितत्राह नत्विति शक्यसेशक्नोषिपदविकरणव्यत्ययआर्षः अनेनप्राकृतेनदिव्यमप्राकृतम् ऐश्वरंईश्वरसंबंधिनंयोगंविश्वाश्रयत्वलक्षणं
सामर्थ्यम् ८ एवमुक्त्वाभगवानर्जुनायदिव्यंरूपंदर्शितवान् सचदृष्ट्वाविस्मयाविष्टोभगवंतंविज्ञापितवानितीमंवृत्तांतंएवमुक्त्वेत्यादिषड्भिःश्लोकै-
र्धृतराष्ट्रंप्रतिसंजयउवाच एवमुक्त्वेति ततःदिव्यचक्षुः प्रदानानंतरंराजन्हेधृतराष्ट्रमहांश्चासोयोगेश्वरश्चेतिविग्रहः महतोयोगस्यवाईश्वरः

श्रीभगवानुवाच पश्यमेपार्थरूपाणिशतशोऽथसहस्रशः नानाविधानिदिव्यानिनानावर्णाकृतीनिच ५ पश्यादित्यान्व
सून्रुद्रानश्विनौमरुतस्तथा बहून्यदृष्टपूर्वाणिपश्याश्चर्याणिभारत ६ इहैकस्थंजगत्कृत्स्नंपश्याद्यसचराचरम् ममदेहेगुडा
केशयच्चान्यद्द्रष्टुमिच्छसि ७ नतुमांशक्यसेद्रष्टुमनेनैवस्वचक्षुषा दिव्यंददामितेचक्षुः पश्यमेयोगमैश्वरम् ८ संजय-
उवाच एवमुक्त्वाततोराजन्महायोगेश्वरोहरिः दर्शयामासपार्थायपरमंरूपमैश्वरम् ९ अनेकवक्त्रनयनमनेकाद्भुतद
र्शनम् अनेकदिव्याभरणंदिव्यानेकोद्यतायुधम् १० दिव्यमाल्यांबरधरंदिव्यगंधानुलेपनम् सर्वाश्चर्यमयंदेवमनंतंवि
श्वतोमुखम् ११ दिविसूर्यसहस्रस्यभवेद्युगपदुत्थिता यदिभाःसदृशीसास्याद्भासस्तस्यमहात्मनः १२

परमंदिव्यंरूपंऐश्व
रंमायाविसंबंधिनतुमायानीतंदर्शयामास ९ तदेवरूपंविशिनष्टिद्वाभ्यांअनेकेत्यादिना अनेकानिअनंतानिवक्त्राणिनयनानिचयस्मिन्तद-
नेकवक्त्रनयनम् अनेकान्यद्भुतानिदर्शनानियस्मिंस्तदनेकाद्भुतदर्शनंदिव्यानिअनेकानिचउद्यतानिआयुधानिचक्रादीनियस्मिन् १० विश्व
तोमुखमिति पूर्वोक्तस्यएकत्वेनपृथक्त्वेनबहुधाविश्वतोमुखमित्यस्यायंपरामर्शः अनंतंसर्वतः परिच्छेदरहितम् ११ दिविअंतरिक्षेभाः
दीप्तिः भासादीप्तेः अभूतोपमेयंनिरूपमतामेवतस्यदीप्तेर्दर्शयति उभौयादिव्योम्निपृथक्प्रवाहावित्यादिवत् १२

श्रीकृष्ण

इहैकस्थंजगत्कृत्स्नंपश्येति यस्माकृभगवताउक्तंतदप्यपश्यदित्याह तत्रेति अनेकधाप्रविभक्तमित्यनेनवर्षासूत्थेनातंत्रिणीबीजेनसूक्ष्म-रूपेणतरुर्दृश्यतेतद्वन्माभूदितिदर्शयितुंसावकाशंअनेकधाविभागयुक्तंविविक्तंअपश्यत् एकस्थंएकावयवस्थम् अयमर्थः यदाभगवतश्चतुर्मुखंरूपंचिंत्यतेतत्रचचेतसिलब्धपदेसतिक्रमशस्तदीयावयवान्त्यक्त्वासुखेस्मितेवापदनखेवाचित्तंध्रियते तत्रापिलब्धपदेतस्मिन्तदपित्यक्त्वाविश्वरूपमारोहतिदिव्यंचक्षुरपिएवंसूक्ष्मतामादितमनएवमनोस्यदैवंचक्षुः सतेनदैवेनचक्षुषामनसैतान्कामान्पश्यन्रमतइतिश्रुतेः कामान्विषयान्एतान् दाहाकाशाख्यसगुणब्रह्मगतानितिश्रुतिपदयोरर्थः यथोक्तंश्रीभागवतेतत्रलब्धपदंचित्तमाकृष्यैकत्रधारयेत्नान्यानि-चिंतयेद्भूयःसुस्मितंभावयेन्मुखम् तत्रलब्धपदंचित्तमाकृष्यव्योम्निधारयेत् तच्चत्यक्त्वामदारोहोनकिंचिदपिचिंतयेदिति तत्रमूर्तौ एकत्रअंगे

तत्रैकस्थंजगत्कृत्स्नंप्रविभक्तमनेकधा अपश्यद्देवदेवस्यशरीरेपांडवस्तदा १३ ततःसविस्मयाविष्टोहृष्टरोमाध-नंजयः प्रणम्यशिरसादेवंकृतांजलिरभाषत १४ अर्जुनउवाच पश्यामिदेवांस्तवदेवदेहेसर्वांस्तथाभूतविशेष संघान् ब्रह्माणमीशंकमलासनस्थमृषींश्चसर्वानुरगांश्चदिव्यान् १५ अनेकबाहूदरवक्त्रनेत्रंपश्यामित्वांसर्वतो ऽनंतरूपम् नांतनमध्यंनपुनस्तवादिंपश्यामिविश्वेश्वरविश्वरूपम् १६ किरीटिनंगदिनंचक्रिणंचतेजोराशिंस र्वतोदीप्तिमंतम् पश्यामित्वांदुर्निरीक्ष्यंसमंताद्दीप्तानलार्कद्युतिमप्रमेयम् १७ ७ ७ ७

व्योम्निकारणे मदारोहोनिर्विकल्पेब्रह्मण्यारूढः तदिदमुक्तंदेवदेवस्यशरीरेकृत्स्नंजगदेकस्थंपांडवोऽपश्यदिति १३ हृष्टरोमारोमांचि-तगात्रः १४ देवान्आदित्यादीन् भूतविशेषाः चतुर्विधाजरायुजादयः तेषांसंघान्समूहान् ब्रह्माणंचतुर्मुखंईशंइशितारंकमलासन-स्थंमित्यनेनदूरदर्शनमुक्तम् उरगान्पातालस्थान्अनंतादीन् दिव्यान्कैलासादौस्थितान्वासुकिप्रमुखान् एतेनव्यवहितदर्शनमुक्तम् १५ अनेकेअनंताः बाहवःउदराणिवक्त्राणिचनेत्राणिचयस्मिन्तदनेकबाहूदरवक्त्रनेत्रंसर्वतःचतुर्दिक्षुउपर्यधश्चअनंतमपरिच्छिन्नंरू-पमस्यतम् अनंतत्वमेवाहनांतमिति दीर्घरज्वाइवनवाद्यंनोदेशिकोनरत्तइत्यर्थः १६ किरीटगदाचक्रधारिणंदीप्तिमत्त्वादेवदुर्निरीक्ष्यंद्रष्टुम शक्यम् समंतात्सर्वतोयेदीप्ताःअनलाःअर्काश्चतद्वत्द्युतिर्यस्यतंसमंताद्दीप्तानलार्कद्युतिमित्येकंपदम् अतएवाप्रमेयंद्रष्टुमशक्यप रिच्छेदम् १७ ७ ७ ७ ७ ७ ७ ७ ७ ७

एवंतवयोगे तदेवत्वमासि

र्यदर्शनात्त्वामेवमवैमीतिवदन्नप्रमेयत्वमेवविवृणोति त्वमिति परमंअक्षरंअस्थूलादिलक्षणंअक्षरंपरमंब्रह्मेत्यत्रप्रागुक्तंनिष्कलंब्रह्म एतेनसगुणरूपस्यनिर्गुणज्ञापकत्वमुक्तंशाखाग्रस्येवचंद्रज्ञापकत्वम् अतएववेदितव्यं वेदांतप्रमाणेनज्ञातुंयोग्यंनतूपासनीयं सगुणं ब्रह्मापित्वमेवेत्याह त्वमस्येति निधानंलयस्थानंएतेनकारणत्वमुक्तम् अव्ययःअमृतः देवत्वात् शाश्वतस्यवैदिकस्यधर्मस्यगोप्तेत्यनेनकार्यंब्रह्मत्व तः हिरण्यगर्भरूपत्वमुक्तम् सनातनाश्चिरंतनोऽनादिः पुरुषोजीवात्मासोपित्वमेवमेमतः १८ देशतःकालतश्चादिमध्यांतहीनत्वात्अनादिमध्यां तंदीप्तोहुताशोवक्त्रेयस्येतिभास्वरदंतत्वंव्यज्यते स्वतेजसाचैतन्यज्योतिषा इदंविश्वंविश्वरूपंतपंतंप्रकाशयंतंअनादित्वादिसर्वविशेषणविशिष्टंविश्वं तपिकर्मीभूतंतापयंतंत्वांपरंज्योतीरूपंपश्यामिजानामिचित्रपटस्थानीयंविश्वरूपंसकलकारकात्मकधीवासनोपेतंयेनज्योतिषाप्रकाशतेतदेवत्वम

त्वमक्षरंपरमंवेदितव्यंत्वमस्यविश्वस्यपरंनिधानम् त्वमव्ययःशाश्वतधर्मगोप्तासनातनस्त्वंपुरुषोमतोमे १८ अ
नादिमध्यांतमनंतवीर्यमनंतबाहुंशशिसूर्यनेत्रम् पश्यामित्वांदीप्तहुताशवक्त्रंस्वतेजसाविश्वमिदंतपंतम् १९ द्यावा
पृथिव्योरिदमंतरंहिव्याप्तंत्वयैकेनदिशश्चसर्वाः दृष्ट्वाद्भुतंरूपमुग्रंतवेदंलोकत्रयंप्रव्यथितंमहात्मन् २० अमीहित्वा
सुरसंघाविशंतिकेचिद्भीताःप्रांजलयोगृणंति स्वस्तीत्युक्त्वामहर्षिसिद्धसंघाः स्तुवंतित्वांस्तुतिभिःपुष्कलाभिः २१ रु
द्रादित्यावसवोयेचसाध्याविश्वेऽश्विनौमरुतश्चोष्मपाश्च गंधर्वयक्षासुरसिद्धसंघावीक्षंतेत्वांविस्मिताश्चैवसर्वे २२ रूपं
महत्तेबहुवक्त्रनेत्रंमहाबाहोबहुबाहूरुपादम् बहूदरंबहुदंष्ट्राकरालंदृष्ट्वालोकाःप्रव्यथितास्तथाहम् २३

सीतिजानामीतिभावः १९ एवं
स्वयंविश्वरूपदर्शनेनकृतकृत्योभूत्वातदुपसंहारमिच्छन्स्तौतिद्यावापृथिव्योरिति हेमहात्मन्हिप्रत्यक्षंत्वयाएकेनइदंद्यावापृथिव्योरंतरंमध्यं सर्वाः दिशश्चव्याप्ताः अतस्तवेदंअद्भुतंउग्ररूपंदृष्ट्वालोकत्रयंप्रकर्षेणव्यथितम् अतःपरंइदमुपसंहरेत्यभिप्रायः २० व्यथामेवाह अमीहीति हियतः अमीत्वात्वांअसुरसंघाःअसुरांशाःदुर्योधनादयस्त्वांपतंगाः पावकमिवअदृष्टप्रेरिताःविशंतिमरणायेत्यर्थः केचिद्भीताःप्रांजलयोबद्धां जलयोगृणंतिस्तुवंति २१ किंच येत्वदनुगृहीताः रुद्रादयस्तेपिविस्मिताः सर्वेत्वांवीक्षंतइत्याहरुद्रादित्याइतिसाध्याःविश्वेचदेवगणविशेषोरु द्रादित्यवत्ज्ञेयोऊष्मपाःपितरः गंधर्वाणांयक्षाणांअसुराणांसिद्धानांजातिभेदानांसंघाःसमूहाः तएतेशेषंस्पष्टं २२ पुनर्लोकानामात्मनश्च व्यथामाह रूपमिति महत्आदिमध्यांतहीनंहेमहाबाहोतेतवकरालंमहारूपंदृष्ट्वालोकाव्यथितास्तथाहंचव्यथितइतियोजना २३ ६७

करालत्वप्रपंचनेनस्वव्यथामेवाह नभइति नभःस्पृशंव्योमव्यापिइगुपधलक्षणः कः तेन नभस्स्पृशशब्दोऽकारांतः दीप्तंअग्निवज्ज्वाज्वल्यमानंव्या
त्ताननंविस्फारितमुखंदीप्तविशालनेत्रंरक्तनेत्रमित्यर्थः हिप्रत्यक्षंत्वात्वाम् दृष्ट्वाप्रव्यथितांतरात्माप्रकर्षेणव्यथितचित्तः धृतिंधैर्यंनविंदामिन
लभे शमंचशांतिंस्वास्थ्यंचनलभेहेविष्णोव्यापकभयानकंत्वदाक्रांतंदेशंत्यक्त्वाऽन्यत्रगंतुमशक्यंतवव्यापकत्वादितिभावः २४ कालानलः प्र
लयाग्निः तत्तुल्यानिप्रसीदप्रसन्नःकृपावान्भवेत्यर्थः २५ अमीत्वांविशंतीत्यग्रिमश्लोकादपकृष्यते २६ तेभीष्मादयः उत्तमांगैः शिरोभिः
अयंभावः धृतराष्ट्रस्यपुत्राः पापिष्ठाः भगवंतमेवत्रैलोक्यशरीरंविशंति पापानुरूपंतस्यपायुस्थानस्थितान्नरकानेवगच्छंतीति तत्रत्वांविशंतीत्येवो

नभस्स्पृशंदीप्तमनेकवर्णंव्यात्ताननंदीप्तविशालनेत्रम् दृष्ट्वाहित्वाप्रव्यथितांतरात्माधृतिंनविंदामिशमंचविष्णो
२४ दंष्ट्राकरालानिचतेमुखानिदृष्ट्वैवकालानलसंनिभानि दिशोनजानेनलभेचशर्मप्रसीददेवेशजगन्निवास २५
अमीचत्वांधृतराष्ट्रस्यपुत्राः सर्वेसहैवावनिपालसंघैः भीष्मोद्रोणःसूतपुत्रस्तथासौसहास्मदीयैरपियोधमुख्यैः २६
वक्त्राणितेत्वरमाणाविशंतिदंष्ट्राकरालानिभयानकानि केचिद्विलग्नादशनांतरेषुसंदृश्यंतेचूर्णितैरुत्तमांगैः २७ य
थानदीनांबहवोंबुवेगाःसमुद्रमेवाभिमुखाद्रवंति तथातवामीनरलोकवीराविशंतिवक्त्राण्यभिविज्वलंति २८
यथाप्रदीप्तंज्वलनंपतंगाविशंतिनाशायसमृद्धवेगाः तथैवनाशायविशंतिलोकास्तवापिवक्त्राणिसमृद्धवेगाः २९
लेलिह्यसेग्रसमानःसमंताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः तेजोभिरापूर्यजगत्समग्रंभासस्तवोग्राःप्रतपंतिविष्णो ३०

क्तंभीष्मादयस्तुभक्ताः यतोऽग्निर्ब्राह्मणावेदाश्चप्रसूतास्तद्भगवतोमुखंप्रविशंतीतिवैषम्यगतिसूचनार्थंत्वांधृतराष्ट्रस्यपुत्राविशंतिभीष्मादयस्तेवक्त्रा
णिविशंतीतिविभागदर्शनंयुक्तमिति २७ इदमेवसदृष्टांतमाह यथेति तववक्त्राणिविशंतीतिसंबंधः अभिविज्ज्वलंतिसर्वतःजाज्वल्यमानानि २८
बुद्धिपूर्वकमेवतेत्वद्वक्त्राणिप्रविशंतीतिसदृष्टांतमाह यथाप्रदीप्तमिति २९ येचपतंतस्तांस्त्वंकरुणावानपिनवारयसितुमिच्छस्येवेत्याह लेलिह्य
सेभूयोभूयोतिशयेनवास्वादयति कीदृशस्त्वंसमंतात्ज्वलद्भिर्वदनैर्लोकान्समग्रान्ग्रसमानः एवंनिर्घृणस्यापितवतेजोनहीयतेप्रत्युतवर्धतएवेत्या
ह तेजोभिरिति हेविष्णोव्यापनशीलसमग्रंजगत् तेजोभिरापूर्यतवउग्राःस्प्रष्टुमशक्याःभासःदीप्तयःप्रतपंतीतियोजनापदार्थःस्पष्टः ३० ५

एवंदीप्त्याआकुलीभूतोऽर्जुनः भगवानयमितिविस्मृत्याह आख्याहीति एवमुग्ररूपः क्रूरकर्माभवान्कोसीत्याख्याहिअसुकोस्मीतिकथयप्र-
सीदप्रसन्नोभव त्वामहंविज्ञातुमिच्छामियतस्तवप्रवृत्तिंचेष्टान्नजानामि ३१ एवमर्जुनेनप्रार्थितः श्रीभगवानुवाच कालइति इहास्मिन्संग्रामेलोका-
न्समाहर्तुंभक्षितुंप्रवृत्तः प्रवृद्धोमहान्लोकक्षयकृत्कालोनामपरमेश्वरोऽस्मि यस्मादेवंतस्मात् ऋतेपित्वात्वांविनापिसर्वेनभविष्यंतिमरिष्यंति
केतेसर्वेयेप्रत्यनीकेषुशत्रुसैन्येषुयोधाः शूराभीष्मादयोवस्थितास्ते ३२ तस्मादिति यस्मात्त्वांविनाप्येतेमरिष्यंतितस्मात्त्वंउत्तिष्ठयुद्धायशेषंस्पष्टं ३३
माव्यथिष्ठाः एतेमहांतः कथंहंतुंशक्याइत्याकुलीभावंमागाइत्यर्थः जेतासिजेष्यसिसपत्नान्शत्रून् ३४ भगवताएवमुक्तेसतिपश्चात्किंवृत्तमित्यपे-
क्षायांसंजयउवाच अत्रकृतांजलित्वादिनाचिन्हेनभगवद्वाक्योल्लंघनंकिरीटीनकरिष्यतीतिसूच्यते सगद्गदंभयहर्षाद्यावेशेनगद्गदेनकंठाकंपने

आख्याहिमेकोभवानुग्ररूपोनमोऽस्तुतेदेववरप्रसीद विज्ञातुमिच्छामिभवंतमाद्यंनहिप्रजानामितवप्रवृत्तिम्
३१ श्रीभगवानुवाच कालोऽस्मिलोकक्षयकृत्प्रवृद्धोलोकान्समाहर्तुमिहप्रवृत्तः ऋतेऽपित्वानभविष्यंतिसर्वेयेवस्थि-
ताःप्रत्यनीकेषुयोधाः ३२ तस्मात्त्वमुत्तिष्ठयशोलभस्वजित्वाशत्रून्भुंक्ष्वराज्यंसमृद्धम् मयेवैतेनिहताःपूर्वमेवनिमि-
त्तमात्रंभवसव्यसाचिन् ३३ द्रोणंचभीष्मंचजयद्रथंचकर्णंतथान्यानपियोधवीरान् मयाहतांस्त्वंजहिमाव्यथिष्ठायु-
ध्यस्वजेतासिरणेसपत्नान् ३४ संजयउवाच एतच्छ्रुत्वावचनंकेशवस्यकृतांजलिर्वेपमानःकिरीटी नमस्कृत्वाभू-
यएवाहकृष्णंसगद्गदंभीतभीतःप्रणम्य ३५ अर्जुनउवाच स्थानेहृषीकेशतवप्रकीर्त्याजगत्प्रहृष्यत्यनुरज्यतेच
रक्षांसिभीतानिदिशोद्रवंतिसर्वेनमस्यंतिचसिद्धसंघाः ३६

नसहवर्ततइतिसगद्गदंयथाभवतितथाआह उक्तवान् भीतभीतः अ-
त्यंतभीतः सन्नाह इति संबंधः अत्रआहेतिपदच्छेदेपुनरर्जुनउवाचेतिपुनरुक्तंस्यात् अतः प्रणम्यअर्जुनउवाचेत्येवसंबंधः नतुप्रणम्यआहेति-
कातर्हिआहेतिक्रियायाः गतिः नेयंक्रियाकिंतुआहेतिप्रसिद्धार्थमव्ययमित्यदोषः ३५ एकादशभिः श्लोकैरर्जुनउवाच स्थानेइति हेहृषीके-
शसर्वेंद्रियप्रवर्तकअंतर्यामिन् तवप्रकीर्त्याजगत्प्रहृष्यतियत्तत्स्थानेइत्यव्ययंयुक्तमित्यर्थे यत्तवप्रकीर्त्यानामसंकीर्तनेनजगत्अनुर-
ज्यतेतदपिस्थानेयुक्तं यत्तवप्रकीर्त्यारक्षांसिभीतानिसंतिदिशोद्रवंतिपलायंतेतदपिस्थानेयुक्तम् यच्चत्वांसर्वेसिद्धसंघाः कपिलादीनांसमु-
दायाः नमस्यंतितदपिस्थाने अयंश्लोकोरक्षोघ्नमंत्रत्वेनमंत्रशास्त्रेप्रसिद्धः सचनारायणाष्टाक्षरसुदर्शनास्त्रमंत्राभ्यांसंपुटितोज्ञेयइतिरहस्यम्
३६

कुतोमांसिद्धसंधानमस्यंतियतस्तेऽपिआहमिवब्रह्मांडशतानिस्रष्टुमर्हंतीत्यतआह कस्मादिति हेमहात्मन्कस्माद्धेतोस्तेत्वांननमेरन्अपितुनमेरन्नेवतत्रहे-
तुः गरीयसेतेपिगुरवस्त्वमपिगुरुस्तथापित्वंअतिशयितोगुरुरसीत्यर्थः कुतोममैवातिशयः तेषांममचसमानेऽपिसत्यसंकल्पादौसतिअतआह ब्रह्म
णोहिरण्यगर्भस्यापिआदिकर्त्रेपितामहायपंचमहाभूतसृष्टिद्वाराब्रह्माणंसृजतेइत्यर्थः जगद्व्यापारवर्ज्यं प्रकरणादसन्निहितत्वाच्चेतिन्यायेननि-
त्यसिद्धेश्वरस्यतवाज्ञयातेसर्वेपिऐश्वर्यभाजोभवंतिनतुत्वत्समास्ते अतएवत्वंहेअनंतहेदेवानांईशजगन्निवासजगतामालयभूत त्वंअक्षरंशुद्धं
ब्रह्म कीदृशमक्षरंयत्सदसत्तत्परं सच्चअसच्चसदसतीताभ्यांपरंचसदसत्तत्परम् कार्यकारणंतदुभयातीतंचेतित्रिविधमित्यर्थः ३७ पुनरपिस्तौ
ति त्वमिति आदिदेवोजगतः स्रष्टृत्वात्पुरुषःसर्वशरीरशायी पुराणःशरीरनाशादिनाप्यविनश्यन्विश्वस्यास्यत्वंपरंनिधानंनिधीयतेऽस्मिन्नितिलयस्था
नं किंसांख्यानांजडांप्रकृतिंवारयति वेत्ताज्ञाता वेद्यंदृश्यंचत्वमेवपरंचवेतृवेद्याभ्यामन्यत्धाम चैतन्यंत्वयाविश्वंततंव्याप्तंस्वसत्तास्फूर्तिभ्यां हेअनंतरू

कस्माच्चतेननमेरन्महात्मन्गरीयसेब्रह्मणोऽप्यादिकर्त्रे अनंतदेवेशजगन्निवासत्वमक्षरंसदसत्तत्परंयत् ३७ त्वमादिदेवः
पुरुषःपुराणस्त्वमस्यविश्वस्यपरंनिधानम् वेत्तासिवेद्यंचपरंचधामत्वयाततंविश्वमनंतरूप ३८ वायुर्यमोऽग्निर्वरुणःश
शांकःप्रजापतिस्त्वंप्रपितामहश्च नमोनमस्तेस्तुसहस्रकृत्वःपुनश्चभूयोपिनमोनमस्ते ३९ नमःपुरस्तादथपृष्ठतस्तेन-
मोऽस्तुतेसर्वतएवसर्व अनंतवीर्यामितविक्रमस्त्वंसर्वंसमाप्नोषिततोसिसर्वः ४० सखेतिमत्वाप्रसभंयदुक्तंहेकृष्णहेया
दवहेसखेति अजानतामहिमानंतवेदंमयाप्रमादात्प्रणयेनवापि ४१ यच्चावहासार्थमसत्कृतोऽसिविहारशय्यासनभो-
जनेषु एकोऽथवाप्यच्युततत्समक्षंतत्क्षामयेत्वामहमप्रमेयम् ४२

पत्रिविधपरिच्छेदशून्यस्वरूप ३८ सर्वदेवतात्मत्वेनस्तौतिवायु
रिति प्रजापतिर्दक्षादिः चतुर्मुखोवाप्रपितामहः चतुर्मुखपिता ३९ हेअनंतवीर्ययः सर्वंसमाप्नोषिएकीभावेनासमंतात्व्याप्नोषिततोहेतोः सर्वइतित
वनामपुरस्तात्कर्मणामादौपृष्ठतस्तेषांसमाप्तौसतः मध्येऽपितेनमोऽस्तु ४० एवंस्तुत्वास्वापराधान्क्षमापयते सखेतीति अयंममसखाइतिमत्वाप्रस
भंस्वोत्कर्षाविष्करणपूर्वकंयत्मयाउक्तंहेकृष्णहेयादवहेसखेतिशब्देनपुनःसंधिरार्षः कुतःउक्तंतवइदंएवंविधंमहिमानंमाहात्म्यंअजानताकदाचित्प्र
मादात् चित्तविक्षेपात्कदाचित्प्रणयेनस्नेहेनच ४१ तथायच्चअवहासार्थंविहारादिषुअसत्कृतोऽसिपरिभूतोऽसि एकोवासखीनांवियोगकालेवा-
तत्समक्षंसखिजनसमक्षंवाऽसत्कृतोसितत्क्षामयेक्षमापयेयतस्त्वंअप्रमेयोऽचिंत्यस्वभावः करुणापरः यतःशत्रुभ्योऽपिशिशुपालादिभ्यउत्तमांगतिं
दत्तवानसीत्यर्थः ४२ ५ ५ ५ ५ ५ ५ ५ ५ ५ ५ ५

अप्रमेयत्वमेवाह पितासीति यतस्त्वमस्माकंपिताऽसिअतोऽस्माभिः शिशुभिः कृताअपराधास्त्वयाक्षंतव्याएवेतिभावः ४३ एतदेवाह तस्मादिति यस्मात्त्वंपितागुरुश्चतस्मात्कायंशरीरंप्रणिधायभूमौधृत्वादंडवत्प्रणम्यत्वांप्रसादये ईड्यंस्तुत्यंस्पष्टमन्यत् ४४ एवंस्तुत्वास्वेष्टंप्रार्थयते अदृष्टपूर्वमिति हेदेवकदाचिदपिपूर्वंनदृष्टम् तादृशंअदृष्टपूर्वंतवरूपंदृष्ट्वाहृषितउत्फुल्लोऽस्मितथाविकरालरूपदर्शनजेनभयेनचमेममनः प्रव्यथितम् अतस्तदेवधारणाविषयभूतंरूपंमेमह्यंदर्शय ४५ तदेवरूपमाहविश्वमूर्तेसहस्रबाहुत्वादिकंउपसंहृत्यतेनैवरूपेणभव प्रकटोभव ४६ एवमर्जुनेनप्रार्थितस्तंस्तुवन्श्रीभगवानुवाच मयेतित्रिभिः हेअर्जुनप्रसन्नेनमयातवतुभ्यंइदंपरंरूपंदर्शितम् आत्मयोगात्स्वसामर्थ्यात्करुणयानतुतवदर्शनेधिकारोऽस्तितथाचप्रागुक्तंकर्मण्येवाधिकारस्तइति तेजोमयंचिद्रूपंदिव्यंविश्वंविश्वात्मकम् आद्यंअनादिअनंतंचयत्रूपंत्वदन्येनकदाचिद-

पितासिलोकस्यचराचरस्यत्वमस्यपूज्यश्चगुरुर्गरीयान् नत्वत्समोऽस्त्यभ्यधिकःकुतोऽन्योलोकत्रयेऽप्यप्रतिमप्रभावः ४३ तस्मात्प्रणम्यप्रणिधायकायंप्रसादयेत्वामहमीशमीड्यं पितेवपुत्रस्यसखेवसख्युःप्रियःप्रियायार्हसिदेवसोढुं ४४ अदृष्टपूर्वंहृषितोऽस्मिदृष्ट्वाभयेनचप्रव्यथितंमनोमे तदेवमेदर्शयदेवरूपंप्रसीददेवेशजगन्निवास ४५ किरीटिनंगदिनंचक्रहस्तमिच्छामित्वांद्रष्टुमहंतथैव तेनैवरूपेणचतुर्भुजेनसहस्रबाहोभवविश्वमूर्ते ४६ श्रीभगवानुवाच मयाप्रसन्नेनतवार्जुनेदंरूपंपरंदर्शितमात्मयोगात् तेजोमयंविश्वमनंतमाद्यंयन्मेत्वदन्येननदृष्टपूर्वम् ४७ नवेदयज्ञाध्ययनैर्नदानैर्नचक्रियाभिर्नतपोभिरुग्रैः एवंरूपःशक्यअहंनृलोकेद्रष्टुंत्वदन्येनकुरुप्रवीर ४८ मातेव्यथामाचविमूढभावोदृष्ट्वारूपंघोरमीदृङ्ममेदम् व्यपेतभीःप्रीतमनाःपुनस्त्वंतदेवमेरूपमिदंप्रपश्य ४९ छ

पिनपूर्वंदृष्टंनदृष्टपूर्वं ४७ योगैकगम्यंएतत्कर्मिणांदुःप्रापमित्याह नवेदेति वेदानांयज्ञानांचअध्ययनैरधिगमैः नचदानैः नचक्रियाभिःस्मार्तकाभिरपूर्तादिभिर्वापीकूपारामादिभिः तपोभिः कृच्छ्रचांद्रायणाद्यैः उग्रैः मासोपवासाद्यैः नृलोकेएवंरूपोऽहंद्रष्टुंनशक्यः रोरुत्वाप्रभावआर्षःत्वदन्येनकुरुप्रवीर ४८ इदमतिदुर्लभदर्शनंरूपंदृष्ट्वापिचेद्व्यथसेतर्हिउपसंहरामीदमित्याशयेनाह मातेइति ममइदंईदृक्घोरंरूपंदृष्ट्वातेतव व्यथामाभूदितिशेषः विमूढभावोमोहश्चतेमाभूत्व्यपेतभीः निर्भयः प्रीतमनाश्चपुनस्त्वंभूत्वातदेवयत्त्वयाद्रष्टुंप्रार्थितंमेममेदंरूपंप्रपश्य ४९ श्रीकृष्ण छ छ छ छ छ छ छ छ छ छ

संजयउवाच वासुदेवः अर्जुनंइतिपूर्वोक्तरीत्याउक्त्वा यथापूर्वमासीत्तथास्वकंमानुषंरूपंभूयः पुनः दर्शयामास यदर्जुनेनप्रार्थितंचतुर्भुजंधारणावि-
षयंरूपंतदपितिरोदधेइत्यर्थः तथामहात्माव्यापकोपिसन्सौम्यवपुरनुग्रदेहोभूत्वाभीतंएनंआश्वासयामासच ५० ततोनिर्भयः सन्नर्जुनउवाच दृ
ष्ट्वेति सचेताः अव्याकुलः प्रकृतिंगतः स्वास्थ्यंप्राप्तः संवृत्तोजातोऽस्मि ५१ अस्यविश्वरूपदर्शनस्यदौर्लभ्यंदर्शयन् श्रीभगवानुवाच सुदुर्दर्शमि
ति दर्शनकांक्षिणः दर्शनंकांक्षन्तेएवनतुलभंते ५२ नाहमिति नवेदयज्ञाध्ययनैरित्यनेनोक्तएवार्थः पुनरुच्यतेविश्वरूपदर्शनस्यातिदौर्लभ्यसूच
नायस्पष्टार्थश्चश्लोकः ५३ कथंतर्हिद्रष्टुंशक्यत्वमतआह भक्त्येति आराधनेनअनन्ययाअव्यभिचरितयाअखंडयेत्यर्थः अहंएवंविधोज्ञातुंशक्यः
त्वंपदार्थशोधकशास्त्रतः द्रष्टुंशक्यः ध्यानतः तत्वेनयाथात्म्येनप्रवेष्टुंशक्यः तत्वमसीतिवाक्यार्थजज्ञानतः हेपरंअज्ञानशत्रुंतापयतीतिपरंतप-

संजयउवाच इत्यर्जुनंवासुदेवस्तथोक्त्वास्वकंरूपंदर्शयामासभूयः आश्वासयामासचभीतमेनंभूत्वापुनः सौम्यवपुर्म
हात्मा ५० अर्जुनउवाच दृष्ट्वेदंमानुषंरूपंतवसौम्यंजनार्दन इदानीमस्मिसंवृत्तः सचेताःप्रकृतिंगतः ५१ श्रीभग
वानुवाच सुदुर्दर्शमिदंरूपंदृष्टवानसियन्मम देवाअप्यस्यरूपस्यनित्यंदर्शनकांक्षिणः ५२ नाहंवेदैर्नतपसानदाने
ननचेज्यया शक्यएवंविधोद्रष्टुंदृष्टवानसिमांयथा ५३ भक्त्यात्वनन्ययाशक्यअहमेवंविधोऽर्जुन ज्ञातुंद्रष्टुंचतत्वे-
नप्रवेष्टुंचपरंतप ५४ मत्कर्मकृन्मत्परमोमद्भक्तः संगवर्जितः निर्वैरः सर्वभूतेषुयः समामेतिपांडव ५५ इतिश्री
मन्महाभारतेभीष्मपर्वणिश्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसंवादेविश्वरूपदर्शनं
नामैकादशोऽध्यायः ११ ३५ छ छ छ छ छ छ

५४ शास्त्रसर्वस्वंसंगृह्णातिमत्कर्मकृदिति मदर्थमेवकर्माणिकरोतीतिमत्कर्मकृत् अहमेवपरमोनिष्कलः प्राप्योयस्येतिसमत्परमः एतेनकृत्स्नः
कर्मयोगोध्यानयोगश्चत्वंपदार्थशोधकउक्तः ममभक्तआराधनकृदितिउपासनाकांडार्थसंग्रहः संगवर्जितइत्यनेनएकांतेभगवत्ध्याननिष्ठइत्युक्तम्
निर्वैरइतिविश्वंभगवदात्मनापश्येदित्युक्तंअन्यथाभेदबुद्धिमतोनिर्वैरत्वासंभवात् एवंभूतोयः समांतत्पदलक्ष्यार्थभूतमखंडानंदैकघनंएतिप्राप्नोति
प्रत्यगभेदेन हेपांडवविशुद्धवंशजत्वमेवैतत्ज्ञातुंनशक्तोसीतिभावः ५५ इतिश्रीनीलकंठीयेभारतभावदीपेभीष्मपर्वणिगीतार्थप्रकाशेए-
कादशोऽध्यायः ११ ३५ छ छ छ छ छ छ छ छ

सप्तममारभ्यैतावताग्रंथेनतत्पदवाच्यार्थोनिरूपितः इदानींतत्पदार्थशोधनमुपासनाकांडंचसमापयिष्यन्निहार्थतः प्राधान्येनतत्पदलक्ष्यमर्थंतद्विदांल-
क्षणानिचप्रदर्श्यंतेशब्दतस्तुलौकिकबुद्ध्यनुसारेणतत्पदवाच्यस्यैवोपासनादिकंप्रपंच्यते तत्रपूर्वाध्यायांतेमत्कर्मकृन्मत्परमइत्यादिनास्वभजनमुक्तं
तत्रमच्छब्दार्थः किंसगुणमुतनिर्गुणंब्रह्मउभयत्रापिअस्मच्छब्दस्यपूर्वंप्रयोगदर्शनात्संदिहानःपृच्छति एवमिति एवमित्यव्यवहितंमत्कर्मकृदित्या-
दिनाउक्तंप्रकारंपरामृशतिअनेनप्रकारेणयेसततयुक्ताः नित्यंसमाहितचित्ताः भक्ताः सगुणवेदिनस्त्वांपर्युपासते येचापिअक्षरंअस्थूलादिलक्षणंअ-
व्यक्तंबुद्ध्याद्यगोचरंउपासतेतेषांमध्येयोगवित्तमाः केकतरेइत्यर्थः १ निर्गुणस्यदुष्प्रापत्वोक्त्यैवश्रेष्ठत्वंसूचयन् सगुणप्राशस्त्यंचशब्दतोदर्शयन्श्री-
भगवानुं मयीति मयिसगुणेब्रह्मणिमनआवेश्य प्रवेश्ययेमांनित्ययुक्ताः सदोद्युक्ताः मांपरमेश्वरमुपासतेचिंतयंतिश्रद्धयाआस्तिक्यबुद्ध्यापरयासा
त्विक्याअवश्यंपरमात्मायमाराधितोऽस्मांस्तारयिष्यतीत्येवंनिश्चयरूपयाश्रद्धयाउपेताः तेमेममज्ञानीत्वात्मैवमेमतमितिज्ञानिनमात्मत्वेनैवपश्यतोमू
र्वैधपिकारुण्यात्पक्षपातवतः सर्वज्ञस्ययुक्ततमामताः २ एवमुपासकान्स्तुत्वाअव्यक्तविदांज्ञानिनांदौर्लभ्यंश्लोकत्रयेणाह येत्विति तुशब्दःस

अर्जुनउवाच एवंसततयुक्तायेभक्तास्त्वांपर्युपासते येचाप्यक्षरमव्यक्तंतेषांकेयोगवित्तमाः १ श्रीभगवानुवा
च मय्यावेश्यमनोयेमांनित्ययुक्ताउपासते श्रद्धयापरयोपेतास्तेमेयुक्ततमामताः २

गुणाद्वैलक्षण्यार्थः अक्षरंएतद्वैतद-
क्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घमित्यादिश्रुत्यासर्वधर्मशून्यंनिरूपितं अतएवानिर्देश्यंनिर्देष्टुमशक्यंवाचा अव्यक्तंच वाचा
मगोचरत्वाद्बुद्धेरप्यविषयइत्यर्थः तथाचश्रुतिः यतोवाचोनिवर्ततेअप्राप्यमनसासहेतिब्रह्मणोवाङ्मनसातीतत्वंदर्शयति पर्युपासतेसर्वप्रकारेणो
पासतेउपासनमिहअनात्मनामदर्शनमेवयथोक्तंअनात्मादर्शनेनैवपरात्मानमुपास्महइति ननुतर्ह्येवंविधस्यशून्यस्यशून्यकल्पस्यसत्वेकिंमानमत-
आह सर्वत्रगमितिसत्तारूपेणस्फुरणरूपेणचसर्वत्रग तंयत्सत्तयासर्वंसत्तावद्भवतिकथंतस्यासत्वंवाच्यमितिभावः नन्वेवंतार्किकाभिमतंसत्तासा
मान्यमुक्तंस्यात् तद्धियटःसन्पटःसन्निति सर्वत्रानुगतंदृश्यतेइत्याशंक्याह अचिंत्यमिति सत्तासामान्यंहिप्रत्यक्षंतदपिब्रह्मसत्तानुवेधेनैवात्मानंल
भतेनस्वतःसिद्धंसामान्यंसत्जातिः सतीघटत्वंसदितिप्रत्ययात् सामान्यस्यसदितिप्रत्ययागोचरत्वेतुतस्याअसत्वापत्त्यापदार्थत्वमेवनस्यात् तस्मात्स-
र्वाधिष्ठानभूतंब्रह्मरूपादिहीनत्वाच्चिंतयितुमशक्यंदूरेतस्यसर्वगतत्वेनप्रत्यक्षगोचरत्वमित्यर्थः ननुतत्सदितिप्रत्ययस्यान्यथाप्युपपत्तौसत्तासामा-
न्यवादिनंप्रतितेनाधिष्ठानभूतंब्रह्मनसाधयितुंशक्यमतआह कूटस्थमिति वस्तुतोऽसदपिसदिवावभासमानंकूटंयथाकूटकार्षापणंकूटतुलेतितद्

त्कूटः अहंकारः प्रतीचिअभेदेनभासमानत्वेसतिकादाचित्कत्वात् योयदभावेनकदाचिद्भातिसतत्रमिथ्याकल्पितः यथारज्जूरगस्तथाचायमहं-
कारोमिथ्यात्वात् कूटसंज्ञः तत्रतिष्ठतितद्भासकत्वेनेतिकूटस्थंचैतन्यंअहमनुभवेहिअहंकारोदृश्यतयाभातितद्भासकंचचैतन्यंततोऽन्यत् यथाघट
भासकोर्कोघटादन्यस्तद्वत् एतेननित्यापरोक्षत्वंब्रह्मणःसाधितं नन्वहमनुभवएवात्मविषयोनोऽहमर्थएवात्माननतोन्यआत्मास्तीत्याशंक्याह अचलमि
ति अहमर्थोहिसुखीदुःखीपरिणामीआविर्भावतिरोभावशीलश्चातश्चंचलः आत्मातुनतथातस्यतथात्वेऽनिर्मोक्षापत्तेः बन्धोप्ययंबद्दुःखादिधर्मिण-
आत्यंतिकदुःखनाशस्यमोक्षस्यधर्मिनाशमंतरेणासंभवात् घटेयावद्रूपनाशादर्शनात् आत्मनस्तिरोभावेचजगदांध्यंप्रसज्येत सुषुप्तावपितन्मत्यसु
खाज्ञानसाक्षित्वेनाविर्भूतस्वरूपएवात्मास्ति अन्यथासुप्तोत्थितस्यसुखमहमस्वाप्समितिपरामर्शायोगात् ननुसुषुप्तोसन्नपिआत्मानप्रकाश
तेतत्प्रकाशकस्यमनःसंयोगाभावात् कर्त्राव्याप्रियमाणंहिकारणंक्रियांसाधयतिनचसुप्तोकारणव्यापारोऽस्तितस्मान्न्यस्तवास्यस्तत्क्षेवात्मासुप्तोज्ञाना

येत्वक्षरमनिर्देश्यमव्यक्तंपर्युपासते सर्वत्रगमचिंत्यंचकूटस्थमचलंध्रुवम् ३ सन्नियम्येंद्रियग्रामंसर्वत्रसमबुद्धयः
तेप्राप्नुवंतिमामेवसर्वभूतहितेरताः ४

द्गुणहीनोप्रकाशमानोऽस्त्येवेत्याशंक्याह ध्रुवमिति ननुआत्माकिंसत्तामात्रेणायस्कांतवत्क
रणानिप्रवर्तयतिउतव्यापाराविष्टःसन् नाद्यः इष्टापत्तेःत्वन्मतेचआत्मनः कर्तृत्वासिद्धिः नांत्यः अनित्यत्वापत्तेः व्यापारोहिस्पंदःसचपरिच्छिन्नस्यै
वयुज्यतेनविभोः विभुत्वहानेचाणुत्वानभ्युपगमान्मध्यमपरिमाणत्वेघटादिवदनित्यतापत्तिः तस्मात् ध्रुवंअप्रच्युतस्वभावमक्षरमित्यर्थः ३ एवं-
विधमक्षरंकथमुपासनीयमित्यतआह सन्नियम्येति सर्वत्रकालेसर्वदा एतेनध्यानस्यनैरंतर्यमुक्तंइंद्रियग्रामंसमनस्कानिइंद्रियाणिसंनियम्यए
कीभावेनात्मनिवशीकृत्वास्वकारणेप्रविलाप्येत्यर्थः समाचांचल्यहीनाबुद्धिर्येषांतेसमबुद्धयोभवंतितेपिमामेवनिर्विकल्पंपरंब्रह्मपरांकाष्ठांप्राप्नुवंति
श्रुतिश्चयदापंचावतिष्ठंते ज्ञानानिमनसासहबुद्धिश्चनविचेष्टतितामाहुः परमांगतिमितिसर्वभूतहितेरताइत्यनेनसर्वभूताभयदानेनसन्न्यासोपिध्या-
नांगमितिविधीयते ४ ꣸ ꣸ ꣸ ꣸ ꣸ ꣸ ꣸ ꣸ ꣸ ꣸ ꣸ ꣸

अस्यागतेर्दुःप्रापत्वमाह क्लेशइति यद्यपिसगुणविदामधिकः क्लेशोस्त्येवतथापितेसालंबनाः ध्यायंतिसोपानारोहक्रमेणपरांकाष्ठांप्रविशंति येषांतु-
निरालंबंध्यानं आकाशशुद्धसमंतेषांनिर्विषयेचेतःस्थिरीकरणेधिकतरःक्लेशोस्तितत्र क्रमिकध्यानप्रयोगः शुद्धेचिन्मात्रेविश्वरूपंमाययाऽध्यस्तम्
तत्रत्वकेवलमातिवाहिकंकृत्स्नंजडमाधिभौतिकमध्यस्तम् यथोक्तंवसिष्ठेन आतिवाहिकएवायंत्वादृशेश्चित्तदेहकः अधिभौतिकयाबुध्यागृहीतश्चि
रभावनादिति अतिक्रम्यपाषाणादीन्वहतिइष्टदेशंनयत्यभिमानिनमित्यतिवाहिसर्वत्राप्रतिहतगतिकंभूतसूक्ष्मम् तेननिर्वृत्तआतिवाहिकोयंकृत्स्न
प्रपंचः यतः चित्तदेहकः चित्तमेवदेहः स्वरूपमस्येतिस्वप्नतुल्यएवसन्चिरभावनात्वज्रपंजरवत् काठिन्येनोपेतआधिभौतिकयास्थूलभूतप्रभया
गृहीतइतिश्लोकार्थः एवंचयथातीव्राभिनिवेशेननिरीक्ष्यमाणोरज्जूरगः स्वयंशाम्यतितदधिष्ठानभूतारज्जुश्चाविर्भवतितथावस्तुत श्चिद्रूपायामपि
मघवादिमूर्तौजाड्यमध्यस्तंतामेवाभिनिवेशेनचिरंकालंचर्मचक्षुषैवपश्यतस्तस्यामूर्तेर्जाड्यंतिरोधीयतेचैतन्यमाविर्भवति अतएवबाणादयः स्वा
राध्यैःसार्द्धंस्वामिभृत्यन्यायेनव्यवहरंतीतिसर्वत्रोपाख्यायते एवंचेतनायामूर्तेरपितत्त्वंविश्वरूपमेवेतिमूर्तिमेवात्यादरेणपश्यन् तस्यास्तत्त्वंवि-

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् अव्यक्ताहिगतिर्दुःखंदेहवद्भिरवाप्यते ५

स्वरूपमवगच्छति यदपश्यदर्जुनोवासुदेवदेहेएतदेववितर्कजंप्रत्यक्षंप्रकृत्योक्तंभगवतायोगभाष्यकारेणबादरायणेन तत्परंप्रत्यक्षंतच्चश्रुता-
नुमानयो र्बीजमितिस्थूलालंबनः समाधिर्वितर्कः विश्वरूपस्यापिअस्मितामात्रेध्यासात् तस्यावलोकनेऽस्मितामात्रमवशिष्यते अस्मितायाः-
अपिशुद्धा यांचितावध्यस्तत्वात्तस्यामपिसमाहितेमनसिसहैवमनसास्मितापि रोधीयते शुद्धाचितिरेवावशिष्यतेइति एवंव्यक्ताऽसक्ताः
सोपानारोह क्रमेणपरांकाष्ठांप्रतिपद्यंतेयेतुअव्यक्तासक्ताः पक्षिवदकस्मादूर्ध्वपदमारुरुक्षंतिलयेनविक्षेपेणवाभ्रंशंबाध्यंतेलयमेवचक
दाचित्समाधित्वेनाभ्युपगच्छंतिइतितेषांपराभवसंभावनाप्यस्ती त्यतउक्तम् क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामितिहियस्मा
त् अव्यक्तानिरालंबनागतिः पदप्राप्तिः देहवद्भिः देहाभिमानिभिः दुःखंयथास्यात् तथाअवाप्यतेनतुसासुखमाप्येतिभावः ५
श्रीकृष्णाभ्यांनमः ५ ५ ५ ५ ५ ५ ५ ५ ५

नन्वव्यक्तासक्तचेतसांक्लेशाऽधिक्येऽपिक्लेशांतेसद्यः कैवल्यसिद्धिरस्तीतिकिंविलंबसाध्येनव्यक्तभावनेनेत्याशंक्याह येत्विति द्वाभ्याम् सर्वाणिनित्यने-मित्तिकस्वाभाविकादीनि सन्न्यस्यसमर्प्य मत्पराः अहमेवपरःसर्वकर्मभिः प्राप्योयेषांतेमत्पराः मत्ध्यानपरावा अनन्येनभेदशून्येनअहमेवभगवान्वा-सुदेवइतिपरमेश्वरेऽहंग्रहलक्षणेनयोगेनचेतः समाधानेनमांध्यायंतउपासतेतत्रैवध्यानेस्थैर्यंलभंते ६ तेषांध्यायिनांनचिरात्शीघ्रमेवाहंसमुद्धर्त्ता समुद्धरणकर्ता यतस्तेमयिसगुणेविश्वरूपेआवेशितचेतसोभवंति अतः व्यक्तासक्ताअपिशीघ्रमेवपरंपदमारोढुमर्हाइतिनाव्यक्तेऽत्यंताभिनिवेष्टव्य मितिभावः ७ यस्मादेवंतस्मात्मय्येवविश्वरूपेईश्वरेमनःसंकल्पविकल्पात्मकंआधत्स्वस्थापयमय्येवाध्यवसायंकुर्वितिबुद्धिंनिवेशय तत्फलंचनि वसिष्यसिनिवत्स्यसिनिश्चयेनमदात्मनामयिवासंकरिष्यसिअतःशरीरपातादूर्ध्वंनसंशयः कर्तव्यः ८ विश्वरूपधारणायामशक्तंप्रतिप्राह अथेति मयि

येतुसर्वाणिकर्माणिमयिसन्न्यस्यमत्पराः अनन्येनैवयोगेनमांध्यायंतउपासते ६ तेषामहंसमुद्धर्त्तामृत्युसंसारसा गरात् भवामिनचिरात्पार्थमय्यावेशितचेतसाम् ७ मय्येवमनआधत्स्वमयिबुद्धिंनिवेशय निवसिष्यसिमय्येवअत ऊर्ध्वंनसंशयः ८ अथचित्तंसमाधातुंनशक्नोषिमयिस्थिरम् अभ्यासयोगेनततोमामिच्छाप्तुंधनंजय ९ अभ्यासेऽप्य समर्थोऽसिमत्कर्मपरमोभव मदर्थमपिकर्माणिकुर्वन्सिद्धिमवाप्स्यसि १० अथैतदप्यशक्तोऽसिकर्तुंमद्योगमाश्रि तः सर्वकर्मफलत्यागंततःकुरुयतात्मवान् ११

विश्वेश्वरेविश्वरूपेअथयदिचित्तंसमाधातुंनिवेशयितुमचलंधारयितुंनशक्नो-षि ततस्तर्हिअभ्यासयोगेनचित्तस्यैकस्मिन्नाभ्यंतरेबाह्येवाप्रतिमादावालंबनेसर्वतः समाहृत्यपुनःपुनः स्थापनंअभ्यासस्तत्पूर्वकोयोगः स-माधानलक्षणः तेनाभ्यासयोगेनमांविश्वरूपंप्राप्तुंइच्छप्रार्थयस्वहेधनंजय ९ अभ्यासेपीति अभ्यासेपूर्वश्लोकेक्ते मत्कर्मश्रवणंकीर्त-नंविष्णोःस्मरणंपादसेवनम् अर्चनंवंदनंदास्यंसख्यमात्मनिवेदनमितिनवविधभजनात्मकंभगवत्प्रीत्यर्थंकर्ममत्कर्मशाब्दितंतदेवपरमं-अवश्यंयस्यतादृशोभवकर्माणिश्रवणादीनिसिद्धिंसत्वशुद्धिम् १० मद्योगंश्रवणादौनिष्ठांतर्हिपूर्वोक्तंश्रोतस्मार्त्तसर्वकर्मफलत्यागंकुरु-
११

हेकृष्णहेयादव

कर्मफलत्यागमेवश्रेयोहेतुत्वात्स्तौति श्रेयोहीति अभ्यासान्निदिध्यासनात्ज्ञानंश्रवणमननजंपरोक्षम् श्रेयः ज्ञानादपिध्यानंविष्णोःश्रवणकीर्त
नादिविशिष्यते ततोपिकर्मफलत्यागः श्रेयान् यस्मादनंतरंअव्यवधानेनशांतिर्मोक्षोऽस्तिचित्तशुद्ध्याद्युत्पादनद्वारेणअत्रबाह्यंसाधनंस्फकरत्वात्पू
र्वपूर्वापेक्षयाप्रशस्तमित्युच्यतेतत्रैवप्रवृत्त्यतिशयाय यद्वाश्रवणाद्यभ्यासात्तज्जंज्ञानंतत्वनिश्चयात्मकंश्रेयः ततोऽपिज्ञातस्यार्थस्यसाक्षात्कारार्थं
ध्यानंश्रेयः ततोपिकर्मफलत्यागः योगीहिसर्वकामतांप्रजहातिप्रजहातियदाकामानितिप्रोक्तः अयमपिकर्मफलत्यागेनकामान्जहात्येवेतितेनस
मइतिस्तूयते १२ परमप्रकृतस्याक्षरस्योपासकंस्तौतितद्गुणकथनेहिसाधकानांतेषुगुणेष्वादरोभविष्यतीतिबुद्ध्याह अद्वेष्टेति अद्वेष्टाचेदुदासीनः
स्यान्नेत्याह मैत्रः मित्रमेवमैत्रोनतूदासीनः कदाचिदपि नन्वन्यस्मिन्शत्रौसतिकथंमैत्रत्वंस्यात्तत्राह करुणइतिदुःखदातारमपिकरुणयानबाधि-
तुमीष्टेऽपित्रातुमेवेच्छति एतेनसर्वभूताभयप्रदः सन्न्यासीउक्तः अतएवतस्यनिर्ममइतिविशेषणंयुज्यते मुख्यमक्षरविदोलक्षणंनिरहंकारइति

श्रेयोहिज्ञानमभ्यासाज्ज्ञानाद्ध्यानंविशिष्यते ध्यानात्कर्मफलत्यागस्त्यागाच्छांतिरनंतरम् १२ अद्वेष्टासर्वभूतानांमैत्रः
करुणएवच निर्ममोनिरहंकारःसमदुःखसुखः क्षमी १३ संतुष्टःसततंयोगीयतात्मादृढनिश्चयः मय्यर्पितमनोबुद्धि
र्योमेभक्तःसमेप्रियः १४ यस्मान्नोद्विजतेलोकोलोकान्नोद्विजतेचयः हर्षामर्षभयोद्वेगैर्मुक्तोयःसचमेप्रियः १५

अहंकारोहिसर्वानर्थनिदानंसएवनिर्गतोयस्मात्सनिरहंकारः अतएवसमेदुःखसुखेयस्य तत्रकोमोहः शोकएकत्वमनुपश्यतइतिश्रुतेः क्षमी-
क्षमवान्परिभवप्राप्तावपिस्वस्थचित्तः अन्योपिमुमुक्षुरेतान्धर्मान्अनुतिष्ठेदित्यर्थः १३ संतुष्टः यदृच्छालाभेनैवसंजातालंप्रत्ययः सततंस
र्वदायोगीश्रवणादौसमाहितचित्तः यतात्मासंयतशरीरेंद्रियादिसंघातः दृढः स्थिरः आत्मतत्वविषयेनिश्चयोयस्यसः दृढनिश्चयः असंभावना-
शून्यः दृढंश्रद्धावान् मयिनिर्गुणेब्रह्मणिअर्पितेनिहितेप्रविलापितेवामनःसंकल्पादिरूपंबुद्धिरध्यवसायस्तेउभेयेनसमर्पितमनोबुद्धिः एता
दृशोयोमेममभक्तः समेममप्रियः आत्मत्वादेवसपरमप्रेमास्पदंज्ञानीत्वात्मैवमेमतमित्युक्तम् एतेनपूर्वश्लोकोक्तायाःनिरहंकारतायाः साधनान्यु
क्तानि १४ सचनिरहंकारोद्विविधः समाधिस्थोव्युत्थितश्च तयोर्लक्षणंक्रमेणाहद्वाभ्यां यस्मादिति यस्मात्समाधिस्थत्वेनकाष्ठसमात्लोकोनोद्वि
जतेनत्रस्यति लोकादपियोनिर्मनस्कत्वान्नोद्विजते अतएवहर्षइष्टलाभेसतिमनसउत्फुल्लता अमर्षः असहिष्णुताभयंआत्मोच्छेदशंका उद्वेगस्तत्कृ
तैर्वव्याकुलता एतैर्निर्मनस्कत्वादेवस्वयमेवमुक्तस्त्यक्तः नत्वेतान्स्वयंत्यक्तुंयतनेसाधकवत् ईदृशोयोमद्भक्तःसचमेप्रियः १५ ६९ ६९

अस्येवव्युत्थानावस्थामाह अनपेक्षइति सुखप्राप्तौदुःखहानेवातत्साधनेवालिप्साशून्योऽनपेक्षः शुचिः बाह्याभ्यंतरशौचवान् पुण्यापुण्याभ्याम लिप्तोवादक्षः भगवद्भजनादौअनलसः उदासीनोमानाऽपमानादौसमवृत्तिः अतएवगताव्यथाचेतः पीडायस्यसगतव्यथः सर्वारंभपरित्यागीस- न्न्यासित्वादेवयोमद्भक्तः समेप्रियः १६ एतमेवश्लोकंव्याचष्टेत्रिभिःश्लोकैः योनेतिइष्टलाभेसतिनहृष्यति अनिष्टप्राप्तौनद्वेष्टि इष्टवियोगेसति नशोचति इष्टसंयोगंअनिष्टपरिहारंवानकांक्षति अनपेक्षत्वात् शुभंकल्याणंपुण्यंच अशुभममंगलंपापंचतेउभेपरित्यक्तुंशीलंयस्यसशु- भाऽशुभपरित्यागीएतेनशुचित्वंव्याख्यातम् भक्तिमान्भक्तोसततोद्युक्तइतिदक्षइत्यर्थः १७ उदासीनत्वंव्याचष्टेसमइति गतव्यथत्वमुपपा दयतिसंगविवर्जितइतिसंगीहिव्यथतेनतुतद्वर्जितइत्यर्थः १८ सर्वारंभपरित्यागीत्येतद्व्याचष्टे तुल्येति शिष्टेषुविगीतोनस्यामितिवालोकेषुप्र- ख्यातःस्यामितिवाइदंमेभूयादितिवाकामयमानः किंचिदारभते नतुतुल्यनिंदास्तुतिः तुल्यनिंदास्तुतित्वात्संतुष्टत्वाच्चमोनीसन्न्यासीअतएव

अनपेक्षःशुचिर्दक्षउदासीनोगतव्यथः सर्वारंभपरित्यागीयोमेभक्तःसमेप्रियः १६ योनहृष्यतिनद्वेष्टिनशोचति नकांक्षति शुभाशुभपरित्यागीभक्तिमान्यःसमेप्रियः १७ समःशत्रौचमित्रेचतथामानापमानयोः शीतोष्णसु- खदुःखेषुसमःसंगविवर्जितः १८ तुल्यनिंदास्तुतिर्मौनीसंतुष्टोयेनकेनचित् अनिकेतःस्थिरमतिर्भक्तिमान्मेप्रि- योनरः १९ येतुधर्मामृतमिदंयथोक्तंपर्युपासते श्रद्दधानामत्परमाभक्तास्तेतीवमेप्रियाः २० इतिश्रीम॰भा॰भी॰ श्रीमद्भगव॰संवादेभक्तियोगोनामद्वादशोऽध्यायः १२ ३६

निकेतः गृहंशून्यःकुटीमपिचात्मार्थंनारभते यतःस्थिरमतिः स्थितप्रज्ञोभ क्तिमान्योगीमेममप्रियोनरःपुरुषः १९ मुक्तलक्षणान्येवमुमुक्षोःसाधनत्वेनविधत्ते येत्विति येमुमुक्षवःतुपूर्वोक्तापेक्षयाविलक्षणाः इदंअद्वेष्टा सर्वभूतानामित्यादिनाग्रंथेनप्रतिपादितंधर्मजातंतदेवामृतस्यमोक्षस्यसाधनत्वादमृतंधर्मामृतंयथोक्तंउक्तानतिक्रमेणपर्युपासतेसाकल्येनानुतिष्ठंति श्र द्दधानाःश्रद्धायुक्ताःमत्परमाः अहमेवभगवान्वासुदेवोऽक्षराख्यःसर्वविशेषरहितः परमानंदरूपःपरमः पार्यंतिकःप्राप्योयेषांतेमत्परमाः भक्ताः शांतिदांत्यादिमंतोमद्भजनशीलास्तेऽतीवमेममप्रियाः ज्ञानीतुभगवतआत्मैवपरिशेषादतीवप्रियत्वंभक्तेष्वेवपर्यवसन्नंयोमुक्तानांस्वाभाविकोधर्मः स- मुमुक्षूणायत्नतोऽनुष्ठेयइत्यर्थः यथोक्तंवार्तिके उत्पन्नात्मप्रबोधस्यत्वद्वेष्टृत्वादयोगुणाः अयत्नतोभवंत्येवनतुसाधनरूपिणइतिसमासउपासनस्तत्प दार्थविवेकः अतःपरंवाक्यार्थविचारोजीवब्रह्माभेदप्रतिपादकोभविष्यति २० इतिश्रीनैलकंठीयेभा॰भीष्मपर्वणिभगवद्गीतार्थप्रकाशेद्वादशोऽध्या यः१२अयंउपासनाकांडः३६

प्रकृतिमिति १ ननुअव्यक्तोऽयमचिंत्योऽयमविकार्योऽयमुच्यते नित्यः सर्वगतः स्थाणुरचलोऽयंसनातनइतिद्वितीयेत्वंपदार्थस्वरूपमुक्तं तथाद्वाद-
शे येत्वक्षरमनिर्देश्यमव्यक्तंपर्युपासते सर्वत्रगमचिंत्यंचकूटस्थमचलंध्रुवमितितत्पदार्थस्वरूपमुक्तं नतयोर्भेदः संभवतिलक्षणैक्यात् लक्ष-
णंहितयोरव्यक्तत्वमचिंत्यत्वमचलत्वंसर्वगतत्वंचेत्यादिसमानम् नचद्वयोः सर्वगतत्वंसंभवतिअन्योन्यव्यावृत्तत्वेनासर्वगतत्वापत्तेः नचलक्ष
णभेदाभावेपितत्तदात्मगताविशेषाः संतियेमुक्तात्मनांजीवेशयोश्चान्योन्यभेदमावहंतिस्वात्मानंचस्वाश्रयात्स्वयमेवव्यावर्तयंतीतिवाच्यम् विशेषा
णांसत्वेप्रमाणाभावात् नन्वस्मासंतुविशेषाः बंधमोक्षादिव्यवस्थान्यथानुपपत्यातुनिर्विशेषेष्वपिपुरुषेषुभेदः सिध्यति यथोक्तंसांख्यवृद्धैः ज
न्ममरणकरणानांप्रतिनियमादयुगपत्प्रवृत्तेश्च पुरुषबहुत्वंसिद्धंत्रैगुण्यविपर्ययाच्चैवेति जन्मादिव्यवस्थातः युगपत्प्रवृत्त्यदर्शनात्सात्विक-
राजसादिभेदाच्चनपुरुषैक्यमित्यर्थः नव्यापकानेकात्मवादेभोगसांकर्यप्रसंगात् नह्येकत्रांतः करणेस्फुरवादिरूपेणपरिणतेतत्प्रतिसंवेदीए
कएवचेतनइतिनियमितुशक्यंसर्वेषांसान्निध्याविशेषेप्रतिसंवेदनापत्तेरवर्जनीयत्वात् श्रोतस्यैकस्यापिकर्णशष्कुलीरूपोपाधिभेदादिवांतः क

**अर्जुनउवाच प्रकृतिंपुरुषंचैवक्षेत्रंक्षेत्रज्ञमेवच एतद्वेदितुमिच्छामिज्ञानंज्ञेयंचकेशव १ श्रीभगवानु
वाच इदंशरीरंकौंतेयक्षेत्रमित्यभिधीयते एतद्योवेत्तितंप्राहुः क्षेत्रज्ञइतितद्विदः २**

रणरूपोपाधिभेदात् ए-
कस्याप्यात्मनः शब्दग्रहव्यवस्थावज्जन्मादिव्यवस्थापिसेत्स्यतीतिनपुरुषबहुत्वंवक्तव्यम् ततश्चजीवेशयोर्लक्षणैक्यादभेदेसिद्धेकिमुत्तर
ग्रंथेनेतितत्प्रतिपादनार्थेनेतिचेत्सत्यंयत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिश्रुतेर्विद्यावस्थायांभेदाभावेपिअविद्यावस्थायांअंतः प्रविष्टः
शास्ताजनानाम् एषह्येवसाधुकर्मकारयति तंयमेभ्योलोकेभ्यउन्निनीषतइतिव्यवहारदशायांशास्यशासितृभावेनकर्तृकारयितृभावेनच
प्रसक्तस्यजीवेश्वरयोर्भेदस्यनिरासार्थत्वात् उत्तरग्रंथस्यारंभउपपद्यते तत्रानुपदोक्तेनतत्पदार्थेनसहास्याभेदंवक्तुंयोग्यतायेभास्यभासकभा
वेनक्षेत्रात्क्षेत्रज्ञस्यकुंभाद्भास्वतइवविवेकंदर्शयतिइदमिति इदमनात्मत्वेनभास्यंघटाद्यहंकारांतंशरीरंविशरणधर्मिहेकौंतेयक्षेत्रंक्षिणो-
त्यात्मानमविद्ययात्रायतेचविद्ययेतिक्षेत्रंकर्मबीजप्ररोहस्थानंक्षेत्रशब्देनोच्यते एतद्योवेत्तिभासयतीतिचिदात्मानंक्षेत्रज्ञइत्यन्वर्थसंज्ञंप्राहुः
केप्राहुः तद्विदः क्षेत्रक्षेत्रज्ञविदः एतेनगच्छामिपश्यामिभुंजेइतिअनुभवाद्देहेंद्रियाहंकाराः प्रतीतितोभासककोटिनिविष्टाइवभांतितथापिते-
षांतत्वतोभास्यत्वलक्षणोनात्मभावः सिद्धः २ ७ ७ ७ ७ ७ ७ ७ ७

तमेवंलक्षणमुपाधितोनिष्कृष्टंक्षेत्रज्ञंचात्क्षेत्रमपिमांपरमेश्वरमेवउभयरूपेणसंतंविद्धि तत्वमस्यहंब्रह्मास्मिब्रह्मैवेदंसर्वंसर्वंखल्विदंब्रह्मेतिशास्त्रा
त् यस्मादुभयात्मा तस्मात्क्षेत्रक्षेत्रज्ञयोर्यत्ज्ञानंक्षेत्रस्यबाध्यत्वेनक्षेत्रज्ञस्यसर्वबाधावधिभूतत्वेनचयत्ज्ञानंआपरोक्ष्येणतत्वनिश्चयस्तदेवज्ञानंम
ममद्विषयंसम्यग्ज्ञानंएतयोरेवज्ञानंब्रह्मज्ञानमितिमतंनिश्चितंब्रह्मविद्भिः नेहनानास्तिकिंचनेतिक्षेत्रस्यबाधात् नान्योऽस्तिद्रष्टेतिक्षेत्रज्ञादन्यस्यद्र-
ष्टुर्निषेधाच्च यद्यपिसर्वस्यब्रह्माभिन्नत्वात् यत्किंचिदपिज्ञानंतत्सर्वंब्रह्मविषयमेवभवतितथापिरज्जुंसर्पात्मनापश्यतोनरज्जुविषयंसर्पविषयंवासम्यक्ज्ञानमम
स्ति नापितस्यज्ञानस्यरज्जुव्यतिरेकेणविषयांतरंवास्तवमस्ति किंतु यदासर्पबाधेनरज्जुतत्वमधिगच्छतितदेवसर्पमिथ्यायमितिसम्यग्जानातिरज्जुंच
तद्वदिहाप्युभयवदेवसम्यग्ज्ञानीत्यर्थः नहिअन्यतरस्यतत्वेज्ञातेकृतकृत्यतास्ति नहिसांख्योनिर्विशेषात्मविदपिप्रपंचमबाधमानः शून्यवादीवाप्रपं-
चंतुच्छत्वेनपश्यन्नधिष्ठानंब्रह्मनास्तीतिब्रुवाणः कृतकृत्योभवतीतिवक्तुंयुक्तमतोद्वयोरपितत्वंबोध्यमेव ३ क्षेत्रक्षेत्रज्ञपदेविवरीतुमारभतेतदिति

क्षेत्रज्ञंचापिमांविद्धिसर्वक्षेत्रेषुभारत क्षेत्रक्षेत्रज्ञयोर्ज्ञानंयत्तज्ज्ञानंमतंमम ३ तत्क्षेत्रंयच्चयादृक्चयद्विकारियतश्च
यत् सचयोयत्प्रभावश्चतत्समासेनमेशृणु ४ ऋषिभिर्बहुधागीतंछंदोभिर्विविधैःपृथक् ब्रह्मसूत्रपदैश्चैवहेतुम-
द्भिर्विनिश्चितैः ५

यच्चेदंक्षेत्रंनिर्दिष्टंतत् यादृक् यादृशंस्वकीयैर्धर्मैरस्ति यद्विकारियेचतस्यविकारायतश्चयत् यस्माद्विकाराद्यज्जायतइति-
प्राचः तत्पूर्वोक्तंक्षेत्रंयच्चयत्स्वरूपं यादृक् यत्प्रकारकं यद्विकारियेचतस्यविकाराः यतश्चक्षेत्रावयवात् यज्जायतेतत्शृणुतथासचक्षेत्रज्ञः योयत्स्व
रूपः यत्प्रभावश्चतदपिमत्तःशृणु ४ वक्ष्यमाणेऽर्थेप्रमाणमाह ऋषिभिरिति ऋषिभिर्वसिष्ठाद्यैर्बहुधागीतंयोगवासिष्ठादौप्रतिपादितम् छंदोभि-
र्वेदैः मंत्रैर्वापृथक्प्रतिशाखंअनेकप्रकारंगीतंब्रह्मसूत्रपदैः ब्रह्मणः सूचकानिपदानिसमुच्चित्यवाक्यभावमापन्नानिब्रह्मसूचकैर्ब्राह्मणवाक्यैरित्य
र्थः तत्वमसीत्याद्यैः हेतुमद्भिः अन्नेनसोम्यशुंगेनापोमूलमन्विच्छअद्भिः सोम्यशुंगेनतेजोमूलमन्विच्छतेजसासोम्यशुंगेनसन्मूलमन्विच्छसन्मू
लाः सोम्येमाः प्रजाइत्यादिनाकार्यलिंगकान्यनुमानानिब्रह्माधिगमायप्रदर्शयंतोहेतवः तद्वद्भिः निश्चितैः असकृदभ्यासेनसकलशकापंकक्षालने
ननिश्चितार्थैः क्षेत्रक्षेत्रज्ञयोःस्वरूपंएतैःसर्वैर्यद्गीतंतत्शृणुइतिपूर्वेणसंबंधः ५ ५ ५ ५ ५

तत्रयच्चयादृक्च्चयद्विकारिचेसेतद्याचष्टे महाभूतानीति चकारोभिन्नक्रमः बुद्धिश्चेतिबुद्धिपदादुपरिद्रष्टव्यः यत्क्षेत्रंशरीराख्यमुक्तंतत्अव्यक्त-
मेवशरीरंरथमेतत्वितिश्रुतौ अव्यक्तपदेनतस्यैवग्रहणात्क्षेत्रस्वरूपमुक्त्वाप्रकारमाह महाभूतान्यहंकारोबुद्धिश्चेतिसप्तप्रकारैरंकुरितंमहाभूत
शब्देनपंचतन्मात्राणिअहंकारः बुद्धिरिति महत्तत्वमुच्यते स्वमेहितान्येवकरणानिभासंतेनतत्प्रकारकएव भूतगणइति एतावत्प्रकारकमेवंक्षेत्र-
मित्युक्तंयद्विकारीत्यस्योत्तरमाह इंद्रियाणीति इंद्रियाणिदशैकंचेत्येकादशपंचज्ञानेंद्रियाणिश्रोत्रत्वक्चक्षूरसनघ्राणानि पंचकर्मेंद्रियाणिवाक्-
पाणिपादपायूपस्थाख्यानि मनश्चेत्येकादशइंद्रियाणांगोचराः विषयाः स्थूलावियदादयः पंच अयंषोडशकोविकारएव एतान्येवसांख्यैश्चतुर्वि-
शतितत्वानिगण्यंतेएतावांस्त्वस्माकंविशेषः तेःस्वतंत्रासत्याचप्रकृतिरुच्यतेअस्माभिर्मायारूपामिथ्याईश्वराधीनाचोच्यतइति तथाचश्रुतिः मा
यांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरमिति तस्मात्सांख्यप्रक्रियात्रभगवताश्रितेतिनभ्रमितव्यम् ६ यतश्चविकारात्यज्जायतइत्युक्तंतदाह इच्छे-
ति इच्छासुखेतत्साधनेवास्पृहारूपाचित्तवृत्तिः इदंमेस्यभूयादितिसकामइतिरागइतिचोच्यते द्वेषः दुःखेतत्साधनेचइदंमेमाभूदितिस्पृहावि

महाभूतान्यहंकारोबुद्धिरव्यक्तमेवच इंद्रियाणिदशैकंचपंचचेंद्रियगोचराः ६ इच्छाद्वेषःसुखंदुःखंसंघात
श्चेतनाधृतिः एतत्क्षेत्रंसमासेनसविकारमुदाहृतम् ७

रोधिनीचेतोवृत्तिः सुखदुःखेप्रसिद्धे संघातः आत्मेंद्रियमनोयुक्तो-
भोक्तेत्याहुर्मनीषिणइतिश्रुतेरिंद्रियमनश्चिदात्मनामेकलोलीभावरूपोभोक्ताचेतनायापूर्वोक्ताबुद्धिः सैवशुद्धासत्वमयत्वाद्विमलादर्शवच्चित्प्र-
तिबिंबग्राहिणीतप्तायः पिंडोवन्हित्वमिवस्वयमचेतनोपिचेतनत्वंप्राप्तः यथाव्याप्तः स्थूलपिंडोऽपिचेतनएवप्रतीयते सेयंचेतनामनः संज्ञितासै-
वइच्छादिरूपापरिणमते तथाचश्रुतिः कामः संकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वमनएवेति कामादीनांमनोवृत्ति-
त्वमाह एतत्क्षेत्रमव्यक्ताख्यंसविकारंविकारेणमहदादिनातद्विकारेणचेच्छादिनासहितंउदाहृतम् नन्विच्छादयोऽहंप्रत्ययविषयस्यात्मनो
धर्माइतिकाणादावदंति सत्यमेववदंतिते परंतुसोऽस्माकंमुख्यआत्मैवनभवतितस्यशुद्धायांचितिअभेदेनाध्यस्तत्वादितिप्रागेवोक्तम् अतः
क्षेत्रांतर्गतस्याहमर्थस्यदृश्यस्यतादृशाएवदृश्याइच्छादयोधर्माः संतु ननः किंचिच्छिन्नं आत्मनोऽसंगत्वमहंकारस्यानृतत्वंचअनुभवासि-
द्धेश्रुती अप्यनुवदतः असंगोह्ययंपुरुषइतिअनृतेनहिप्रत्यूढाइति ७ ꣸ ꣸ ꣸ ꣸ ꣸
꣸ ꣸ ꣸ ꣸ ꣸ ꣸ ꣸ ꣸ ꣸ ꣸

इदानींज्ञानसाधनानिविधत्तेऽमानित्वमितिअमानित्वादयोऽपिचेतोवृत्तिविशेषाद्दृश्यत्वात्क्षेत्रविकारएवसंतः सत्वगुणकार्यत्वात् ज्ञानस्यसाधनभूताअपिउपचारात् ज्ञानपदवाच्याभवंति एतत्ज्ञानमितिप्रोक्तमित्युपसंहारात् तत्रविद्यमानैरविद्यमानैर्वागुणैरात्मनः श्लाघित्वम् लाभपूजाख्यात्यर्थंस्वधर्मस्यप्रकटीकरणंदंभित्वम् कायवाङ्मनोभिः प्राणिनांपीडनंहिंसातेषांवर्जनं अमानित्वंअदंभित्वंअहिंसाचपरेणापकृतेपिचित्तस्यनिर्विकारत्वंक्षांतिः आर्जवंअकौटिल्यंआचार्योपासनंस्पष्टम् शौचंमृज्जलाभ्यांबाह्यम् भावशुद्धिरांतरंस्थैर्यंमोक्षसाधनेप्रवृत्तस्यविघ्नसद्भावेपितदगणनम् आत्मविनिग्रहः देहेंद्रियादिप्रचारसंकोचः ८ इंद्रियार्थेषुदृष्टेष्वानुश्रविकेषुवाशब्दादिषुवैराग्यंरागाभावः अनहंकारः दर्पराहित्यम् अयोगव्यवच्छेदार्थएवकारः समुच्चयार्थश्चकारः जन्मादिषुयज्जायमानंदुःखंदोषाश्चदैन्यादयस्तेषांपरस्यव्यथाऽनुदर्शनम् ९ असक्तिरिति सक्तिः पुत्रादौममतामात्रम् अभिष्वंगस्तेनसहतादात्म्याभिमानोऽयमेवाहमितिचपुत्रादेः सुखेऽहमेवसुखीतस्यदुःखेऽहमेवदुःखीतिसंगाभिष्वंगोतद्वर्जनमित्यर्थः समचित्तत्वंहर्षविषादराहित्यंकुत्रइष्टानिष्टोपपत्तिषु इष्टप्राप्तौहर्षाभावः अनिष्टप्राप्तौविषादाभावः १० मयीतिश्लोकः स्पष्टार्थः ११ अध्यात्मशास्त्रजेज्ञानेनिष्ठावत्त्वम् अध्यात्मज्ञाननित्यत्वं तत्वज्ञानस्यअर्थः प्रयोजनंअविद्यानिवृत्तिरानंदावाप्तिश्चतयोर्दर्शनम् एतत्अमानित्वादितत्वज्ञानार्थदर्शनांतंविशकंज्ञानंज्ञानसाधनसाधनमितिप्रोक्तंवेदेषु अज्ञानंज्ञानविरोधिइतोऽन्यथायत्तत्मानित्वादिकमित्यर्थः तस्मात्तत्परित्यागेनअमानित्वादिकमेवोपादेयमितिभावः १२ ५ ५ ५ ५ ५ ५

अमानित्वमदंभित्वमहिंसाक्षांतिरार्जवम् आचार्योपासनंशौचंस्थैर्यमात्मविनिग्रहः ८ इंद्रियार्थेषुवैराग्यमनहंकारएवच जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ९ असक्तिरनभिष्वंगःपुत्रदारगृहादिषु नित्यंचसमचित्तत्वमिष्टानिष्टोपपत्तिषु १० मयिचानन्ययोगेनभक्तिरव्यभिचारिणी विविक्तदेशसेवित्वमरतिर्जनसंसदि ११ अध्यात्मज्ञाननित्यत्वंतत्वज्ञानार्थदर्शनम् एतज्ज्ञानमितिप्रोक्तम ज्ञानंयदतोऽन्यथा १२

एवंक्षेत्रंव्याख्यायसचयोयत्प्रभावश्चेत्युक्तंक्षेत्रज्ञस्वरूपंतस्यमायिकंप्रभाववत्त्वंव्याचष्टे ज्ञेयमिति एतैर्ज्ञानसाधनैर्यत्ज्ञेयंतत्प्रवक्ष्यामि यत्ज्ञे-
यंज्ञात्वाअमृतंमोक्षंअश्नुतेप्राप्नोतितस्यस्वरूपंतावदाह अनादिमदिति आदिमत्अव्यक्तंतस्मादव्यक्तमुत्पन्नमितितदुत्पत्तिस्मरणात् तदन्यत्-
अनादिमत्अनादीत्येतावदुक्तेप्रवाहनित्यत्वमव्यक्तादीनामप्यस्तीतितेषामप्यनादितायांतत्प्रतिषेधार्थंअनादिमत्इत्युक्तं यद्वा आदिमच्चततः
परंचआदिमत्परेकार्यकारणेताभ्यामन्यत् अनादिमत्परमिति अतएवपरंनिर्विशेषंनचापरंसविशेषम् ब्रह्मत्रिविधपरिच्छेदशून्यम् नसत्प्र
धानपरमाण्वादिवत् सदितिनोच्यते नाप्यसत्शून्यवदसदपिनोच्यते तथाचश्रुतिः नासदासीन्नोसदासीत्तदानीं नासीद्रजोनो व्योमापरोयदि-
तिअसच्छब्दितस्यशून्यस्यसच्छब्दितस्यप्रधान स्यरजःशब्दितानांपरमाणूनांपरंव्योमशब्दितस्यअस्मदभिमतस्याव्यक्तस्यापिसृष्टेः प्राक्निषे
धंदर्शयति १३ एवंसचयइत्येतत्क्षेत्रज्ञस्वरूपमपास्तसमस्तविशेषमुपपाद्ययत्प्रभावइतिप्रतिज्ञातंतस्यप्रभावंवैश्वरूप्यलक्षणमुपपादयति सर्वत
इति सर्वतःसर्वासुदिक्षुअंतर्बहिश्चपाणयः पादाश्चास्यसंतीतिसर्वतः पाणिपादं एवंसर्वतोऽक्षीणिसिरांसिमुखानिचयस्यतत्सर्वतोक्षिशिरोमुखंस-
र्वतः श्रुतिमत् श्रवणवत् लोकेसर्वंआवृत्यव्याप्यतिष्ठति तथास्वप्नदृक्तैजसोवासनामयेनैवपाणिपादादिनास्वाप्नंप्रपंचमनुभवतितस्यचजाग्रत्का-

ज्ञेयंयत्तत्प्रवक्ष्यामियज्ज्ञात्वामृतमश्नुते अनादिमत्परंब्रह्मनसत्तन्नासदुच्यते १३ सर्वतःपाणिपादंतत्सर्वतोऽक्षि
शिरोमुखं सर्वतःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठति १४

लेउपाधिभूतंपिंडगतमेवपाणिपादादिकम् तदेवंस्थूलप्रपंचानुभवः संस्कारा
धीनद्वारावासनामयस्यप्रपंचस्यकारणंवासनामयश्चस्थूलप्रपंचस्यकारणमितिबीजांकुरन्यायेनानयोरन्योन्यस्मिन्नन्योन्यसद्भावोऽन्योन्यकारण-
त्वंचास्तीति एवंसकलप्राणिधीवासनोपरक्ताज्ञानोपाधिकंचैतन्यंसकलप्राणिधीवासनामयंसमष्टिसूक्ष्मप्रपंचमेवभासयति अस्यचोपाधिभूतंब्र
ह्मांडगतसकलप्राणिपाणिपादादिकमेव एवंचपूर्ववत्स्थूलसूक्ष्मयोरपिसमष्टिप्रपंचयोरन्योन्यंबीजांकुरन्यायेनकार्यकारणभावमन्योन्यस्यान्यो
न्यस्मिन्सद्भावंचाभिप्रेत्योक्तंभगवताभाष्यकारेणसकलप्राणिकरणोपाधिद्वारेणाज्ञेयब्रह्मणोऽस्तित्वंप्रतिपाद्यतइति कार्यद्वाराकरणास्तित्वासि-
द्धौचकारणभावोऽप्यपोद्यते अनादिमत्परंब्रह्मनसतन्नासदुच्यतइतिनतुप्रक्षालनाद्धिपंकस्यदूरादस्पर्शनंवरमितिन्यायेनव्यर्थस्तर्हिकारणोप
न्यासइतिचेतनतंविनाशक्यब्रह्माधिगमायोगात् शाखाचंद्रन्यायेनहिसगुणंनिर्गुणस्यवस्तुनोज्ञापकंयथोक्तंभाष्ये उपाधिकृतंमिथ्यारूपमप्यस्ति
त्वाधिगमायज्ञेयधर्मवत्परिकल्प्योच्यते सर्वतःपाणिपादमित्यादितथाहिसंप्रदायविदांवचनमध्यारोपापवादाभ्यांनिष्प्रपंचंप्रपंच्यतइति १४ ६९

ननुयूपाहवनीयादिवदलौकिकमपिब्रह्मकार्यकारणप्रपंचविशिष्टंविचित्रमेवसर्वतःपाणिपादंतदित्यादिनाशास्त्रेणकार्यशेषतयासमर्प्यतेनच्चवा-
च्यंउपासनापरंशास्त्रंनब्रह्मणोवैचित्र्यंप्रतिपादयितुमीष्टे देवताधिकरणन्यायेनदेवताविग्रहादिवत्तद्वैचित्र्यस्यापिअवांतरतात्पर्यविषयतयासि
द्धेः नच्चदेवताविग्रहादेर्व्यावहारिकमेवसत्वन्नपारमार्थिकंब्रह्मज्ञानेनतस्यबाधादितिवाच्यम् सत्ताद्वैविध्यस्याप्रसिद्धेः तस्मात्सर्वतःपाणिपादत्वा
दिकंब्रह्मणोवास्तवमेवेतिनापवादमर्हतीत्याशंक्याह सर्वेंद्रियेति सर्वाणिअंतराणिबाह्यानिचइंद्रियाणिमनोबुद्ध्यहंकारचित्ताख्यानि श्रोत्रादीनि
चेतिग्राहकमात्रंसंगृहीतंगुणाश्चविषयाः तेनग्राह्यमात्रंगृह्यते समस्तग्राह्यग्राहकवदाभासतेनतुग्राह्यग्राहकस्वरूपंविचित्रम् यथाजलसूर्योऽध
स्थइवकंपतइवावभासतेनतुवस्तुतोऽधस्थः कंपतेवातद्वत्आत्मनोग्राह्यग्राहकाकारत्वंमिथ्येत्यर्थः कुतएतत् यतःसर्वेंद्रियविवर्जितम् इंद्रियेतिगुणा
नामप्युपलक्षणंनहिब्रह्मणिकिंचित्ग्राह्यंरूपादिग्राहकंवामनआदिवर्तते अशब्दमस्पर्शमरूपमव्ययं अप्राणोह्यमनाःशुभ्रः यत्तदद्रेश्यमग्राह्य-
मचक्षुःश्रोत्रंतदपाणिपादमित्यादिशास्त्रात् तस्मान्नप्रपंचविशिष्टंविचित्रंब्रह्म कथंतर्हिसर्वंब्रह्मेतिशास्त्रमित्याशंक्याह असक्तंसर्वभृच्चैवेति
अत्रसर्वभृदितिसर्वाधारत्वोक्त्यासर्वस्मात्पृथग्भूतामित्यक्तंसर्वस्यब्रह्मणासहाधाराधेयभावोऽपिकिंघटरूपयोरिवसमवायसंबंधेनकुंडबदरयो-

सर्वेंद्रियगुणाभासंसर्वेंद्रियविवर्जितम् असक्तंसर्वभृच्चैवनिर्गुणंगुणभोक्तृच १५ ६

रिवसंयोगसंबधेनवेत्याशंक्यसंबंधंविनैवसर्वभृत्त्वंब्रह्मणइत्याह असक्तमिति ननुव्याहतमेतत्असक्तमितिचसर्वभृदितिचेति नैषदोषः नह्यूषर
भूमिर्मरीचिकोदकेनसंसक्ता अथचतदाधारभूतापिभवतितद्वदेतद्भविष्यति नन्वेवंप्रपंचस्यामिथ्यात्वमापतति तथाचकर्मोपास्तिविधयउपरुध्ये
रन् नब्रह्मात्मैकत्वज्ञानेनयावत्द्वैतंनबाध्यतेतावत्क्रियाकारकादिसर्वव्यवहारस्यसत्यत्वोपगमात् प्राणावैसत्यंतेषामेषसत्यमितिश्रुत्यापिप्राणोपल
क्षितस्यकृत्स्नस्यप्रपंचस्यव्यावहारिकंसत्यत्वमुक्त्वाततोप्याधिकंपरमार्थसत्यंब्रह्मदर्शितंसत्यत्वंचाबाध्यत्वंतत्कोचित्कालेप्राणानामस्तिब्रह्मणस्तु
सार्वदिकमितियथाभूपतीनांभूपतिरित्यक्तेऐश्वर्याल्पत्वभूयस्त्वकृतोभेदः स्पष्टएवमिहापिद्रष्टव्यंतस्माद्ब्रह्मणःसविशेषत्वंनिष्कलात्मबोधात्प्रा
गेवनतूर्ध्वमितिअवश्यंतत्वज्ञानेनबाधितुंशक्यमित्यनुपाधिकंब्रह्मनकेनचित्कार्यशेषतांनेतुंशक्यंतदधिगमेक्रियाकारकादिद्वैतोपमर्दादुपास्योपा
सकोपासनाभेदस्यबाधितत्वात् तस्माद्युक्तमुक्तंउपाधिकृतंरूपंमिथ्येति किंच निर्गुणंगुणभोक्तृचग्राह्यग्राहकसंबंधशून्यमपिग्राहकेषुबुद्ध्या
दिषुग्राह्यसंबंधात्सुखाद्याकारेणपरिणतेषुसत्सुकेवलंतत्प्रकाशमात्रेणभोक्तृत्वमप्यस्यचिदाभासरूपस्योपपद्यते प्रतिबिंबोपाधिकंचलनादि
कं तथाचश्रुतिः ध्यायतीवलेलायतीवेति बुद्धौध्यायंत्यांतत्रप्रविष्टश्चिदाभासोध्यायतीवविषयान् बुद्धौलेलायत्यांविषयप्रदेशंगच्छंत्यांसोपिलेला

यतीवनतुस्वतोध्यायतिलेलायतीवेतिश्रुतिः प्रतिपादयति एतेनअपाणिपादोजवनोगृहीतापश्यत्यचक्षुः सशृणोत्यकर्णइत्यपिब्रह्मणउपाधिगुणानु गुण्यभजनशक्तिमत्त्वेनैवव्याख्येयम् अपादोऽपिपादेजववतिजववान्भवतीतिअंधोमणिमविंददित्यादिवचनजातंचात्रानुसंधेयम् तस्माद्युक्तमुक्तं- निर्गुणंगुणभोक्तृचेति भाष्येतुनिर्गुणंसत्वादिगुणरहितमपितेषांगुणानांसुखदुःखमोहात्मकत्वेनपरिणतानांभोक्तृत्वंचउपलब्धृचेतिव्याख्यातं १५ नन्वसक्तमसंबद्धंचेत्कथमुपलब्धंस्यादित्याशंक्याह बहिरिति भूतानांप्राणिनांएकादशेंद्रियाणिस्थूलभूतानिचकेवलविकारत्वेनव्यवहित- त्वात्बहिरित्युच्यते महदहंकारपंचतन्मात्राव्यक्तानिप्रकृतिरूपत्वेनसान्निहितत्वादंतरित्युच्यतेचराचरमितितूभयनिष्कृष्टः चरान्चरोपाध्युपलक्षि ताः अवधिभूताः पुरुषाःचरमचरंचेत्यनेनउच्यते तत्रचराचरंज्ञेयमितिसामानाधिकरण्यात्पुरुषाणांज्ञेयब्रह्मभावउक्तः बहिरंतश्चज्ञेयमिति- षोडशसुविकारेष्वष्टासुप्रकृतिषुचज्ञेयस्यसंबंधउक्तः सचसंबंधोयादृशोयक्षस्तादृशोबलिरितिन्यायेनअध्यस्तप्रकृतिविकृतिनिरूपितत्वेनाध्य- स्तएव एवंचपुरुषस्यउपलब्धिमात्रशरीरस्यगुणैःसहअध्यासिकसंबंधसत्वात्गुणोपलब्धृत्वंयुज्यते यथाप्रकाशमात्रस्वरूपस्यरवेःप्रकाश्यसं

बहिरंतश्चभूतानामचरंचरमेवच सूक्ष्मत्वात्तदविज्ञेयंदूरस्थंचांतिकेचतत् १६

बंधापेक्षंप्रकाशयितृत्वंतद्वदित्यर्थः ननुनित्यापरोक्षःपुरुषःप्रकृतिविकारसंबद्धश्चतर्हिकुतोनसर्वैर्गृह्यतइत्याशंक्याह सूक्ष्मत्वाद्दुर्लक्ष्यत्वा त्तत्ज्ञेयंअविज्ञेयंदुर्विज्ञेयम् यथाजपाकुसुमोपहितस्यस्फटिकस्यशौक्ल्यंसान्निहितमपिरूपांतरविक्षेपेणतिरोहितंसन्नगृह्यते एवंनित्यापरोक्ष मपिअसंगंब्रह्मोपाध्युपधानाद्विविक्ततयानगृहीतुंशक्यंकिंतुऔपाधिकधर्मार्पितमेवगृह्यतेमूढैः विद्वद्भिस्तूपाधिप्रविलापनेनसुग्रहमित्याशयः एतदेवाहदूरस्थंचांतिकेचतदिति यथामूढोजलेसूर्यबिंबंसूर्याद्विदूरस्थंमन्यतेविद्वांस्तूपाधिप्रतिहतनयनरश्मीनांसुपर्युत्प्लुत्यगतानांबिंब ग्राहित्वंस्पष्टंबिंबस्याधःस्थत्वग्रहणंतुपूर्वप्रवृत्ताधोमुखवृत्तिसंस्कारापेक्षंइतिजानन्बिंबदेशेएवप्रतिबिंबंपश्यतिबिंबेएवजलस्थत्वमध्यस्य तेनतुजलेप्रतिबिंबइति उपाधौधर्म्यध्यासकल्पनातःबिंबस्योपाधिसंसर्गमात्राध्यासकल्पनेलाघवात् एवंबिंबभूतंब्रह्मप्रतिबिंबभूताज्जी वात्मूढानांविप्रकृष्टम् विदुषांतुअत्यंतसान्निकृष्टमिति १६

श्रीकृष्ण

एतदेवोपपादयत्यर्द्धेन अविभक्तंचेति एकएवतुभूतात्माभूतेभूतेव्यवस्थितः एकधाबहुधाचैवदृश्यतेजलचंद्रवदितिश्रुतेः मतेषुकार्यकारणसंघाताप
न्नेषुजलपात्रेषुचंद्रस्येवब्रह्मणःप्रतिबिंबाजीवाः तेएवोक्तरीत्याबिंबादनन्याइतितद्रूपेणभूतेषुअविभक्तंचविभागमप्राप्तमपिज्ञेयवस्तमूढदृष्ट्याविभ-
क्तमिवदूरदेशस्थमिवचातविभिन्नमिवव्यवस्थितं एवंतर्हिचंद्रादुदपात्राणामिवभूतानांपृथक्सत्वापत्तिरित्याशंक्याह भूतभर्तृचेति अधिष्ठानत्वेनसर्वा-
णिभूतानिधारयतीतितत्तत्तेषांपृथक्सत्तास्तिरज्जुतइवतदध्यस्तानांसर्पदंडधारादीनामित्यर्थः एतदेवाहग्रसिष्णुप्रभविष्णुच यथारज्जुस्तत्वज्ञान-
दशायांसर्पादीन्ग्रसति अज्ञानदशायांचतानेवप्रसूतेतद्वत् ज्ञातंब्रह्मसर्वभूतग्रसिष्णुग्रसनशीलंअज्ञातंचसर्वभूतानांप्रभविष्णुउत्पादनशीलम् १७
एवंज्ञेयस्यतटस्थलक्षणमुक्तास्वरूपलक्षणमाह ज्योतिषांबाह्यानामादित्यादीनामांतराणांचबुद्ध्यादीनामितरावभासकानामपितत्ज्ञेयंब्रह्मज्यो-
तिरवभासकत्वोपपत्तेः तथाचश्रुतयः येनसूर्यस्तपतितेजसेद्धः तस्यभासासर्वमिदंविभातीत्याद्याः वक्ष्यतिचयदादित्यगतंतेजइत्यादि तमसोऽज्ञा

अविभक्तंचभूतेषुविभक्तमिवचस्थितम् भूतभर्तृचतज्ज्ञेयंग्रसिष्णुप्रभविष्णुच १७ ज्योतिषामपित
ज्ज्योतिस्तमसःपरमुच्यते ज्ञानंज्ञेयंज्ञानगम्यंहृदिसर्वस्यधिष्ठितम् १८ इतिक्षेत्रंतथाज्ञानंज्ञेयंचोक्तंस-
मासतः मद्भक्तएतद्विज्ञायमद्भावायोपपद्यते १९

नात्भूतग्रासप्रसवहेतोःपरंदूरस्थंतदुच्यते ननुयथाचांद्रस्यज्योतिषोवभा-
सकंतत्सजातीयंसौरंज्योतिरितिज्योतिःशास्त्रेप्रसिद्धंएवंसौरादिज्योतिषामप्यवभासकंकिंचित्तत्सजातीयंज्योतिरलौकिकंस्यादित्याशंक्याह ज्ञानमि
ति केवलज्ञप्तिमात्रशरीरंयत्ज्योतिर्नतुभौतिकंतदेवज्ञेयंवस्तुआवृतत्वात्ज्ञानेनप्राप्तमिष्टतमंकुतस्तर्हितज्ज्ञानमतआह ज्ञानगम्यमिति यतस्तत्ज्ञा-
नेनअमानित्वादिनाज्ञानसाधनेनगम्यंप्राप्यम् किंतर्हिग्रामांतरवत्देशव्यवहितंवाबाल्याद्यौवनमिवअवस्थांतरवत्कालव्यवहितंवातत्प्राप्यमस्तीत्य-
तआह हृदिसर्वस्याधिष्ठितमिति स्वात्मभूतमेवतदंतर्दृष्टीनांसम्यक्प्रकाशनइत्यर्थः १८ उक्तमर्थजातमुपसंहरति इतीति क्षेत्रंमहाभूतादिधृत्यंतं
ज्ञानंज्ञानसाधनंअमानित्वादितत्वज्ञानार्थदर्शनांतम् ज्ञेयंअनादिमत्परमित्यादिधिष्ठितमित्यंतंश्रुतिभ्यःस्मृतिभ्यश्चसमासतः संक्षेपतउक्तंमद्भक्तः
एतत्त्रयंविज्ञायमद्भावायब्रह्मभावायोपपद्यतेयुक्तोभवतिभक्त्यैवप्राप्यंब्रह्मयत्प्राप्यब्रह्मैवभवति तथाचश्रुतिः यस्यदेवेपराभक्तिर्यथादेवेतथागु-
रौतस्यैतेकथिताह्यर्थाः प्रकाशंतेमहात्मनइतिवेदब्रह्मैवभवतीतिवा १९ ५ ५ ५ ५ ५

एवंक्षेत्रंशरीराख्यमव्यक्तमुक्तम् तत्प्रकाराश्चमहदाद्यास्त्रयोविंशतिः तद्विकाराइच्छादयोज्ञानाज्ञानशब्दिताअमानित्वमानित्वादयः पुरुषश्चउक्तः इदानींक्षेत्रक्षेत्रज्ञयोर्मध्येयस्माद्यज्जायतेतच्चक्षेत्रज्ञस्यप्रभावश्चेतिद्वयंवक्तव्यम् तत्राद्यंविवृणोतित्रिभिः प्रकृतिमितिसप्तमाऽध्यायेऽपृथायाप्रकृतिरपराउक्तासातत्रप्रकृतिः यातुजीवभूतापराप्रकृतिरुक्तासात्रपुरुषशब्देनोच्यतेएतौहिसंपृक्तौसंसारंजनयतः वियोगश्चतयोर्मोक्षः तत्रनौउभाव-प्यनादीविद्धितयोरादिमत्त्वेसंसारस्याकस्मिकत्वापातात्कृतहानाकृताभ्यागमप्रसंगश्चेत्यन्यत्रविस्तरः विकारान्इच्छादीन्गुणान्बुद्धींद्रियादींश्चप्रकृतिसंभवान्विद्धि २० उभयोरपिसंसारंप्रतिकारणत्वेद्वारमाह कार्येति कार्यंशरीरंतदारंभकाणिभूतानिविषयाश्च कारणंत्रयोदशेंद्रियाणितदाश्रिताश्चसुखदुःखमोहात्मकागुणाश्चकरणमितिपाठेपिसएवार्थः एतयोः कार्यकारणयोः कर्तृत्वेनिमित्तेसतिकर्तृत्वेनेत्यर्थः हेतुः संसारस्यकारणं प्रकृतिर्भवतियथापुरुषः सुखदुःखानांभोक्तृत्वेनसंसारस्यहेतुरिति यदिहिकार्यकारणसुखदुःखस्वरूपेहेतुफलात्मनाप्रकृतिर्नपरिणमेततदा

प्रकृतिंपुरुषंचैवविद्ध्यनादीउभावपि विकारांश्चगुणांश्चैवविद्धिप्रकृतिसंभवान् २० कार्यकारणकर्तृत्वेहेतुः प्रकृतिरुच्यते पुरुषःसुखदुःखानाभोक्तृत्वेहेतुरुच्यते २१

पुरुषः किमुपलभेत् अनुपलब्धावाकथंसंसारी स्यात् अनुपलब्धृकाप्रकृतिः कुत्रोपयुज्येत तस्मादुपलभ्योपलब्धृसंयोगः संसारकारणमिति यथाभाष्यंव्याख्यानं यद्वापुरुषस्यकार्यत्वेकारणत्वे कर्तृत्वेनप्रकृतिरिवपुरुषतादात्म्यंप्राप्ताहेतुर्भवति वन्हितादात्म्यंप्राप्तंलोहंवह्नेश्चतुष्कोणत्वादाविवहेतुर्भवति तथाप्रकृतेः सुखदुःखभोक्तृत्वेस्वच्छायाप्रदानेपुरुषः कारणम् वह्निरिवलोहस्यस्वच्छायाप्रदानेनदग्धृत्वे तथाहिकार्यत्वादयः प्राकृतदेहेंद्रियबुद्धिधर्माः संतश्चिदात्मन्यारोप्यंतेगौरोहंमनुष्यपुत्रोहंस्वंज्ञोहंकरोम्यहमकार्षमहमिति तथाचिच्छायापन्नाबुद्धिः चेतयाम्यहंसुखदुःखादीनुपलभेइतिमन्यते सोऽयंप्रकृतिपुरुषयोरन्योन्यधर्माध्यासः संसारस्यकारणमित्युपपादितंभवति सांख्याभिमतंपुरुषस्यभोक्तृत्वमपिनिरस्तंभवति अन्यथाप्रकृतिः कर्त्रीपुरुषोभोक्तेतिकर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यमापद्येत नचभोक्तुः पुरुषस्यनिर्विकारत्वमपिवक्तुंशक्यमित्यन्यत्रविस्तरः द्वंद्वांतेश्रूयमाणंपदंप्रत्येकंअभिसंबध्यतइतित्वप्रत्ययस्यपूर्वाभ्यामभिसंबंधेकार्यत्वंकारणत्वंकर्तृत्वंचेतिविग्रहः द्वंद्वैकवद्भावश्चप्रातिपदिकार्थलिंगपरिमाणवचनमात्रेप्रथमेत्यादिवत् २१ ७९

ननुयथाबोढ्टंकर्तृत्वंपुंसिआरोप्यत एवंपौरुषंभोक्तृत्वंबुद्धावस्त्वित्येतंभ्रमंवारयति पुरुषइति हिप्रसिद्धंप्रकृतिस्थः देहेंद्रियमनःसंघातमध्यारूढस्तत्ता-
दात्म्यंगः तइत्यर्थः प्रकृतिजान्सुखदुःखमोहात्मकान्भुंक्तेउपलभते यदातुसुप्तिसमाधिमूर्छादौप्रकृतिस्थत्वंनास्तितदानसुखादीनुपलभते
तेनउपाधिगतान्येवसुखादीनितदभावेनप्रतीयंतइतिसिद्धंश्रुतिरपिआत्मेंद्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणइतिइंद्रियमनोयोगादेवात्मनिभोक्तृत्वंदर्श
यंतीशुद्धस्यकेवलस्यभोक्तृत्वंनास्तीतिदर्शयति कुतस्तर्ह्यभोक्तुरप्यस्यप्राकृतोबंधइति तत्राह कारणमितिअस्यपुरुषस्यसदसद्योनिजन्मसुतत्रसद्यो
निजन्मानोदेवाः असद्योनिजन्मानस्तिर्यंचस्थावराश्च सदसद्योनिजन्मानोमनुष्याः एतेषुत्रिविधपिजन्मसुप्राप्येषुअस्यपुंसःगुणसंगः सुखादिषु
अभिषंगः कारणंहेतुः तथाहिसात्विकादेवाभवंतिराजसामनुष्यास्तामसाश्चपशवः तेषांतत्तद्योनिप्राप्तौतत्तद्गुणप्राधान्यमेवकारणम्वक्ष्यतिचऊ-

पुरुषःप्रकृतिस्थोहिभुंक्तेप्रकृतिजान्गुणान् कारणंगुणसंगोस्यसदसद्योनिजन्मसु २२

र्ध्वंगच्छंतिसत्वस्थाइत्यादियद्वाप्रकृतिस्थोविद्वानविद्वान्वागुणान्भुंक्तेपश्वादिभिश्चाविशेषादितिन्यायात् तत्किंविद्वानिवाविद्वानपिकुतोनमुच्य-
तेअविद्वानिवविद्वान्वाकुतोनबध्यतेइत्याशंक्याहकारणमितिगुणेषुदेहेंद्रियविषयेषुसंगः अहमिदंममेदमित्यभिनिवेशः सएवजन्मकारणंविदुषांतुत
दभावान्नजन्म समानेपिदेहसंबंधेयदायक्षोदेहाभिमानं धत्तेतदासएवदेहपीडयापीड्यतेनतुदेहपतिर्जीवः यदातुअयंदेहाभिमानंधत्तेतदाने
नरः इतिप्रसिद्धंसंगस्यबंधकत्वंनतुसान्निध्यमात्रंबंधकंअतोविद्वदविदुषोः समानेपिदेहसंबंधेसंगतदभावकृतोमहाविशेषइतिभावः २२

सचयोयत्स्वभावश्चेतिक्षेत्रज्ञतत्स्वभावौव्याख्येयत्वेनप्रतिज्ञातौतत्रक्षेत्रज्ञः प्रागेववर्णितः तस्येदानींप्रभावमाह उपद्रष्टेति तत्रपूर्वंगुणसंगोजन्मकारण मित्युक्तंतत्रसंगश्चतुर्विधः पुरुषापलापेनगुणमात्रप्राधान्येनवातमंतर्भाव्यगुणप्राधान्येनवागुणानांसमप्राधान्येनवाअप्राधान्येनवेति तत्राद्येदेहेंद्रियम नआदिरूपंगुणसंघातमेवआत्मत्वेनपश्यन्भोक्ताभवतियथाचार्वाकादिः द्वितीयेगुणानांप्राधान्यादात्मनिवास्तवकर्तृत्वाद्यभिमानेनकर्मफलानांभर्त्ता- संचेताभवति यथातार्किकादिः तृतीयेगुणानांसमप्रधान्येन गुणगतमपिभोक्तृत्वमसंगेप्यात्मनिवस्त्रेभल्लातकांकवदनुमन्यतेयथासांख्यः चतुर्थेस- र्वथापिगुणधर्माणामात्मनिसंक्रममपश्यन्नुदासीनबोधरूपत्वेनागुणप्रचारदर्शीउपद्रष्टाभवति यथास्माकंसाक्षीएतेषुचतुर्थपिगुणसंगिषुउपद्रष्टा उत्तमः अनुमंतामध्यमः भर्ताअधमः भोक्ताऽधमाधमः सएवगुणान्वशीकृत्ययदाक्रीडतितदामहेश्वरइत्युच्यते यःसर्गस्थित्यंतकर्ताप्रभुर्जग- दंतर्यामीसएवगुणानपहायस्थितःपरमात्मेतिचाप्युक्तोभवति यद्यपिउपद्रष्टापिगुणानपहायतत्साक्षित्वेनस्थितोभवतितथापितस्यैकसंघा- तोपहितस्यसंघातांतरप्रचारदर्शित्वाभावादयंसकलसंघातप्रचारदर्शीतिसत्वोत्कृष्टत्वात्परमोऽयमात्मा तमेनंवक्ष्यतिउत्तमःपुरुषस्त्वन्यः परमात्मे- त्युदाहृतः योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरइति एतावपिगुणसंगिनोएवमेकएवदेहेस्मिन्विद्यमानः परोगुणातीतः स्वात्मनिगुणान्प्रविलाप्यस्थितो

**उपद्रष्टानुमंताचभर्ताभोक्तामहेश्वरः परमात्मेतिचाप्युक्तोदेहेऽस्मिन्पुरुषःपरः २३ यएवंवेत्तिपुरुषंप्रकृतिंचगुणैःसह**
**सर्वथावर्तमानोऽपिनसभूयोऽभिजायते २४ ध्यानेनात्मनिपश्यंतिकेचिदात्मानमात्मना अन्येसांख्येनयोगेनकर्मयोगेनचापरे २५**

ऽखंडैकरसआत्मागुणसंगेनषड्विधोभवतिअयमेवास्यप्रभावः तत्रअनुमंतृभर्तृभोक्तृभिस्त्रिभीरूपैरयंबध्यते उपद्रष्टृमहेश्वरपरमात्मरूपैस्तुनित्यमुक्त एकएवे- तिज्ञेयं अत्रभाष्याऽर्थोऽप्यनुसंधेयोविस्तरभयात्तुनप्रदर्शितः २३ एवंयथोक्तलक्षणात्मज्ञानेफलमाह यएवमिति गुणैःस्वविकारैः सर्वथाविहितेनानिषि- द्धेनवाकर्मणावर्तमानोऽपिसभूयोनजायतेपुनर्जन्मनलभतेमुक्तोभवतीत्यर्थः २४ एवंविधात्मदर्शनेऽधिकारिभेदेनउपायविकल्पानाह ध्यानेनेति अत्रये आत्मानंविविदिषंतितेनिष्कामकर्मणापरमेश्वरंआराधयंति तेकर्मयोगिनः तएवोत्पन्नविविदिषाः वेदांतश्रवणेप्रवर्तंतेततः प्रमाणगतासंभावनानिवृ त्तौसत्यांतस्यैवार्थस्यमननेप्रवर्तंते प्रमेयगतासंभावनानिवृत्त्यर्थंतेसांख्याः ततः प्रमाणप्रमेयगतासंभावनयोर्निवृत्त्यर्थंनेतरेअनात्मनिदेहादावात्मबु- द्धिरूपायाविपरीतभावनायानिवृत्त्यर्थंनिदिध्यासनंविजातीयप्रत्ययतिरस्कारपूर्वकसजातीयप्रत्ययप्रवाहीकरणलक्षणंकर्तुंप्रवर्तंतेततस्तत्परिपाकेआत्मनिबुद्धिवृत्तोआत्मा नंपरमेश्वरंपश्यंतितेध्यायिनः तत्रयेकर्मसांख्ययोर्निष्णातास्तेध्यानेनात्मनिदेहेआत्मानंपरमेश्वरंआत्मनाबुध्यापश्यंति अन्येकृतकर्माणः सांख्येनयोगेनविचारात्म- केनयोगेनध्यानद्वारापश्यंति अन्येपुनः कर्मयोगेनैवपूर्वोक्तलक्षणेनसांख्यध्यानद्वारापश्यंतीतिसाधनत्रयस्यसमुच्चयोनतुविकल्पः २५ ६७

पक्षांतरमाह अन्येत्विति येन्येऊहापोहकौशलहीनाः तुशब्देनपूर्वेभ्योविलक्षणाएवपूर्वोक्तंप्रकारंअजानंतः अन्येभ्यआचार्येभ्यः श्रुत्वाआत्मनोनिर्विशेषब्रह्मचैतन्यरूप-
त्वंतदुपासनामार्गंचाधिगत्यउपासते यथोक्तप्रकारेणध्यायंति तेपिचमृत्युंसंसारंतरंत्येव अपिशब्दात्पूर्वश्लोकोक्तास्तरंतीत्यत्रकिमाश्चर्यंगम्य
तेएवशब्दात्तेषांमुख्यक्रमाभावेऽपितरणेसंशयोनास्ति यतस्तेश्रुतिपरायणाः श्रुतिःश्रवणंतदेवपरंअयनंमोक्षसाधनंयेषांतेतथा ध्यानेप्रवृत्त्यतिशयान्न
तेषांचित्तशुद्ध्यर्थकर्मापेक्षावेदोक्ततत्वेदृढनिश्चयाच्चासंभावनानिवृत्त्यर्थंश्रवणमननापेक्षेतिभावः अयंचब्रह्मसाक्षात्कारः संवादिभ्रमरूपइतिकेचित्प्र
मारूपइत्यन्ये तथाहि यथाकश्चिन्मणिप्रभांमणिबुद्ध्यापश्यन्भ्रांतएवतथापितद्ग्रहणकालेमणिंलभतेऽतः ससंवादिभ्रमः एवंत्वंपदार्थंतत्पदार्थमणि
प्रभाभूतंतत्पदार्थबुध्याभावयन्व्यवहारतोभ्रांतएवतथापितत्साक्षात्कारकालेतदन्यस्यतत्पदार्थस्यसाक्षात्कारोपिसंवादिभ्रमन्यायेनजायतइति त
थाचवसिष्ठः असत्येसत्यतासाधोशाश्वतीपरिदृश्यते शून्येनध्यानयोगेनशाश्वतंप्राप्यतेपदमिति व्यवहारतोनिर्विशेषरूपत्वेनअसत्येआत्मनितत्रनि

अन्येत्वेवमजानंतःश्रुत्वान्येभ्यउपासते तेपिचातितरंत्येवमृत्युंश्रुतिपरायणाः २६ यावत्संजायतेकिंचि-
त्सत्वंस्थावरजंगमम् क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धिभरतर्षभ २७ समंसर्वेषुभूतेषुतिष्ठंतंपरमेश्वरम् विन-
श्यत्स्वविनश्यंतंयःपश्यतिसपश्यति २८

विशेषत्वभावनंशून्योनिर्विषयोऽयंध्यानयोगोयोषितिअग्निध्यानवत् तथापितेनशाश्व-
तीसत्यताप्राप्यादृश्यतइतिवसिष्ठवाक्यार्थः कल्पद्रुमाचार्यास्तु वेदांतवाक्यजध्यानभावनाजाऽपरोक्षधीः मूलप्रमाणदार्ढ्येननभ्रमत्वंप्रपद्यतेइति
प्राहुः २६ पूर्वकार्यकारणकर्तृत्वेइत्यत्रचिदचितोः पुंप्रकृत्योरन्योन्यधर्माध्यासउक्तस्तस्यैवगुणसंगरूपस्यकारणंगुणसंगोस्येतिनानाजन्महेतुत्वंचो
क्तंतद्विशदयति यावदिति सत्वंजीवरूपम् गुणसंगोऽत्ररूपाद्यासक्तिर्नकिंतुक्षेत्रक्षेत्रज्ञयोः संयोगोऽन्योन्यात्मकताध्यासलक्षणोबोध्यः शेषंस्प
ष्टम् २७ तन्नाशोपायमाह सममिति सममपरिणामिनंकूटस्थंनित्यंसर्वेषुभूतेषुदेहाद्याकारेणपरिणतेषुतिष्ठंतंएतेनदेहएवतदधिगमस्थानमि
त्युक्तंपरमेश्वरंअंतर्यामिणंसर्गस्थित्यंतकर्तारंअतएवअंतर्मुखदृष्ट्याविनश्यत्सुतेषुरज्जूरगादिवत्कल्पितत्वात्अदर्शनंगच्छत्सुविभुत्वादा
त्मत्वान्नित्यदृग्रूपत्वाच्चअविनश्यंतंसर्वास्वप्यवस्थासुअदर्शनमगच्छंतंयःपश्यतिसएवपश्यतिअन्येंधाइत्यर्थः २८ ९ ९
९ ९ ९ ९ ९ ९ ९ ९ ९

दर्शनफलमाह समभिति स्वदेहे इवसर्वत्रदेहमात्रेसमवस्थितंसम्यगवस्थितंईश्वरंसमंसमतयापश्यन्हियतः ससर्वाभेददर्शीआत्मनादेहादि-
नाआत्मानंईश्वरंनहिनस्तिनानायोनिसंकटेषुपातनेननपीडयति किंतु ततः परांगतिंमोक्षंयाति यद्वा ऐकात्म्यदर्शित्वात्स्वात्मानमिवान्यमपिनहि-
नस्तिसर्वत्रदयालुर्भवतीतिभावः ततश्चपरांगतिंयाति २९ ननुविषमस्वभावानिभूतानिकःसमबुद्ध्यापश्यत्यग्निमिवशीतबुद्ध्येत्याशंक्याह प्रकृ-
त्यैवेति सर्वशः सर्वप्रकारेणकर्माणिवाङ्मनःकायैरारब्धानिप्रकृत्यैवक्रियमाणानीतियःपश्यतितथाआत्मानंचाकर्तारंयःपश्यतिपूर्वोक्तरीत्यासएव
सर्वत्रसमंपश्यतीतिपूर्वेणान्वयः ३० ननुकथंप्रकृतेरेवकर्तृत्वंनत्वात्मनइत्याशंक्याह यदेति भूतानांवियदादीनांजरायुजादीनांचपृथक्भावंनाना-
भावेनावस्थानंपरिदृश्यमानमिदंयदाएकस्थंएकस्मिन्नात्मनिस्थितंरज्ज्वांसर्पादिवत्कनकेवाकुंडलादिवत्विलीनंशास्त्राचार्योपदेशमनुपश्यतिततए
वएकस्मात्विस्तारंचभूतपृथग्भावस्यव्युत्थानावस्थामनुस्वप्नादिवत्पश्यतितदाब्रह्मसंपद्यते ब्रह्मैवभवति अयंभावः कर्तृत्वंहिक्रियापरिस्पंदःसचप
रिच्छिन्नस्यपृथग्भूतस्यप्राकृतस्यबुद्ध्यादेरेवसंभवतिनतुव्यापकस्यसर्वभूतपृथग्भावग्रसिष्णोरात्मनइति ३१ नन्वात्मनोविभुत्वेनरूपेणकर्तृत्वंमा-

समंपश्यन्हिसर्वत्रसमवस्थितमीश्वरं नहिनस्त्यात्मनात्मानंततोयातिपरांगतिम् २९ प्रकृत्यैवचकर्माणिक्रियमाणानि
सर्वतः यःपश्यतितथात्मानमकर्तारंसपश्यति ३० यदाभूतपृथग्भावमेकस्थमनुपश्यति ततएवचविस्तारंब्रह्मसंपद्य-
तेतदा ३१ अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः शरीरस्थोऽपिकौंतेयनकरोतिनलिप्यते ३२

स्वीकारिदेहाद्यवच्छिन्नेनतुरूपे-
णतद्वक्तव्यंअन्यथानुभवविरोधादित्याशंक्याह अनादित्वादिति अयंसर्वेषांप्राणिनांनित्यापरोक्षः परमात्मादेहादिभ्योऽपरमेभ्यआत्मभ्योन्यःकोश-
पंचकातीतःआत्मापरमात्माअव्ययःनव्येतिपरिच्छिद्यतेदेशतःकालतोवस्तुतश्चेत्यव्ययः अव्ययत्वेहेतुः अनादित्वादिति यद्धिआदिमदाकाशादितद्धि-
तिनत्वयंव्येतिअनादित्वात् नन्वनादिभावस्यानंत्यनियमेनात्मनःकालतःपरिच्छेदोमास्तुतथादेशतःपरिच्छिन्नस्यनाशावश्यंभावादनादित्वायोगाच्चदेश
तोपिपरिच्छेदोब्रह्मणोमास्तुननुपरमाणुवद्भविष्यतीतिचेन्नदशदिगवच्छेद्यप्रदेशभेदवतोद्रव्यस्यनिरवयवरूपाणुत्वासिद्धेः नहिपरमाणोःपूर्वदिगवच्छि
न्नोभागःपश्चिमयाप्यवच्छेत्तुंशक्यते अनुभवविरोधात् देशतःपरिच्छेदाभावादेवसजातीयविजातीयवस्तुसद्भावकृतःपरिच्छेदोऽपिमास्तु तथापिवि-
चित्रशक्तियुक्तस्यअभिनवप्रपंचरचनापटीयसःपरस्यसर्वेश्वरत्वसर्वज्ञत्वादिगुणयुक्तस्यस्वगतभेदोवश्यंभावीस्वशक्तिमायावच्छिन्नेनरूपेणजगत्कर्तृत्वंदेहाद्य-
वच्छेदेनाग्निहोत्रादिकर्तृत्वंचावश्यंवक्तव्यमित्याशंक्याह निर्गुणत्वादिति योहिगुणवानाकाशादिःससंयोगंविभागंवोपाधिंप्राप्यस्वगुणंशब्दंआविष्करोति नतुस्वस्मिन्नसंत-
स्पर्शकेनचिदपिउपाधिनादर्शयितुमीष्टेएवमात्मासर्वगुणहीनःसत्यप्यवच्छेदलाभेकर्तृत्वादिकंगुणमाविष्कर्तुंनसमर्थइति फलितमाह शरीरस्थोऽपि स्पष्ट
र्थमेतत् ३२

किंच सर्वेषुभूतेषुउपादानभूतेषुपृथिव्यामोषधयइवयाः मूर्तयः शरीराणिस्फुरनरतिर्यक्स्थावरात्मकानिचतुर्विधानिसंभवंतितासांमूर्त्तीनांब्रह्ममहत्पूर्वोक्तंमहतोब्रह्मब्रह्ममहत्राजदंतादित्वादुपसर्जनस्यपरनिपातः मायैवयोनिरित्यर्थः अहंतुतासांबीजप्रदःपितातास्वपिस्वप्रतिबिंबस्यार्पयिता यथापुरुषोभार्यायांअनुशायिसंपृक्तंरेतोनिषिंचति ततोभार्यातः पिंडोत्पत्तिः रेतोंशतस्तत्रचैतन्योत्पत्तिरितिचैतन्यविशिष्टस्यपिंडस्यपिताऽहंमाताचमायेत्यर्थः ४ एवंईश्वराश्रयेणप्रकृतिर्भूतानिसृजतीत्युक्तं इदानींसाकथंभूतानिबध्ना तितदुच्यते सत्वमिति प्रकृतिःसत्वरजस्तमसांसाम्यावस्थाततः सकाशात्परस्परांगांगिभावेनवैषम्येणउद्रिच्यमानाः प्रकृतिसंभवाइत्युच्यंतेनतुप्रकृतितोऽन्येवैशेषिकाणामिवद्रव्याद्गुणाअन्ये एतेहेमहाबाहो देहेअव्ययमविकारिणमपिदेहिनंस्थूणायांवत्समिवरशनाभूतागुणानिबध्नंति ५ तत्रकः केनसंगेनबध्नातीत्युच्यते तत्रेति तत्रतेषुगुणेषुसत्वंनिर्मलत्वात्दुःखमोहाख्यमलराहित्यात्प्रकाशकंआलोकवत्सर्वार्थावद्योतकंयतोऽनामयंरजस्तमोभ्यामनभिभूतंतत्सुखसंगेनज्ञानसंगेनचनरंअ-

सर्वयोनिषुकौंतेयमूर्तयःसंभवंतियाः तासांब्रह्ममहद्योनिरहंबीजप्रदःपिता ४ सत्वंरजस्तमइतिगुणाःप्रकृतिसंभवाः निबध्नंतिमहाबाहोदेहे देहिनमव्ययम् ५ तत्रसत्वंनिर्मलत्वात्प्रकाशकमनामयम् सुखसंगेनबध्नातिज्ञानसंगेनचानघ ६ रजोरागात्मकंविद्धितृष्णासंगसमुद्भवम् तन्निबध्नातिकौंतेयकर्मसंगेनदेहिनम् ७ तमस्त्वज्ञानजंविद्धिमोहनंसर्वदेहिनाम् प्रमादालस्यनिद्राभिस्तन्निबध्नातिभारत ८ सत्वंसुखेसंजयतिरजःकर्मणिभारत ज्ञानमावृत्यतुतमः प्रमादेसंजयत्युत ९

विद्ययातिरोहितस्वरूपज्ञानानंदंअहंसुखीअहंज्ञानीत्यभिमानेनअंतःकरणवृत्तिधर्मयोः सुखज्ञानयोरात्मनिआरोपेणबध्नाति हेअनघअव्यसन ६ रजोगुणोरागोरंजनात्तदात्मकंविद्धितृष्णाप्राप्यमाणेष्वपिअर्थेषुअतृप्तिः संगः प्राप्तेविषयेमनसः प्रीतिलक्षणः संश्लेषः तयोःसमुद्भवंनिदानभूतंतद्रजोहेकौंतेयकर्मसंगेनदृष्टादृष्टार्थेषुकर्मसुसंगस्तत्परतातेननिबध्नातिदेहिनंदेहाभिमानिनम् ७ तमोगुणस्तुपूर्वाभ्यांविलक्षणः अज्ञानंमायायाआवरणशक्तिस्ततउद्भूतंअज्ञानजंविद्धि अतः सर्वेषांदेहिनांमोहनंभ्रांतिहेतुः प्रमादोअनवहितत्वंसचसत्वकार्यप्रकाशविरोधी आलस्यंजडतातच्चरजः कार्यप्रवृत्तिविरोधि उभयकार्यनिरोधिनीतमोगुणालंबनावृत्तिर्निद्राताभिरेतत्तमोनितरांबध्नातिहेभारतदेहिनमित्यनुवर्त्तते ८ सत्वमुत्कृष्टंसत्सुखेदुःखकारणमभिभूयसंजयतिसंश्लेषंजनयति एवमुत्तरत्र ज्ञानंप्रकाशंआवृत्यप्रमादेअवश्यकर्तव्यस्याकरणे ९ छ छ छ छ छ

स्वयमेवसात्विकं त्यागंअनूद्यतत्प्रयोजनमाह द्वाभ्यांनहीति देहभृतादेहाभिमानिनाहियस्मात् अशेषतः कर्माणित्यक्तुंनशक्यंअशक्यंप्राणयात्रालोप
प्रसंगात् तस्मात् अधिकृतः सन्‌यः कर्मफलत्यागशीलः तुशब्द एवार्थः सएवत्यागीत्यभिधीयते यस्त्वशेषतः कर्माणित्यक्तुंशक्तोऽतिपरमार्थदर्शीसमु-
रव्यस्त्यागीत्यर्थः ११ एवंभूतस्यत्यागस्यफलमाह अनिष्टमिति अनिष्टंनरकतिर्यगादिरूपंइष्टंदेवतादिरूपंमिश्रंमानुषभावइतिकर्मणः कर्मजाती
यस्यफलंत्रिविधंप्रेत्यमरणानंतरंअत्यागिनांपूर्वोक्तंफरवंसन्न्यासहीनानांभवतिमुरव्यसन्न्यासिनांतुनक्वचित्तद्भवतितेषांकर्तृत्वाभिमानाभावा-
त् अन्येतुगौणसन्न्यासिनामेवायंकर्मालेपइत्याहुः तथाचव्यारव्यानंकार्यमित्येवयत्कर्मेत्यत्रअन्यथासन्न्यासिनांगौणसन्न्यासिनांचविशेषोन-
स्यात् नन्वेवंमुरव्यसन्न्यासिनांगौणसन्न्यासिनांचविशेषापत्तिरितिवाच्यम् उभयेषामुत्तरकर्माश्लेषसाम्येपिपूर्वकर्मदाहादाहकृतस्यविशेष-
स्यसत्वात् गौणसन्न्यासिनांजन्मांतरादिकमपिपूर्वकर्मभिरेवभविष्यति आपस्तंबोक्ताम्रनिदर्शनेनयोगभ्रष्टगतिवन्नांतरीयकंनतुतस्यप्रधा

नहिदेहभृताशक्यंत्यक्तुंकर्माण्यशेषतः यस्तुकर्मफलत्यागीसत्यागीत्यभिधीयते ११ अनिष्टमिष्टंमिश्रंचत्रि-
विधंकर्मणःफलम् भवत्यत्यागिनांप्रेत्यनतुसन्न्यासिनांक्वचित् १२ पंचैतानिमहाबाहोकारणानिनिबोध-
मे सांरव्येकृतांतेप्रोक्तानिसिद्धयेसर्वकर्मणाम् १३

नंफलंस्वर्गादिभवितुमर्हत्यनुद्दिष्टत्वादिति १२ ननुआत्मनः कर्मालेप-
निमित्तंयदकर्तृत्वानुसंधानंतत्किंयोषिदग्निदृष्ट्यादिवदाहार्यंउतवास्तवमेवसदविद्याध्यस्तकर्तृत्वेनावृतमितिशास्त्रदृष्ट्याकर्तृत्वतिरोधानेनाकर्तृत्वमे-
वभाव्यतेइत्याशंक्यअग्नित्वेनदृष्टायांयोषितिदग्धत्वादर्शनेनकल्पितेनाकर्तृत्वेनवास्तवस्यकर्मालेपस्यासंभवात् आद्यंनिरस्यद्वितीयमुपपादयि-
ष्यन् र्पीठीकामारचयति हेमहाबाहोसर्वकर्मणांसिद्धयेइमानिवक्ष्यमाणानिपंचकारणानिनिर्वर्त्तकानिमेमद्वचनान्निबोधबुद्ध्यस्वस्ववचनेवि-
श्वासोत्पादनार्थंकारणानांसमूलत्वमाह सांरव्येकृतांतेप्रोक्तानीति सम्यक्‌विविच्यरव्यायंतेप्रकटीक्रियंतेतत्वानिआत्मानात्मपदार्थरूपाणिय-
स्मिन्‌ननत् सांरव्यंवेदांतशास्त्रंतदेवविशिनष्टिकृतस्यकर्मणोंऽतः परिसमाप्तिर्यस्मिन्सर्वंकर्माऽरिवलंपार्थज्ञानेपरिसमाप्यतइतिआत्मज्ञानेस-
तिसर्वकर्मणांसमाप्तेर्दर्शनात् तस्मिन्सांरव्येकृतांतेप्रोक्तानि १३ ७९ ७९ ७९ ७९ ७९

तान्येवपंचगणयति अधिष्ठानमिति अधिष्ठानंइच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयोदेहः तस्मान्नात्मत्वंचार्वाकव्यतिरिक्तसमस्तवादि-
सिद्धंतथाकर्ताबुद्धिविशिष्टश्चिदाभासःप्रमाता नाहंप्रत्ययविषयोहंकारः तथेत्यनेननद्वदेवअनात्मत्वेनज्ञेयइत्युक्तम् देहस्येवसृष्टौप्रलयेचतत्-
स्याप्युत्पत्तिविनाशयोर्दर्शनात् एतच्चविशेषणनाशाद्विशिष्टनाशंविशेषणोत्पत्त्याचविशिष्टोत्पत्तिमभिप्रेत्यश्रूयतेविज्ञानघनएवैतेभ्योभूतेभ्यःस
मुत्थायतान्येवानुविनश्यतीतियथाग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंत्येवमेतस्मादात्मनःसर्वएतआत्मानोव्युच्चरंतीतिविशिष्टस्यचानतिरेकादनात्म-
त्वंसिद्धम् करणंचशब्दाद्युपलब्धिसाधनंपृथग्विधंद्वादशविधंपंचकर्मेंद्रियाणिपंचज्ञानेंद्रियाणिमनोबुद्धिश्चतथाविविधाश्चपृथक्चेष्टाःवायवीयाःप्राणापाना
दिरूपाः दैवंपुण्यंपापरूपंतत्तत्करणानुग्राहकःसूर्यादिदेवतारूपंचपंचमंपंचानांपूरणम् १४ शरीरेति न्याय्यंधर्म्यंशास्त्रीयम् विपरीतमन्या
य्यमधर्म्यमशास्त्रीयंननुशरीरादिभिस्त्रिभिरारभ्यतेपंचैनेनस्यहेतवइतिचविप्रतिषिद्धमुच्यतेनैषदोषः अत्रापिशरीरपदेनाधिष्ठानस्यनरपदे-

अधिष्ठानंतथाकर्ताकरणंचपृथग्विधम् विविधाश्चपृथक्चेष्टादैवंचैवात्रपंचमम् १४ शरीरवाङ्मनोभिर्यत्कर्म-
प्रारभतेनरः न्याय्यंवाविपरीतंवापंचैतेतस्यहेतवः १५ तत्रैवंसतिकर्तारमात्मानंकेवलंतुयः पश्यत्यकृतबु
द्धित्वान्नसपश्यतिदुर्मतिः १६

नकर्तुर्वाङ्मनइतिकरणस्यआरभतेइतिचेष्टानांन्याय्यमितिधर्माधर्मरूपस्यदैवस्यचसंग्रहात्
सर्वेषुकर्मसुपंचानांसमानेपिउपयोगेविधिप्रतिषेधलक्षणंत्रिविधमेवधर्मशास्त्रेप्रसिद्धमितिइदंशारीरंकर्मेदंमानसमिदंवाचिकमितिव्यपदेशोदेहादीनांप्राधा-
न्यापेक्षइतिनकश्चिद्विरोधः १५ एवंप्रतिपादनफलंकर्तृत्वस्यारोपितत्वसिद्धिरकर्तृत्वस्यस्वाभाविकत्वसिद्धिश्चेतिद्वाभ्यांश्लोकाभ्यांदर्शयतितत्रेतितत्रतस्मिन्
कर्मणिएवंउक्तरीत्यापंचभिर्निर्वर्त्त्येसतिकेवलंतुअकर्तारमपिआत्मानंचेतनंसाक्षिचेताकेवलोनिर्गुणश्चेतिश्रुतेः अधिष्ठानादिपंचकप्रचारदर्शिनमुदा-
सीनमपियःकर्तारंकर्तृत्वाश्रयंपश्यतिसदुर्मतिः पापाभिभूतमतिर्नपश्यतिअंधएवसः अदर्शनेहेतुः अकृतबुद्धित्वादितिशास्त्राचार्योपदेशशमदमादिसं
स्कृताबुद्धिर्यस्यसकृतबुद्धिः तद्विपरीतोऽकृतबुद्धिःतस्यभावस्तत्त्वंतस्मात् यथास्वमुखस्योदपात्रसंसर्गित्वंपश्यताजलचांचल्यमपितत्रारोप्यतेएवमात्म-
नोबुद्धिसंसृष्टत्वंपश्यताबुद्धिधर्मःकर्त्रादिरप्यात्मन्यारोप्यतइतिभावः १६ ७ ७ ७ ७ ७

द्वितीयंप्रयोजनमाह यस्येति यस्यप्रमातुर्भावः प्रत्ययमात्रस्वरूपआत्मानाहंकृतः अहमिवकृतोअहंकारतादात्म्यंप्रापितोहंकृतः तथान यस्यबुद्धिर्नलिप्य
ते आत्मभावेनरंजितानभवति यस्यबुद्धेर्व्यतिरिक्तमात्मानंपश्यतोबुद्धिधर्माः कर्तृत्वादयोनात्मनिप्रतीयंतेइति कर्त्रात्मवादितार्किकनिरासः यस्यचआत्मध
र्माश्चैतन्यादयोबुद्धौनसंसृज्यंतइतिबुद्धिमेवचेतनांवदतोबौद्धस्यनिरासः चिदाचितोरन्योन्यस्मिन्नन्योन्यधर्माध्यासोयस्यनास्तीत्यर्थः अत्रनहंतीत्या
त्मनःकर्तृत्वाभावोदर्शितः ननिबध्यतेइतिदुःखादिसंसर्गनिषेधेनभोक्तृत्वाभावोदर्शितः हत्वापिसइमाँल्लोकान्नहंति ननिबध्यतइतितुस्तुतिमा-
त्रंकर्तृत्वस्यैवबाधेनहंतृत्वायोगात् दग्धपटवत्कर्तृत्वाद्युत्पत्तावपिहननक्रियायांप्रवर्तकस्यरागद्वेषादेरभावाच्च एतेनआत्मनस्तात्विकमकर्तृत्वंभावय-
ताकृतंकर्मअतात्विककर्तृत्वाभिमाननिमित्तंस्वफलंप्रसोतुंनार्हतीतिदर्शितंनहिरज्जुसर्पेरज्जुबुद्धिंकृत्वाप्रहरतः सर्पक्षोभजंदंशनाफलंभवति सर्पे
तुयथाकुर्वतस्तद्भवत्येवनद्विदमपिज्ञेयम् १७ समासः सात्विकत्यागोपपादनोपयोगीआत्मनोऽकर्तृत्वोपपादनप्रकारः अत्राहसांख्यः यदुक्तं-
पंचैतेतस्यहेतवइति यच्चोक्तंनहंतीति तन्मृष्यामहेनह्यपरिणामीचेतनः परिस्पंदात्मकस्यकायिकादिभेदेनत्रिविधस्यकर्मणः कर्ताभवतीतिवक्तुंयु
ज्यते यत्तुननिबध्यतेइतिभोक्तृत्वमपिप्रत्याख्यातंतन्नमृष्यामहे नहिकुलालादयः स्वप्रयुक्ताएवघटादीन्निर्वर्त्तयंति किंतु भोक्तृपुरुषप्रयुक्ताः अन्य

यस्यनाहंकृतोभावोबुद्धिर्यस्यनलिप्यते हत्वापिसइमाँल्लोकान्नहंतिननिबध्यते १७ ज्ञानंज्ञेयंपरिज्ञातात्रिवि-
धाकर्मचोदना करणंकर्मकर्तेतित्रिविधः कर्मसंग्रहः १८

थाभोक्तृणामभावेव्यर्थैवतत्प्रवृत्तिरित्यापतति एवंप्रधानमात्रभूता-
कर्त्रादयःपुरुषस्यभोगापवर्गसाधनप्रयुक्ताः सर्वाणिकर्माणिनिर्वर्त्तयंति तस्मात्पुरुषस्यभोक्तृस्वभावत्वात्अकर्तृत्वानुसंधानपूर्वकमापिकृतंक-
र्मभोक्ताऽवश्यमेवभोक्तव्यमितिसात्विकत्यागेपिकर्मालेपवचनमसंगतमिति अत्रप्रतिविधत्तेज्ञानंज्ञेयमिति ज्ञानंज्ञायतेप्रकाशतेवस्तुतत्वमने-
नेतिप्रत्यक्षादिप्रमाणजन्योघटादिप्रकाशः वर्तमानमतीतंवाज्ञेयंबोधविषयोघटादिः परिज्ञाताविषयाभासधीरूपोयोभोक्तेत्युच्यते एवंरूपप्रका
रत्रयवतीत्रिविधाकर्मणांचोदनात्रयंसमुच्चितंसत्कर्माणिप्रवर्तकमित्यर्थः सत्यपिज्ञेयेज्ञातरिवाज्ञानेप्रवृत्त्यनुपपत्तेः ज्ञानेज्ञातरिचसतिदेश-
कालेव्यवहितेज्ञेयेप्रवृत्त्यनुपपत्तेः सत्यपिसंस्कारात्मकेज्ञानेज्ञेयेचसान्निहितेनतथापिप्रमात्राभावात्प्रवृत्त्यदर्शनादेतत्रयंत्रिदंडविष्टंभवदन्योन्या
पेक्षंसरूपंकार्यंजनयतिहानोपादानोपेक्षाबुद्धित्वाद्धानाद्यनुकूलेव्यापारेप्रवर्तयतीतिकर्तृपदाभिधेयमित्यर्थः चोदनेतिकर्तरिनंद्यादित्युप्रत्य
यांततेनचोदनाशब्दः कर्तृवाचीलिंगंचाशिष्यंलोकाश्रयत्वाल्लिंगस्येतिवा तथाकरणमिंद्रियंकर्मतेनयत्क्रियमाणंविषयग्रहणं कर्तापूर्वोक्तएवप-
रिज्ञाताएतत्त्रयंसमुदितंसत्कर्मसंग्रहः कर्मणः ईप्सिततमस्यभोग्यस्यसंग्रहः संगृह्यतेस्मिन्निति संश्रयस्थानंभोक्तेत्यर्थः सत्यपिभोक्तरि-

करणेचक्रियांविनाभोगासंभवात् क्रियायाश्चाश्रयंविनास्वरूपालाभादाश्रयस्यकरणंविनाभोगकर्तृत्वानुपपत्तेश्च एतत्त्रयंमिलितंसत्भोक्तेत्यु च्यतइत्यर्थः तथाचश्रुतिः आत्मेंद्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणइति इंद्रियंप्रसिद्धंमनइत्यनेनबुद्धिरेवगृह्यतेयुक्तंइंद्रियद्वारामनोभोग्येनस ह्संबंधक्रियाइंद्रियंचमनश्चयुक्तंचेतिविग्रहेइंद्रियमनोयुक्तमितिद्वंद्वैकवद्भावः एवंअयंभोक्ताआत्मेत्याहुर्मनीषिणइतिश्रुत्यर्थः एवंहिश्रुति स्मृत्योर्व्याख्यानेनतयोर्मूलमूलीभावोयुज्यते नान्यथा तथाचकर्तृवत्भोक्तुरपिअनात्मगुणपतितत्वात् भोक्तृत्वंभोगकर्तृत्वमितिनिर्वचनात्त्रयः कर्तासएवभोक्तेतिप्रतिपादनात् अहमकर्ताभोक्तेतिचानुसंधानपूर्वकंकर्माणिकुर्वतः कर्तृत्वभोक्तृत्वभावकृतकर्मलेपोनास्तीतिसिद्धंभाष्यस्यचायमेवा- र्थः येतुकरणंक्रियायाःसाधकरूपंदशविधंबाह्यंमनोबुद्धिरूपमांतरंकर्मसंग्रहः कर्मकर्तुरीप्सिततमंक्रिययाव्याप्यमानमुत्पाद्यमाप्यंविकार्यंसंस्का- र्यंचेतिचतुर्विधंकर्ता कारकांतरप्रयोजककश्चिद्धातुरपि एतत्त्रयंकर्मसंग्रहः कर्माश्रयःकर्तेत्यर्थः ज्ञानंविषयप्रकाशनशक्तिः ज्ञेयंविषयः परिज्ञाताज्ञा नाश्रयोभोक्ताएतत्त्रयंकर्मणिप्रवर्तकमितिव्याचक्षते तेषामपिआत्मानकर्तानापिसांख्यानामिवभोक्तृत्वेनप्रकृतेःप्रवर्तकइत्येवाशयः तथापिक्रियया- व्याप्यमानस्यवलयांसमानिकादिनेदानीनस्यघटादिकंयस्यकर्मणःकर्तृकोटौप्रवेशायोगः तस्य व्याश्रयत्वमात्रविवक्षायांप्रकृतेकथमानुषयोअस्मद्

ज्ञानंकर्मचकर्ताचत्रिधैवगुणभेदतः प्रोच्यतेगुणसंख्यानेयथावच्छृणुतान्यपि १९ छ

अस्माकंतुघटादिव्यापकक्रियायाः कर्मशब्दवाच्यत्वंमुख्यंकर्तृकोटिप्रवेशश्चक्रियाक्रियावतोर्धर्मधर्मिणोरभेदापेक्षयायुज्यते तथाज्ञानेप्रकाशम- क्रियेतिमनोक्रियारूपेतस्मिन्प्रवर्तकज्ञानांतरस्यापेक्षेतितत्रतत्राप्यन्यस्यान्यस्यापेक्षेत्यनवस्थादुर्वारा १८ पूर्वश्लोकोक्तेज्ञानादिषट्केपरिज्ञाताकर्ताचे कएवेतिपरिशिष्टाःपंचतेषांसर्वेषांप्रकृतत्वेनत्रिगुणात्मत्वेप्राप्तेज्ञेयकरणयोर्जडयोर्घटकुठारकल्पयोः परिकल्पयोः परिसंख्यार्थंत्रयाणामेवप्र- त्येकंत्रिविधत्वंविवरीतुंप्रतिजानीते ज्ञानंकर्मचकर्ताचेतित्रयमेवगुणभेदतस्त्रिधानतुज्ञेयकरणेगुणसंख्यानेकापिलेशास्त्रेयद्यपितत्रएकस्यांप्र- मदायांभर्तुःसुखंजायतेतंप्रतितस्याःसत्वोद्भूतत्वात्तामविंदतश्चैत्रस्यदुःखंजायते तंप्रतितस्याःरजउद्भूतत्वात् तस्येतस्यामेवसपत्न्याद्वेषःतं प्रतितस्यास्तमसउद्भूतत्वात् प्रमदयैवसर्वेभावाव्याख्याताइतिकापिलानांज्ञेयकरणयोरपित्रैविध्यंप्रसिद्धंतथापिप्रमदादयएकस्यैवपुंसोनिमित्त- भेदेनप्रीतिदुःखद्वेषविषयाअपिभवंतीतिपूर्वोक्तव्यवस्थायांनिर्मूलत्वात्प्रीत्यादीनांकर्तृसमवायितयाप्रतीयमानानांआलंबनभूतायाःप्रीत्याद्या त्मत्वंकल्पयितुंनशक्यतइतिनभगवतानयोस्त्रिविधत्वंव्याख्यायते अक्षरार्थःस्पष्टः १९ छ छ छ छ
छ छ छ छ छ छ छ छ छ छ

एवंज्ञानादित्रयस्यत्रैविध्यंवक्तुं प्रतिज्ञायज्ञानत्रैविध्यंतावदाह सर्वभूतेष्विति यथाकटककुंडलादिषुव्यावर्तमानेषुतत्वविदेकंकांचनमेवेदमितिएवंयेन ज्ञानेनसर्वभूतेषुविभक्तेषुनानानामरूपभेदभिन्नेषुअव्ययमपरियामिनमेकंभावंचिन्मात्ररूपंईक्षतेसर्वंब्रह्मैवेतिपश्यतितत्ज्ञानंसात्विकंविद्धिऐका-त्म्यज्ञानमेवसात्विकमित्यर्थः २० भेदज्ञानेराजसत्वमाह पृथक्त्वेनेति यत्पृथक्त्वेनभिन्नत्वेनज्ञानंतद्राजसमितिसंबंधः पृथक्त्वेनेत्येतद्विवृणोति-सर्वेषुभूतेषुपांचभौतिकत्वेनाविशिष्टेषुनानाभावान्सुरनरतिर्यक्स्थावरत्वभेदेननानाभावानितिबहुवचनंअत्यंतभेदप्रदर्शनार्थंपृथग्विधान्एकजा-तीयेष्वपिनरादिषुप्रत्येकंविभिन्नप्रकारान्यत्ज्ञानंवेत्तीतिविषयीकरोतियेनज्ञानेनवेत्तीतिवक्तव्येएधासिपचतीतिवत्ज्ञानंवेत्तीतिकरणेकर्तृत्वोपचा-रोबोध्यः तेनआत्मनांपरस्परभेदः तेभ्यईश्वराद्न्योन्यतश्चजडवर्गस्यभेदइतिअनौपाधिकभेदकंज्ञानंकुतार्किकाणांराजसमेवेत्यभिप्रायः २१ यत्तुज्ञानंएकस्मिन्कार्येदेहेप्रतिमादौवाकृत्स्नवत्परिपूर्णवदेतावानेवआत्माईश्वरोवेतिसक्तंअभिनिवेशयुक्तंअहेतुकंनिरुपपत्तिकंअतत्वार्थवत्

सर्वभूतेषुयेनैकंभावमव्ययमीक्षते अविभक्तंविभक्तेषुतत्ज्ञानंविद्धिसात्विकम् २० पृथक्त्वेनतुयज्ज्ञानं-नानाभावान्पृथग्विधान् वेत्तिसर्वेषुभूतेषुतज्ज्ञानंविद्धिराजसम् २१ यत्तुकृत्स्नवदेकस्मिन्कार्येसक्तमहैतुकम् अतत्वार्थवदल्पंचतत्तामससमुदाहृतम् २२ नियतंसंगरहितमरागद्वेषतःकृतम् अफलप्रेप्सुनाकर्मयत्तत्सा-त्विकमुच्यते २३ यत्तुकामेप्सुनाकर्मसाहंकारेणवापुनः क्रियतेबहुलायासंतद्राजसमुदाहृतम् २४ अनु-बंधंक्षयंहिंसामनपेक्ष्यचपौरुषम् मोहादारभ्यतेकर्मतत्तामसमुदाहृतम् २५

परमार्थावलंबनशून्यंअल्पंतत्वाविष-यत्वात्अल्पफलत्वाच्चयदेवंभूतंज्ञानंतत्तामससमुदाहृतम् २२ अथकर्मत्रैविध्यमाह नियतमित्यादिनानियतंनित्यंसंगरहितंअभिमानवर्जितंरा गइष्टेप्रीतिः द्वेषोऽनिष्टेअप्रीतिः ताभ्यांकृतंइष्टानिष्टप्राप्तिपरिहारार्थंकृतंरागद्वेषतःकृतम् तदन्यत् अरागद्वेषतःकृतंनिष्कामित्यर्थः फल्गुवल्लीय तेवेतिफलंक्रिययाप्राप्यमनात्मवस्तुतदन्यदफलमनागंतुकंपरिपूर्णमविनाशिआत्मतत्वंतत्प्रेप्सुनाकृतंविविदिषंतियज्ञेनेतिश्रुत्याआत्मलाभार्थंयज्ञा-देर्विनियोगात् तत्कर्मसात्विकमुच्यते २३ यत्तुकामेप्सुनाफलार्थिनासाहंकारेणयद्यपिसात्विकोप्यनात्मवित्साहंकारस्तथापिअहमेवकर्मकुशलो महाश्रोत्रियइत्यभिमानोहंकारस्तद्वतासाहंकारेणवाशब्दश्चार्थेक्रियतेबहुलायासंअतिश्रमकरंतत्कर्मराजसमुदाहृतम् २४ अनुबध्यतेनेनेत्यनुबंधः फलंक्षयंशक्तेरर्थानांचनाशंहिंसांपरपीडांपौरुषंस्वसामर्थ्यंअनपेक्ष्यअनालोच्यकेवलंमोहादविवेकतोयदारभ्यतेकर्मतत्तामससमुदाहृतं २५.९९

कर्तृत्रैविध्यमाहमुक्तेत्यादिनामुक्तसंगः त्यक्ताभिनिवेशः अनहंवादीगर्वोक्तिरहितः धृतिर्धैर्यंउत्साहः साधयिष्याम्येवेतिबुद्धिनिश्चयः ताभ्यांस मन्वितः सिद्ध्यसिद्ध्योः कर्मणआरब्धस्येतिशेषः निर्विकारः दर्पविषादश्शून्यः कर्तासात्विकउच्यते २६ रागीविषयलोलुपः अतएवकर्मणः फलं प्रेप्सतीतिकर्मफलप्रेप्सुः लुब्धः परद्रव्यादौसंजाततृष्णः तीर्थादौवाद्रव्यापरित्यागी हिंसात्मकः परपीडाकरस्वभावः अशुचिर्बाह्यांतःशौचव र्जितः इष्टानिष्टप्राप्तौहर्षशोकान्वितश्चयः कर्तासराजसः परिकीर्तितः २७ अयुक्तोनवहितः प्राकृतोऽत्यंतंअसंस्कृतबुद्धिर्बालसमः स्तब्धः दंड वन्ननमतिकस्मैचित्शठः शक्तिगूहनकारीनैकृतिकः वंचकः परावमानीवाअलसः अप्रवृत्तिशीलः कर्तव्येष्वपिविषादीसर्वदाअवसन्नस्वभावः दीर्घसूत्रीचिरकारीएकाहसाध्यंकार्यंमासेनापिनकरोतीत्यर्थः यएवंभूतः कर्तासतामसउच्यते २८ बुद्धिधृतीत्रैविध्येनव्याख्यातुमाह बुद्धे- रिति तत्रबुद्धिविशिष्टश्चिदाभासः कर्ताबुद्धिवृत्तिः ज्ञानंचप्रागुक्तं अत्रतुकेवलाबुद्धिर्वृत्तिमतीतद्धीयवृत्यंतरोपलक्षणार्थंतवृत्तिविशेषोधृ-

मुक्तसंगोनहंवादीधृत्युत्साहसमन्वितः सिद्ध्यसिद्ध्योर्निर्विकारःकर्तासात्विकउच्यते २६ रागीकर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोशुचिः हर्षशोकान्वितः कर्ताराजसः परिकीर्तितः २७ अयुक्तः प्राकृतस्तब्धः शठोनैकृतिकोलसः विषादीदीर्घसूत्रीचकर्तातामसउच्यते २८ बुद्धेर्भेदंधृतेश्चैवगुणतस्त्रिविधंशृणु प्रोच्यमानमशेषेणपृथक्त्वेनध- नंजय २९ प्रवृत्तिंचनिवृत्तिंचकार्याकार्येभयाभये बंधंमोक्षंचयावेत्तिबुद्धिःसापार्थसात्विकी ३० ययाधर्ममधर्मंच कार्यंचाकार्यमेवच अयथावत्प्रजानातिबुद्धिःसापार्थराजसी ३१ अधर्मंधर्ममितियामन्यतेतमसावृता सर्वार्थान्वि- परीतांश्चबुद्धिःसापार्थतामसी ३२ धृत्यायथाधारयतेमनःप्राणेंद्रियक्रियाः योगेनाव्यभिचारिण्याधृतिःसापार्थसात्विकी ३३

तिश्चकथ्यते त्रैविध्येनकथ्यतइत्यर्थः २९ प्रवृत्तिनिवृत्तीशास्त्रविहितप्रतिषिद्धविषयेयजेतस्वर्गकामः नसुरांपिबेदित्यादिरूपे कार्यंकृति साध्यंस्वर्गादि अकार्यंनित्यासिद्धंतेननित्यानित्यवस्तुनी भयाभयेकार्यनिमित्ते बंधंमोक्षंचयावेत्तियथावेत्तीतिपूर्ववत् करणेकर्तृत्वोपचारः बु- द्धिः सापार्थसात्विकी ३० अयथावत्संदेहास्पदत्वेनस्पष्टमन्यत् ३१ अधर्ममिति विपरीतग्राहिणीबुद्धिस्तामसीत्यर्थः ३२ यया धृत्या अव्य भिचारिण्यासमाध्यनुगतयामनःप्राणेंद्रियाणांक्रियाश्चेष्टाः संकल्पश्वासप्रश्वासशब्दादिग्रहणंचयोगेनचित्तवृत्तिनिरोधेनऐकाग्र्येणबा- संयत्तास्तास्तथैवनिरोधावस्थायामेकाग्र्यावस्थायांवाधारयतिचिरमवस्थापयतिसाधृतिः पार्थसात्विकी ३३

ययाधृत्याधर्मादीन्धारयतेऽनुरुध्यन्ननोतिप्रसंगेनधर्मादेः संबंधेनफलाकांक्षीचभवतिपुरुषः साधृतिः पार्थराजसी ३४ स्वप्नंनिद्रांभयंत्रासं शोकं
प्रसिद्धंविषादंविषण्णतांमदंअशास्त्रीयंविषयसेवयाचित्तस्यविवशत्वं एतान्नविमुंचति धारयत्येवययासाधृतिः पार्थतामसी ३५ गुणभेदेन-
क्रियाणांत्रैविध्यमुक्तंतत्फलस्यसुखस्यत्रैविध्यमाह सुखंत्वित्यादिनाअभ्यासात्पौनःपुन्येनसेवनात् यत्रसात्विकेराजसेतामसेवासुखेरम-
तेरतिंप्राप्नोतिययारत्यादुःखस्यपुत्रशोकादेरपिअंतंअवसानंनिगच्छतिनिश्चयेनप्राप्नोतितत्सुखंत्रिविधंशृणुयदात्वयमप्यर्थः सात्विकसुखस्यै
वलक्षणार्थस्तदायत्रसमाधिसुखेअभ्यासाद्रमतेनतुविषयसुखइवरागात् दुःखांतंमोक्षंचनिगच्छतीत्यर्थः ३६ यत् तत्प्र सिद्धंसर्वप्राणिप्रेमा

ययातुधर्मकामार्थान्धृत्याधारयतेऽर्जुन प्रसंगेनफलाकांक्षीधृतिःसापार्थराजसी ३४ ययास्वप्नंभयंशोकंविषादं-
मदमेवच नविमुंचतिदुर्मेधाधृतिःसापार्थतामसी ३५ सुखंत्विदानींत्रिविधंशृणुमेभरतर्षभ अभ्यासाद्रमतेयत्र
दुःखांतंचनिगच्छति ३६ यत्तदग्रेविषमिवपरिणामेऽमृतोपमम् तत्सुखंसात्विकंप्रोक्तमात्मबुद्धिप्रसादजम् ३७
विषयेंद्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् परिणामेविषमिवतत्सुखंराजसंस्मृतम् ३८ यदग्रेचानुबंधेचसुखंमोहनमा-
त्मनः निद्रालस्यप्रमादोत्थंतत्तामसमुदाहृतं ३९ नतदस्तिपृथिव्यांवादिविदेवेषुवापुनः सत्वंप्रकृतिजैर्मुक्तंयदेभिःस्यात्त्रि
भिर्गुणैः ४०

स्पदं अग्रेसमाध्यारंभकालेमनःप्राणेंद्रियस्पंदनिरोधेनयज्ञेसंज्ञप्यमानस्यपशोरिवजायमानंविषमिवातितीव्रवेदनाकरंपरि-
णामेसात्विक्याधृत्यानिरुद्धासुमनआदिक्रियासुअमृतोपमंअत्याल्हादकरंआत्मनःस्वस्यैवबुद्धेःप्रसादोनैर्मल्यंरजस्तमोमलराहित्यंतज्जंतस्मादा-
विर्भूतंनतुविषयसंगजंनिद्रालस्यादिजंवातत्सुखंसात्विकंप्रोक्तम् ३७ राजसंसुखमाह विषयेति अग्रेभोगकालेपरिणामेविषमिववियोगकाले-
इहामुत्रचदुःखप्रदत्वात् ३८ अग्रेआरंभेअनुबंधेपरिणामेमोहनंमोहकरम् आत्मनोबुद्धेः यत्तोनिद्रादिजम् ३९ प्रकरणार्थमुपसंहरत्यनु-
क्तमपिसंगृण्हन् नतदस्तीतिसत्वंप्राणिजातमन्यद्वाजडस्यापिसर्वस्यापिसर्वस्यत्रिगुणविकारत्वात् प्रकृतिजैर्जन्मांतरीयधर्मसंस्कारजैः मायाप्रभ
वैर्वाशेषंस्पष्टं ४०

एवंपंचदशेसंसाराश्वत्थमसंगशस्त्रेणछित्वापरंपदंमार्गितव्यमित्युक्तम् तत्रात्मनोसंगत्वोपपादनायक्रियाकारकफललक्षणस्यकृत्स्नस्यसंसारस्यत्रिगुणात्मकत्वमुक्तंनह्यात्मानात्मनोर्गुणातीतगुणात्मकयोः संगः संभवतिनह्याकाशांतर्वर्तिपृथिव्यादिगुणेनगंधादिनाकाशः संसृज्यतेतद्वदित्युक्तंसमासःशास्त्रार्थः अथेदानींसर्वगीताशास्त्रार्थमुपसंहर्तुमसंगशस्त्रप्राप्त्युपायंचप्रदर्शयितुंप्रकरणांतरमारभतेब्राह्मणेत्यादिनाशूद्राणामसमासकरणंवेदानधिकारात्प्रविभक्तानिअसंकीर्णानितत्रहेतुमाह स्वभावप्रभवैर्गुणैः स्वभावईश्वरस्यप्रकृतिस्त्रिगुणात्मिकासैवप्रभवोहेतुर्येषांगुणानांतेस्वभावप्रभवास्तैः यद्वाब्राह्मस्वभावस्यसत्वगुणएवप्रभवः शांतत्वात् क्षत्रियस्वभावस्यसत्वोपसर्जनंरजः ईश्वरस्वभावत्वात्वैश्यस्वभावस्यतमउपसर्जनंरजः कृष्यादिस्वभावत्वात् शूद्रस्यरजउपसर्जनंतमः शूद्रः स्वभावत्वात् अथवास्वभावः प्राग्भवीयःसंस्कारस्तत्प्रभवैः नतुजातिमात्रप्रभवैः पक्षिणामाकाशगमनवत् अतएवजात्यंतरव्यावृत्तानांधर्माणांशमादिषुपाठोनदृश्यते नहिशूद्राद्व्यावृत्तंत्रैवर्णिकानामध्ययनादिकंवाइतरद्वयाद्व्यावृत्तंब्राह्मणानामध्यायनादिकंवाइहपठ्यते किंतु सर्वेसर्वजातीयानांसाधारणधर्माःशमादयोदृश्यंते तथाहिद्रोणादि-

ब्राह्मणक्षत्रियविशांशूद्राणांचपरंतप कर्माणिप्रविभक्तानिस्वभावप्रभवैर्गुणैः ४१

षुब्राह्मणेष्वपिशौर्यादिकंभरतादिषुक्षत्रियेष्वपिशमादिकंदृष्टमेवमितरत्र तस्माद्यस्मिन्कस्मिंश्चिद्वर्णेशमादयोदृश्यंतेसशूद्रोपिएतैर्लक्षणैर्ब्राह्मणएवज्ञातव्यः यत्रचब्राह्मणेपिशूद्रधर्मादृश्यंतेसशूद्रएव तथाचारण्यके सर्पीभूतंनहुषंप्रतियुधिष्ठिरवाक्यं सत्यंदानंक्षमाशीलमानृशंस्यंतपोघृणा दृश्यंतेयत्रनागेंद्रसब्राह्मणइतिस्मृतिः तथा यत्रैतदृश्यतेसर्पवृत्तंसब्राह्मणःस्मृतः यत्रैतन्नभवेत्सर्पतंशूद्रमितिनिर्दिशेदिति जातिधर्मास्तुमनुनादर्शिताः अध्यापनंचाध्यायनंयजनंयाजनंतथा दानंप्रतिग्रहंचैवब्राह्मणानामकल्पयत् प्रजानांरक्षणंदानमिज्याध्ययनमेवच वाणिज्यपथंकुसीदंचवैश्यस्यकृषिमेवच एकमेवतुशूद्रस्यप्रभुःकर्मसमादिशत् एतेषामेववर्णानांशुश्रूषामनसूययेति तस्मात्शमादयोयत्राब्राह्मणेब्राह्मणेवादृश्यंतेसएवब्राह्मणइत्यत्रविवक्षितम् स्वेस्वेकर्मण्यभिरतः संसिद्धिंलभतेपरामित्यत्रतुउक्तान्यध्यापनादीन्येवस्वकर्माणिग्राह्याणिनतुशमदमादीनि नहिज्ञानविज्ञानवतोऽन्यासांसिद्धिर्वक्तव्यास्ति तस्माच्छमदमादयोब्रह्मनिष्ठस्यैवब्राह्मणस्यलक्षणमितिदिक् ४१ ६ ६ ६ ६ ६ ६ ६ ६ ६

ब्राह्मणाकर्माण्याह शमइति अंतःकरणनिग्रहः शमः बाह्येंद्रियनिग्रहोदमः तपः पूर्वोक्तंशरीरादिभेदेनत्रिविधंशौचंबाह्यंमृज्जलाभ्यांआभ्यं तरंभावशुद्धिः क्षांतिः क्षमाआर्जवमकौटिल्यंज्ञानंशास्त्रीयंकर्मब्रह्मविषयं विज्ञानंतदनुष्ठानानुभवात्मकम् आस्तिक्यंश्रद्धाएतदात्मकंब्रह्म कर्मब्राह्मणत्वजात्यभिव्यंजकं कर्मस्वभावजंप्राचीनकर्मधर्मसंस्कारजम् ४२ शौर्यपराक्रमः तेजः प्रागल्भ्यंधृतिः धैर्यंदाक्ष्यंयुद्धेकौशलमु त्साहोवादानंऔदार्यंईश्वरभावः उन्मार्गवर्तिनांनियमनशक्तिः एतत्क्षात्रंकर्मस्वभावजम् ४३ वैश्यशूद्रयोः कर्माण्याह कृषीति स्पष्टार्थः श्लोकः ४४ कर्मप्रविभागफलमाह स्वेस्वेइति स्वेस्वेमन्वादिभिरुक्तेऽध्ययनादौअसाधारणेशमदमादौसाधारणेचकर्मणिअभिरतः नि ष्ठावान् संसिद्धिंज्ञानयोग्यताम् लभतेनरः एतदेवविवरीतुंप्रतिजानीतेस्वेति सिद्धिंवक्ष्यमाणांमुख्यसन्न्यासलक्षणांनैष्कर्म्यसिद्धिंयथा येनप्रकारेण ४५ तमेवप्रकारमाह यइति प्रवृत्तिः कायवाङ्मनोनिर्वर्त्याचेष्टायतोहेतोः अंतर्यामिणः येनवागभ्युद्यतइत्यादिश्रुतेः येनइदं

शमोदमस्तपः शौचंक्षांतिरार्जवमेवच ज्ञानंविज्ञानमास्तिक्यंब्रह्मकर्मस्वभावजम् ४२ शौर्यंतेजोधृतिर्दाक्ष्यंयु- द्धेचाप्यपलायनम् दानमीश्वरभावश्चक्षात्रंकर्मस्वभावजम् ४३ कृषिगोरक्ष्यवाणिज्यंवैश्यकर्मस्वभावजं परि- चर्यात्मकंकर्मशूद्रस्यापिस्वभावजम् ४४ स्वेस्वेकर्मण्यभिरतः संसिद्धिंलभतेनरः स्वकर्मनिरतः सिद्धिंयथाविं दतितच्छृणु ४५ यतः प्रवृत्तिर्भूतानांयेनसर्वमिदंततम् स्वकर्मणातमभ्यर्च्यसिद्धिंविंदतिमानवः ४६ श्रेयान्स्व धर्मोविगुणः परधर्मात्स्वनुष्ठितात् स्वभावनियतंकर्मकुर्वन्नाप्नोतिकिल्बिषम् ४७ सहजंकर्मकौंतेयसदोषमपिन- त्यजेत् सर्वारंभाहिदोषेणधूमेनाग्निरिवावृताः ४८

सर्वंदृश्यंततंव्याप्तंउपादानत्वात् स्वकर्मणातमभ्यर्च्यसंतर्प्यसिद्धिंविमोक्षंविंदति लभतेमानवोमनुष्याधिकारत्वाच्छास्त्रस्यपरमेश्वरेनित्यकर्मणामेवमोक्षद्वारत्वमित्यर्थः ४६ स्वकर्मणेतिविशेषणस्यफलमाह श्रेयानिति स्वध र्मोविगुणः किंचिदंगहीनोपिश्रेयान् प्रशस्ततरः परधर्मात्स्वनुष्ठितात्सम्यग्विहितात् उक्तंचस्वधर्मेनिधनंश्रेयः परधर्मोभयावहइति स्वभावनिय तंपूर्वोक्तविधस्वभावाज्जातंकर्मकुर्वन्किल्बिषंदोषंनाप्नोति विषकृमेर्विषमिवनदोषकरंतस्मात्तवपेक्ष्यंहिंसाशून्यमपिनयुक्तम् किंतु हिंसायु- क्तो स्वधर्मएवप्रशस्यतारः धर्मत्वेनविहितेऽस्मिन्नग्नीषोमीयपश्वालंभवत् एवंकृतेसतिनकिल्बिषप्रसंगोऽस्तीत्यर्थः ४७ किंच सहजंस्वाभाविकं क्षात्रंकर्मसदोषंहिंसामिश्रमपिनत्यजेत्हि यस्मात्सर्वारंभाः सर्वाणिकर्माणिदोषेणाहिंसादिनाआवृताएव यस्मात्परधर्मोभयावहस्तस्मात्स्वकर्मन त्यजेदित्यर्थः ४८

स्वकर्मणामीश्वरेसमर्पणंकर्तव्यमित्युक्त्वाऽनंतरंश्लोकद्वयेनस्वकर्मणामावश्यकत्वमुक्त्वातेषांपरमेश्वरेऽर्पणेनकिंफलंस्यादित्यतआह असक्तेति
सन्न्यासेनकार्यमित्येवयत्कर्मनियतंक्रियतेऽर्जुन संगंत्यक्त्वाफलंचैवसत्यागःसात्विकोमतइतिपूर्वोक्तेनामुख्यसात्विकत्यागेनअसक्तबुद्धिःपुत्रदा
रादिषुसक्तिपदेषुआसक्तिवर्जिताःबुद्धिर्यस्यसोऽसक्तबुद्धिःविरक्तइत्यर्थः अतएवजितात्माशांतचित्तःविगतस्पृहः विशेषेणगतास्पृहातृष्णायस्यता
दृशोभूत्वानैष्कर्म्यसिद्धिंकात्स्न्येनस्वरूपतः कर्मत्यागलक्षणपरित्यंज्यसिद्धिंपरमांपूर्वोक्तामुख्यत्यागापेक्षयातिश्रेष्ठांनद्वेष्ट्यकुशलंकर्मेतिश्लोके
व्याख्यातांअधिगच्छतिप्राप्नोति ४९ स्वकर्मनिरतःसिद्धिंयथाविंदतीत्येतत्प्रतिज्ञातमुपपादितंइदानींनैष्कर्म्यसिद्धिंप्राप्नोतीतिपरिव्राड्वशीका
रसंज्ञावैराग्यवानत्यर्थंब्रह्मप्राप्नोतियथातथावक्तुंप्रतिजानीतेसिद्धिमितिसिद्धिंनिबोधबुध्यस्वमेमद्वचनात् समासेनसंक्षेपेणैवहेकौंतेययाव
त्प्राप्यंब्रह्मविधेयापेक्षंस्थीत्वंज्ञानस्यपरानिष्ठायदेक्षयाऽन्यत्शेषंआंतरतरंनास्तीत्यर्थः ५० तमेवब्रह्मप्राप्तिप्रकारमाह त्रिभिःबुद्ध्येति

असक्तबुद्धिःसर्वत्रजितात्माविगतस्पृहः नैष्कर्म्यसिद्धिंपरमांसन्न्यासेनाधिगच्छति ४९ सिद्धिंप्राप्तोयथाब्र
ह्मतथाप्नोतिनिबोधमे समासेनैवकौंतेयनिष्ठाज्ञानस्ययापरा ५० बुद्ध्याविशुद्धयायुक्तोधृत्यात्मानंनियम्यच
शब्दादीन्विषयांस्त्यक्त्वारागद्वेषौव्युदस्यच ५१

बुद्ध्यावेदांतश्रवणमननपरिपाकोत्थयाऽहंब्रह्मास्मीतिपरोक्षनिश्चयरूप
याविशुद्धयासर्वभूतेषुमैत्र्यादिभावनयाविशोधितयाधृत्याधैर्येणयोगक्षेमादिनिमित्तवैयग्र्यराहित्येनआत्मानंदेहेंद्रियसंघातंनियम्यदृढा-
सनोभूत्वेत्यर्थः चकारात्प्राणंचनियम्य शब्दादीन्विषयान्त्यक्त्वाततःइंद्रियाणिप्रत्याहृत्येत्यर्थः प्रत्याहृतकरणोपिअंतर्मनसैवविष
यान्स्मरतितत्परित्यागमाह रागद्वेषौव्युदस्यचेतिसंकल्पंत्यक्त्वेत्यर्थः सहिविषयप्रीतस्यतत्ररागंजनयतीतिप्रसिद्धंतथाचाक्षपादा-
चार्यसूत्रंदोषनिमित्तंरूपादयोविषयाःसंकल्पकृताइतिदोषोरागादिः चकारादयमहमस्मीत्येतमपिभावंव्युदस्येतिज्ञेयंततोब्रह्मभूयाय
ब्रह्मभावायतंप्राप्तुंकल्पतेयोग्योभवतीतितृतीयेनसंबंधः ५१ छ छ छ छ छ

क्तनसाधनजातेनएवंभूतोभवतीत्यतआह विविक्तेति यत्तच्छब्दाध्याहारेणयोज्यम् नित्यमितिसर्वत्रसंबंधनीयं योनित्यंविविक्तसेवी एकांतशीली-
लघ्वाशीमिताशनशीलश्चतथानित्यंवैराग्यंरागाभावंसमुपाश्रितश्चतथानित्यंध्यानयोगपरोयोभवतियतवाक्कायमानसोभवति यतकायःआस-
नदार्ढ्येन यतवाक्विषयेभ्यइंद्रियाणांप्रत्याहरणेनयतमानसः सर्वसंकल्पत्यागेन अत्रचतुर्भिः साधनैर्यतवाक्कायमानसत्वंसाध्यंनित्यंनिमि
त्तसंवादिशीलः सन्यतवाक्कायमानसोभूत्वाब्रह्मभूयायकल्पतइत्यनंतरेणैवान्वयः ५२ एवंयतवाक्कायमानसस्ययोगिनोयोगजाः सिद्धय
उपतिष्ठंतिताश्चश्रुत्यादर्शिताः पृथ्व्य प् तेजोऽनिलखेसमुत्थितेपंचात्मकेयोगगुणेप्रवृत्ते नतत्ररोगोनजरानमृत्युः प्राप्तस्ययोगाग्निमयंश
रीरमिति तथा यंयंलोकंमनसासंविभातिविशुद्धसत्वः कामयतेयांश्चकामान् तंतंलोकंजयतेतांश्चकामांस्तस्मादात्मज्ञंह्यर्चयेदिति संवि-
भातिसंकल्पयतिलोकंलोचनीयमतीतानागतमर्थजातंकामान् काम्यमानान्विषयाञ्जयतेउपलभतेइतिश्रुतिपदानामर्थः तथानाविरतोदुश्चरिता
न्नाशांतोनासमाहितः नाशांतमानसोवापिप्रज्ञानेनैतमाप्नुयादिति प्रज्ञानेनशास्त्राचार्योपदेशजेनदुश्चरितादिसेवनाद्विरक्तः शांतोजितवि

विविक्तसेवीलघ्वाशीयतवाक्कायमानसः ध्यानयोगपरोनित्यंवैराग्यंसमुपाश्रितः ५२ अहंकारंबलंदर्पंकामंक्रो-
धंपरिग्रहम् विमुच्यनिर्ममः शांतोब्रह्मभूयायकल्पते ५३

तः समाहितः निरुद्धचित्तवृत्तिरपिअशांतमानसोयोगैश्वर्यास-
क्तचित्तएतमात्मानंनप्राप्नुयादितिश्रुत्यर्थः तदिदमाह अहंकारमिति यदातुयोगीयतमानसोऽस्मितामात्रप्रत्ययोभवतितदानीमेवास्मि
तास्थितिर्विषयाभिमुखाहंकारइत्युच्यतेविषयविमुखात्वस्मितेतिततस्तमहंकारंनिगृण्हीयात् तदनिग्रहेयोगीबलंसत्यसंकल्पादिसा-
मर्थ्यमात्मनः पश्यन् दर्पंकरोतिनमत्तुल्योऽन्योऽस्तीतिमन्यतेततश्चहृष्टोधर्ममतिक्रामतीत्यापस्तंबवचनात् दिव्यान्कामान्गच्छति तत्रके-
नाचिन्निमित्तेनकामप्रतिबंधेसतिक्रोधवान्भवति ततः परोत्सादनायभूयांसंशिष्यादिपरिग्रहंसंपादयतितेतोनश्यतीतितस्मात्सर्वानर्थ-
मूलभूतमहंकारमेवविमुच्यइतरान्सर्वान्विमुंचति अहंकारविमोकेपिनिर्ममत्वंतत्वदर्शितेषुविषयेषुममताशून्यत्वेसत्यहंकारः शि-
थिलीभूतोविषयवैमुख्यंप्राप्यस्वकारणेऽस्मितायांविलीयतेततः शांतोऽस्मितायाअपिप्रलयान्निरिंधनाग्निवदुपरतोयोगीब्रह्मभू-
यायकल्पते ५३

अस्यैवंशांतस्य केवलस्य योगिनो व्युत्थानावस्थामाह ब्रह्मभूत इति यो हि स्फुटो क्षयैवासंपन्नो योगी च व्युत्थितश्चेज्जडदेहः तमोग्रस्त इव तंद्रालु रुत्तिष्ठति ब्रह्मभूतस्स प्रसन्नात्मा प्रसन्नचेताः लघुशरीरः अमृतेनेव समाधिस्फुरखेन तृप्तः न देकप्रवणो न शोचति नष्टं नाप्यप्राप्तं कांक्षति दारादिकं सर्वेषु भूतेषु चतुर्विधेषु समः ब्रह्मैवेदं सर्वमिति बुद्ध्या वैषम्यवर्जितः सन् परां मद्भक्तिं द्वैतदृष्टिविवर्जितां भावनां लभते पातंजलयोगी तु न परां दृष्टिं लभते भेददर्शित्वात् अयं च भक्तः श्रीभागवते दर्शितः सर्वभूतेषु येनैकं भगवद्भावमीक्षते भूतानि भगवत्यात्मन्येष भागवतोत्तम इति सोयं चतुर्थो भक्तो ज्ञानी त्वात्मैव मे मत इति भगवतापि दर्शितः ५४ अस्या अद्वैतात्मज्ञानलक्षणाया भक्तेः फलमाह भक्त्येति मां उक्तविधया भक्त्या ज्ञानी अभितः साकल्येन जानाति साकल्यमेवाह यावानिति अणुपरिमाणो वा देहसंमितो वा नार्किकाणामिवाकाशवत्सकलमूर्तद्रव्यसंयोगिलक्षणविभुत्वाश्रयो वा सप्रपंचाद्वैतवादिनामिव स्वगतभेदवान्वाऽखंडैकरसो वेति परिमाणतस्तत्वतो मां तत्पदार्थं जानाति तथा यश्चास्मीति किं देहेंद्रियप्राणमनसामन्यतमः कियत्कालस्थायी वा क्षाणिकविज्ञानरूपो वा शून्यं वा कर्ता भोक्ता वा जडो वाऽजडरूपो वा चिद्रूपो भोक्ता वा कर्तृत्वभोक्तृत्ववर्जित आनंदघनो वेत्येवं मामजरममरमभयमशोकं जानाति तथा च श्रुतिः भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः क्षीयंते चास्य

ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ५४ भक्त्या मामभिजानाति या-
वान्यश्चास्मि तत्वतः ततो मां तत्वतो ज्ञात्वा विशते तदनंतरम् ५५

कर्माणि तस्मिन्दृष्टे परावरे इति आत्मदर्शने सति सर्वसंशयोच्छेदं दर्शयति एवं क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत इत्युक्तेः सर्वक्षेत्रेष्वेकं मां विभुं सच्चिदानंदघनं ज्ञात्वा सर्वोपाधिविनिर्मुक्तं याथात्म्येन ज्ञात्वा साक्षात्कृत्य ततो व्याप्तो ब्रह्मभावं गतो भवतीत्यर्थः ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः यद्वा तत इति कारणब्रह्मभावापत्तिः सर्वात्म्यरूपा प्रथममुक्ता य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति स एतमेव पुरुषं ब्रह्म ततममपश्यदिति श्रुतिभ्यो मुक्तानां सार्वात्म्यावगमात् ततमं ततमं एकस्तकारश्छांदस्यां प्रक्रियायां लुप्तो द्रष्टव्य इति श्रुतिभाष्यं अनंतरं कारणभावापत्तेरनुपदमेव तत् ब्रह्म तत्पदाभिधेयं तदिति वा एतस्य महतो भूतस्य नाम भवतीति श्रुतेः शुद्धं ब्रह्म विशति दर्पणापाये प्रतिबिंबो बिंबमिव प्रविशति कार्योपाधीनां जीवानां कारणोपाधीश्वरप्राप्तिद्वारैव निष्कलब्रह्मप्राप्तिरित्यावेदितं प्रागेव यद्वा मां ज्ञात्वा तद्विशन इत्येतावतैव ज्ञानप्रवेशयोः पौर्वापर्ये सिद्धे तदनंतरमिति पदेन तच्छब्देन बुद्धिस्थं देहं परामृश्य तत्पाताननंतरमिति व्याख्येयं यतो जातेपि तत्वज्ञाने यावद्देहपातं प्रारब्धकर्मणां प्रतिबंधाद्विदेहकैवल्यं न प्राप्यते अन्यथा ज्ञानसमकालमेव देहपातापत्तिः स्यात् विमुक्तश्च विमुच्यते भूयश्चांते विश्वमायानिवृत्तिरित्यादि मुक्तस्य मुक्तिनिवृत्तायाश्च मायायाः पुनर्निवृत्तिं वदतो जीवन्मुक्तिशा

स्यंचबाधितंस्यात् यथातार्किकाणांनष्टेपिसमवायिकारणे पटादिकंक्षणमात्रमवतिष्ठतेएवमस्माकमपिअनादिकायादेहाद्युपादानभूता-
याअविद्यायाविनाशेपिकिंचित्कालंदेहाभिधानंयुज्यतेईदृशमेवजीवन्मुक्तमपेक्ष्यभगवताउक्तंउपदेक्ष्यंतितेज्ञानंज्ञानिनस्तत्वदर्शिन-
इतिस्थितप्रज्ञलक्षणंस्मृतिरपितल्लक्षणाभिधित्सयैवप्रवृत्तेतिदिक् ५५ ननुतद्यथैषीकातूलमग्नौप्रोतंप्रदूयेतैवंहास्यसर्वेपाप्मानः
प्रदूयंतइतिपूर्वकर्मणांज्ञानेनप्रायश्चित्तेनेवसत्यपिनाशश्रवणेज्ञानोत्तरकालीनानांकर्मणांनाशाभावात्ज्ञानोत्तरमपिदेहधारणेस्वाभाविकानांकर्मणांव
र्जनस्यासंभवादवश्यंज्ञानिनोऽपिबंधस्स्यादित्याशंक्याह सर्वकर्माणीति मद्व्यपाश्रयोऽहमेवप्रज्ञानघनः प्रत्यगात्माव्यपाश्रयः आश्रयोयस्यसम-
द्व्यपाश्रयोज्ञानीसर्वकर्माणिविहितानिनिषिद्धानिवासदाकुर्वाणोपिमत्प्रसादात्मदनुग्रहात्शाश्वतंनित्यंपरमंसर्वोत्कृष्टंपदंपदनीयंमोक्षमवाप्नो-
ति ननुज्ञानोत्तरमपिक्रियमाणैःकर्मभिर्बध्यते तस्यपुत्रादायमुपयंतिसुहृदः साधुकृत्यांद्विषंतः पापकृत्यामिति नहवाएवंविदिकिंचनरजआध्वं-

सर्वकर्माण्यपिसदाकुर्वाणोमद्व्यपाश्रयः मत्प्रसादादवाप्नोतिशाश्वतंपदमव्ययम् ५६ चेतसासर्वकर्माणिम-
यिसन्न्यस्यमत्परः बुद्धियोगमुपाश्रित्यमच्चित्तःसततंभव ५७ मच्चित्तःसर्वदुर्गाणिमत्प्रसादात्तरिष्यसि अथ
चेत्त्वमहंकारान्नश्रोष्यसिविनंक्ष्यसि ५८

सतेविदित्वानलिप्यतेकर्मणापापकेनइत्यादिशास्त्रेणतत्वज्ञानिनः कर्मालेपश्रवणात्
५६ एवंवर्णाश्रमादिधर्मपुरस्कारेणससाधनासफलाब्रह्मविद्यानिरूपिता तस्याः प्राप्तयेपुनः साधनत्वेनभक्तिमेवविधत्तेचेतसेतिचेतसावि
वेकबुद्ध्यासर्वाणिकर्माणिनित्यनैमित्तिकानिमयिभगवतिवासुदेवेसन्न्यस्ययत्करोषियदश्नासीत्युक्तरीत्यासमर्प्यमत्परः अहमेवपरः प्राप्यो
यस्यसः बुद्धियोगंपूर्वोक्तंसिद्ध्यसिद्ध्योः समत्वलक्षणंचकर्मणांमोक्षहेतुत्वसंपादकंअपाश्रित्यआश्रित्यमच्चित्तः मदेकशरणः सततंसर्वदाभ-
व ५७ एतस्यभक्तियोगस्यकरणेगुणमकरणेदोषंचाहमच्चित्तइति दुर्गाणिअध्यात्मिकाधिलौकादीनिसंकटानि अहंकारात्स्वपांडित्याभिमा
नात् नश्रोष्यसिमद्वाक्यंतर्हिविनंक्ष्यसिपुरुषार्थशून्योभविष्यसि ५८ ७ ७ ७ ७ ७ ७

स्वतंत्रोहं स्वदुक्तं नकरिष्यामीत्याशंक्याह यदिति यत् यदि अहंकारं गर्वं आश्रित्य नयोत्स्ये युद्धं नकरिष्ये इति मन्यसे एषतेतव व्यवसायो मिथ्या-
यतः प्रकृतिः क्षत्रियस्वभावः त्वांनियोक्ष्यति प्रकृतिंयांतिभूतानिनिग्रहः किंकरिष्यतीति चोक्तम् ५९ प्रकृतिस्त्वांनियोक्ष्यतीत्येतदेवव्या-
चष्टे स्वभावजेनेति स्वभावजेनपूर्वोक्तेनशौर्यादिना अवशोपिपरवशएवतत् करिष्यसि ६० कोसौपरमेश्वरस्यद्वशोहमस्मीत्यतआह ईश्वर-
इति ईश्वरईशनाशीलोंतर्यामीपृथिव्यादीनांसर्वभूतानांहृद्देशेबुद्धिगुहायांसर्वप्राणिप्रवर्तकस्तिष्ठतिकीदृशः सर्वभूतानिभ्रामयन् ऊर्ध्वाधोमा
र्गेषुसंचारयन् काष्ठपुत्रिकाइवसूत्रधारः यंत्रारूढानियंत्रमिवयंत्रमुत्क्रमसाधनंप्राणाद्यात्मकंलिंगंतदारूढानिमाययास्वशक्त्याभ्रामयन्निति
संबंधः हेऽर्जुनमस्मुक्तविशुद्धांतःकरणासेश्वरोसीतिभावः अत्राहंकारपूर्वकंयः कर्मकरोति यश्चईश्वरपरवशोहंकरोमीतिबुद्ध्याकरोतितयोर-
त्यंतवैलक्षण्यप्रदर्शनार्थौमंत्रौभाष्येउदाहृतौ अहश्चकृष्णमहरर्जुनंचविवर्त्तेतेरजसीवेद्याभिरितिभारद्वाजार्षम् अहश्चकृष्णमहरर्जुनंचे

यदहंकारमाश्रित्यनयोत्स्यइतिमन्यसे मिथ्यैषव्यवसायस्तेप्रकृतिस्त्वांनियोक्ष्यति ५९ स्वभावजेनकौंतेय-
निबद्धः स्वेनकर्मणा कर्तुंनेच्छसियन्मोहात्करिष्यस्यवशोपितत् ६० ईश्वरः सर्वभूतानांहृद्देशेऽर्जुनतिष्ठति
भ्रामयन्सर्वभूतानियंत्रारूढानिमायया ६१

त्याग्निमारुतस्यप्रतिपदितिब्राह्मणेनआग्निमारुतशस्त्रेविनियुक्ताविनियु-
क्ताप्रथमेयस्मिन्दिवसेसोमः सूयतेयागार्थंतदेवजन्मसाफल्यादिनंमुख्यंअहः शब्देनाभिधीयतेअन्यत्तुदिनमदिनमेवनिष्फलत्वात् तथाचस्मृ-
तिः दशभिर्जन्मभिर्वेदाः आधीनंशतजन्मभिः सहस्रजन्मभिः सोमंब्राह्मण्यंपातुमर्हतीतिसोमयागस्यदौर्लभ्यंदर्शयतितदयमहः शब्दः का
लवचनोपिसौम्येकर्मणिवर्तते यथादर्शपूर्णमासशब्दो तदेवंसति अहः यागः कृष्णंअविदुषाकृतंअप्रकाशमिवभवति तथाऽहरर्जुनंस्वच्छंतदे
वविदुषाकृतंप्रकाशरूपमिवभवति तेएतेउभेविद्वदविद्वत्कृतेअहनीरजसीप्रवृत्तिरूपत्वात् रजोगुणाकार्येअपिवेद्याभिःकर्मार्गावबद्धोपास
नारूपावाअहंकरोमीत्यभिमानरूपाविद्याविज्ञानानिताभिः विवर्त्ततेवैपरित्येनवर्ततेसोपासनंकर्मभ्येतंपरमात्मतत्वप्रकाशकंबंधविच्छेदहेतुः मूढकृतं
कर्मकृष्णंस्वरूपावरकंबंधहेतुरित्यर्थः तदेवंभगवान्पार्थअर्जुनेतिसंबंधयन् एतस्यस्वच्छांतःकरणत्वद्योतनेनसुक्तधर्मेऽधिकारंदर्शयति ६१ ध

तमेवईश्वरंसर्वभावेनसर्वात्मनाशरणमाश्रयंगच्छ श्रयनत्प्रसादात्तदनुग्रहात् परांशांतिंसुपरतिंसमाधिमितियावत्तथाचसूत्रंसमाधिसिद्धिरीश्वर
प्रणिधानादितिस्थानंचपरंविष्णोः पदंमोक्षंशाश्वतंनित्यंप्राप्स्यसि ६२ सर्वगीतार्थमुपसंहरति इतीति इतिएवंप्रकारंतेतुभ्यंमयासर्वज्ञेनपर
मकारुणिकेनज्ञानंआख्यातंगुह्यतरंमंत्रतंत्ररसायनादिरूपात्गुह्यात् गुह्यतरंअतिशयितंरहस्यंएतद्यथोक्तंशास्त्रार्थजातंविमृश्यसम्यगालोच्य
यथेच्छसितथाकुरु ६३ एवंयथेष्टकरणमभ्यनुज्ञायापिअतिवात्सल्यात् श्लोकद्वयेनैवकृत्स्नंशास्त्रार्थमुपदेक्ष्यन् तद्ग्रहणेऐकाग्र्यमस्यसंपादयितु
माह सर्वेति सर्वेभ्योगुह्येभ्यः अतिशयितंगुह्यंगुह्यतमंभूयः पुनः असकृदुक्तमपिमेममवचनंश्रृणु परमंपरमार्थविषयत्वात् नलोभान्नापिभ
यात्त्वांवक्ष्यामिकिंतर्हिमेममइष्टोसिपरमाप्तोसिइतिहेतोः दृढंअतिशयितंतेनतवहितंयततस्तनोवक्ष्यामितवइष्टत्वात् विद्यायाश्चहितत्वात्तद्वच-
नंआप्तेनावश्यंकर्तव्यमितिभावः ६४ तदेवगुह्यतमंहितमाह मन्मनाइति अहंप्रत्यगात्माऽनंदैकघनः परिपूर्णः तदाकारंमनोयस्यसमन्मनाःभ

तमेवशरणंगच्छसर्वभावेनभारत तत्प्रसादात्परांशांतिंस्थानंप्राप्स्यसिशाश्वतम् ६२ इतितेज्ञानमाख्यातं
गुह्याद्गुह्यतरंमया विमृश्यैतदशेषेणयथेच्छसितथाकुरु ६३ सर्वगुह्यतमंभूयः श्रृणुमेपरमंवचः इ-
ष्टोसिमेदृढमितिततोवक्ष्यामितेहितम् ६४ मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु मामेवैष्यसिसत्यंते
प्रतिजानेप्रियोसिमे ६५

वएतेनब्रह्मात्माभेदोऽपिसाक्षात्करणीयइतिउत्तरषट्कार्थउक्तः कथमेवंविधाज्ञाननिष्ठालभ्यतेऽतआ
ह मद्भक्तोभव एतेनभगवदुपासनात्मकोमध्यमषट्कार्थउक्तः कथमल्पपुण्यस्यभक्तिरुदेष्यतीत्यतआह मद्याजीभगवदर्थकर्मकरणशी
लोभवएतेनकर्मप्रधानआद्यषट्कार्थोविवृतः ननुयस्यभगवद्याजित्वंनसंभवतिदारिद्र्यात् आढ्यभावाद्वातस्यभगवद्भक्तिर्दौर्लभ्याद्ब्रह्माकारा
चेतोवृत्तिर्दुर्लभतरेत्याशंक्याहमांनमस्कुरुप्राकृतभक्त्यैवप्रतिमादौभगवंतंसर्वोपचारसमर्पणेननमस्कारादिनासम्यगाराधयेत्यर्थः तथा-
चाश्वलायनोनमस्कारस्यैवयज्ञत्वमुदाहरतियोनमसास्वध्वरइति यज्ञोवैनमइतिहिब्राह्मणंभवतीतिच एवमुक्तस्यसोपानत्रयारूढस्य-
फलमाह मामितिमामेवतत्पदार्थंसर्वजगत्कारणंसर्वेश्वरंसर्वशक्तिमखंडैकसत्त्वंएष्यसिबिंबइवप्रतिबिंबंघटाकाशइवमहाकाशम्
अस्मिन्नर्थेशपथंकरोति तेतवपुरः सत्यंअबाधितार्थभूतंप्रतिजानेप्रतिज्ञांकरोमिमामेवैष्यसीतिप्रियोसिमे यतस्त्वंमेममप्रियोसिअ-
तः प्रतारणानर्हेत्वयिसत्यमेवाहंब्रवीमीत्यर्थः ६५ ५ ५ ५ ५ ५ ५

एवंनमनयजनभजनमननक्रमेणसांख्यनिष्ठाउक्तायापूर्वध्यानेनात्मनिपश्यंतीत्यनेनश्लोकेनदर्शिताइदानींअन्येत्वेवमजानंतःश्रुत्वान्येभ्य
उपासतेतेपिचातितरंत्येवमृत्युंश्रुतिपरायणाइतिकेवलोपास्तिनिष्ठायोगाख्याउक्तातामाहसर्वधर्मानिति सर्वेषांवर्णानामाश्रमाणांदेहेंद्रियबु
द्धीनांचधर्मान्अग्निहोत्रादीन्सुखदुःखादींश्चत्यक्त्वामामेकंसर्वेश्वरंसर्वो पाधिंनिरुपाधिंवाअखंडैकरसमानंदघनंपरमात्मानंशरणंश्रृणा
तिहिनस्त्यविद्यादीन्क्लेशानितिशरणमाश्रयःपरायणंगच्छप्राप्नुहिमदेकशरणोभवेत्यर्थः अत्रअन्नंभुक्त्वैवतृप्यतिनतुजलमात्रंपीत्वेति-
वत्हेतुत्वंक्त्वाप्रत्ययार्थःसर्वधर्मपरित्यागेनमांशरणंव्रजेत्यर्थः यथोक्तंअनात्मादर्शनेनैवपरात्मानमुपास्महइति एतस्यभगवच्छरणीकर
णस्यफलमाह अहंत्वेति अहंप्रत्यगात्मास्वर्यायंतर्यामीनारायणःसकलपाप्मनिर्मुक्तःसम्यग्ज्ञातःसन्त्वात्वांसर्वपापेभ्यःसंचित-
क्रियमाणेभ्योगोत्रवधादिजेभ्यःमोक्षयिष्यामिमाशुचः शोकंमाकार्षीः तथाहितत्वज्ञानफलंपापास्पर्शःशोकतरणंचसर्वश्रुतिस्मृति
प्रसिद्धंआदित्यांतर्वर्तिनंनारायणंप्रकृत्यच्छांदोग्येश्रूयतेसएषसर्वेभ्यःपाप्मभ्यउदितउदेतिहवैसर्वेभ्यःपाप्मभ्योयएवंवेदतरतिशोकमा

सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज अहंत्वासर्वपापेभ्योमोक्षयिष्यामिमाशुचः ६६ इदंतेनातपस्कायनाभ-
क्तायकदाचन नचाशुश्रूषवेवाच्यंनचमांयोभ्यसूयति ६७

त्मवित् तत्रकोमोहः कःशोकएकत्वमनुपश्यतइतिउदितःऊर्ध्वंइतो
गतःपापान्युत्क्रम्यगतोनिष्पापइतिश्रुतिपदस्यार्थः वर्णाश्रमधर्मसन्न्यासपूर्वकषष्ठाध्यायोक्तेनयोगेनदेहादीनांधर्मांश्चत्यक्त्वानिर्विकल्पमा
त्मानंसाक्षात्कुर्वतोनकर्मलेपइत्यर्थः ६६ एवंश्लोकद्वयेनज्ञानयोगेनसांख्यानांकर्मयोगेनयोगिनामितिसांख्ययोगोद्वितीयाध्यायेदर्शितोउपसं-
हृत्यविद्यासंप्रदायविधिमाह इदमिति अनपस्कायनपआलोचनंतद्रहितायअयत्नशीलायेत्यर्थः अभक्तायश्रद्धाहीनाय अशुश्रूषवेगुरुसेवाम-
कुर्वते मांपरमात्मानंयोभ्यसूयतिमदीयगुणासहिष्णुतयामयिदोषारोपपरोभवतितस्मैनवाप्रत्येकंसंबंधत्वादेतेषांविशेषणानामन्यतमाभावेपिक-
दाचनमहत्यपिसंकटेइदंनवाच्यंनोपदेष्टव्यं अत्रविद्याहवैब्राह्मणमाजगामगोपायमाशेवधिष्टेऽहमस्मि असूयकायानृजवेऽयतायनमांब्रूयावीर्यव-
तीतथास्यांयस्यदेवेपराभक्तिर्यथादेवेतथागुरौ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनइतिश्रवणात्असूयारहितायआर्जवोपेतायाभ्यासशीलायगुरुपर
मेश्वराराधनपरायचएतद्रहस्यंदेयंनान्यस्मैइत्यर्थः ६७

एवंसंप्रदायविधिमुक्त्वासंप्रदायकर्तुः फलमाह यइदमिति इदंपरमंगुह्यंयोभक्तिहीनोमानपूजाद्यर्थीसन्मद्भक्तेष्वभिधास्यतिसोपिततएव-
पुण्यात्मयिपरमेश्वरेचिदेकरसेपरांभक्तिंअद्वैतलक्षणांउपासनांकृत्वातत्रादरंप्राप्यतामनुष्ठायचमामेवैष्यतिमुक्तिंप्राप्स्यतीत्यर्थः असंशयः
संशयोत्रनास्तिस्मर्यतेहिअजामिलादीनांभक्तिगंधहीनानामपिपुत्रसंकेतितेननारायणेतिनाम्नास्नेहवशादाह्वयतांतावन्मात्रतुष्टेनभगव
तासद्गतिर्दत्ताकिमुवक्तव्यंयोवाचाएतावच्छास्त्ररहस्यंप्रतिपादयतितस्यभक्तिलाभादिक्रमेणकृतकृत्यत्वंभविष्यतीति ६८ ननुअश्रद्धया-
कृतंसर्वव्यर्थमितित्वयैवोक्तंकथमभक्तस्यापिएतच्छास्त्राभिधानतोभक्त्यादिलाभः संभवेदित्याशंक्याह नचेति तस्मात् एतच्छास्त्रप्रव
र्तकात् अन्योमनुष्येषुमेममप्रियकृत्तमः नचकश्चिदस्तिइयमेवममहतीवाचिकीभक्तिस्तांकृत्वासोपानारोहक्रमेणममप्रियतरोभवि-

यइदंपरमंगुह्यंमद्भक्तेष्वभिधास्यति भक्तिंमयिपरांकृत्वामामेवैष्यत्यसंशयः ६८ नचतस्मान्मनुष्येषुकश्चि-
न्मेप्रियकृत्तमः भवितानचमेतस्मादन्यःप्रियतरोभुवि ६९ अध्येष्यतेचयइमंधर्म्यंसंवादमावयोः ज्ञानयज्ञेन
तेनाहमिष्टःस्यामितिमेमतिः ७० श्रद्धावाननसूयश्चशृणुयादपियोनरः सोऽपिमुक्तःशुभाँल्लोकान्प्राप्नुया-
त्पुण्यकर्मणाम् ७१

ताभविष्यतिअनिच्छयापिसंस्पृष्टोदहत्येवहिपावकइति नचभुविएतस्मादन्यत्परमार्थसाधनमस्तीति-
भावः ६९ अध्यापकस्यफलमुक्त्वाऽध्येतुःफलमाह अध्येष्यतेचेति ज्ञानयज्ञेननिर्विकल्पसमाधिनाइष्टःपूजितः सहिधर्म-
मेघनामापुष्कलपुण्यवृष्टिकरस्तद्वदेतस्यशास्त्रस्याध्ययनमपीत्यर्थः इतिमेममसर्वेश्वरस्यमतिः तेनात्रस्तुतिमात्रमेतदितिनमंतव्यम्
किंतु भूतार्थवादएवायमितिभावः ७० प्रवक्तुरध्येतुश्चफलमुक्त्वाश्रोतुरपिफलमाह श्रद्धावानिति शृणुयादपिअक्षरश्रवणंकुर्यादन-
पिकिमुतव्यमत्रादरेणार्थग्रहणंयः कुर्यात्सउक्तंफलंप्राप्नुयादिति स्पष्टार्थःश्लोकः तथाचोक्तंश्रीभागवतेवासुदेवकथाप्रश्नःपुरु-
षांस्त्रीन्पुनातिहिवक्तारंपृच्छकंश्रोतृंस्तत्पादसलिलंयथेति ७१ ध्र ध्र ध्र ध्र ध्र

सर्वांतर्यामी सर्वज्ञोपि भगवान् लोकशिक्षार्थं शिष्यस्य ज्ञानं जातं न वेति पृच्छति अन्यथा पुनः पुनः स्वयमेव उपदेशं कृतवतो ऽकृपणा निर्दो-
षा इव मया यं शात कृत्वो ऽप्युपदेशेन कृतार्थः कर्तव्य इत्याशयेनाह कच्चिदिति कच्चिदिति कामप्रवेदने हे पार्थ एतत्त्वया एकाग्रेण चेतसा श्रोतव्य
शब्दतो ऽर्थतश्च बोद्धव्यमिति मम कामो ऽस्ति ततस्त्वां पृच्छामि किमिदं त्वया श्रुतमिति शृण्वतो ऽपि ततअज्ञानकृतः संमोहो विपर्ययः अना-
त्मन्यात्मधीरूपः स्वधर्मे युद्धे वा ऽधर्मधीरूप इति स द्विविधो ऽपि नष्टः कच्चित् मन्त्र्युमसाफल्यमिच्छं स्त्वामहं पृच्छामीत्यर्थः ७२ एवं पृष्टः स्व
स्य कृतकृत्यतां ज्ञापयन्नर्जुन उवाच नष्टो मोह इति मोहः पूर्वोक्तो द्विविधोपि नष्टः स्मृतिरयमहमस्मि परं ब्रह्मेत्यात्मानुसंधानरूपा आत्म

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ७२ अर्जुन उवाच नष्टो-
मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत स्थितो ऽस्मि गतसंदेहः करिष्ये वचनं तव ७३ संजय उवाच इत्य-
हं वासुदेवस्य पार्थस्य च महात्मनः संवादमिममश्रौषमद्भुतं रोमहर्षणम् ७४

तत्त्वविषया लब्धा यस्याः लाभेन सर्वहृ-
दयग्रंथीनां यावान्यश्चास्मि तत्त्वत इत्यत्रोदाहृतानां चिज्जडैक्यभ्रमप्रभवानां विमोक्षो भवति तथा च श्रूयते स्मृतिलंभे सर्वग्रंथीनां विप्रयो-
ग इति त्वत्प्रसादात् मया ऽच्युत स्मृतिर्लब्धेति संबंधः स्थितो ऽस्मि गतसंदेहो नष्टसंदेह इत्यनेनानात्मन्यात्मधीरूपो मोहो नष्ट इति दर्शितं
करिष्ये वचनं तवेत्यनेन स्वधर्मे युद्धे चाधर्मधीरूपोपि मोहो नष्ट इति दर्शितम् ७३ समाप्तः शास्त्रार्थः इदानीं कथाप्रबंधमेवानुवर्तयन् सं-
जय उवाचेतीति अद्भुतं चेतसो विस्मयकरं रोमहर्षणं रोमांचोद्भेदजनकम् ७४ ॥ ॥ ॥ ॥

कथमयंत्वया दूरस्थयोरपिवासुदेवार्जुनयोः संवादः श्रुतइत्यतआह व्यासप्रसादादितिभगवताव्यासेनदिव्यचक्षुः श्रोत्रादिकमत्र्यदत्तंयेना हंव्यवहितंविप्रकृष्टंवासर्वंकरतलामलकवद्विजानामि अतोव्यासप्रसादात्तच्छास्त्रंपरंगुह्यंगोप्यं अहंश्रुतवान्योगंचपश्यमेयोगमेश्वरमि- तिप्रतिज्ञापूर्वकंप्रदर्शितम् वैश्वरूप्यंतमपिदृष्टवानितिशेषः स्वयंकथयतइत्युक्तेअस्यमहतोभूतस्यनिश्वसितमेतद्यदृग्वेदइतिश्रुतेः स्व निश्वसितंवेदंशिष्याचार्यपरंपरयाकथयतइत्यायातितदर्थंसाक्षात्कथयतइतिसृष्ट्यादौब्रह्माणंप्रतिवेदंइदानीमर्जुनंप्रतिसाक्षात्कथयतः श्रुतवानहंइत्यर्थः तेनभगवदनुग्रहपात्रतयाब्रह्मणासमत्वंस्वस्यद्योत्यते अत्रएतद्योगमित्यभेदेनान्वयेतुगुह्यपदापेक्षयाएतद्यो

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहंपरम् योगंयोगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ७५ राजन्
संस्मृत्यसंस्मृत्यसंवादमिममद्भुतम् केशवार्जुनयोःपुण्यंहृष्यामिचमुहुर्मुहुः ७६

गमितिपुन्नपुंसकलिंगयोरपिसामानाधि करण्यंशक्यंचयत्किंचिदप्यतापिदृढंदुपहंतुमित्यादावविपूर्वप्रवृत्तलिंगसंस्कारप्राबल्यादुत्तरत्रभिन्नलिंगविशेष्यज्ञानेपिपूर्वसंस्कारोनानि- वर्तनइतिसामानाधिकरण्यंविलिंगयोरपिवक्तुंशक्यमितिज्ञेयं ७५ केशवार्जुनसंवादश्रवणजंविश्वरूपाख्ययोगदर्शनजंचाल्हादंक्रमेणश्लो कद्वयेनाह राजन्नितिहेराजन् हेधृतराष्ट्रपुण्यंपुण्यकरंपापहरंचेत्यर्थात् संस्मृत्यसंस्मृत्येतिसंभ्रमेद्विरुक्तिः शेषंस्पष्टार्थम् ७६ ६९

तच्चेति रूपंविश्वरूपंएतद्दर्शनंहिब्रह्माणमीशमितिदेशतोविप्रकृष्टंवक्त्राणितेत्वरमाणाविशंतीतिकालतोव्यवहितंभीष्मादिक्षयंचकरतला
मलकवद्दृष्टवान्तच्चजगतोमिथ्यात्वमंतरेणनसंभवतीतिप्रतिपादितंवेदांतकतकेअतीतानागतंवस्तुवीक्षतेकरबिल्ववत् योगीसंकल्पमात्रो
त्थमितिशास्त्रेषुडिंडिमः १ मायायांसर्वदासर्वंसर्वावस्थमिदंजगत् अस्तीतितदुपाधिश्चित्सार्वात्म्यात्सर्वमीक्षते २ आरंभपरिणामाभ्यां
स्वेनरूपेणयत्रसत् अतीतानागतंवस्तुयोगीतद्वीक्षतांकथम् ३ संकल्पमात्रभानंचस्वतानादियदाप्यते नष्टस्त्रीदर्शनाभंतत्स्याद्योगिज्ञा
नमप्रभा ४ योगिसंकल्पमात्रेणतस्योत्पत्तिर्यदीष्यते ईशसंकल्पमात्रेणसर्वोत्पत्तिस्तदेष्यताम् ५ आरंभेपरिणामेवादेशकालाद्यतिक्रमः
नैवदृष्टःक्वचित्सोयंस्वप्नमायादिषुस्फुटः ६ युगपद्दृश्यतेकुंभोनानादेशस्थयोगिभिः जलसूर्यइवास्माभिस्तेनासौकल्पितःस्फुटः ७ योगि
भिर्गृह्यमाणत्वाद्घटःसर्वत्रसर्वदा सन्नेवास्तीतिचेत्कार्यंकथमीदृग्विधंभवेत् ८ व्यावृत्तंहीष्यतेकार्यंयुगपद्भिन्नदेशता चेत्कल्पनांविनश्ये

तच्चसंस्मृत्यसंस्मृत्यरूपमत्यद्भुतंहरेः विस्मयोमेमहान्राजन्हृष्यामिचपुनःपुनः ७७ यत्रयोगेश्वरःकृ-
ष्णोयत्रपार्थोधनुर्धरः तत्रश्रीर्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम ७८ इतिश्रीमन्महाभारतेभीष्मपर्व-
णिश्रीमद्भगवद्गीता॰ योगशास्त्रेश्रीकृष्णार्जुनसंवादेसन्न्यासादितत्वनिर्णयंयोगोनामअष्टादशोऽध्यायः१८ ४२

त्तादृष्टांतस्तत्रनास्तियः ९ तस्मान्नांशैरभिरारब्धमितिवन्नायिगव्यवत् प्रकृतेःपरिणामंवाजगत्किंत्विंद्रजालवत् १० सत्यंवद्दृशामिंद्रजा
लंविश्वंपश्यदृशाम् अधिष्ठानाद्दृतेशुद्धंदृश्यंनास्त्येवतेद्व्यादिति ११ स्पष्टार्थोमूलश्लोकः ७७ यस्मादनंतैश्वर्योभगवांस्तदनुगृहीतोर्जुनो
युधिष्ठिरपक्षेस्तिअतस्तस्याजयाशानकार्येत्याह यत्रेतियत्रपक्षेध्रुवेतिसर्वत्रसंबध्यतेश्रीर्देवसभादिशोभाविजयःप्रसिद्धःभूतिरैश्वर्यस
र्वनियंतृत्वंनीतिर्नयश्चएतत्सर्वंतत्रतस्मिन्पक्षेध्रुवमिति अतःपांडवैःसहसंधिरेवकर्तव्यइतिभावः ७८ इतिश्रीमत्पदवाक्यप्र-
माणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूरिसूनोः श्रीनीलकंठसूरिवर्यस्यकृतौभारतभावदीपेभीष्मपर्वणिगीतार्थप्रकाशेऽ
ष्टादशोऽध्यायः१८ ४२ इतिभगवद्गीतासमाप्ता श्रीकृष्णार्पणमस्तु ५ ५ ५ ५

गीता सुगीता कर्तव्या इत्यादयः सार्द्धाः पंचश्लोकाः गौडैर्भपठ्यंते ५ एवं गीतां नेमन्मना भवेत्यादिना निष्कामानामात्मनिष्ठामामेवैष्यसी
त्यात्मप्राप्तिश्च तत्फलभूता दर्शिता सकामानांत्वर्थाधीना कामासिद्धिः अर्थश्च सतामपि पांडवानामिव गुरुवधानृताद्याश्रयेणैव सिद्ध्यति सोपिब
लवदनुग्रहादन्येषांतु कौरवाणामिव साध्यमानो निरन्वयोच्छेदाय भवतीति दर्शयिष्यन् युद्धप्रधानं ग्रंथं सोयुस पर्यंतमारभते ऽर्थस्यान-

वैशंपायनउवाच गीता सुगीताकर्तव्याकिमन्यैः शास्त्रविस्तरैः याचेयंपद्मनाभस्यमुखपद्माद्विनिःसृता १
सर्वशास्त्रमयीगीतासर्ववेदमयोहरिः सर्वतीर्थमयीगंगासर्वदेवमयोमनुः २ गीतागंगाचगायत्रीगोविंदेतिहृदि
स्थिते चतुर्गकारसंयुक्तेपुनर्जन्मनविद्यते ३ षट्शतानिसविंशानिश्लोकानांप्राहकेशवः अर्जुनःसप्तपंचाशत्स
प्तषष्टिस्तुसंजयः ४ धृतराष्ट्रःश्लोकमेकंगीतायामानमुच्यते भारतामृतसर्वस्यगीतायामथितस्यच ५ सारमु
द्धृत्यकृष्णेनअर्जुनस्यमुखेहुतम् ५ संजयउवाच ततोधनंजयंदृष्ट्वाबाणगांडिवधारिणम् पुनरेवमहा-
नादंव्यसृजंतमहारथाः १ पांडवाःसृंजयाश्चैवयेचैषामनुयायिनः दध्मुश्चमुदिताःशंखान्वीराःसागरसंभ
वान् २ ततोभेर्यश्चपेश्यश्चक्रकचागोविषाणिकाः सहसैवाभ्यहन्यंतसशब्दस्तुमुलोभवत् ३ अथदेवाःस
गंधर्वाःपितरश्चजनेश्वर सिद्धचारणसंघाश्चसमीयुस्तेदिदृक्षया ४ ऋषयश्चमहाभागाःपुरस्कृत्यशतक्रतुम्
समीयुस्तत्रसहिताद्रष्टुंतद्वैशसंमहत् ५ ततोयुधिष्ठिरोदृष्ट्वायुद्धायसुसमुद्यते तेसेनेसागरप्रख्येमुहुःप्रचलि
तेनृप ६ विमुच्यकवचंवीरोनिक्षिप्यचवरायुधम् अवरुह्यरथात्तूर्णंपद्भ्यामेवकृतांजलिः ७ पितामहमभिप्रेक्ष्य
धर्मराजोयुधिष्ठिरः वाग्यतःप्रययौयेनप्राङ्मुखोरिपुवाहिनीम् ८ तंप्रयांतमभिप्रेक्ष्यकुंतीपुत्रोधनंजयः अव
तीर्यरथात्तूर्णंभ्रातृभिःसहितोऽभ्यगात् ९ वासुदेवश्चतंराजन्पृष्ठतोनुजगामह पार्थिवाश्चैवराजानस्तमन्वा
जग्मुरुत्सकाः १० अर्जुनउवाच किंतेव्यवसितंराजन्यदस्मानपहायवै पद्भ्यामेवप्रयातोऽसिप्राङ्मुखोरिपुवाहिनीं ११

र्थहेतुत्वंविवरीतुं ततोधनंजयंदृष्ट्वेति ततः अर्जुनस्यकरिष्येवचनंतवेत्येवंरूपप्रतिज्ञानंतरंधनंजयंयुद्धार्थंसन्नद्धंदृष्ट्वेत्यर्थः १ २ भेर्यः बृहत्योढक्काः
पेश्यः काहलाः क्रकचाः जयमंगलाः गोविषाणिकाः गवादिशृंगाणि सहसायुगपदेवअभ्यहन्यंतअवाद्यंत ३ ४ ५ ६ वरायुधं धनुःश्रेष्ठं अव
रुह्यअवतीर्य ७ येनविजयाख्येनप्रयोजनेनस्वयंयुधिष्ठिरः संग्रामेदृढबुद्धिः तत्सिद्ध्यर्थंअभिप्रेक्ष्यआलोच्यप्रथमंपितामहंप्रतिप्रययौरिपुवाहि
नींप्रविश्येतिशेषः ८ ९ १० ११

दंशितेषुसन्नद्धेषु १२ १३ १४ १५ १६ गौतमंकृपम् १७ पुराकल्पेप्राचीनशास्त्रे १८ १९ मिथोऽन्योन्यंएषोहीतिसंधिलोपाभावआर्षः



भीमसेनउवाच कथंभिष्यसिराजेंद्रनिक्षिप्तकवचायुधः दंशितेष्वरिसैन्येषुभ्रातृनुत्सृज्यपार्थिव १२ नकुल उवाच एवंगतेत्वयिज्येष्ठेममभ्रातरिभारत भीर्मेदुनोतिहृदयंब्रूहिगंताभवान्क्व नु १३ सहदेवउवाच अस्मिन्रणसमूहेवैवर्तमानेमहाभये योद्धव्येक्वनुगंतासिशत्रूनभिमुखोनृप १४ संजयउवाच एवमाभाष्यमाणोपिभ्रातृभिःकुरुनंदन नोवाचवाग्यतःकिंचिद्गच्छत्येवयुधिष्ठिरः १५ तानुवाचमहाप्राज्ञोवासुदेवोमहामनाः अभिप्रायोऽस्यविज्ञातोमयेतिप्रहसन्निव १६ एषभीष्मंतथाद्रोणंगौतमंशल्यमेवच अनुमान्यगुरून्सर्वान्योत्स्यतेसहशत्रुभिः १७ श्रूयतेहिपुराकल्पेगुरूवृद्धान्सबांधवान् अनुमान्ययथाशास्त्रंयस्तुयुद्ध्येन्महत्तरैः ध्रुवस्तस्यजयोयुद्धेभवेदितिमतिर्मम १८ एवंब्रुवतिकृष्णेतुधार्तराष्ट्रचमूंप्रति हाहाकारोमहानासीन्निःशब्दास्त्वपरेभवन् १९ दृष्ट्वायुधिष्ठिरंवीराधार्तराष्ट्रस्यसैनिकाः मिथःसंकथयांचक्रुरेषोहिकुलपांसनः २० व्यक्तंभीतइवाभ्येतिराजासौभीष्ममंतिकम् युधिष्ठिरःससोदर्यःशरणार्थंप्रयाचकः २१ धनंजयेकथंनाथेपांडुपुत्रेवृकोदरे नकुलेसहदेवेचभीतोऽभ्येतिचपांडवः २२ ननूनंक्षत्रियकुलेजातोयंप्रथितोभुवि यथास्यहृदयंभीतमल्पसत्वस्यसंयुगे २३ ततस्तेसैनिकाःसर्वेप्रशंसंतिस्मकौरवान् हृष्टाःसुमनसोभूत्वाचैलानिदुधुवुःपृथक् व्यनिंदंस्ततःसर्वेयोधास्तत्रविशांपते २४ युधिष्ठिरंससोदर्यंसहितंकेशवेनतु ततस्तत्कौरवंसैन्यंधिक्कृत्वातुयुधिष्ठिरम् निःशब्दमभवत्तूर्णंपुनरेवविशांपते २५ किंनुवक्ष्यतिराजासौकिंभीष्मःप्रतिवक्ष्यति किंभीमःसमरश्लाघीकिंनुकृष्णार्जुनाविति २६ विवक्षितंकिमस्येतिसंशयःसुमहानभूत् उभयोःसेनयो राजन्युधिष्ठिरकृतेतदा २७ सोवगाह्यचमूंशत्रोःशरशक्तिसमाकुलाम् भीष्ममेवाभ्ययात्तूर्णंभ्रातृभिःपरिवारितः २८ तमुवाचततःपादौकराभ्यांपीड्यपांडवः भीष्मंशांतनवंराजायुद्धायसमुपस्थितम् २९ युधिष्ठिरउवाच आमंत्रयेत्वांदुर्धर्षत्वयायोत्स्यामहेसह अनुजानीहिमांतत्रआशिषश्चैवयोजय ३०

२० व्यक्तंनियंतंभीष्मंभीष्मस्यअतिकंसमीपं २१ २२ २३ २४ धिक्कृत्वाधिक्कृत्यअसमासआर्षः धिगित्यकरोदितिवा २५ २६ विवक्षितंवक्तुमिष्टंनुवितर्के २७ २८ २९ ३०

पराभावाय पराकृतोनिरस्तोभावः सत्तायत्रसः तस्मैमरणायेत्यर्थः परश्चासावभावश्चेतिविग्रहेसएवार्थः ३१ ३२ एवंगतेइदृगाचरणव तित्वयिसति ३३ ३४ क्लीबवत्स्वोक्तस्यवरस्ययुद्धादन्यदितिस्वेनैवसंकोचनात्कातरवत् भृतःपोषितः युद्धात्प्रातिभेद्यात् ३५ ३६

भीष्मउवाच यद्येवंनाधिगच्छेथायुधिमांपृथिवीपते शपेयंत्वांमहाराजपराभावायभारत ३१ प्रीतोऽस्मिपुत्रयु- द्ध्यस्वजयमाप्नुहिपांडव यत्तेऽभिलषितंचान्यत्तदवाप्नुहिसंयुगे ३२ व्रियतांचवरःपार्थकिमस्मत्तोऽभिकांक्षसि ए वंगतेमहाराजनतवास्तिपराजयः ३३ अर्थस्यपुरुषोदासोदासस्त्वर्थोनकस्यचित् इतिसत्यंमहाराजबद्धोस्म्यर्थे- नकौरवैः ३४ यतस्त्वांक्लीबवद्वाक्यंब्रवीमिकुरुनंदन भृतोऽस्म्यर्थेनकौरव्यैर्युद्धादन्यत्किमिच्छसि ३५ युधिष्ठि रउवाच मंत्रयस्वमहाप्राज्ञहितार्थीममनित्यशः युध्यस्वकौरवार्थेवैममैषसततंवरः ३६ भीष्मउवाच राजन्कि मत्रसाह्यंतेकरोमिकुरुनंदन कामंयोत्स्येपरस्यार्थेब्रूहियत्तेविवक्षितम् ३७ युधिष्ठिरउवाच तस्मात्पृच्छाम्यहं तातपितामहनमोऽस्तुते कथंजयेयंसंग्रामेभवंतमपराजितम् एतन्मेमंत्रयाहितंयदिश्रेयःप्रपश्यसि ३८ भीष्म उवाच नतंपश्यामिकौंतेययोमांयुध्यंतमाहवे विजयेतपुमान्कश्चिदपिसाक्षाच्छतक्रतुः ३९ युधिष्ठिरउवाच तस्मात्पृच्छाम्यहंतुत्वांपितामहनमोऽस्तुते जयोपायंब्रवीहित्वमात्मनःसमरेपरैः ४० भीष्मउवाच नस्मतंता- तपश्यामिसमरेयोजयेतमाम् नतावन्मृत्युकालोमेपुनरागमनंकुरु ४१ संजयउवाच ततोयुधिष्ठिरोवाक्यंभी ष्मस्यकुरुनंदनः शिरसाप्रतिजग्राहभूयस्तमभिवाद्यच ४२ प्रागात्पुनर्महाबाहुराचार्यस्यरथंप्रति पश्यतांसर्वसै न्यानांमध्येनभ्रातृभिःसह ४३ सद्रोणमभिवाद्याथकृत्वाचैवप्रदक्षिणं उवाचवाचादुर्धर्षमात्मनिःश्रेयसंवचः ४४ आमंत्रयेत्वांभगवन्योत्स्येविगतकल्मषः कथंजयेरिपून्सर्वाननुज्ञातस्त्वयाद्विज ४५ द्रोणउवाच यदिमांनाधिग च्छेथायुद्धायकृतनिश्चयः शपेयंत्वांमहाराजपराभावायसर्वशः ४६ तद्युधिष्ठिरतुष्टोऽस्मिपूजितश्चत्वयानघ अ नुजानामियुध्यस्वविजयंसमवाप्नुहि ४७ करवाणिचतेकामंब्रूहियत्तेविवक्षितं एवंगतेमहाराजयुद्धादन्यत्किमिच्छसि ४८

साह्यंसाहाय्यं ३७ श्रेयःप्रपश्यसि यदिवक्तुंयोग्यमितितर्हिवदेत्यर्थः ३८ ३९ ४० तावत्संप्रति ४१ ४२ ४३ आत्मनिःश्रेयसंस्वहित साधनम् ४४ अहंरिपून्कथंजयेतत्त्वंविगतकल्मषःसन्कथयेतिशेषः ४५ ४६ ४७ ४८ [illegible] [illegible] [illegible]

४९ ५० ५१ ध्रुवोवश्यंभावीअभिजानामिअनुजानामिविमोक्ष्यसेशत्रून्जीवितादितिशेषः ५२ ५३ ५४ ५५ हंतविषादे ५६ ५७



अर्थस्यपुरुषोदासोदासस्त्वर्थोनकस्यचित् इतिसत्यंमहाराजबद्धोऽस्म्यर्थेनकौरवैः ४९ अतस्त्वांक्लीबवद्ब्रूयांयु
द्धादन्यत्किमिच्छसि योत्स्यामिकौरवस्यार्थेनवाशास्योजयोमम ५० युधिष्ठिरउ० जयमाशास्वमेब्रह्मन्मंत्रयस्व
चमद्धितम् युद्ध्यस्वकौरवस्यार्थेवरएषवृतोमया ५१ द्रोणउवाच ध्रुवस्तेविजयोराजन्यस्यमंत्रीहरिस्तव अ
हंत्वामभिजानामिरणेशत्रून्विमोक्ष्यसे ५२ यतोधर्मस्ततः कृष्णोयतः कृष्णस्ततोजयः युध्यस्वगच्छकौंतेयपृच्छ
मांकिंब्रवीमिते ५३ युधिष्ठिरउवाच पृच्छामित्वांद्विजश्रेष्ठशृणुमेयद्विवक्षितम् कथंजयेयंसंग्रामेभवंतमपरा-
जितम् ५४ द्रोणउवाच नतेऽस्तिविजयस्तावद्यावद्युद्ध्याम्यहंरणे ममाशुनिधनेराजन्यतस्वसहसोदरैः ५५ युधि
ष्ठिरउवाच हंततस्मान्महाबाहोवधोपायंवदात्मनः आचार्यप्रणिपत्यैषपृच्छामित्वांनमोऽस्तुते ५६ द्रोणउवाच
नशत्रुंतातपश्यामियोमांहन्याद्रणेस्थितम् युद्ध्यमानंसुसंरब्धंशरवर्षौघवर्षिणम् ५७ ऋतेप्रायगतंराजन्न्यन्-
स्तशस्त्रमचेतनम् हन्यान्मांयुधियोधानांसत्यमेतद्ब्रवीमिते ५८ शस्त्रंचाहंरणेजह्यांश्रुत्वासुमहदप्रियं श्रद्धेय-
वाक्यात्पुरुषादितिसत्यंब्रवीमिते ५९ संजयउवाच एतच्छ्रुत्वामहाराजभारद्वाजस्यधीमतः अनुमान्यतमा-
चार्यंप्रायाच्छारद्वतंप्रति ६० सोभिवाद्यकृपंराजन्कृत्वाचाभिप्रदक्षिणं उवाचदुर्धर्षतरंवाक्यंवाक्यविशारदः
६१ अनुमानयित्वायोत्स्येऽहंगुरोविगतकल्मषः जयेयंचरिपून्सर्वाननुज्ञातस्त्वयाऽनघ ६२ कृपउवाच यदिमां-
नाभिगच्छेथायुद्धायकृतनिश्चयः शपेयंत्वांमहाराजपराभावायसर्वशः ६३ अर्थस्यपुरुषोदासोदासस्त्वर्थोनकस्यचि-
त् इतिसत्यंमहाराजबद्धोऽस्म्यर्थेनकौरवैः ६४ तेषामर्थेमहाराजयोद्धव्यमितिमेमतिः ब्रवीम्यतःक्लीबवत्त्वांयुद्धादन्य
किमिच्छसि ६५ युधिष्ठिरउवाच हंतपृच्छामितेतस्मादाचार्यशृणुमेवचः इत्युक्त्वाव्यथितोराजानोवाचगतचेत-
नः ६६ संजयउवाच तंगौतमःप्रत्युवाचविज्ञायास्यविवक्षितम् अवध्योहंमहाराजयुद्ध्यस्वजयमाप्नुहि ६७ प्रीत
स्तेभिगमेनाहंजयंतवनराधिप आशासिष्येसदोत्थायसत्यमेतद्ब्रवीमिते ६८ प्रायगतंमरणायनियतम् अचेतनंयोगबले-
न त्यक्तदेहम् योधानांमध्येकश्चिदितिशेषः ५८ जह्यांत्यजेयंश्रद्धेयवाक्यात्आदेयवचनात् ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ ६७ ६८

६९ ७० परान्प्रकृष्टान् ७१ ७२ ७३ ७४ ७५ ७६ ७७ ७८ ७९ प्रतिजानेअंगीकारोमि ८० ८१

एतच्छ्रुत्वामहाराजगोमतस्यवचस्तदा अनुमान्यकृपंराजाप्रययौयेनमद्रराट् ६९ सशल्यमभिवाद्याथकृत्वाचाभि
प्रदक्षिणम् उवाचराजादुर्धर्षमात्मनिःश्रेयसंवचः ७० अनुमानयेत्वांदुर्धर्षयोत्स्येविगतकल्मषः जयेयंचपरान्रा-
जन्ननुज्ञातस्त्वयारिपून् ७१ शल्यउवाच यदिमांनाभिगच्छेथायुद्धायकृतनिश्चयः शपेयंत्वांमहाराजपराभा
वायवैरणे ७२ तुष्टोऽस्मिपूजितश्चास्मियत्कांक्षसितदस्तुते अनुजानामिचैवत्वांयुध्यस्वजयमाप्नुहि ७३ ब्रूहिवै
वचनंवीरकेनार्थःकिंददामिते एवंगतेमहाराजयुद्धादन्यकिमिच्छसि ७४ अर्थस्यपुरुषोदासोदासस्त्वर्थोनक
स्यचित् इतिसत्यंवचोराजन्बद्धोऽस्म्यर्थेनकौरवैः ७५ करिष्यामिहितेकामंभागिनेययथेप्सितं ब्रवीम्यतःक्लीबव
त्त्वांयुद्धादन्यत्किमिच्छसि ७६ युधिष्ठिरउवाच मंत्रयस्वमहाराजनित्यंमद्धितमुत्तमम् कामंयुध्यपरस्यार्थे
वरमेतद्वृणोम्यहम् ७७ शल्यउवाच किमत्रब्रूहिसह्यंतेकरोमिनृपसत्तम कामंयोत्स्येपरस्यार्थेवृतोस्म्यर्थेनकौर
वैः ७८ युधिष्ठिरउ० सएवमेवरःशल्यउद्योगेयस्त्वयाकृतः सूतपुत्रस्यसंग्रामेकार्यस्तेजोवधस्त्वया ७९ शल्यउ०
संपत्स्यत्येषतेकामःकुंतीपुत्रयुधिष्ठिर यथेप्सितंगच्छयुध्यप्रतिजानेजयंतव ८० संजयउ० अनुमान्याथकौंते
योमातुलंमद्रकेश्वरम् निर्जगाममहासैन्याद्भ्रातृभिःपरिवारितः ८१ वासुदेवश्चराधेयमाहवेऽभिजगामह ततए
नमुवाचेदंपांडवार्थेगदाग्रजः ८२ श्रुतंमेकर्णभीष्मस्यद्वेषात्किलनयोत्स्यसि अस्मान्वरयराधेययावद्भीष्मोनह
न्यते ८३ हतेतुभीष्मेराधेयपुनरेष्यसिसंयुगं धार्तराष्ट्रस्यसाहाय्यंयदिपश्यसिचेत्समम् ८४ कर्णउ० नविप्रि-
यंकरिष्यामिधार्त्तराष्ट्रस्यकेशव त्यक्तप्राणंहिमांविद्धिदुर्योधनहितैषिणं ८५ तच्छ्रुत्वावचनंकृष्णःसन्न्यवर्तत-
भारत युधिष्ठिरपुरोगैश्चपांडवैःसहसंगतः ८६ अथसैन्यस्यमध्येतुप्राक्रोशत्पांडवाग्रजः योऽस्मान्वृणोतितमहं
वरयेसह्यकारणात् ८७ अथतान्समभिप्रेक्ष्ययुयुत्सुरिदमब्रवीत् प्रीतात्माधर्मराजानंकुंतीपुत्रंयुधिष्ठिरं ८८
अहंयोत्स्यामिभवतःसंयुगेधृतराष्ट्रजान् युष्मदर्थेमहाराजयदिमांवृणुषेऽनघ ८९ ८२ ८३ ८४ ८५ ८६ ८७

इदंवक्ष्यमाणंवचनंयुधिष्ठिरंप्रतिअब्रवीत् ८८ भवतःभवत्संबंधीमिषतइतिपाठेपश्यतस्तवेतिशेषः ८९

९० तंतुः संततिः पिंडः पितृयज्ञः अन्येसर्वेमरिष्यंतीतिभावः ९१ भजस्वेति अभजमानः सर्वोऽपिधृतराष्ट्रपुत्रोनभविष्यतिमरिष्यतीत्यर्थः ९२ ९३ ९४ ९५ पुष्करान्दीर्घकाहलान् एकपुष्करानितिपाठेमुरजान् ९६ ९७ गौरवंमान्यत्वम् ९८ सौहृदंमैत्रींकृपांस्नेहंदयांपरदुःखहाणेच्छाम् ९९ कीर्तिमतांपांडवानांस्कतिसंहितावाचइतिसंबंधः १०० आर्याःकुलीनाः वृत्तंचरितम् मदमभदपीडादेर्वागृभंगंगद्गदं



युधिष्ठिरउ० एह्येहिसर्वेयोत्स्यामस्तवभ्रातृनपंडितान् युयुत्सोवासुदेवश्चवयंब्रूमचसर्वशः ९० वृणोमित्वांमहाबाहोयुध्यस्वममकारणात् त्वयितंतुश्चपिंडश्चधृतराष्ट्रस्यदृश्यते ९१ भजस्वास्मान्राजपुत्रभजमानान्महाद्युते नभविष्यतिदुर्बुद्धिर्धार्तराष्ट्रोत्यमर्षणः ९२ संजयउवाच ततोयुयुत्सुः कौरव्यान्परित्यज्यसुतांस्तव जगामपांडुपुत्राणांसेनांविश्राव्यदुंदुभिम् ९३ ततोयुधिष्ठिरोराजासंप्रहृष्टोमहाभुजः जग्राहकवचंभूयोदीप्तिमत्कनकोज्वलं ९४ प्रत्यपद्यंततेसर्वेरथान्स्वान्पुरुषर्षभाः ततोव्यूहंयथापूर्वंप्रत्यव्यूहंततेपुनः ९५ अवादयन्दुंदुभीश्चशतशश्चैवपुष्करान् सिंहनादांश्चविविधान्विनेदुःपुरुषर्षभाः ९६ रथस्थान्पुरुषव्याघ्रान्पांडवान्प्रेक्ष्यपार्थिवाः धृष्टद्युम्नादयःसर्वेपुनर्जहृषिरेतदा ९७ गौरवंपांडुपुत्राणांमान्यान्मानयतांचतान् दृष्ट्वामहीक्षितस्तत्रपूजयांचक्रिरेभृशं ९८ सौहृदंचकृपांचैवप्राप्तकालंमहात्मनाम् दयांचज्ञातिषुपरांकथयांचक्रिरेनृपाः ९९ साधुसाध्वितिसर्वत्रनिश्चेरुस्स्तुतिसंहिताः वाचःपुण्याःकीर्तिमतांमनोहृदयकर्षणाः १०० म्लेच्छाश्चार्याश्चयेतत्रददृशुःशुश्रुवुस्तदा वृत्तंतत्पांडुपुत्राणांरुरुदुस्तेसगद्गदाः १०१ ततोजघ्नुर्महाभेरीःशतशश्चैवपुष्करान् शंखांश्चगोक्षीरनिभान्दध्मुर्हृष्टमनस्विनः १०२ इतिश्रीम०भीष्मपर्वणिभीष्माद्यभिगमनेत्रिचत्वारिंशोऽध्यायः ४३ धृतराष्ट्रउवाच एवंव्यूढेष्वनीकेषुमामकेष्वितरेषुच केपूर्वंप्राहरंस्तत्रकुरवःपांडवास्तथा १ संजयउवाच भ्रातुस्तद्वचनंश्रुत्वापुत्रोदुःशासनस्तव भीष्मंप्रमुखतःकृत्वाप्रययौसेनयासह २ तथैवपांडवाःसर्वेभीमसेनपुरोगमाः भीष्मेणयुद्धमिच्छंतःप्रययुर्हृष्टमानसाः ३ क्ष्वेलाःकिलकिलाशब्दाःक्रकचागोविषाणिकाः भेरीमृदंगमुरजाहयकुंजरनिःस्वनाः ४

विदुः १०१ १०२ इतिश्रीमन्महाभारतेभीष्मपर्वभावदीपेत्रिचत्वारिंशोऽध्यायः ४३ एवंव्यूढेष्वित्यादेर्दृष्टाभीमस्यविक्रममित्यंतस्यसर्वातिशायीभीष्मस्यपराक्रमइतितात्पर्यार्थः १ २ ३ क्ष्वेलाःसिंहनादाः मृदंगामर्दलाः मुरजाःक्षुद्रमर्दलाः ४ ६९ ६९ ६९

समाद्रवन् अन्योन्यंसंगताअभूवन् ५ महान्समुच्छ्रयः संप्रहारोयत्र ६ ७ गोवृषोबलीवर्दश्रेष्ठः ८ अभ्यभूत् अभिभूतवान् ९ १० से
न्याः सेनामुख्याः ११ १२ नादयन्नादंकुर्वन् १३ सोदर्याः राजानुजाः १४ १५ १६ निर्मुक्ताः मुक्तकंचुकाश्वाशीविषाउपमायेषांता

उभयोः सेनयोराजंस्ततस्तेस्मसमाद्रवन् वयंतान्प्रतिनर्दंतस्तदासीत्तुमुलंमहत् ५ महांत्यनीकानिमहासमुच्छ्रयेसमा-
गमेपांडवधार्त्तराष्ट्रयोः चकंपिरेशंखमृदंगनिःस्वनैः प्रकंपितानीववनानिवायुना ६ नरेंद्रनागाश्वसमाकुलानामाग-
च्छतीनामशिवेमुहूर्ते बभूवघोषस्तुमुलश्चमूनांवातोद्धुतानामिवसागराणाम् ७ तस्मिन्समुत्थितेशब्देतुमुलेलोमह-
र्षणे भीमसेनोमहाबाहुः प्राणदद्गोवृषोयथा ८ शंखदुंदुभिनिर्घोषान्वारणानांचबृंहितं सिंहनादंचसैन्यानांभीमसेनर
वोभ्यभूत् ९ हयानांहेषमाणानामनीकेषुसहस्रशः सर्वानभ्यभवच्छब्दान्भीमसेनस्यनिःस्वनः १० तंश्रुत्वानिनदंतस्य
सैन्यास्तववितत्रसुः जीमूतस्येवनदतः शक्राशनिसमस्वनं ११ वाहनानिचसर्वाणिशकृन्मूत्रंप्रसुस्रुवुः शब्देनतस्यवीरस्य
सिंहस्येवेतरेमृगाः १२ दर्शयन्घोरमात्मानंमहाभ्रमिवनादयन् भीषयंस्तेसुतांस्तत्र तवएनान्समभ्ययात् १३ तमायांतंमहे
ष्वासंसोदर्याः पर्यवारयन् छादयंतः शरव्रातैर्मेघाइवदिवाकरम् १४ दुर्योधनश्चपुत्रस्तेदुर्मुखोदुःसहःसहः दुःशासनश्चाति
रथस्तथादुर्मर्षणोनृप १५ विविंशतिश्चित्रसेनोविकर्णश्चमहारथः पुरुमित्रोजयोभोजः सौमदत्तिश्चवीर्यवान् १६ महाचा
पानिधुन्वंतोजलदाइवविद्युतः आददानाश्चनाराचान्निर्मुक्ताशीविषोपमान् १७ अथतेद्रौपदीपुत्राः सौभद्रश्चमहारथः
नकुलः सहदेवश्चधृष्टद्युम्नश्चपार्षतः १८ धार्तराष्ट्रान्प्रतिययुरर्दयंतः शितैः शरैः वज्रैरिवमहावेगैः शिखराणिधराभृतां १९
तस्मिन्प्रथमसंग्रामेभीमज्यातलनिःस्वनैः तावकानांपरेषांचनासीत्कश्चित्पराङ्मुखः २० लाघवंद्रोणशिष्याणामपश्यंभर
तर्षभ निमित्तवेधिनांराजंश्छरानुत्सृजतांभृशं २१ नोपशाम्यतिनिर्घोषोधनुषांकूजतांतदा विनिश्चेरुः शरादीप्ताज्योतींषीव
नभस्तलात् २२ सर्वेत्वन्येमहीपालाः प्रेक्षकाइवभारत ददृशुर्दर्शनीयंतंभीमंज्ञातिसमागमम् २३ ततस्तेजातसंरंभाः परस्प
रकृतागसः अन्योन्यस्पर्द्धयाराजन्व्यायच्छंतमहारथाः २४ कुरुपांडवसेनेतेहस्त्यश्वरथसंकुले शुशुभातेरणेतीवपटेचित्र
गतेइव २५

न् १७ १८ १९ भीमाभयंकराज्यानांतलानांचनिःस्वनायेतैः २० लाघवंक्षिप्रहस्ततां निमित्तंलक्ष्यं २१ २२ भीमंभयंकरं २३ जा
तसंरंभाश्चिरसंभृतकोपाः कृतागसः कृतापराधाः भीमोपिबाल्येधार्तराष्ट्रान्मर्दयन्कृतापराधोस्तीत्युक्तंपरस्परेतिव्यायच्छंतः व्यायामंचक्रुः २४ पटेइ
तिसमम्यंतं २५

२६ २७ २८ २९ अंतर्धायनअंतर्हितः अडभावः आर्षः सैन्यनसेनाप्रभवेन ३० ३१ अतिअतिक्रम्य ३२ इतिश्रीमन्महाभा·भीष्म·टीकायांचतुश्चत्वारिंशोऽध्यायः ४४ पूर्वाह्णेतस्यअह्नः पूर्वाह्णेपूर्वभागे १ सृंजयानांपांचालभेदानाम् २ तलंज्याघातवारणम् ३ ४ तोत्रंगजद



ततस्तेपार्थिवाः सर्वेप्रगृहीताशरासनाः सहसैन्याः समापेतुः पुत्रस्यतवशासनात् २६ तेषामाधावतांतत्रगजाश्वकलिलोमहान् सिंहनादरवोन्मिश्रः शंखभेरीसमाकुलः २७ सयोधवांच्छरग्राहधनुर्नागोसिकच्छपः व्यावल्गितपुरोवातआसीत्क्षुब्धाब्धिवत्स्वनः २८ युधिष्ठिरेणचादिष्टापार्थिवास्तेसहस्रशः सहसैन्याः समापेतुः पुत्रस्यतववाहिनीं २९ उभयोः सेनयोस्तीव्रः सैन्यानांससमागमः अंतर्धीयतचादित्यः सैन्येनरजसावृतः ३० प्रयुद्धानांप्रभग्नानांपुनरावर्ततामपि नतुस्वेषांपरेषांचविशेषः समदृश्यत ३१ तस्मिन्स्तुमुलेयुद्धेवर्तमानेमहाभये अतिसर्वाण्यनीकानिपितातेतिव्यरोचत ३२ इतिश्रीमन्महाभा·भीष्मपर्वणियुद्धारंभेचतुश्चत्वारिंशोऽध्यायः ४४ संजयउवाच पूर्वाह्णेतस्यरौद्रस्ययुद्धमन्होविशांपते प्रावर्ततमहाघोरं राज्ञांदेहावकर्तनम् १ कुरूणांसृंजयानांचसंग्रामेविजिगीषताम् सिंहानामिवसंह्रादोदिवमुर्वींचनादयन् २ आसीत्किलकिलाशब्दस्तलशंखरवैः सह जज्ञिरेसिंहनादाश्चनराणांप्रतिगर्जताम् ३ तलत्राभिहतश्चैवज्याशब्दोभरतर्षभ पत्तीनांपदशब्दश्चवाजिनांचमहास्वनः ४ तोत्रांकुशनिपातश्चआयुधानांचनिःस्वनः घंटाशब्दश्चनागानामन्योन्यमभिधावतां ५ तस्मिन्समुदितःशब्दस्तुमुलोलोमहर्षणः बभूवरथनिर्घोषः पर्जन्यनिनदोपमः ६ तेमनः क्रूरमास्थायसमभित्यक्तजीविनाः पांडवानभ्यवर्तंतसर्वएवोच्छ्रितध्वजाः ७ स्वयंशांतनवोराजन्नभ्यधावद्धनंजयम् प्रगृह्यकार्मुकंघोरंकालदंडोपमंरणे ८ अर्जुनोपिधनुर्गृह्यगांडीवंलोकविश्रुतं अभ्यधावततेजस्वीगांगेयंरणमूर्द्धनि ९ तावुभौकुरुशार्दूलौपरस्परवधैषिणौ गांगेयस्तुरणेपार्थंविध्वानाकंपयद्बली १० तथैवपांडवोराजन्भीष्मंनाकंपयद्युधि सात्यकिस्तुमहेष्वासः कृतवर्माणमभ्ययात् ११ तयोः स्तुमुलंयुद्धंस्तुमहल्लोमहर्षणं सात्यकिः कृतवर्माणंकृतवर्माचसात्यकिम् १२ आनर्छतुः सनिर्घोषौतक्षमाणौपरस्परम् तौशराचितसर्वांगौशुशुभातेऽथसात्वतौ १३ वसंतेपुष्पशबलौपुष्पिताविवकिंशुकौ अभिमन्युर्महेष्वासो बृहद्बलमयोधयत् १४ ततः कोशलकोराजासौभद्रस्यविशांपते ध्वजंचिच्छेदसमरेसारथिंचाभ्यपातयत् १५

मनंवेणुकारव्यंवेणुध्वसमाकारं ५ ६ ७ ८ रणमूर्द्धनिरणांगणे ९ १० महेष्वासोमहान्इष्वासोधनुर्यस्य ११ १२ आनर्छतुः पीडितवंतौतक्षमाणौतनूकुर्वाणौ १३ पुष्पैः शबलौविचित्रौकिंशुकोपलाशो १४ १५

१६ शिताभ्यांतीक्ष्णाभ्यांध्वजमितिपूर्वेणान्वयः एकेनपार्ष्णिंपृष्ठगोपमितिच १७ १८ १९ कृतिनौयुद्धकुशलौ २० २१ केतुंध्वजं २२ क्षुद्र-

सौभद्रस्ततः क्रुद्धःपातिनेरथसारथी बृहद्वलंमहाराजविव्याधनवभिःशरैः १६ तथापराभ्यांभल्लाभ्यांशिताभ्यामरि मर्दनः ध्वजमेकेनचिच्छेदपार्ष्णिमेकेनसारथिम् १७ अन्योन्यंचशरैस्तीक्ष्णैस्ततक्षतुररिंदमौ मानिनंसमरेदीप्तंकृ तवैरंमहारथम् १८ भीमसेनस्तवसुतंदुर्योधनमयोधयत् तावुभौनरशार्दूलौकुरुमुख्यौमहारथौ १९ अन्योन्यंशर वर्षाभ्यांववृधातेरणाजिरे तौवीक्ष्यतुमहात्मानौकृतिनौचित्रयोधिनौ २० विस्मयःसर्वभूतानांसमपद्यतभारत दुःशास नस्तुनकुलंप्रत्युद्यायमहारथम् २१ अविध्यन्निशितैर्बाणैःप्रहसन्निवभारत तस्यमाद्रीसुतःकेतुंसशरंचशरासनं २२ चिच्छेदनिशितैर्बाणैःप्रहसन्निवभारत अथैनंपंचविंशत्याक्षुद्रकाणांसमर्पयत् २३ पुत्रस्तवदुर्धर्षोनकुलस्य महाहवे तुरंगांश्चैवचिच्छेदध्वजंचैवाभ्यपातयत् २४ दुर्मुखःसहदेवंतुप्रत्युद्यायमहाबलं विव्याधशरवर्षेणयतमा नंमहाहवे २५ सहदेवस्ततोवीरोदुर्मुखस्यमहाहवे शरेणभृशतीक्ष्णेनपातयामाससारथिं २६ तावन्योन्यंसमासा द्यसमरेयुद्धदुर्मदौ त्रासयेतांशरैर्घोरैःकृतप्रतिकृतैषिणौ २७ युधिष्ठिरःस्वयंराजामद्रराजानमभ्ययात् तस्यमद्रप तिश्चापंद्विधाचिच्छेदपश्यतः २८ तदपास्यधनुश्छिन्नंकुंतीपुत्रोयुधिष्ठिरः अन्यत्कार्मुकमादत्तवेगवद्बलवत्तरं २९ ततोमद्रेश्वरंराजाशरैःसन्नतपर्वभिः छादयामाससंक्रुद्धस्तिष्ठतिष्ठेतिचाब्रवीत् ३० धृष्टद्युम्नस्ततोद्रोणमभ्यद्रवत भारत तस्यद्रोणःसुसंक्रुद्धःपरासुकरणंदृढं ३१ धनुश्चिच्छेदसमरेपांचालस्यमहात्मनः शरंचैवमहाघोरंकालदं- डमिवापरम् ३२ प्रेषयामाससमरेसोस्यकायेन्यमज्जत अथान्यद्धनुरादायसायकांश्चचतुर्दश ३३ द्रोणंद्रुपदपु त्रस्तुप्रतिविव्याधसंयुगे तावन्योन्यंसुसंरब्धौचक्रतुःसुभृशंरणं ३४ सौमदत्तिंरणेशंखोरभसंरभसोयुधि अ भ्युद्ययौमहाराजतिष्ठतिष्ठेतिचाब्रवीत् ३५ तस्यवैदक्षिणंवीरोनिर्बिभेदरणेभुजम् सौमदत्तिस्ततःशंखंजत्रुदे- शेसमाहनत् ३६ तयोःसमभवद्युद्धंघोररूपंविशांपते दृप्तयोःसमरेतूर्णंदेवदानवयोरिव ३७ बाल्हीकंतुरणेक्रु द्धःक्रुद्धरूपंविशांपते अभ्यद्रवदमेयात्माधृष्टकेतुर्महारथः ३८

काणांबाणविशेषाणां २३ २४ २५ २६ २७ २८ २९ ३० परासुकरणंमारणसाधनम् ३१ ३२ ३३ ३४ रभसंसत्वरम् ३५ वीरःशंखः जत्रुदेशेअंससंधौ ३६ ३७ ३८

धृष्टकेतुःशिशुपालसुतः ३९ ४० समीयतुःअन्योन्यस्पर्द्धयासंमिलितौ ४१ ४२ ४३ सन्नतपर्वभिः अलक्षितग्रंथिभिः ४४ ४५



बाल्हीकस्ततोराजन्धृष्टकेतुममर्षणम् शरैर्बहुभिरानर्च्छत्सिंहनादमथानदत् ३९ चेदिराजस्तुसंक्रुद्धोबाल्हीकं
नवभिःशरैः विव्याधसमरेतूर्णमत्तोमत्तमिवद्विपम् ४० तौतत्रसमरेक्रुद्धौनर्दंतौचमुहुर्मुहुः समीयतुःसुसंक्रुद्धावं-
गारकबुधाविव ४१ राक्षसंक्रूरकर्माणंक्रूरकर्माघटोत्कचः अलंबुषंप्रत्युदियाद्बलंशक्रइवाहवे ४२ घटोत्कचस्तु-
संक्रुद्धंराक्षसंतंमहाबलम् नवत्यासायकैस्तीक्ष्णैर्दारयामासभारत ४३ अलंबुषस्तुसमरेभैमसेनिंमहाबलम् बहु
धादारयामासशरैःसन्नतपर्वभिः ४४ व्यभ्राजेतांततस्तौतुसंयुगेशरविक्षतौ शिखंडीसमरेराजन्द्रौणिमभ्युद्य
यौबली ४५ अश्वत्थामाततःक्रुद्धःशिखंडिनमवस्थितम् नाराचेनसुतीक्ष्णेनभृशंविद्ध्वाव्यकंपयत् ४६ शिखं-
ड्यपिततोराजन्द्रोणपुत्रमताडयत् सायकेनसुपीतेनतीक्ष्णेननिशितेनच ४७ जघ्नतुस्तौतदान्योन्यंशरैर्बहुविधै
र्मृधे भगदत्तंरणेशूरंविराटोवाहिनीपतिः ४८ अभ्ययात्त्वरितोराजंस्ततोयुद्धमवर्तत विराटोभगदत्तंतुशरवर्षेणभारत ४९
अभ्यवर्षत्सुसंक्रुद्धोमेघोवृष्ट्याइवाचलम् भगदत्तस्ततंतूर्णंविराटंपृथिवीपतिं ५० छादयामाससमरेमेघःसूर्यमिवोदितं
बृहत्क्षत्रंचकैकेयंकृपःशारद्वतोययौ ५१ तंकृपःशरवर्षेणछादयामासभारत गौतमंचसुसंक्रुद्धंशरवृष्ट्याभ्यपूरयत् ५२
ततोऽन्योन्यंहयान्हत्वाधनुश्छित्वाचभारत विरथावसियुद्धायसमीयतुरमर्षणौ ५३ तयोस्तदभवद्युद्धंघोररूपंदुरासदं
द्रुपदस्तुततोराजासैंधवंवैजयद्रथम् ५४ अभ्युद्ययौसुसंरब्धोहृष्टरूपंपरंतपः ततःसैंधवकोराजाद्रुपदंविशिखैस्त्रिभिः
५५ ताडयामाससमरेसचतंप्रत्यविध्यत तयोःसमभवद्युद्धंघोररूपंसुदारुणम् ५६ ईक्षितृप्रीतिजननंशुक्रांगारक-
योरिव विकर्णस्तुततस्तूर्णंसुतसोमंमहाबलम् ५७ अभ्ययाज्जवनैरश्वैस्ततोयुद्धमवर्तत विकर्णःसुतसोमंतुवि-
ध्वानाकंपयच्छरैः सुतसोमोविकर्णंचतदद्भुतमिवाभवत् ५८ सुशर्माणंनरव्याघ्रश्चेकितानोमहारथः अभ्यद्रवत्सु
संक्रुद्धःपांडवार्थेपराक्रमी ५९ सुशर्मातुमहाराजचेकितानंमहारथं महताशरवर्षेणवारयामाससंयुगे ६० चेकितानो
पिसंरब्धःसुशर्माणंमहाहवे ववर्षशरवर्षेणमहामेघइवाचलम् ६१

४६ सुपीतेनसुष्ठुपायितेन तीक्ष्णेनसूक्ष्मधारेणयतःनि-
शितेनशाणोल्लीढेन ४७ मृधेसंग्रामे ४८ ४९ वृष्ट्याइवेत्यसंधिरार्षः ५० ५१ ५२ ५३ ५४ ५५ ५६ तुभ्यंतव ५७ सुतसोमंभैमसेनिं ५८ चे
कितानोयादवः ५९ ६० ६१

६२ ६३ ६४ ६५ ६६ ६७ इरावानर्जुनपुत्रः ६८ ६९ गदाग्रेणगदासुखेन ७० समसज्जतुः संसक्तावभूताम् ७१ तयोर्द्वंद्व

शकुनिः प्रतिविंध्यंतुपराक्रांतंपराक्रमी अभ्यद्रवतराजेंद्रमत्तंसिंहइवद्विपम् ६२ यौधिष्ठिरस्तुसंक्रुद्धः सौबलंनिशितैः
शरैः व्यदारयतसंग्रामेमघवाइवदानवं ६३ शकुनिः प्रतिविंध्यंतुप्रतिविध्यन्महाहवे अदारयन्महाप्राज्ञंशरैः सन्नतप-
र्वभिः ६४ सुदक्षिणंतुराजेंद्रकांबोजानांमहारथम् श्रुतकर्मापराक्रांतमभ्यद्रवतसंयुगे ६५ सुदक्षिणस्तुराजेंद्रसाहदेविंमहारथम् विध्वानाकंपयत्तंवैमैनाकमिवपर्वतम् ६६ श्रुतकर्माततःक्रुद्धः कांबोजानांमहारथं शरैर्बहुभिरानर्च्छ
द्दारयन्निवसर्वशः ६७ इरावानथसंक्रुद्धः श्रुतायुषममर्षणम् प्रत्युद्ययौरणेयत्तोयत्तरूपंपरंतपः ६८ आर्जुनिस्तस्य
समरेहयान्हत्वामहारथः ननादबलवान्राजंस्तत्सैन्यंप्रत्यपूरयत् ६९ श्रुतायुस्तुसुसंक्रुद्धः फाल्गुनेः समरेहयान् नि
जघानगदाग्रेणततोयुद्धमवर्तत ७० विंदानुविंदावावंत्यौकुंतिभोजंमहारथम् ससेनंससुतंवीरंसमसज्जतुराहवे ७१
तत्राद्भुतमपश्यामस्तयोर्घोरंपराक्रमम् अयुध्येतास्थिरौभूत्वामहत्यासेनयासह ७२ अनुविंदस्तुगदयाकुंतिभोजमता
डयत् कुंतिभोजस्ततंतूर्णंशरव्रातैरवाकिरत् ७३ कुंतिभोजसुतश्चापिविंदंविव्याधसायकैः सचतंप्रतिविव्याधतदद्भु
तमिवाभवत् ७४ केकयाभ्रातरः पंचगांधारान्पंचमारिष ससैन्यान्सहसैन्यास्तुयोधयामासुराहवे ७५ वीरबाहुश्च
तेपुत्रोवैराटिंरथसत्तमं उत्तरंयोधयामासविव्याधनवभिःशरैः ७६ उत्तरश्चापितंवीरंविव्याधनिशितैःशरैः चेदिराट्स-
मरेराजन्नुलूकंसमभिद्रवत् ७७ तथैवशरवर्षेणउलूकंसमविध्यत उलूकश्चापितंबाणैर्निशितैर्लोमवाहिभि ७८
तयोर्युद्धंसमभवद्घोररूपंविशांपते दारयेतांसुसंक्रुद्धावन्योन्यमपराजितौ ७९ एवंद्वंद्वसहस्राणिरथवारणवाजि-
नां पदातीनांचसमरेतववतेषांचसंकुले ८० मुहूर्तमिवतद्युद्धमासीन्मधुरदर्शनम् ततउन्मत्तवद्राजन्नप्राज्ञायतकिंच-
न ८१ गजोगजेनसमरेरथीचरथिनंययौ अश्वोश्वंसमभिप्रेक्ष्यपदातिश्चपदातिनम् ८२ ततोयुद्धंसुदुर्धर्षंव्याकुलं
समपद्यत शूराणांसमरेतत्रसमासाद्यपरस्परम् ८३ तत्रदेवर्षयः सिद्धाश्चारणाश्चसमागताः प्रेक्षंततद्रणंघोरंदेवासु
रसमंयुधि ८४ ततोदंतिसहस्राणिरथानांचापिमारिष अश्वौघाः पुरुषौघाश्चविपरीतंसमायसुः ८५

यो: ७२ नेएवद्वंद्वैद्वाभ्यामा

द्द ७३ ७४ ७५ ७६ ७७ ७८ ७९ द्वंद्वंद्वयोर्द्वयोर्युद्धम् ८० ८१ ८२ ८३ ८४ विपरीतंअतीतक्रमं निर्मर्यादंअपेतव्यवहा

८६ इतिश्रीमन्महाभा॰भीष्म॰टीकायांपंचचत्वारिंशोऽध्यायः ४५ राजन्निति प्रयुद्धानियुद्धंकृतवंति १ जज्ञेज्ञातवान् तत्रकाले स्वस्त्रीयो भागिनेयः २ आविष्टाइवभूतादिनागृहीताइव ३ युगानिअश्वस्कंधार्पितानिदारूणि ४ रथेषारथदंडाः कूबरः युगकीलः संगतैः संमुखागतैः सगताः मिलिताः ५ सन्निपत्यमिलित्वाप्रभिन्नाः श्चोतन्मदाः ६ विषाणैः दंतैः तोरणानिचतुस्तंभमंडपाकारस्यगजपल्याणस्यअंबारीतिभाषयाप्रसिद्धस्यद्वाराणिपताकाश्चतत्रैवस्तंभशेखरस्थाः ७ ८ अभिनीताः स्वशिक्षिताः ९ अप्रभिन्नाः अनुद्भिन्नमदाः संमु-



तत्रतत्रप्रदृश्यंतरथवारणपत्तयः सादिनश्चनरव्याघ्रयुध्यमानामुहुर्मुहुः ८६ इतिश्रीमन्महाभा॰भी॰ द्वंद्वयुद्धेपंचचत्वारिंशोऽध्यायः ४५ संजयउवाच राजंच्छतसहस्राणितत्रतत्रपदातिनाम् निर्मर्यादंप्रयुद्धानि तत्तेवक्ष्यामिभारत १ नपुत्रःपितरंजज्ञेनपितापुत्रमौरसं नभ्रातान्भ्रातरंतत्रस्वस्त्रीयोनचमातुलं २ नमातुलश्चस्वस्त्रीयंनसखायंसखातदा आविष्टाइवयुध्यंतेपांडवाःकुरुभिःसह ३ रथानीकंनरव्याघ्राःकेचिदभ्यपतन्रथैः अभज्यंतरथैरेवयुगानिभरतर्षभ ४ रथेषाश्चरथेषाभिःकूबरारथकूबरैः संगतैःसंगताःकेचित्परस्परजिघांसवः ५ नशेकुश्चलितुंकेचित्संनिपत्यरथारथैः प्रभिन्नास्तुमहाकायाःसन्निपत्यमहागजैः ६ बहुधादारयन्क्रुद्धाविषाणैरितरेतरम् सतोरणपताकैश्चवारणारणवारणैः ७ अभिसृज्यमहाराजवेगवद्भिर्महागजैः दंतैरभिहतास्तत्रचुक्रुशुःपरमातुराः ८ अभिनीताश्चशिक्षाभिस्तोत्रांकुशसमाहताः अप्रभिन्नाःप्रभिन्नानांसंमुखाभिमुखाययुः ९ प्रभिन्नैरपिसंयुक्ताःकेचित्तत्रमहागजाः क्रौंचवन्निनदंकृत्वाप्राद्रवंततततस्ततः १० सम्यक्प्रणीताश्चतथाप्रभिन्नकरटामुखाः ऋष्टितोमरनाराचैर्निरुद्धावरवारणाः ११ विनेदुर्भिन्नमर्माणोनिपेतुश्चगतासवः प्राधावंतदिशः केचिन्नदंतोभैरवान्रवान् १२ गजानांपादरक्षाश्चव्यूढोरस्काःप्रहारिणः ऋष्टिभिश्चधनुर्भिश्चविमलैश्चपरश्वधैः १३ गदाभिर्मुसलैश्चैवभिंदिपालैःसतोमरैः आयसैःपरिघैश्चापिनिस्त्रिंशैर्विमलैःशितैः १४ सुगृहीतैःसुसंरब्धाद्रवमाणास्ततस्ततः व्यदृश्यंतमहाराजपरस्परजिघांसवः १५

खाभिमुखाःअन्योन्यसंमुखाइत्यर्थः १० प्रणीताः प्रयुक्ताः ऋष्टयः हस्तक्षेप्याः क्षुद्रभल्लाः विंध्याटव्यांकरकाडीइतिप्रसिद्धाः तोमराः दीर्घदंडाभल्लाः नाराचाः महाशल्याः विस्तीर्णफलकाःशराः ११ १२ परस्वधैः कुठारैः १३ भिंदिपालैः परशवैः महाराष्ट्राणांगोफणइतिप्रसिद्धैः परिघैः दंडैः निःस्त्रिंशैः खड्गैः १४ द्रवमाणाः धावंतः १५ ❀ ❀

१६ अवक्षिप्तावधूतानांअधोमुखंपातितानांउत्तानपातितानांएषांमर्मस्पृशतामसीनामितिसंबंधः १७ रुग्णोतीव्राघातार्तः भिन्नः निकृत्तांगः अवभिन्नः क्षतांगः १८ प्रेतानांनारकाणाम् १९ हयैः करणभूतैः चामरापीडाश्चामरकलापाः तद्धारिभिः अतएवहंसैरिव अभिविद्रुताः संमुखमुपागताः २० प्रासाहस्तक्षेप्या भल्लाः सैंतीइतिप्रसिद्धाः कुंताइत्यपरे आशुगाः शीघ्रगाः २१ अग्र्यजवैरुत्तमवेगैः २२ भल्लैः दीर्घफलैर्बाणैः २३ २४ २५ सहसाबलेन अतर्कितंवासतिविद्यमाने २६ अभिचक्रमुः अभितोबभ्रमुः २७ पुंस्त्वात् वीर्यवत्त्वात् अतिमदत्वात् उद्भिन्न-

राजमानाश्चनिस्त्रिंशाः संसक्तानरशोणितैः प्रत्यदृश्यंतशूराणामन्योन्यमभिधावताम् १६ अवक्षिप्तावधूतानामसीनां वीरबाहुभिः संजज्ञेतुमुलः शब्दः पततांपरमर्मसु १७ गदामुसलरुग्णानांभिन्नानांचवरासिभिः दंतिदंतावभिन्नानांमृदितानांचदंतिभिः १८ तत्रतत्रनरौघाणांक्रोशतामितरेतरम् शुश्रुवुर्दारुणावाचः प्रेतानामिवभारत १९ हयैरपिहयारोहाश्चामरापीडधारिभिः हंसैरिवमहावेगैरन्योन्यमभिविद्रुताः २० तैर्विमुक्तामहाप्रासाजांबूनदविभूषणाः आशुगाविमलास्तीक्ष्णाःसंपेतुर्भुजगोपमाः २१ अश्वैरग्र्यजवैः केचिदाप्लुत्यमहतोरथान् शिरांस्याददिरेवीरारथिनामश्वसादिनः २२ बहूनपिहयारोहान्भल्लैः सन्नतपर्वभिः रथीजघानसंप्राप्यबाणगोचरमागतान् २३ नवमेघप्रतीकाशांश्चाक्षिप्यतुरगान्गजाः स्वपादैरवमृद्नंतिमत्ताः कनकभूषणाः २४ पाट्यमानेषु कुंभेषुपार्श्वेष्वपिस्फुदारुणाः प्रासैर्विमथिताः केचिद्विनेदुः परमातुराः २५ साश्वारोहान्हयान्केचिदुन्मथ्यवरवारणाः सहसाचिक्षिपुस्तत्रसंकुलेपरमेसति २६ साश्वारोहान्विषाणाग्रैरुत्क्षिप्यतुरगान्गजाः रथौघानवमृद्नंतः सध्वजानभिचक्रमुः २७ पुंस्त्वादतिमदत्वाच्चकेचित्तत्रमहागजाः साश्वारोहान्हयान्जघ्नुः करैः सचरणैस्तथा २८ प्रतिमानेषुगात्रेषुपार्श्वेष्वभिचवारणान् आशुगाविमलास्तीक्ष्णाः संपेतुर्भुजगोपमाः २९ नराश्वकायान्निर्भिद्यलौहानिकवचानिच निपेतुर्विमलाः शक्त्योवीरबाहुभिरर्पिताः महोल्काप्रतिमाघोरास्तत्रतत्रविशांपते ३० द्वीपिचर्मावनद्धैश्चव्याघ्रचर्मशयैरपि विकोशैर्विमलैः खड्गैरभिजघ्नुः परान्रणे ३१

मदत्वात् २८ प्रतिमानेषु ललाटेषुगात्रेषुअंगेषु वारणानभिगजानामभितः षष्ठ्यर्थेद्वितीया आशुगाः बाणाः २९ शक्त्यः शक्तयः कृत्स्नालोहदंडास्तएवमहोल्काप्रतिमाः ३० द्वीपीचित्रव्याघ्रः विकोशैः प्रयोगकाले ३१ ५ ५ ५ ५ ५

अभीतस्याभिमुख्येन सर्पणंस्यादभिप्लुतं तदेवस्यादभिक्रुद्धंओष्ठदंशादिसंयुतम् वामपक्षाश्रितंयानमेकपार्श्वविदारितम् चर्मप्रहारवारणंढाल इतिप्रसिद्धंभाषायां ३२ आक्षिप्यआकृष्यसर्वशब्दगाः सर्वेषामाक्षेप्तृणांशब्दमनुगच्छंतितेनतथा ३३ शंकुभिःकीलेः कंटकदंडादिगते:



अभिप्लुतमभिक्रुद्धमेकपार्श्वविदारितम् विदर्शयंतःसंपेतुः खड्गचर्मपरश्वधैः ३२ केचिदाक्षिप्यकरिणःसाश्वानपि रथान्करैः विकर्षतोदिशःसर्वासंपेतुःसर्वशब्दगाः ३३ शंकुभिर्दारिताः केचित्संछिन्नाश्चपरश्वधैः हस्तिभिर्मृदिताः केचित्क्षुण्णाःकेचित्तुरंगमैः ३४ रथचक्रनिकृत्ताश्चनिकृत्ताश्चपरश्वधैः व्याक्रोशंतमहाराजतत्रतत्रस्मबांधवान् ३५ पुत्रानन्येपितृनन्येभ्रातृंश्चसहबंधुभिः मातुलान्भागिनेयांश्चपरानपिचसंयुगे ३६ विकीर्णांत्राःसुबहवोभग्नसक्थाश्चभारत बाहुभिश्चापरेछिन्नैःपार्श्वेषुचविदारिताः ३७ क्रंदंतःसमदृश्यंतसुभृशंजीवितेप्सवः तृषापरिगताःकेचिदल्पसत्वाविशांपते भूमौनिपतिताःसंख्येमृगयांचक्रिरेजलम् ३८ रुधिरौघपरिक्लिन्नाःक्लिश्यमानाश्चभारत व्यनिंदन्भृशमात्मानंतवपुत्रांश्चसंगतान् ३९ अपरेक्षत्रियाःशूराःकृतवैराःपरस्परं नैवशस्त्रंविमुंचंतिनैवक्रंदंतिमारिष ४० तर्जयंतिचसंहृष्टास्तत्रतत्रविशांपते निर्दश्यदशनैश्चापिक्रोधात्स्वरदनच्छदं भ्रुकुटीकुटिलैर्वक्त्रैःप्रेक्षंतेपिपरस्परम् ४१ अपरेक्लिश्यमानास्तुशरार्ताव्रणपीडिताः निष्कूजाःसमपद्यंतदृढसत्वामहाबलाः ४२ अन्येचविरथाःशूरारथमन्यस्यसंयुगे प्रार्थयानानिपतिताःसंक्षुण्णावरवारणैः ४३ अशोभंतमहाराजसपुष्पाइवकिंशुकाः संबभूवुरनीकेषुबहवोभैरवस्वनाः ४४ वर्तमानेमहाभीमेतस्मिन्वीरवरक्षये अहनत्पितापुत्रंपुत्रश्चपितनरंरणे ४५ स्वस्रीयोमातुलंचापिस्वस्रीयंचापिमातुलः सखासखायंचतथासंबंधीबांधवास्तथा ४६ एवमेषक्षयोवृत्तःकुरूणांपांडवैःसह वर्तमानेभयेतस्मिन्निर्मर्यादेमहाभये ४७ भीष्ममासाद्यपार्थानांवाहिनीसमकंपत केतुनापंचतारेणतालेनभरतर्षभ ४८ राजतेनमहाबाहुरुच्छ्रितेनमहारथे बभौभीष्मस्तदाराजंश्चंद्रमाइवमेरुणा ४९ इतिश्रीम॰भा॰भी॰संकुलयुद्धेषट्चत्वारिंशोऽध्यायः ४६

३४ व्याक्रोशंतव्याक्रोशंस्तवंतः ३५ बंधुभिःसखिभिः ३६ भग्नसक्थाःभग्नोरवः ३७ तृषापिपासया अल्पसत्वाः धैर्यवर्जिताः मृगयांचक्रिरेयांचंते ३८ ३९ ४० रदनच्छदंओष्ठं ४१ निष्कूजाः निःशब्दाः ४२ रथमन्यस्यगंतुंप्रार्थयानामध्येमार्गेनिपतिताइतियोज्यं ४३ ४४ ४५ ४६ ४७ ४८ केतुनेतिसार्द्धः अत्रचंद्रकेत्वोः मेरुसरथभीष्मयोश्चोपमोपमेयभावः भीष्मस्यरुक्मरथत्वात् ४९ इतिश्रीम॰भी॰टी॰षट्चत्वारिंशोऽध्यायः ४६

गतोऽतीतः पूर्वाह्णस्यभूयिष्ठोभागोयस्मिन्नहनि १ २ ३ ४ ५ नृत्यतः नृत्यमिवकुर्वतः ६ पिशंगैः पिंगलैः ७ कर्णिकारेण कर्णिकारद्रुमोपमेन ८ अनुरथैः पार्ष्णिगोपादिभिः ९ १० पूर्णायतविसृष्टेनआकर्णकृष्टत्यक्तेनप्रणिहितेन ११ १२ कार्तस्वरंसुवर्णतान्सर्वान् १३ १४ लब्धलक्ष्यत

संजयउवाच गतपूर्वाह्णभूयिष्ठेतस्मिन्नहनिदारुणे वर्तमानेतथारौद्रेराजन्नरवरक्षये १ दुर्मुखः कृतवर्माचकृपः शल्योविविंशतिः भीष्मंजुगुपुरासाद्यतवपुत्रेणचोदिताः २ एतैरतिरथैर्गुप्तः पंचभिर्भरतर्षभ पांडवानामनीकानि विजगाहेमहारथः ३ चेदिकाशिकरूषेषुपांचाल्येषुचभारत भीष्मस्यबहुधातालश्चलत्केतुरदृश्यत ४ सशिरान्सिरणेवीरोरथांश्चसयुगध्वजान् विचकर्तमहावेगैर्भल्लैः सन्नतपर्वभिः ५ नृत्यतोरथमार्गेषुभीष्मस्यभरतर्षभ केचिदार्तस्वरंचक्रुर्नागामर्मणिताडिताः ६ अभिमन्युः सुसंक्रुद्धः पिशंगैस्तुरगोत्तमैः संयुक्तंरथमास्थायप्रायाद्भीष्मरथंप्रति ७ जांबूनदविचित्रेणकर्णिकारेणकेतुना अभ्यवर्ततभीष्मंचतांश्चैवरथसत्तमान् ८ सतालकेतोस्तीक्ष्णेनकेतुमाहत्यपत्रिणा भीष्मेणयुयुधेवीरस्तस्यचानुरथैःसह ९ कृतवर्माणमेकेनशल्यंपंचभिरायसैः भित्वानवभिरानर्च्छच्छराग्रैः प्रपितामहम् १० पूर्णायतविसृष्टेनसम्यक्प्रणिहितेनच ध्वजमेकेनचिच्छेद जांबूनदविभूषितम् ११ दुर्मुखस्यतुभल्लेनसर्वावरणभेदिना जहारसारथेः कायाच्छिरः सन्नपर्वभिः १२ धनुश्चिच्छेदभल्लेनकार्तस्वरविभूषितम् कृपस्यनिशिताग्रेणतांश्चतीक्ष्णमुखैः शरैः १३ जघानपरमक्रुद्धोनृत्यन्निव महारथः तस्यलाघवमुद्वीक्ष्यतुतुषुर्देवताअपि १४ लब्धलक्ष्यतयाकार्ष्णेः सर्वेभीष्ममुखारथाः सत्ववंतममन्यंतसाक्षादिवधनंजयम् १५ तस्यलाघवमार्गस्थमलातसदृशप्रभम् दिशः पर्यपतच्चापंगांडीवमिवघोषवत् १६ सतमासाद्यवेगेनभीष्मोनवभिराशुगैः विव्याधसमरेतूर्णमार्जुनिंपरवीरहा १७ ध्वजंचास्यत्रिभिर्भल्लैश्चिच्छेदपरमौजसः सारथिंचत्रिभिर्बाणैराजघानयतव्रतः १८ तथैवकृतवर्मातुकृपःशल्यश्चमारिष विध्वानाकंपयन्कार्ष्णिंमैनाकमिवपर्वतम् १९ सतैः परिवृतः शूरोधार्तराष्ट्रैर्महारथैः ववर्षशरवर्षाणिकार्ष्णिः पंचरथान्प्रति २० ततस्तेषांमहास्त्राणिसंवार्यशरवृष्टिभिः ननादबलवत्कार्ष्णिर्भीष्मायविसृजंश्छरान् २१

याकार्ष्णेःअभिमन्योः सत्ववंतंबलवंतम् १५ अलातसदृशप्रभं भ्राम्यमाणोल्मुकसममंडलाकारमित्यर्थः १६ १७ १८ १९ २० २१ ६९ ६९

२२ २३ २४ २५ २६ २७ २८ २९ पुत्रेणउत्तरेण ३० ३१ ३२ केसरीसिंहः ३३ ३४ प्रगृहीताग्रहस्तेनकुंडली-कृतशुंडाग्रेण ३५ तस्यवेगमितिसंबंधः रथेरथोपरि ३६ तस्यशल्यस्य बृहतः पुष्टान् साधुवाहिनः सम्यग्वहनशीलान् ३७ ३८ तमः



तत्रास्यस्कमहद्राजन्बाह्वोर्बलमदृश्यत यतमानस्यसमरेभीष्मंमर्दयतःशरैः २२ पराक्रांतस्यतस्यैवभीष्मोपि-प्राहिणोच्छरान् सतांश्चिच्छेदसमरेभीष्मचापच्युतान्शरान् २३ ततोध्वजममोघेषुर्भीमस्यनवभिःशरैः चि-च्छेदसमरेवीरस्ततउच्चुक्रुशुर्जनाः २४ सराजतोमहास्कंधस्तालोहेमविभूषितः सौभद्रविशिखैश्छिन्नःपपात भुविभारत २५ ध्वजंसौभद्रविशिखैःपतंतंभरतर्षभ दृष्ट्वाभीमोनदद्धृष्टःसौभद्रमभिहर्षयन् २६ अथभीष्मो महास्त्राणिदिव्यानिचबहूनिच प्रादुश्चक्रेमहारौद्रेरणेतस्मिन्महाबलः २७ ततःशरसहस्रैस्तंसौभद्रंप्रपि तामहः अवाकिरदमेयात्मातदद्भुतमिवाभवत् २८ ततोदशमहेष्वासाः पांडवानांमहारथाः रक्षार्थमभ्यधा वंतसौभद्रंत्वरितारथैः २९ विराटःसहपुत्रेणधृष्टद्युम्नश्चपार्षतः भीमश्चकेकयश्चैवसात्यकिश्चविशांपते ३० जवेनपततांतेषांभीष्मःशांतनवोरणे पांचाल्यंत्रिभिरानर्च्छत्सात्यकिंनवभिःशरैः ३१ पूर्णायतविसृष्टेनक्षु रेणनिशितेनच ध्वजमेकेनचिच्छेदभीमसेनस्यपत्रिणा ३२ जांबूनदमयःकेतुःकेसरीनरसत्तम पपातभी मसेनस्यभीष्मेणमथितोरथात् ३३ ततोभीमस्त्रिभिर्विद्ध्वाभीष्मंशांतनवंरणे कृपमेकेनविव्याधकृतवर्मा-णमष्टभिः ३४ प्रगृहीताग्रहस्तेनवैराटिरपिदंतिना अभ्यद्रवतराजानंमद्राधिपतिमुत्तरः ३५ तस्यवारणरा जस्यरथेचापततोजवात् शल्योनिवारयामासवेगमप्रतिमंरणे ३६ तस्यक्रुद्धःसनागेंद्रोबृहतःसाधुवाहिनः पदायुगमधिष्ठायजघानचतुरोहयान् ३७ सहताश्वेरथेतिष्ठन्मद्राधिपतिरायसीं उत्तरांतकरींशक्तिंचिक्षेप भुजगोपमाम् ३८ तयाभिन्नतनुत्राणःप्रविश्यविपुलंतमः सपपातगजस्कंधात्प्रमुक्तांकुशतोमरः ३९ स-मादायचशल्योसिमवप्लुत्यरथोत्तमात् वारणेंद्रस्यविक्रम्यचिच्छेदाथमहाकरं ४० भिन्नमर्माशरव्रातैश्छि न्नहस्तःसवारणः भीममार्तस्वरंकृत्वापपातचममारच ४१ एतदीदृशकंकृत्वामद्रराजोनराधिपः आरुरोहरथं तूर्णंभास्वरंकृतवर्मणः ४२ मोहं प्रमुक्तं हस्ताद्गलितंअंकुशादिकंयस्य ३९ ४० ४१ ४२ ५ ५ ५

उत्तरंतुहतंदृष्ट्वावैराटिर्भ्रातरंतदा श्वेतः सप्तमहावीरान्दृष्ट्वाक्रोधसमन्वितः धनूंषितेषांचिच्छेदबाणैःसन्नतपर्वभिः ४३ निकृत्तान्येवतानिस्मसमदृश्यंतभारत ततस्तेतुनिमेषार्द्धात्प्रतिपद्यधनूंषिच ४४ सप्तचैवपृषत्कांश्चश्वेतस्योपर्यपातयन् ततः पुनरमेयात्माभल्लैःसप्तभिराशुगैः ४५ निचकर्तमहाबाहुस्तेषांचापानिधन्विनाम् तेनिकृत्तमहाचापाः स्फुरमाणामहारथाः ४६ अथशक्तीःपरामृश्यविनेदुर्भैरवान्रवान् मुमुचुर्भारतश्रेष्ठसप्तश्वेतरथंप्रति ४७ ततस्ताज्वलिताःसप्तमहोल्काशनिनिःस्वनाः अप्राप्ताःसप्तभिर्भल्लैश्चिच्छेदपरमास्त्रवित् ४८ ततःसमादायशरंसर्वकायविदारणम् प्राहिणोद्भरतश्रेष्ठश्वेतोरुक्मरथंप्रति ४९ तस्यदेहेनिपतितोबाणोवज्रातिगोमहान् ततोरुक्मरथोराजन्सायकेनदृढंहतः ५० निषसादरथोपस्थेकश्मलंचाविशन्महत् तंविसंज्ञंविमनसंत्वरमाणस्तुसारथिः ५१ अपोवाहक्लब्धसंज्ञःसर्वलोकस्यपश्यतः श्वेतोथान्यान्समादायवाजिनोहेमभूषितान् ५२ तेषांषण्णांमहाबाहुर्ध्वजशीर्षाण्यपातयत् हयांश्चशेषान्निर्भिद्यसारथिंचपरंतप ५३ शरैश्चैनान्समाकीर्यप्रायाच्छल्यरथंप्रति ततोहलहलाशब्दस्तवसैन्येषुभारत ५४ दृष्ट्वासेनापतिंतूर्णंयांतंशल्यरथंप्रति ततोभीष्मंपुरस्कृत्यतवपुत्रोमहाबलः ५५ वृतश्चसर्वसैन्येनप्रायाच्छल्यरथंप्रति मृत्योरास्यमनुप्राप्तंमद्रराजममोचयत् ५६ ततोयुद्धंसमभवत्तुमुलंलोमहर्षणं तावकानांपरेषांचव्यतिषक्तरथद्विपम् ५७ सौभद्रेभीमसेनेचसात्यकौचमहारथे कैकेयेचविराटेचधृष्टद्युम्नेचपार्षते ५८ एतेषुनरसिंहेषुचेदिसैन्येषुचैवहि ववर्षशरवर्षाणिवृद्धःकुरुपितामहः ५९ इतिश्रीमन्महाभा० भीष्मप० श्वेतयुद्धेसप्तचत्वारिंशोऽध्यायः ४७ धृतराष्ट्रउवाच एवंश्वेतेमहेष्वासेप्राप्तेशल्यरथंप्रति कुरवःपांडवेयाश्चकिमकुर्वतसंजय भीष्मःशांतनवःकिंवातन्ममाचक्ष्वपृच्छतः १ संजयउवा० राजन्शतसहस्राणिततःक्षत्रियपुंगवाः श्वेतंसेनापतिंशूराःपुरस्कृत्यमहारथाः २ राज्ञोबलंदर्शयंतस्तवपुत्रस्यभारत शिखंडिनंपुरस्कृत्यत्रातुमैच्छन्महारथाः ३ अभ्यवर्तंतभीष्मस्यरथंहेमपरिष्कृतं जिघांसंतोयुधांश्रेष्ठंतदासीत्तुमुलंमहत् ४

५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०



तत्तेऽहंसंप्रवक्ष्यामिमहावैशसमद्भुतम् तावकानांपरेषांचयथायुद्धमवर्तत ५ तत्राकरोद्रथोपस्थान्शून्यान्शांतन
वोबहून् प्राकृंतदुत्तमांगानिशरैरच्छिनद्रथोत्तमः ६ समावृणोच्छरैरर्कमर्कतुल्यप्रतापवान् तुदन्समंतात्समरेरविरुद्यन्य
थातमः ७ तेनाजौप्रेषिताराजन्शराःशतसहस्रशः क्षत्रियांतकराःसंख्येमहावेगामहाबलाः ८ पातयामासशूराणांशि
रांसिशतशोरणे राजत्कंकटकाश्चैववीराविगतमस्तकाः ९ रथारथेषुसंसक्ताव्यदृश्यंतविशांपते रथोरथंपर्यवर्तत्तुरंगस्तु-
तुरंगमं १० सबलनिहतंवीरंलंबमानंसकार्मुकम् उदीर्णाश्चहयाराजन्वहंतश्चनतस्ततः ११ बद्धखड्गनिषंगाश्चविध्व
स्तशिरसोगताः शतशःपतिताभूमौवीरशय्यासुशेरते १२ परस्परेणधावंतःपतिताःपुनरुत्थिताः उत्थायचप्रधावंतो
द्वंद्वयुद्धमवाप्नुवन् १३ पीडिताःपुनरन्योन्यंलुठंतोरणमूर्द्धनि मत्तोगजःपर्यपतद्धतसारथिनोहयाः १४ सरथारथिन
श्चापिविमृद्नंतःसमंततः स्यंदनादपतत्कश्चिन्निहतोन्येनसायकैः १५ हतसारथिरप्युच्चैःपपातकाष्ठवद्रथः युध्यमा
नस्यसंग्रामेव्यूढेरजसिचोत्थिते १६ धनुःकूजितविज्ञानंतत्रासीत्प्रत्ययुध्यतः गात्रस्पर्शेनयोधानांव्यज्ञायत्परिप
थिनम् १७ युध्यमानंशरैराजन्सिंजिनीध्वजिनीत्यगात् अन्योन्यंवीरसंशब्दोनाश्रूयतभटैःकृतः १८ शब्दायमाने
संग्रामेपटहेकर्णदारिणि युध्यमानस्यसंग्रामेकुर्वतःपौरुषंस्वकम् १९ नाश्रौषीन्नामगोत्राणिकीर्तनंचपरस्परं भी
ष्मचापच्युतैर्बाणैरार्तानांयुध्यतांमृधे २० परस्परंषांवीराणांमनांसिमसकंपयन् तस्मिन्निराकुलेयुद्धेतुमुलेलोम
हर्षणे २१ पितापुत्रमौरसंपुत्रंनाभिजानातिकश्चन चक्रंभग्नंयुगंचैवएकोधुर्योहयोहतः २२ आक्षिप्तःस्यंदनाद्वीरः
ससारथिरजिह्मगैः विधुरैभिन्नचक्रेचरथेन्वविवशीकृते २३ तेनतेनस्मदृश्यंतेयोधमानाःपरस्परं योहतःशिरसा
च्छिन्नोमर्मभिर्निहतोहतः २४ अहतःकोपिनैवासीद्भीष्मेनिघ्नतिशात्रवान् श्वेतःकुरूणामकरोत्क्षयंतस्मिन्महा
हवे २५ राजपुत्रांस्तथोदारानवधीच्छतसंघशः चिच्छेदरथिनांबाणैःशिरांसिशतसंघशः २६ सांगदाबाहवश्चैवध
नूंषिचसमंततः रथिनोरथचक्राणिलूनाराणितथैवच २७ क्षुद्राणिचमहार्हाणिपताकाश्चविशांपते हयो-
घाश्वरथौघाश्चनरौघाश्चैतिभारत २८ २१ २२ २३ २४ २५ २६ २७ २८ ६ ६

२९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४

वारणाःशतशश्चैवहताःश्वेतेनसंयुगे वयंश्वेतहयाङ्गीनाविहायरथमुत्तमं २९ अपयातास्तथापश्चाद्यत्रपश्यामनेधुरं शरपातमपक्रम्यकुरवःकुरुनंदन ३० भीष्मंशांतनवंयुद्धेस्थितापश्यामसर्वशः अदीनोदीनसमयेभीष्मोऽस्माकंमहाहवे ३१ एकस्तस्थौनरव्याघ्रोगिरिर्मेरुरिवाचलः आददानइव प्राणान्सविताशिशिरात्यये ३२ गभस्तिभिरिवादित्यस्तस्थौहे ममरीचिमान् ससुमोचमहेष्वासःशरसंघाननेकशः ३३ निघ्नन्नमित्रान्समरेचक्रपाणिरिवासुरान् तेवध्यमानाभीष्मेण प्रजहुस्तंमहाहवं ३४ स्वयूथादिवतेयूथान्मुक्ताग्निमिवदारुणाः तमेकसुपलभ्यैकोहृष्टःपुष्टःपरंतप ३५ दुर्योधनप्रि- येयुक्तःपांडवान्बहुशोषयन् जीवितंदुस्थितंत्यक्त्वाभयंचस्कमहाहवे ३६ पातयामाससैन्यानिपांडवानांविशांपते प्रहरं तमनीकानिपितादेवव्रतस्तव ३७ दृष्ट्वासेनापतिंभीष्मोवेगितःसन्समभ्ययात् सभीष्मंशरजालेनमहतासमवाकिरत् ३८ श्वेतंचापितथाभीष्मःशरौघैःसमवाकिरत् तौवृषाविवनर्दन्तौमत्ताविवमहाद्विपौ ३९ व्याघ्राविवसुसंरब्धावन्योन्यमभि जघ्नतुः अस्त्रैरस्त्राणिसंवार्यततस्तौपुरुषर्षभौ ४० भीष्मःश्वेतश्चयुयुधेपरस्परवधैषिणौ एकान्हानिर्दहद्भीष्मःपांड वानामनीकिनीम् ४१ शरैःपरमसंक्रुद्धःश्वेतोयदिनपालयेत् पितामहंततोदृष्ट्वाश्वेतेनविमुखीकृतम् ४२ प्रहर्षंपांड वाजग्मुःपुत्रस्तेविमनाह्यभूत् ततोदुर्योधनःक्रुद्धःपार्थिवैःपरिवारितः ४३ ससैन्यःपांडवानीकमभ्यद्रवतसंयुगे श्वेतो गांगेयमुत्सृज्यतवपुत्रस्यवाहिनीम् ४४ नाशयामासवेगेनवृक्षान्वायुरिवौजसा द्रावयित्वाचमूंचैववैराटिःक्रोधमूर्छि तः ४५ आपतत्समहान्भूयोयत्रभीष्मोव्यवस्थितः तौतत्रापिगतौराजन्शरदीप्तौमहाबलौ ४६ अयुध्येतांमहा- त्मानौयथावावृत्रवासवौ अन्योन्यंतुमहाराजपरस्परवधैषिणौ ४७ निगृह्यकार्मुकंश्वेतोभीष्मंविव्याधसप्तभिः पराक्रमंततस्तस्यपराक्रम्यपराक्रमी ४८ तरसापारयामाससमत्तोमत्तमिवद्विपं वैराटिःसमरेक्रुद्धोभृशमायम्यकार्मुकं ४९ आजघानततोभीष्मंश्वेतःक्षत्रियनंदनः तंप्रत्यविध्यद्दशभिर्भीष्मःशांतनवस्तथा ५० सविद्धस्तेनबलवान्नाकंपतयथाचलः श्वे तःशांतनवंभूयःशरैःसन्नतपर्वभिः ५१ विव्याधपंचविंशत्यातदद्भुतमिवाभवत् प्रहस्यचरणेश्वेतःसृक्किणीपरिसंलिहन् ५२

४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५२ ५२ ५२

धनुश्चिच्छेद्भीष्मस्यदशभिर्दशधाशरैः संधायविशिखंश्चैवशरंलोमप्रवाहिनं ५३ उन्ममाथततस्तालंध्वजंशीर्षम
हात्मनः केतुंनिपतितंदृष्ट्वाभीष्मस्यतनयास्तव ५४ हतंभीष्ममम न्यंतश्वेतस्यवशमागतं पांडवाअपिसंहृष्टादध्मुः
शंखान्समंततः ५५ भीष्मस्यपतितंकेतुंदृष्ट्वातालंमहात्मनः ततोदुर्योधनःक्रोधात्स्वमनीकमचोदयत् ५६ य-
त्ताद्भीष्मंपरीप्सध्वंरक्षमाणाःसमंततः तानूचेपश्यमानास्तान्श्वेतोऽस्तमथवास्यति भीष्मःशांतनवःशूर स्तथास-
त्यंब्रवीमिते ५७ राज्ञस्तुवचनंश्रुत्वात्वरमाणामहारथाः बलेनचतुरंगेणगांगेयमनुपालयन् ५८ बाल्हिकःकृत
वर्माचकृपःशल्यश्चभारत जरासंधिर्विकर्णश्चचित्रसेनोविविंशतिः ५९ त्वरमाणास्त्वराकालेपरिवार्यसमंततः श
स्त्रवृष्टिंसुबहुलांश्वेतस्योपर्यपातयन् ६० तान्क्रुद्धान्निशितैर्बाणैस्त्वरमाणोमहाबलः अवारयदमेयात्मादर्शय
न्पाणिलाघवम् ६१ सन्निवार्यतुतान्सर्वान्केसरीकुंजरानिव महताशरवर्षेणभीष्मस्यधनुराच्छिनत् ६२ ततो
ऽन्यद्धनुरादायभीष्मःशांतनवोयुधि श्वेतंविव्याधराजेंद्रकंकपत्रैःशिलाशितैः ६३ ततःसेनापतिःक्रुद्धोभीष्मंबहु-
भिरायसैः विव्याधसमरेराजन्सर्वलोकस्यपश्यतः ६४ ततःप्रव्यथितोराजाभीष्मंदृष्ट्वानिवारितं प्रवीरंसर्वलोकस्य
श्वेतेनयुधिवैतदा ६५ निष्टानकश्चसुमहान्तवसैन्यस्यचाभवत् तंवीरंत्वरितंदृष्ट्वाश्वेतेनशरविक्षतं ६६ हतंश्वे-
तेनमन्यंतश्वेतस्यवशमागतं ततःक्रोधवशंप्राप्तःपितादेवव्रतस्तव ६७ ध्वजमुन्मथितंदृष्ट्वातांचसेनांनिवारिताम्
श्वेतंप्रतिमहाराजव्यसृजत्सायकान्बहून् ६८ तानावार्यरणेश्वेतोभीष्मस्यरथिनांवरः धनुश्चिच्छेदभल्लेनपुनरे-
वपितुस्तव ६९ उत्सृज्यकार्मुकंराजन्गांगेयःक्रोधमूर्च्छितः अन्यत्कार्मुकमादायविपुलंबलवत्तरं ७० तत्रसंधा
यविपुलान्भल्लान्सप्तशिलाशितान् चतुर्भिश्चतुरश्चाश्वान्श्वेतस्यपृतनापतेः ७१ ध्वजंद्वाभ्यांचचिच्छेदस-
प्तमेनचसारथेः शिरश्चिच्छेदभल्लेनसंक्रुद्धोलघुविक्रमः ७२ हताश्वसूतात्सरथादवप्लुत्यमहारथः अमर्षव
शमापन्नोव्याकुलःसमपद्यत ७३ विरथंरथिनांश्रेष्ठंश्वेतंदृष्ट्वापितामहः ताडयामाससनिशितैःशरसंघैःसमंततः ७४

सताड्यमानः समरेभीष्मचापच्युतैःशरैः स्वरथेधनुरुत्सृज्यशक्तिंजग्राहकांचनीम् ७५ ततःशक्तिंरणेघोरांगृ
हीत्वोग्रांमहाभयां कालदंडोपमांघोरांमृत्योश्चशमनक्षमां ७६ अब्रवीच्चतदाश्वेतोभीष्मंशांतनवंरणे तिष्ठेदा
नींरूसंरब्धः पश्यमांपुरुषोत्तम ७७ एवमुक्त्वामहेष्वासोभीष्मंयुधिपराक्रमी ततःशक्तिममेयात्माचिक्षेपभुज-
गोपमां ७८ पांडवार्थेपराक्रांतस्तवानर्थंचिकीर्षति हाहाकारोमहानासीत्पुत्राणांतेविशांपते ७९ दृष्ट्वाशक्तिंम
हाघोरांमृत्योर्दंडसमप्रभां श्वेतस्यकरनिर्मुक्तांनिर्मुक्तोरगसंनिभां ८० अपतत्सहसाराजन्महोल्केवनभस्तलात्
ज्वलंतीमंतरिक्षेतांज्वालाभिरभिसंवृतां ८१ रूसंभ्रांतस्तदाराजन्पितादेवव्रतस्तव अष्टभिर्नवधाभीष्मः शक्तिं
चिच्छेदपत्रिभिः ८२ उत्कृष्टहेमविकृतानिकृतानिशितैःशरैः उच्चुक्रुशुस्ततः सर्वेतावकाभरतर्षभ ८३ शक्तिं
विनिहतांदृष्ट्वावैराटिःक्रोधमूर्छितः कालोपहतचेताश्चकर्तव्यंनाभ्यजानत ८४ क्रोधसंमूर्च्छितोराजन्वैराटिः
प्रहसन्निव गदांजग्राहसंहृष्टोभीष्मस्यनिधनंप्रति ८५ क्रोधसंरक्तनयनोदंडपाणिरिवापरः भीष्मंसमभिदु
द्रावजलौघइवपर्वतम् ८६ तस्यवेगमसंवार्यंमत्वाभीष्मः प्रतापवान् प्रभावविन्मोक्षार्थंसहसाधरणींगतः
८७ श्वेतःक्रोधवशाविष्टोभ्रामयित्वातुतांगदां रथेभीष्मस्यचिक्षेपयथादेवोधनेश्वरः ८८ तयाभीमनिपाति
न्यासरथोभस्मसात्कृतः सध्वजःसहसूतेनसाश्वःसहयुगंधरः ८९ विरथंरथिनांश्रेष्ठंभीष्मंदृष्ट्वारथोत्तमाः
अभ्यधावंतसहिताःशल्यप्रभृतयोरथाः ९० ततोन्यंरथमास्थायधनुर्विस्फार्यदुर्मनाः शनकैरभ्ययाच्छ्वेतंगां
गेयःप्रहसन्निव ९१ एतस्मिन्नंतरेभीष्मः शुश्रावविपुलांगिरं आकाशादीरितांदिव्यामात्मनोहितसंश्रयां ९२
भीष्मभीष्ममहाबाहोशीघ्रंयत्नंकुरुष्ववै एषह्यस्यजयेकालोनिर्दिष्टोविश्वयोनिना ९३ एतच्छ्रुत्वातुवचनंदेव
दूतेनभाषितं संप्रहृष्टमनाभूत्वावधेतस्यमनोदधे ९४ विरथंरथिनांश्रेष्ठंश्वेतंदृष्ट्वापदातिनं सहितास्तन्यवर्तं
तपरीप्संतोमहारथाः ९५ सात्यकिर्भीमसेनश्चधृष्टद्युम्नश्चपार्षतः केकेयोधृष्टकेतुश्चअभिमन्युश्चवीर्यवान् ९६

एतानापततोदृष्ट्वाद्रोणशल्यकृपैःसह अवारयदमेयात्मावायुवेगानिवाचलः ९७ सन्निरुद्धेषुसर्वेषुपांडवेषुमहात्मसु श्वे-
तःखड्गमथाकृष्यभीष्मस्यधनुराच्छिनत् ९८ तदपास्यधनुश्छिन्नंत्वरमाणः पितामहः देवदूतवचःश्रुत्वावधेतस्यमनोदधे
९९ ततःप्रचरमाणस्तुपितादेवव्रतस्तव अन्यत्कार्मुकमादायत्वरमाणोमहारथः १०० क्षणेनसज्जमकरोत्शक्रचापस-
मप्रभम् पितातेभरतश्रेष्ठः श्वेतंदृष्ट्वामहारथम् १०१ वृतंतैर्नरव्याघ्रैर्भीमसेनपुरोगमैः अभ्यवर्ततगांगेयःश्वेतंसेना
पतिंकृते १०२ आपतंतंततोभीष्मंभीमसेनःप्रतापवान् आजघ्नेविशिखैःषष्ट्यासेनान्यंचमहारथः १०३ अभिम-
न्युंचसमरेपितादेवव्रतस्तव वारयित्वाशरैर्घोरैरन्यानपिमहारथान् १०४ आजघ्नेभरतश्रेष्ठस्त्रिभिःसन्नतपर्वभिः सा-
त्यकिंचशतेनाजौभरतानांपितामहः १०५ धृष्टद्युम्नंचविंशत्याकेकेयंचापिपंचभिः तांश्चसर्वान्महेष्वासोपितादेव-
व्रतस्तव १०६ वारयित्वाशरैर्घोरैःश्वेतमेवाभिदुद्रुवे ततःशरंमृत्युसमंभारसाधनमुत्तमं १०७ विकृष्यबलवान्भीष्मःस-
मधत्तदुरासदं ब्रह्मास्त्रेणसुसंयुक्तंतंशरंलोमवाहिनं ८ ददृशुर्देवगंधर्वाःपिशाचोरगराक्षसाः सतस्यकवचंभित्वा
ज्वलदग्निसमोजसः ९ जगामधरणींबाणोमहाशनिरिवज्वलन् अस्तंगच्छन्यथादित्यःप्रभामादायसत्वरः ११० ए
वंजीवितमादायश्वेतदेहाज्जगामसः तंभीष्मेणनरव्याघ्रंतथाविनिहतंयुधि ११ प्रपतंतमपश्यामगिरेःशृंगमिवच्यु
तम् अशोचन्पांडवास्तत्रक्षत्रियायेमहारथाः १२ प्रहृष्टास्तुसुताःसर्वेकुरवश्चापिसर्वशः ततोदुःशासनोराजन्श्वे-
तंदृष्ट्वानिपातितम् १३ वादित्रनिनदैर्घोरैर्नृत्यतिस्मसमंततः तस्मिन्हतेमहेष्वासेभीष्मेणाहवशोभिना १४ प्रावेपंत
महेष्वासाःशिखंडिप्रमुखारथाः ततोधनंजयोराजन्वार्ष्णेयश्चापिसर्वशः ११५ अवहारंशनैश्चक्रुर्निहतेवाहिनीप-
तौ ततोवहारःसैन्यानामभवत्तेषांचभारत १६ तावकानांपरेषांचनर्दतांहर्षतांस्वनः पार्थाविमनसोभूत्वान्यविशंत-
महारथाः चिंतयंतोवधंघोरंकौरवाणांपरंतप ११७ इतिश्रीमन्महाभारतेभीष्मपर्वणिश्वेतवधेअष्टचत्वा-
रिंशोऽध्यायः ४८ धृतराष्ट्रउवाच श्वेतेसेनापतौतातसंग्रामेनिहतेपरैः किमकुर्वन्महेष्वासाःपांचालाःपांडवैःसह १

२ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५

सेनापतिंसमाकर्ण्यश्वेतंयुधिनिपातितम् तदर्थंयततांचापिपरेषांप्रपलायिनां २ मनःप्रीणातिमेवाक्यंजयंसंजय-
शृण्वतः प्रत्यवायंचिंतयतोलज्जांप्राप्नोतिमेनहि ३ सहिवीरोनुरक्तश्चवृद्धःकुरुपतिस्तदा कृतवैरःसदातेनपितुःपु-
त्रेणधीमता ४ तस्योद्वेगाद्भयाच्चापिसंश्रितःपांडवान्पुरा सर्वस्वंपरिसंत्यज्यदुःखसंश्रित्यतिष्ठति ५ पांडवानांप्रतापे-
नदुर्गदेशंप्रविश्यच सपत्न शतसंबाधेसत्येवंसमवस्थितः ६ आश्रयोवैसदातेषांपुराराजासुदुर्मतिः ततोयुधिष्ठि-
रेभक्तःकथंसंजयसूदितः ७ प्रक्षिप्तःसंयतःक्षुद्रैःपातालेपुरुषाधमैः नयुद्धंरोचयेद्भीष्मोनचाचार्यःकथंचन
८ नकृपोनचगांधारीनाहंसंजयरोचये नवासुदेवोवार्ष्णेयोधर्मराजश्चपांडवः ९ नभीमोनार्जुनश्चैवनयमौपुरुष
र्षभौ वार्यमाणोमयानित्यंगांधार्याविदुरेणच १० जामदग्न्येनरामेणव्यासेनचमहात्मना दुर्योधनोयुद्धमनानि
त्यमेवहिसंजय ११ कर्णस्यमतमास्थायसौबलस्यचपापकृत् दुःशासनेनचतथापांडवानभ्यसूयत १२ तस्याहं-
व्यसनंघोरंमन्येप्राप्तंतुसंजय श्वेतस्यचविनाशेनभीष्मस्यविजयेनच १३ संक्रुद्धःकृष्णसहितःपार्थःकिमक-
रोद्युधि अर्जुनाद्धिभयंभूयस्तन्मेतातनशाम्यति १४ सहिशूरश्चकौंतेयःक्षिप्रकारीधनंजयः मन्येशरैःशरीरा
णिप्रमथिष्यतिविद्विषाम् १५ ऐंद्रिमिंद्रात्मजसमसुपेंद्रसदृशंरणे अमोघक्रोधसंकल्पंदृष्ट्वावःकिमभून्मनः १६
सचैववेदविच्छूरोज्वलनार्कसमद्युतिः ऐंद्रास्त्रविदमेयात्माप्रापतत्समितिंजयः १७ वज्रसंस्पर्शरूपाणामस्त्रा-
णांन्यायकारिता शश्वज्ज्याक्षेपहस्तस्तुकौंतेयोयोमहारथः १८ ससंजयमहाप्राज्ञोद्रुपदस्यात्मजोबली धृष्टद्यु-
म्नःकिमकरोत्श्वेतेयुधिनिपातिते १९ पुराचैवापराधेनवधेनचचमूपतेः मन्येमनःप्रजज्वालपांडवानांमहात्म
नाम् २० तेषांक्रोधंचिंतयंस्तुअहःसुचनिशासुच नशांतिमधिगच्छामिदुर्योधनकृतेनहि कथंचाभून्महद्युद्धंस
र्वमाचक्ष्वसंजय २१ संजयउवाच शृणुराजन्स्थिरोभूत्वातवापनयनोमहान् नचदुर्योधनेदोषमिममाधातु
मर्हसि २२ गतोदकेसेतुबंधोयादृक्तादृङ्मतिस्तव संदीप्तेभवनेयद्वत्कूपस्यखननंतथा २३ ५१ ५१

१६ १७ १८ १९ २० २१ २२ २३ ५१ ५१ ५१

गतपूर्वाण्हसमयेतस्मिन्नहनिदारुणे सेनापतौहतेश्वेतेभीष्मेणयुधिभारत २४ कृतवर्मणाचसहितंदृष्ट्वाशा-
ल्यमवस्थितं वैराटिःसमरश्लाघीशंखःपरबलार्दनः २५ सद्यःक्रोधात्प्रजज्वालहविषाहव्यवाडिव सविस्फार्यम-
हच्चापंशक्रचापोपमंबली २६ अभ्यधावज्जिघांसुर्वैशंखोमद्राधिपंबली महतारथवंशेनसमंतात्परिवारितः २७
सृजन्बाणमयंवर्षंप्रायाच्छल्यरथंप्रति तमापतंतंसंप्रेक्ष्यमत्तवारणविक्रमं २८ तावकानांरथाःसप्तसमंतात्पर्य
वारयन् मद्रराजंपरीप्संतोमृत्योर्दंष्ट्रांतरंगतं २९ बृहद्बलश्चकौशल्योजयत्सेनश्चमागधः तथारुक्मरथोराज-
न्पुत्रःशल्यश्चमानितः ३० विंदानुविंदावावंत्यौकांबोजश्चसुदक्षिणः बृहत्क्षत्रस्यदायादःसैंधवश्चजयद्रथः ३१
नानाधातुविचित्राणिकार्मुकाणिमहात्मनां विस्फारितान्यदृश्यंततोयदेष्विवविद्युतः ३२ तेतुबाणमयंवर्षंशंखमू-
र्ध्निन्यपातयन् निदाघांतेनिलोद्धूतामेघाइवनभोजलं ३३ ततःक्रुद्धोमहेष्वासःसप्तभल्लैःसुतेजनैः धनूंषितेषा
माच्छिद्यननर्दपृतनापतिः ३४ ततोभीष्मोमहाबाहुर्विनद्यजलदोयथा तालमात्रंधनुर्गृह्यशंखमभ्यद्रवद्रणे ३५
तमुद्यंतमुदीक्ष्याथमहेष्वासंमहाबलं संत्रस्तापांडवीसेनावातवेगाहतेवनौः ३६ तत्रार्जुनःसंत्वरितःशंखस्या-
सीत्पुरःसरः भीष्माद्रक्ष्योयमद्येतितत्रयुद्धमवर्तत ३७ हाहाकारोमहानासीद्योधानांयुधियुध्यतां तेजस्तेज-
सिसंपृक्तमित्येवंविस्मयंययुः ३८ अथशल्योगदापाणिरवतीर्यमहारथात् शंखस्यचतुरोवाहानवधीद्भरतर्ष-
भ ३९ सहताश्वाद्रथात्तूर्णंखड्गमादायविद्रुतः बीभत्सोश्चरथंप्राप्यततःशांतिमविंदत ४० ततोभीष्मरथात्तूर्ण
मुत्पतंति पतत्रिणः यैरंतरिक्षंभूमिश्चसर्वतःसमवस्तृता ४१ पांचालानथमत्स्यांश्चकेकयांश्चप्रभद्रकान् भी-
ष्मःप्रहरतांश्रेष्ठःपातयामासमार्गणैः ४२ उत्सृज्यसमरेराजन्पांडवंसव्यसाचिनं अभ्यद्रवतपांचाल्यंद्रुपदंसेन
यावृतम् ४३ प्रियंसंबंधिनंराजञ्छरांश्चविकिरन्बहून् अग्निनेवप्रदग्धानिवनानिशिशिरात्यये ४४ शरदग्धा-
न्यदृश्यंतसैन्यानिद्रुपदस्यह अतिष्ठतरणेभीष्मोविधूमइवपावकः ४५ मध्यंदिनेयथादित्यंतपंतमिवतेजसा
नशेकुःपांडवेयस्ययोधाभीष्मंनिरीक्षितुं ४६

वीक्षांचक्रुः समंतात्तेपांडवाभयपीडिताः त्रातारंनाभ्यपश्यंतगावःशीतार्दिताइव ४७ सातुयौधिष्ठिरीसेनागां
गेयशरपीडिता सिंहेनेवविनिर्भिन्नाशुक्लागौरिवगोपते ४८ हतविप्रद्रुतेसैन्येनिरुत्साहेविमर्दिते हाहाका-
रोमहानासीत्पांडुसैन्यस्यभारत ४९ ततोभीष्मःशांतनवोनित्यंमंडलकार्मुकः मुमोचबाणान्दीप्ताग्रानही-
नाशीविषानिव ५० शरैरेकायनीकुर्वन्दिशःसर्वायतव्रतः जघानपांडवरथानादिश्यादिश्यभारत ५१ ततः
सैन्येषुभग्नेषुमथितेषुचभारत प्राप्तेचास्तंदिनकरेनप्राज्ञायतकिंचन ५२ भीष्मंचसमुदीर्यंतंदृष्ट्वापार्थाम-
हाहवे अवहारमकुर्वंतसैन्यानांभरतर्षभ ५३ इतिश्रीमन्महाभा० भीष्मप० प्रथमदिवसयुद्धंनामएको-
नपंचाशत्तमोऽध्यायः ४९ संजयउवाच कृतेवहारेसैन्यानांप्रथमेभरतर्षभ भीष्मेचयुधिसंरब्धेहृष्टेदु-
र्योधनेतदा १ धर्मराजस्ततस्तूर्णमभिगम्यजनार्दनं भ्रातृभिःसहितःसर्वैःसर्वैश्चैवनरेश्वरैः २ शोकेनमहता
युक्तश्चिंतयानःपराजयं वार्ष्णेयमब्रवीद्राजादृष्ट्वाभीष्मस्यविक्रमं ३ कृष्णपश्यमहेष्वासंभीष्मंभीमपराक्र-
मं शरैर्दहतिसैन्यंमेग्रीष्मेकक्षमिवानलः ४ कथमेनंमहात्मानंशक्ष्यामःप्रतिवीक्षितुं लेलिह्यमानंसैन्यंमेह
विष्मंतमिवानलम् ५ एतंहिपुरुषव्याघ्रंधनुष्मंतंमहाबलं दृष्ट्वाविप्रद्रुतंसैन्यंमदीयंमार्गणाहतं ६ शक्योजेतुंय-
मःक्रुद्धोवज्रपाणिश्चसंयुगे वरुणःपाशभृच्चापिकुबेरोवागदाधरः ७ नतुभीष्मोमहाबाहुःशक्योजेतुंमहा-
बलः सोहमेवंगतेमग्नोभीष्मागाधजलेप्लुतः ८ आत्मनोबुद्धिदौर्बल्याद्भीष्ममासाद्यकेशव वनंयास्यामिवा
र्ष्णेयश्रेयोवामेनजीवितं ९ नत्विमान्पृथिवीपालान्दातुंभीष्मायमृत्यवे क्षपयिष्यतिसेनांमेकृष्णभीष्मोमहा
स्त्रवित् १० यथानलंप्रज्वलितंपतंगाःसमभिद्रुताः विनाशायैवगच्छंतितथामेसैनिकाजनाः ११ क्षयंनी-
तोस्मिवार्ष्णेयराज्यहेतोःपराक्रमी भ्रातरश्चैवमेवीराःकर्शिताःशरपीडिताः १२ मत्कृतेभ्रातृसौहार्दाद्रा-
ज्याद्भ्रष्टास्तथास्त्ररवात् जीवितंबहुमन्येऽहंजीवितंत्वद्यदुर्लभम् १३ ५० ५० ५०

जीवितस्यहिशेषेणतपस्तप्स्यामिदुश्चरं नघातयिष्येचरणेमित्राणीमानिकेशव १४ रथान्मेबहुसाहस्रान्द्विषेरस्त्रैर्म
हाबलः घातयत्यनिशंभीष्मःप्रवराणांप्रहारिणां १५ किंनुकृत्वाहितंमेस्याद्ब्रूहिमाधवमाचिरं मध्यस्थमिवपश्या-
मिसमरेसव्यसाचिनम् १६ एकोभीमःपरंशक्त्यायुध्यत्येषमहाभुजः केवलंबाहुवीर्येणक्षत्रधर्ममनुस्मरन् १७
गदयावीरघातिन्यायथोत्साहंमहामनाः करोत्यसुकरंकर्मरथाश्वनरदंतिषु १८ नालमेषःक्षयंकर्तुंपरसैन्यस्य-
मारिष आर्जवेनैवयुद्धेनवीरोवर्षशतैरपि १९ एकोऽस्त्रवित्सखातेयंसोप्यस्मान्समुपेक्षते निर्दह्यमानान्भीष्मे
णद्रोणेनचमहात्मना २० दिव्यान्यस्त्राणिभीष्मस्यद्रोणस्यचमहात्मनः धक्ष्यंतिक्षत्रियान्सर्वान्प्रयुक्तानिपुनःपु-
नः २१ कृष्णभीष्मःससंरब्धःसहितःसर्वपार्थिवैः क्षपयिष्यतिनोनूनंयादृशोऽस्यपराक्रमः २२ तंत्वंपश्यमहाभा
गंयोगीश्वरमहारथं योभीष्मंशमयेत्संख्येदावाग्निंजलदोयथा २३ तवप्रसादाद्गोविंदपांडवानिहतद्विषः स्वरा
ज्यमनुसंप्राप्तामोदिष्यंतेसबांधवाः २४ एवमुक्त्वाततःपार्थोध्यायन्नास्तेमहामनाः चिरमंतर्मनाभूत्वाशोकोपह
तचेतनः २५ शोकार्तंपांडवंदृष्ट्वादुःखेनहतचेतसं अब्रवीत्तत्रगोविंदोहर्षयन्सर्वपांडवान् २६ माशुचोभरतश्रे-
ष्ठनत्वंशोचितुमर्हसि यस्यतेभ्रातरःशूराःसर्वेलोकविश्रुताः २७ अहंचप्रियकृद्राजन्सात्यकिश्चमहारथः वि
राटद्रुपदौचैवधृष्टद्युम्नश्चपार्षतः २८ तथैवसबलाःसर्वेराजानोराजसत्तम त्वत्प्रसादंप्रतीक्षंतेत्वद्भक्ताश्चविशा
पते २९ अयंतेपार्षतोनित्यंहितकामःप्रियेरतः सेनापत्यमनुप्राप्तोधृष्टद्युम्नोमहारथः ३० शिखंडीचमहाबाहो
भीष्मस्यांतकरःकिल एतच्छ्रुत्वामहाराजोधृष्टद्युम्नंमहारथम् ३१ अब्रवीत्समितौतस्यांवासुदेवस्यशृण्वतः धृ
ष्टद्युम्ननिबोधेदंयत्त्वांवक्ष्यामिमारिष ३२ नातिक्रम्यंभवेत्तच्चवचनंममभाषितं भवान्सेनापतिर्मह्यंवासुदेवेन-
संमतः ३३ कार्तिकेयोयथानित्यंदेवानामभवत्पुरा तथात्वमपिपांडूनांसेनानीर्भवपार्षत ३४ सत्वंपुरुषशार्दूल
विक्रम्यजहिकौरवान् अहंचत्वानुयास्यामिभीमःकृष्णश्चमारिष ३५ माद्रीपुत्रौचसहितौद्रौपदेयाश्चदंशिताः येचा
न्येपृथिवीपालाःप्रधानाःपुरुषर्षभ ३६

३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९

ततउद्धर्षयन्सर्वान्धृष्टद्युम्नोभ्यभाषत अहंद्रोणांतकःपार्थविहितःशंभुनापुरा ३७ रणेभीष्मंतथाद्रोणंकृपंश-
ल्यंजयद्रथम् सर्वानद्यरणेदृप्तान्प्रतियोत्स्यामिपार्थिव ३८ अथोत्कुष्टंमहेष्वासैःपांडवैर्युद्धदुर्मदैः समुद्यतेपार्थि
वेंद्रेपार्षतेशत्रुतापने ३९ तमब्रवीत्पुनःपार्थःपार्षतंपृतनापतिम् व्यूहःक्रौंचारुणोनामसर्वशत्रुनिषूदनः ४०
यंबृहस्पतिरिंद्रायतदादेवासुरेब्रवीत् तंयथावत्प्रतिव्यूहपरानीकविनाशनं ४१ अदृष्टपूर्वंराजानःपश्यंतुकुरुभिः
सह तथोक्तःसनृदेवेनविष्णुर्वज्रभृताइव ४२ प्रभातेसर्वसैन्यानामग्रेचक्रेधनंजयं आदित्यपथगःकेतुस्तत्रा-
द्भुतमनोहरः ४३ शासनात्पुरुहूतस्यनिर्मितोविश्वकर्मणा इंद्रायुधसवर्णाभिःपताकाभिरलंकृतः ४४ आ-
काशगइवाकाशेगंधर्वनगरोपमः नृत्यमानइवाभातिरथचर्यासुमारिष ४५ तेनरत्नवतापार्थःसचगांडीव
धन्वना बभूवपरमोपेतःसुमेरुरिवभानुना ४६ शिरोभूद्द्रुपदोराजामहत्यासेनयावृतः कुंतिभोजश्चचैद्यश्च
चक्षुरास्तांनरेश्वर ४७ दाशार्णकाःप्रभद्राश्चदासेरकगणैःसह अनूपकाःकिराताश्चग्रीवायांभरतर्षभ ४८
पटच्चरैश्चपौंड्रैश्चराजाकौरवकैस्तथा निषादैःसहितश्चापिपृष्ठमासीद्युधिष्ठिरः ४९ पक्षौतुभीमसेनश्चधृष्टद्यु
म्नश्चपार्षतः द्रौपदेयाभिमन्युश्चसात्यकिश्चमहारथः ५० पिशाचादारदाश्चैवपौंड्रैःकुंडीवृषैःसह यवनाधे
नुकाश्चैवतंगणाःपरतंगणाः ५१ बाल्हीकास्तित्तिराश्चैवचोलाःपांड्याश्चभारत एतेजनपदाराजन्दक्षिणं
पक्षमाश्रिताः ५२ अग्निवेश्यागजतुंडामलदादाशकारवः शबराःकुंभसाश्चैववत्साश्चसहमालुकैः ५३ नकुलः
सहदेवश्चवामंपक्षंसमाश्रिताः रथानामयुतंपक्षःशिरश्चनियुतंतथा ५४ पृष्ठमर्बुदमेवासीत्सहस्राणिचविंश-
तिः ग्रीवायांनियुतंचापिसहस्राणिचसप्ततिः ५५ पक्षकोटिप्रपक्षेषुपक्षांतेषुचवारणाः जग्मुःपरिवृताराजंश्च-
लंतइवपर्वताः ५६ जघनंपालयामासविराटःसहकैकयैः काशिराजश्चशैब्यश्चरथानामयुतैस्त्रिभिः ५७ एवमे-
तंमहाव्यूहंव्यूह्यभारतसत्तमाः सूर्योदयनमिच्छंतःस्थितायुद्धायदंशिताः ५८

५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९

तेषामादित्यवर्णानिनिर्मलानिमहांतिच श्वेतच्छत्राणिदृश्यंतेवारणेषुरथेषुच ५९ इतिश्रीमन्महाभारतेभी॰ क्रौंचव्यूहनिर्माणेपंचाशत्तमोऽध्यायः ५० संजयउवाच क्रौंचंततोमहाव्यूहमभेद्यंतनयस्तव व्यूढंदृष्ट्वामहाघोरंपांडवेनामितौजसा १ आचार्यमुपसंगम्यकृपंशल्यंचमारिष सोमदत्तिंविकर्णंचसोऽश्वत्थामानमेवच २ दुःशासनादीन्भ्रातॄंश्चसर्वानेवचभारत अन्यांश्चसुबहूंश्शूरान्युद्धायसमुपागतान् ३ प्राहेदंवचनंकालेहर्षयंस्तनयस्तव नानाप्रहरणाःसर्वेसर्वशास्त्रार्थकोविदाः ४ एकैकशःसमर्थाहियूयंसर्वेमहारथाः पांडुपुत्रान्रणेहंतुंससैन्याःकिमुसंहताः ५ अपर्याप्तंतदस्माकंबलंभीष्माभिरक्षितं पर्याप्तंत्विदमेतेषांबलंभीमाभिरक्षितं ६ संस्थानाःशूरसेनाश्चविकर्णाःकुकुरास्तथा रेचकाश्चत्रिगर्ताश्चमद्रकायवनास्तथा ७ शत्रुंजयेनसहितास्तथादुःशासनेनहि विकर्णेनचवीरेणतथानंदोपनंदकैः ८ चित्रसेनेनसहिताःसहिताःमणिभद्रकैः भीष्ममेवाभिरक्षंतुसहसैन्यपुरःसराः ९ ततोभीष्मश्चद्रोणश्चतवपुत्राश्चमारिष अव्यूहंतमहाव्यूहंपार्थानांप्रतिबाधने १० भीष्मःसैन्येनमहतासमंतात्परिवारितः ययौप्रकर्षन्महतींवाहिनींसुरराडिव ११ तमन्वयान्महेष्वासोभारद्वाजःप्रतापवान् कुंतलैश्चदशार्णैश्चमागधैश्चविशांपते १२ विदर्भैर्मेकलैश्चैवकर्णप्रावरणैरपि सहिताःसर्वसैन्येनभीष्ममाहवशोभिनं १३ गांधाराःसिंधुसौवीराःशिवयोथवशातयः शकुनिश्चससैन्येनभारद्वाजमपालयत् १४ ततोदुर्योधनोराजासहितःसर्वसोदरैः अश्वातकैर्विकर्णैश्चतथावामनकोसलैः १५ दरदैश्चवृकैश्चैवतथाक्षुद्रकमालवैः अभ्यद्रवतसंहृष्टःपांडवेयस्यवाहिनीं १६ भूरिश्रवाःशलःशल्योभगदत्तश्चमारिष विंदानुविंदावावंत्यौवामपार्श्वमपालयन् १७ सोमदत्तिःसुशर्माचकांबोजश्चसुदक्षिणः शतायुश्चश्रुतायुश्चदक्षिणंपक्षमाश्रिताः १८ अश्वत्थामाकृपश्चापिकृतवर्माचसात्वतः महत्यासेनयासार्धंसेनापृष्ठेव्यवस्थिताः १९ पृष्ठगोपाश्चतस्यासन्नानाजनपदेश्वराः केतुमान्वसुदानश्चपुत्रःकाश्यस्यवाविभुः २०

ततस्तेतावकाः सर्वेहृष्टायुद्धायभारत दध्मुःशंखान्मुदायुक्ताः सिंहनादांस्तथानदन् तेषांश्रुत्वातुहृष्टानांकुरुवृद्धः पिता
महः २१ सिंहनादंविनद्योच्चैः शंखंदध्मौप्रतापवान् ततः शंखाश्चभेर्यश्चपेश्यश्चविविधाः परैः २२ आनकाश्चाभ्यहन्यंत
सशब्दस्तुमुलोभवत् ततः श्वेतैर्हयैर्युक्तेमहतिस्यंदनेस्थितौ २३ प्रदध्मतुःशंखवरौहेमरत्नविभूषितौ पांचजन्यंहृषी
केशोदेवदत्तंधनंजयः २४ पौंड्रंदध्मौमहाशंखंभीमकर्मावृकोदरः अनंतविजयंराजाकुंतीपुत्रोयुधिष्ठिरः २५ नकुलः
सहदेवश्चसुघोषमणिपुष्पकौ काशिराजश्चशैब्यश्चशिखंडीचमहारथः २६ धृष्टद्युम्नोविराटश्चसात्यकिश्चमहारथः
पांचाल्यश्चमहेष्वासोद्रौपदेयाश्चपंचये २७ सर्वेदध्मुर्महाशंखान्सिंहनादांश्चनेदिरे सघोषःसुमहांस्तत्रवीरैस्तैःस-
मुदीरितः २८ नभश्चपृथिवींचैवतुमुलोव्यनुनादयत् एवमेतेमहाराजप्रहृष्टाःकुरुपांडवाः पुनर्युद्धायसंजग्मुस्ताप
यानाः परस्परम् २९ इतिश्रीमन्म० भीष्म० कौरवसैन्यव्यूहेएकपंचाशत्तमोऽध्यायः ५१ धृतराष्ट्रउवाच ए-
वंव्यूढेष्वनीकेषुमामकेष्वितरेषुच कथंप्रहरतांश्रेष्ठाः संप्रहारंप्रचक्रिरे १ संजयउवाच समंव्यूढेष्वनीकेषुसन्नद्धा-
रुचिरध्वजाः अपारमिवसंदृश्यंसागरप्रतिमंबलं २ तेषांमध्येस्थितोराजन्पुत्रोदुर्योधनस्तव अब्रवीत्तावकान्स-
र्वान्युध्यध्वमितिदंशिताः ३ तेमनःक्रूरमास्थायसमभित्यक्तजीविताः पांडवानभ्यवर्त्तंतसर्वएवोच्छ्रितध्वजाः ४
ततोयुद्धंसमभवत्तुमुलंलोमहर्षणं तावकानांपरेषांचव्यतिषक्तरथद्विपं ५ मुक्तास्तुरथिभिर्बाणारुक्मपुंखाःसु
तेजिताः संनिपेतुरकुंठाग्रानागेषुचहयेषुच ६ तथाप्रवृत्तेसंग्रामेधनुरुद्यम्यदंशितः अभिपद्यमहाबाहुर्भीष्मो-
भीमपराक्रमः ७ सौभद्रेभीमसेनेचअर्जुनेचमहारथः कैकेयेचविराटेचधृष्टद्युम्नेचपार्षते ८ एतेषुनववीरेषुचे
दिमत्स्येषुवाविभुः ववर्षशरवर्षाणिवृद्धःकुरुपितामहः ९ प्राकंपतमहाव्यूहस्तस्मिन्वीरसमागमे सर्वेषामेवसैन्या
नामासीद्व्यतिकरोमहान् १० सादिनोध्वजिनश्चैवहताःप्रवरवाजिनः विप्रयातरथानीकाःसमपद्यंतपांडवाः ११ अर्जु
नस्तुनरव्याघ्रोदृष्ट्वाभीष्मंमहारथं वार्ष्णेयमब्रवीत्क्रुद्धोयाहियत्रपितामहः १२ एषभीष्मःसुसंक्रुद्धोवार्ष्णेयममवाहि-
नीं क्षपयिष्यतिसुव्यक्तंदुर्योधनहितेरतः १३ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ ५२

एषद्रोणःकृपःशल्योविकर्णश्चजनार्दन धार्तराष्ट्राश्चसहितादुर्योधनपुरोगमाः १४ पांचालान्निहनिष्यंतिरक्षिताद्दढध-
न्विना सोहंभीष्मंवधिष्यामिसैन्यहेतोर्जनार्दन १५ तमब्रवीद्दाशार्हदेवोयत्तोभवधनंजय एषत्वांप्रापयेवीरपितामहरथं
प्रति १६ एवमुक्त्वाततःशौरीरथंतंलोकविश्रुतं प्रापयामासभीष्मस्यरथंप्रतिजनेश्वर १७ चलद्बहुपताकेनबलाकाव-
र्णवाजिना समुच्छ्रितमहाभीमनदद्वानरकेतुना १८ महतामेघनादेनरथेनादित्यवर्चसा विनिघ्नन्कौरवानीकंशूरसे
नांश्चपांडवः १९ आगच्छतरणेशीघ्रंसुहृदांहर्षवर्द्धनः तमापतंतंवेगेनप्रभिन्नमिववारणं २० त्रासयानंरणेशूरा
न्पातयंतंचसायकैः सैंधवप्रमुखैर्गुप्तःप्राच्यसौवीरकेकयैः २१ सहसाप्रत्युदीयायभीष्मःशांतनवोर्जुनं कोहि-
गांडीवधन्वानमन्यःकुरुपितामहात् २२ द्रोणवैकर्तनाभ्यांवारथीसंयातुमर्हति ततोभीष्मोमहाराजकौरवाणांपि-
तामहः २३ अर्जुनंसप्तसप्तत्यानाराचानांसमार्दयत् द्रोणश्चपंचविंशत्याकृपःपंचाशताशरैः २४ दुर्योधनश्चतुःषष्ठ्या
शल्यश्चनवभिःशरैः द्रौणिःषष्ठ्यानरव्याघ्रोविकर्णश्चत्रिभिःशरैः २५ आर्तायनिस्त्रिभिर्भल्लैराजन्विव्याधपांडवं स-
र्वैर्विद्धोमहेष्वासःसमंतान्निशितैःशरैः २६ नविव्यथेमहाबाहुर्भिद्यमानइवाचलः सभीष्मंपंचविंशत्याकृपंचनवभिः
शरैः २७ द्रोणंषष्ठ्यानरव्याघ्रोविकर्णंचत्रिभिःशरैः आर्त्तायनिंत्रिभिर्बाणैराजानंचापिपंचभिः २८ प्रत्यविध्यदमे-
यात्माकिरीटीभरतर्षभ तंसात्यकिर्विराटश्चधृष्टद्युम्नश्चपार्षतः २९ द्रौपदेयाभिमन्युश्चपरिवव्रुर्धनंजयम् ततो-
द्रोणंमहेष्वासंगांगेयस्यप्रियेरतं ३० अभ्यवर्तंतपांचाल्यःसंयुक्तःसहसोमकैः भीष्मस्तुरथिनांश्रेष्ठस्तूर्णंविव्या-
धपांडवं ३१ अशीत्यानिशितैर्बाणैस्ततोऽक्रुश्यंततावकाः तेषांतुनिनदंश्रुत्वाप्रहृष्टानांप्रहृष्टवत् ३२ प्रविवेशत-
तोमध्यंरथसिंहःप्रतापवान् तेषांतुरथसिंहानांमध्यंप्राप्यधनंजयः ३३ चिक्रीडधनुषाराजंल्लक्ष्यंकृत्वामहारथा-
न् ततोदुर्योधनोराजाभीष्ममाहनरेश्वरः ३४ पीड्यमानंस्वकंसैन्यंदृष्ट्वापार्थेनसंयुगे एषपांडुसुतस्तातकृष्णे-
नसहितोबली ३५ पातयन्सर्वसैन्यानिमूलंनःपरिकृंतति त्वयिजीवतिगांगेयद्रोणेचरथिनांवरे ३६ ५९

३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९

त्वत्कृते ह्येष कर्णोपि न्यस्तशस्त्रो विशांपते न युध्यति रणे पार्थान्हितकामः सदा मम ३७ स तथा कुरु गांगेय यथा हन्येत फाल्गुनः एवमुक्तस्ततो राजन्पिता देवव्रतस्तव ३८ धिक्क्षत्रधर्ममित्युक्त्वा प्रायात्पार्थरथं प्रति उभौ श्वेतहयौ राजन् संसक्तौ प्रेक्ष्य पार्थिवाः ३९ सिंहनादं भृशं चक्रुः शंखान्दध्मुश्च मारिष द्रौणिर्दुर्योधनश्चैव विकर्णश्च तवात्मजः ४० परिवार्य रणे भीष्मं स्थिता युद्धाय मारिष तथैव पांडवाः सर्वे परिवार्य धनंजयं ४१ स्थिता युद्धाय महते ततो युद्धमवर्तत गांगेयस्तु रणे पार्थमानर्च्छन्नवभिः शरैः ४२ तमर्जुनः प्रत्यविध्यद्दशभिर्मर्मभेदिभिः ततः शरसहस्रेण सुप्रयुक्तेन पांडवः ४३ अर्जुनः समरश्लाघी भीष्मस्यावारयद्दिशः शरजालं ततस्तत्तु शरजालेन पार्थिव ४४ वारयामास पार्थस्य भीष्मः शांतनवस्तदा उभौ परमसंहृष्टावुभौ युद्धाभिनंदिनौ ४५ निर्विशेषमयुध्येतां कृतप्रतिकृतैषिणौ भीष्मचापप्रमुक्तानि शरजालानि संघशः ४६ शीर्यमाणान्यदृश्यंत भिन्नान्यर्जुनसायकैः तथैवार्जुनमुक्तानि शरजालानि सर्वशः ४७ गांगेयशरनुन्नानि न्यपतंत महीतले अर्जुनः पंचविंशत्या भीष्ममार्च्छच्छितैः शरैः ४८ भीष्मोपि समरे पार्थं विव्याध नवभिः शरैः अन्योन्यं तौ हयान्विध्वा ध्वजौ च सुमहाबलौ ४९ रथेषां रथचक्रं च विक्रीडतुररिंदमौ ततः क्रुद्धो महाराज भीष्मः प्रहरतां वरः ५० वासुदेवं त्रिभिर्बाणै राजघानस्तनांतरे भीष्मचापच्युतैस्तैस्तु निर्विद्धो मधुसूदनः ५१ विरराज रणे राजन्सपुष्प इव किंशुकः ततोर्जुनो भृशं क्रुद्धो निर्विद्धं प्रेक्ष्य माधवं ५२ गांगेयसारथिं संख्ये निर्बिभेद त्रिभिः शरैः यतमानौ तु तौ वीरावन्योन्यस्य रथं प्रति ५३ नाशक्नुतां तदान्योन्यमभिसंधातुमाहवे मंडलानि विचित्राणि गतप्रत्यागतानि च ५४ दर्शयामासतू राजन्सूतसामर्थ्यलाघवात् अंतरं च महारेषु तर्कयंतौ विशांपते ५५ राजन्नंतरमार्गस्थौ स्थितावास्तां मुहुर्मुहुः उभौ सिंहरवोन्मिश्रं शंखशब्दं च चक्रतुः ५६ तथैव चापनिर्घोषं चक्रतुस्तौ महारथौ तयोः शंखप्रणादेन रथनेमिस्वनेन च ५७ दारिता सहसा भूमिश्चकंपे च ननाद च न तयोरंतरं कश्चिद्ददृशे भरतर्षभ ५८ बलिनौ समरे शूरावन्योन्यसदृशावुभौ चिन्हमात्रेण भीष्मस्य प्रययुस्तत्र कौरवाः ५९

५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६०

तथापांडुसुताः पार्थचिन्हमात्रेणजघ्निरे तयोर्नृवरयोराजन्‌दृष्ट्वानादृक्‌पराक्रमं ६० विस्मयंसर्वभूतानिजग्मुर्भारत संयुगे नतयोरंतरंकश्चिद्रणेपश्यतिभारत ६१ धर्मेस्थितस्यहियथानकश्चिद्वृजिनंक्वचित्‌ उभौहिशरजालेनताव-दृश्यौबभूवतुः ६२ प्रकाशौतुततस्तूर्णंबभूवतुरुभौरणे तत्रदेवाः सगंधर्वाश्चारणाश्चमहर्षिभिः ६३ अन्योन्यंप्र-त्यभाषंततयोर्दृष्ट्वापराक्रमं नशक्यौयुधिसंरब्धौजेतुमेतौमहारथौ ६४ सदेवासुरगंधर्वैर्लोकैरपिकथंचन आ-श्चर्यभूतंलोकेषुयुद्धमेतन्महाद्भुतं ६५ नैवंचैतादृशंयुद्धंभविष्यतिकदाचन नैवशक्योरणेजेतुंभीष्मः पार्थेन-धीमता ६६ सधनुः सरथः साश्वः प्रवपन्सायकान्रणे तथैवपांडवंयुद्धेदेवैरपिदुरासदं ६७ नविजेतुंरणेभी-ष्मउत्सहेतधनुर्धरं आलोकादपियुद्धंहिसममेतद्भविष्यति ६८ इतिस्मवाचः श्रूयंतेप्रचरंत्यस्ततस्ततः गांगे-यार्जुनयोः संख्येस्तवयुक्ताविशांपते ६९ त्वदीयास्तुततोयोधाः पांडवेयाश्चभारत अन्योन्यंसमरेजघ्नुस्तयो-स्तत्रपराक्रमे ७० शितधारैस्तथाखड्गैर्विमलैश्चपरश्वधैः शरैरन्यैश्चबहुभिः शस्त्रैर्नानाविधैर्युधि ७१ उभयोः सेनयोः शूरान्यकृंततपरस्परं वर्तमानेतथाघोरेतस्मिन्युद्धेसुदारुणे द्रोणपांचाल्ययोराजन्महानासीत्समा-गमः ७२ इतिश्रीमन्महाभारतेभीष्मप० भीष्मार्जुनयुद्धेद्विपंचाशत्तमोऽध्यायः ५२ धृतराष्ट्रउवाच कथंद्रोणोमहेष्वासः पांचाल्यश्चैवपार्षतः रणेसमीयतुर्यत्तौतन्ममाचक्ष्वसंजय १ दिष्टमेवपरंमन्येपौरुषाद-पिसंजय यत्रशांतनवोभीष्मोनातरद्युधिपांडवं २ भीष्मोहिसमरेक्रुद्धोहन्याल्लोकांश्चराचरान्‌ सकथंपां-डवंयुद्धेनातरत्संजयौजसा ३ संजयउवाच शृणुराजन्स्थिरोभूत्वायुद्धमेतत्सुदारुणं नशक्यः पांडवोजे-तुंदेवैरपिसवासवैः ४ द्रोणस्तुविविधैर्बाणैर्धृष्टद्युम्नमविध्यत सारथिंचास्यभल्लेनरथनीडादपातयत्‌ ५ तस्याथचतुरोवाहांश्चतुर्भिः सायकोत्तमैः पीडयामाससंक्रुद्धोधृष्टद्युम्नस्यमारिष ६ धृष्टद्युम्नस्ततोद्रोणंनव त्यानिशितैः शरैः विव्याधसमरेवीरस्तिष्ठतिष्ठेतिचाब्रवीत्‌ ७ ततः पुनरमेयात्माभारद्वाजः प्रतापवान्‌ शरैः प्रच्छादयामासधृष्टद्युम्नममर्षणं ८ इतिश्रीम० भारतेभी० द्विपंचाशत्तमोध्यायः ५२ १ २ ३ ४ ५ ६ ७ ८ ९

९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१

आददेचशरंघोरंपार्षतस्यवधंप्रति शक्राशनिसमस्पर्शंमृत्युदंडमिवापरं ९ हाहाकारोमहानासीत्सर्वसैन्यस्यभारत तमिषुंसंधितंदृष्ट्वाभारद्वाजेनसंयुगे १० तत्राद्भुतमपश्यामधृष्टद्युम्नस्यपौरुषं यदेकःसमरेवीरस्तस्थौगिरिरिवाचलः ११ तंचदीप्तंमहाघोरमायांतंमृत्युमात्मनः चिच्छेदशरवृष्टिंचभारद्वाजेमुमोचह १२ ततउच्चुक्रुशुःहृष्टाः पांचालाःपांडवैःसह धृष्टद्युम्नेनतत्कर्मकृतंदृष्ट्वासुदुष्करं १३ ततःशक्तिंमहावेगांस्वर्णवैडूर्यभूषितां द्रोणस्यनिधनाकांक्षीचिक्षेपसपराक्रमी १४ तामापतंतींसहसाशक्तिंकनकभूषणां त्रिधाचिच्छेदसमरेभारद्वाजोहसन्निव १५ शक्तिंविनिहतांदृष्ट्वाधृष्टद्युम्नःप्रतापवान् ववर्षशरवर्षाणिद्रोणंप्रतिजनेश्वर १६ शरवर्षंततस्तत्रसन्निवार्यमहायशाः द्रोणोद्रुपदपुत्रस्यमध्येचिच्छेदकार्मुकं १७ सच्छिन्नधन्वासमरेगदांगुर्वींमहायशाः द्रोणायप्रेषयामासगिरिसारमयींबली १८ सागदातत्करान्मुक्ताप्रागाद्द्रोणजिघांसया तत्राद्भुतमपश्यामभारद्वाजस्यविक्रमं १९ लाघवाद्व्यंसयामासगदांहेमविभूषितां ध्वंसयित्वागदांचैवप्रेषयामासपार्षते २० भल्लान्सुनिशितान्पीतान्स्वर्णपुंखाञ्छिलाशितान् तेतस्यकवचंभित्वापपुःशोणितमाहवे २१ अथान्यद्धनुरादायधृष्टद्युम्नोमहामनाः द्रोणंयुधिपराक्रम्यशरैर्विव्याधपंचभिः २२ रुधिराक्तौततस्तौतुशुशुभातेनरर्षभौ वसंतपुष्पशबलौपुष्पिताविवकिंशुकौ २३ अमर्षितस्ततोराजन्पराक्रम्यचमूमुखे द्रोणोद्रुपदपुत्रस्यपुनश्चिच्छेदकार्मुकं २४ अथैनंछिन्नधन्वानंशरैःसन्नतपर्वभिः अवाकिरदमेयात्माद्वृष्ट्यामेघइवाचलं २५ सारथिंचास्यभल्लेनरथनीडादपातयत् अथास्यचतुरोवाहांश्चतुर्भिर्निशितैःशरैः २६ पातयामाससमरेसिंहनादंननादच ततोपरेणभल्लेनहस्ताच्चापमथाच्छिनत् २७ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः गदापाणिरवारोहत्ख्यापयन्पौरुषंमहत् २८ तामस्यविशिखैस्तूर्णंपातयामासभारत रथादनवरूढस्यतदद्भुतमिवाभवत् २९ ततःसविपुलंचर्मशतचंद्रंसतोरणं खड्गंचविपुलंदिव्यंप्रगृह्यसुभुजोबली ३०

२२ २३ २४ २५ २६ २७ २८ २९ ३०

अभिदुद्राववेगेनद्रोणस्यवधकांक्षया आमिषार्थीयथासिंहोवनेमत्तमिवद्विपं ३१ तत्राश्चर्यमपश्याम भारद्वाजस्य
पौरुषं लाघवंचास्त्रयोगेनबलंबाह्वोश्चभारत ३२ यदेकःशरवर्षेणवारयामासपार्षतं नशशाकततोगंतुंबलवा
नपिसंयुगे ३३ तत्रास्थितमपश्यामधृष्टद्युम्नंमहारथे वारयाणंशरौघांश्चचर्मणाकृतहस्तवत् ३४ ततोभीमोमहा
बाहुःसहसान्यपतद्बली साहाय्यकारीसमरेपार्षतस्यमहात्मनः ३५ सद्रोणंनिशितैर्बाणैराजन्विव्याधसप्तभिः
पार्षतंचतदात्तूर्णमन्यमारोपयद्रथं ३६ ततोदुर्योधनोराजाकलिंगंसमचोदयत् सैन्येनमहतायुक्तंभारद्वाजस्य
गोपने ३७ ततःसामहतीसेनाकलिंगानांनरेश्वर भीममभ्याययौभीमातवपुत्रस्यशासनात् ३८ पांचाल्य-
मपिसंत्यज्यद्रोणोपिरथिनांवरः विराटद्रुपदौवृद्धौयोधयामाससंगतौ ३९ धृष्टद्युम्नोपिसमरेधर्मराजंसमभ्य-
यात् ततःप्रववृतेयुद्धंतुमुलंलोमहर्षणं ४० कलिंगानांचसमरेभीमस्यचमहात्मनः जगतःप्रक्षयकरंघोररू
पंभयानकं ४१ इतिश्रीम॰भी॰द्रोणधृष्टद्युम्नयुद्धेत्रिपंचाशत्तमोऽध्यायः ५३ धृतराष्ट्रउवाच तथा
प्रतिसमादिष्टःकलिंगोवाहिनीपतिः कथमद्भुतकर्माणंभीमसेनंमहाबलं १ चरंतंगदयावीरंदंडपाणिमिवांतकं योधया
माससमरेकालिंगःसहसेनया २ संजयउवाच पुत्रेणतवराजेंद्रसतथोक्तोमहाबलः महत्यासेनयायुक्तःप्रायाद्भीम
रथंप्रति ३ तामापतंतींमहतींकलिंगानांमहाचमूं रथाश्वनागकलिलांप्रगृहीतमहायुधां भीमसेनःकलिंगानामार्च्छ
द्भारतवाहिनीम् केतुमंतंचनैषादिमायांतंसहचेदिभिः ५ ततःश्रुतायुःसंक्रुद्धोराज्ञाकेतुमतासह आससादरणेभी
मंव्यूढानीकेनदंशितः ६ रथैरनेकसाहस्रैःकलिंगानांजनाधिपः अयुतेनगजानांचनिषादैःसहकेतुमान् ७ भीमसेनं
महाराजसमंतात्पर्यवारयत् चेदिमत्स्यकरूषास्तुभीमसेनपुरोगमाः ८ अभ्यवर्तंतसहसानिषादान्सहराजभिः त-
तःप्रववृतेयुद्धंघोररूपंभयानकं ९ प्रधावतांचयोधानांपरस्परजिघांसया घोरमासीत्ततोयुद्धंभीमस्यसहसापरैः १०
यथेंद्रस्यमहाराजमहत्यादैत्यसेनया तस्यसैन्यस्यसंग्रामेयुध्यमानस्यभारत ११

१२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५

बभूवस्कमहाँञ्छब्दः सागरस्येवगर्जतः अन्योन्यस्यतदायोधानिकृंतंतोविशांपते १२ महींचक्रुश्चितांसर्वांमासशोणितसंनिभां
योधान्स्वान्स्वान्पराँश्चापिनव्यजानन्जिघांसया १३ स्वानप्याददतेतुस्वाः शूराः समरदुर्जयाः विमर्दः स्कमहानासीदल्पानांबहुभिः स-
ह १४ कलिंगैः सहचेदीनांनिषादैश्चविशांपते कृत्वापुरुषकारंतुयथाशक्तिमहाबलाः १५ भीमसेनंपरित्यज्यसंन्यवर्ततचेदयः स-
र्वैः कलिंगैरासन्नः सन्निवृत्तेषुचेदिषु १६ स्वबाहुबलमास्थायसंन्यवर्ततपांडवः नचचालरथोपस्थाद्भीमसेनोमहाबलः १७ शि
तैरवाकिरन्बाणैः कलिंगानांवरूथिनीं कालिंगस्कमहेष्वासः पुत्रश्चास्यमहारथः १८ शक्रदेवइतिख्यातोजघ्नतुः पांडवंशरैः
ततोभीमोमहाबाहुर्विधुन्वन्रुचिरंधनुः १९ योधयामासकालिंगंस्वबाहुबलमाश्रितः शक्रदेवस्कसमरेविसृजन्सायकान्बहून्
२० अश्वाञ्जघानचतुरोभीमसेनस्यसायकैः तंदृष्ट्वाविरथंतत्रभीमसेनमरिंदमं २१ शक्रदेवोभिदुद्रावकिरंतंनिशितैः शरैः
भीमस्योपरिराजेंद्रशक्रदेवोमहाबलः २२ ववर्षशरवर्षाणितपांतेजलदोयथा हताश्वेतुरथेतिष्ठन्भीमसेनोमहाबलः २३ श-
क्रदेवायचिक्षेपसर्वशैक्यायसींगदां सतयानिहतोराजन्कालिंगस्यस्कतोरथात् २४ सध्वजः सहसूतेनजगामधरणीतलं ह-
तमात्मस्कतंदृष्ट्वाकलिंगानांमहारथः २५ रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः ततोभीमोमहाबाहुर्गदांत्यक्त्वामहाबलः २६
उद्बबर्हसनिस्त्रिंशंचिकीर्षुः कर्मदारुणं चर्मचाप्रतिमंराजन्नार्षभंपुरुषर्षभ २७ नक्षत्रैरर्धचंद्रैश्चशातकुंभमयैश्चित कालिंग-
स्कततः क्रुद्धोधनुर्ज्यामवमृज्यच २८ प्रगृह्यसशरंघोरमेकंसर्पविषोपमम् प्राहिणोद्भीमसेनायवधाकांक्षीनरेश्वरः २९ तमा-
पतंतंवेगेनप्रेरितंनिशितंशरं भीमसेनोद्विधाराजंश्चिच्छेदविपुलासिना ३० उदक्रोशच्चसंहृष्टस्त्रासयानोबलंतव कालिंगोथ
ततः क्रुद्धोभीमसेनस्यसंयुगे ३१ तोमरान्प्राहिणोच्छीघ्रंचतुर्दशशिलाशितान् तानप्राप्तान्महाबाहुः खगतानेवपांडवः ३२ चि-
च्छेदसहसाराजन्नसंभ्रांतोवरासिना निकृत्यतुरणेभीमस्तोमरान्वैचतुर्दश ३३ भानुमंतमभिप्रेक्ष्यप्राद्रवत्पुरुषर्षभ भानुमां-
स्कततोभीमंशरवर्षेणछादयन् ३४ ननादबलवन्नादंनादयानोनभस्तलं नतंसममृषेभीमः सिंहनादंमहारणे ३५ ततः स्वरे-
णमहताविननादमहास्वनः तेनशब्देनवित्रस्ताकलिंगानांवरूथिनी ३६ नभीमंसमरेमेनेमानुषंपुरुषर्षभ ततोभीमोमहाराज
नर्दित्वाविपुलंस्वनं ३७

२६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७

३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५०



सासिर्वेगवदाप्लुत्यदंताभ्यांवारणोत्तमं आरुरोहततोमध्यंनागराजस्यमारिष ३८ खड्गेनपृथुनामध्येभानुमंतमथाच्छिनत् सोंतरायुधिनहत्वाराजपुत्रमरिंदमः ३९ गुरुभारसहस्कंधेनागस्यासिमपातयत् छिन्नस्कंधःसविनदन्पपातगजयूथपः ४० आरुग्णःसिंहवेगेनभानुमानिवपर्वतः पततश्चाप्यवप्लुत्यगजाद्भारतभारतः ४१ खड्गपाणिरदीनात्मातस्थौसुविसदंशितः सञ्चारबहून्मार्गानभीतःपातयन्गजान् ४२ अग्निचक्रमिवाविद्धंसर्वतःप्रत्यदृश्यत अश्ववृंदेषुनागेषुरथानीकेषुवाविशुः ४३ पदातीनांचसंघेषुविनिघ्नन्प्रत्यदृश्यत श्येनवद्विचरन्संख्येयुधिभीमोमहाबलः ४४ छिंदंस्तेषांशरीराणिशिरांसिचमहाजवः खड्गेनशितधारेणसंयुगेगजयोधिनां ४५ पदातिरेकःसंक्रुद्धःशत्रूणांभयवर्द्धनः मोहयामासश्शूरांस्तान्कालांतकयमोपमः ४६ मूढास्तएवचरणेविनदंतःसमाद्रवन् सासिमुत्तमवेगेनविचरंतंमहारणे ४७ निकृत्यरथिनामाजौरथेषांचयुगानिच जघान रथिनश्चापिबलवानरिमर्द्दनः ४८ भीमसेनश्चरन्मार्गान्सुबहून्प्रत्यदृश्यत भ्रांतमुद्भ्रांतमाविद्धमाप्लुतंप्रसृतंसृतं ४९ संपातंसमुदीर्णंचदर्शयामासभारत केचिदग्रासिनाच्छिन्नाःपांडवेनमहात्मना ५० विनेदुर्भिन्नमर्माणोनिपेतुश्चगतासवः छिन्नदंताग्रहस्ताश्चाच्छिन्नकुंभास्तथापरे ५१ वियोधाःस्वान्यनीकानिजघ्नुर्भारतवारणाः निपेतुरुर्व्यांचतदाविनदंतोमहारवान् ५२ छिन्नांश्चतोमरान्राजन्महामात्रशिरांसिच परिस्तोमानिचित्राणिकक्षाश्चकनकोज्वलाः ५३ ग्रैवेयाण्यथशक्तीश्चपताकाःकरिणांतथा तूणीराण्यथयंत्राणिविचित्राणिधनूंषिच ५४ अग्निदंडानिशुभ्राणितोत्रांश्चैवांकुशैःसह घंटाश्चविविधाकाराहेमगर्भान्त्सरूनपि ५५ पततःपतितांश्चैवपश्यामिसहसादिभिः छिन्नगात्रावरकरैर्निहतैश्चापिवारणैः ५६ आसीत्तस्मिन्रणेभूमिःपर्वतैःपतितैरिव विमृद्यैवंमहानागान्ममर्द्दाश्वान्नरर्षभः ५७ अश्वारोहवरांश्चैवपातयामासभारत तद्युद्धमभवद्घोरंतववतेषांचमारिष ५८ खलीनानिविचित्राणिकक्षाश्चकनकोज्वलाः परिस्तोमाश्चप्रासाश्चऋष्टयश्चमहाधनाः ५९ कवचान्यथचर्माणिचित्राण्यास्तरणानिच तत्रतत्रापविद्धानिव्यदृश्यंतमहाहवे ६० प्रोथयंत्रैश्चचित्रैश्चखड्गैश्चविमलैस्तथा सञ्चक्रेवसुधांकीर्णांशबलांकुसुमैरिव ६१ आप्लुत्यरथिनःकांश्चित्परामृश्यमहाबलः पातयामासखड्गेनसध्वजानपिपांडवः ६२

५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२

६३ ६४ ६५ ६६ ६७ ६८ ६९ ७० ७१ ७२ ७३ ७४ ७५

मुहुरुत्य ततोदिक्षु धावतश्चलरस्विनः मार्गांश्चिचरतश्चित्रान्व्यस्मयंतरणेजनाः ६३ निजघानपदाकांश्चिदाक्षिप्यान्यानपोथय-
त् खड्गेनान्यांश्चचिच्छेदनादैरन्यानभीषयत् ६४ ऊरुवेगेनचाप्यन्यान्पातयामासभूतले अपरेचैनमालोक्यभयाद्विद्राविणोभवन्
६५ एवंसाबहुलसेनाकलिंगानांतरस्विनां परिवार्यरणेभीष्मंभीमसेनमुपाद्रवत् ६६ ततःकलिंगसेनांतांप्रमुखेभरतर्षभ श्रु-
तायुषमभिप्रेक्ष्यभीमसेनःसमभ्ययात् ६७ तमायांतमभिप्रेक्ष्यकालिंगोनवभिःशरैः भीमसेनममेयात्माप्रत्यविध्यत्स्तनांतरे ६८
कालिंगबाणाभिहतस्तोत्रार्दितइवद्विपः भीमसेनःप्रजज्वालक्रोधेनाग्निरिवेंधनैः ६९ अथाशोकःसमादायरथंहेमपरिष्कृतं भी-
मंसंपादयामासरथेनरथिनांवरः ७० तमारुह्यरथंतूर्णंकौंतेयःशत्रुसूदनः कालिंगमभिदुद्रावतिष्ठतिष्ठेतिचाब्रवीत् ७१ ततः
श्रुतायुर्बलवान्भीमस्यनिशितान्शरान् प्रेषयामाससंक्रुद्धोदर्शयन्हस्तलाघवम् ७२ सकार्मुकवरोत्सृष्टैर्नवभिर्निशितैःशरैः
समाहतोभृशंराजन्कलिंगेनमहाबलः ७३ संचुक्रोधभृशंभीमोदंडाहतइवोरगः क्रुद्धःसचापमायम्यबलवद्बलिनांवरः ७४ का-
लिंगमवधीत्पार्थोभीमःसप्तभिरायसैः श राभ्यांचक्ररक्षौचकालिंगस्यमहाबलौ ७५ सत्यदेवंचसत्यंचप्राहिणोद्यमसादनं
ततःपुनरमेयात्मानाराचैर्निशितैस्त्रिभिः ७६ केतुमंतंरणेभीमोगमयद्यमसादनं ततःकालिंगाःसंक्रुद्धाभीमसेनममर्षणं ७७
अनेकैर्बहुसाहस्रैःक्षत्रियाःसमयोधयन् ततःशक्तिगदाखड्गतोमरर्ष्टिपरश्वधैः ७८ कलिंगाःशतशोराजन्भीमसेनमवार-
यन् सन्निवार्यतुतान्राजन्च्छरवृष्टिंसमुच्छ्रिताम् ७९ गदामादायतरसापरिप्लुत्यमहाबलः भीमःसप्तशतान्वीराननयद्यम
सादनं ८० पुनश्चैवद्विसाहस्रान्कालिंगानरिमर्दनः प्राहिणोन्मृत्युलोकायतदद्भुतमिवाभवत् ८१ एवंसतान्यनीकानिक-
लिंगानांपुनःपुनः बिभेदसमरेवीरोभीमोभीमपराक्रमः ८२ हतारोहाश्चमातंगाःपांडवेनकृतारणे विप्रजग्मुरनीकेषुघ-
नावाताहताइव ८३ मृद्नंतःस्वान्यनीकानिविनदंतःशरातुराः ततोभीमोमहाबाहुःखड्गासक्तमहाभुजः ८४ संप्रहृष्टोमहा
घोरंशंखंप्रध्मापयन्बली सर्वकालिंगसैन्यानांमनांसिसमकंपयत् ८५ मोहश्चापिकलिंगानामाविवेशपरंतप प्राकंपंतचसै-
न्यानिवाहनानिचसर्वशः ८६ भीमसेनेनसमरेगजेंद्रेणेवसर्वतः मार्गान्बहून्विचरताधावताचनतस्ततः ८७ ६९

७६ ७७ ७८ ७९ ८० ८१ ८२ ८३ ८४ ८५ ८६ ८७ ६९

मुहुरुत्पलतांचैवसंमोहःसमजायत भीमसेनभयत्रस्तंसैन्यंतत्समकंपत ८८ क्षोभ्यमाणमसंबाधंग्राहेणेवमहासरः भासि
तेषुचवीरेषुभीमेनाद्भुतकर्मणा ८९ पुनरावर्तमानेषुविद्रवत्सुसमंततः सर्वकालिंगयोधेषुपांडूनांध्वजिनीपतिः ९० अबा
दीत्स्वान्यनीकानियुध्यध्वमितिभारत सेनापतेर्वचःश्रुत्वाशिखंडिप्रमुखागणाः ९१ भीममेवाभ्यवर्तंतरथानीकैःप्रहारिभिः
धर्मराजश्चतान्सर्वानुपजग्राहपांडवः ९२ महतामेघवर्णेननागानीकेनपृष्ठतः एवंसंचोद्यसर्वाणिस्वान्यनीकानिपार्षतः ९३
भीमसेनस्यजग्राहपार्ष्णिंसत्पुरुषैर्वृतः नहिपांचालराजस्यलोकेकश्चनविद्यते ९४ भीमसात्यकयोरन्यःप्राणेभ्यःप्रियकृत्त-
मः सोपश्यतकलिंगेषुचरंतमरिसूदनं ९५ भीमसेनमहाबाहुंपार्षतःपरवीरहा ननादबहुधाराजन्हृष्टश्चासीत्परंतपः ९६
शंखंदध्मौससमरेसिंहनादंननादच सचपारावताश्वस्यरथेहेमपरिष्कृते ९७ कोविदारध्वजंदृष्ट्वाभीमसेनःसमाश्वसत् धृ
ष्टद्युम्नश्चतंदृष्ट्वाकालिंगैःसमभिद्रुतं ९८ भीमसेनममेयात्मात्राणायाजौसमभ्ययात् तौदूरात्सात्यकिर्दृष्ट्वाधृष्टद्युम्नवृकोदरौ
९९ कालिंगान्समरेवीरौयोधयंतौमनस्विनौ सतत्रगत्वाशैनेयोजवेनजवतांवरः १०० पार्थपार्षतयोःपार्ष्णिंजग्राहपुरुषर्षभः
सकृत्वाकदनंतत्रप्रगृहीतशरासनः १ आस्थितोरौद्रमात्मानंजघानसमरेपरान् कलिंगप्रभवांचैवमांसशोणितकर्दमां २
रुधिरस्यंदनींतत्रभीमःप्रावर्तयन्नदीं अथांतरेकलिंगानांपांडवानांचवाहिनीं ३ संततारसुदुस्तारांभीमसेनोमहाबलः भी
मसेनंतदादृष्ट्वाप्राक्रोशंस्तावकानृप ४ कालोयंभीमरूपेणकालिंगैःसहयुध्यते ततःशांतनवोभीष्मःश्रुत्वातंनिनदंर-
णे ५ अभ्ययात्त्वरितोऽनीकंव्यूढानीकःसमंततः तंसात्यकिर्भीमसेनोधृष्टद्युम्नश्चपार्षतः ६ अभ्यद्रवंतभीष्मस्यरथंहेम
परिष्कृतं परिवार्यतुतेसर्वेगांगेयंतरसारणे ७ त्रिभिस्त्रिभिःशरैर्घोरैर्भीष्ममानर्छुरंजसा प्रत्यविध्यततान्सर्वान्पितादेव-
व्रतस्तव ८ यतमानान्महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः ततःशरसहस्रेणसन्निवार्यमहारथान् ९ हयान्काचनसन्नाहा-
न्भीमस्याभ्यहनच्छरैः हताश्वेतुरथेतिष्ठन्भीमसेनःप्रतापवान् १० शक्तिंचिक्षेपतरसागांगेयस्यरथंप्रति अप्राप्तामस-
थतांशक्तिंपितादेवव्रतस्तव ११ द्विधाचिच्छेदसमरेपृथिव्यांसाव्यशीर्यत ततःशैक्यायसींगुर्वींप्रगृह्यमहतींगदां १२

भीमसेनोरथात्तूर्णंपुप्लुवेमनुजर्षभः धृष्टद्युम्नस्तमारोप्यस्वरथेरथिनांवरः १३ पश्यतांसर्वसैन्यानामपोवाहयशस्विनम् सा
त्यकोपिततस्तूर्णंभीमस्यप्रियकाम्यया १४ सारथिंकुरुवृद्धस्यपातयामाससायकैः भीष्मस्तुनिहतेतस्मिन्सारथौरथिनांवरः
१५ वाताय्मानैरश्वैस्तैरपनीतोरणाजिरात् भीमसेनस्ततोराजन्नपनीतेमहारथे १६ प्रजज्वालयथावन्हिर्दहन्कक्षमिवोल्बणः
सहत्वासर्वकालिंगान्सेनामध्येव्यवस्थितः १७ नैनमभ्युत्सहन्केचित्तावकाभरतर्षभ संपूज्यमानःपांचाल्यैर्मत्स्यैश्चभरतर्षभ
१८ धृष्टद्युम्नंपरित्यज्यसमीयादथसात्यकिं अथाब्रवीद्भीमसेनंसात्यकिःसत्यविक्रमः १९ महर्षयन्यदुव्याघ्रोधृष्टद्युम्नस्य
पश्यतः दिष्ट्याकलिंगराजश्चराजपुत्रश्चकेतुमान् २० शक्रदेवश्चकालिंगःकालिंगाश्चमृधेहताः स्वबाहुबलवीर्येणनागा-
श्वरथसंकुलः २१ महापुरुषभूयिष्ठोवीरयोधनिषेवितः महाव्यूहःकलिंगानामेकेनमृदितस्त्वया २२ एवमुक्त्वाशिनेर्न-
प्तादीर्घबाहुररिंदमः रथस्थंतमभिद्रुत्यपर्यष्वजतपांडवं २३ ततःस्वरथमागम्यपुनरेवमहारथः तावकानवधीत्क्रुद्धोभीम-
स्यबलमादधत् १२४ इतिश्रीमन्महाभा० भीष्म० कलिंगवधेचतुःपंचाशत्तमोध्यायः ५४ संजयउवाच गतेपूर्वा-
ण्हसमयेतस्मिन्नहनिभारत रथाश्वनरनागानांसादिनांचमहाक्षये १ द्रोणपुत्रेणशल्येनकृपेणचमहात्मना समसज्जत
पांचाल्यस्त्रिभिरेतैर्महारथैः २ स लोकविदितानश्वान्निजघानमहाबलः द्रौणेःपांचालदायादःशितैर्बहुभिराशुगैः ३
ततःशल्यरथंतूर्णमास्थायहतवाहनः द्रौणिःपांचालदायादमभ्यवर्तत्तथेषुभिः ४ धृष्टद्युम्नंतुसंयुक्तंद्रौणिनादृश्यभारत
सौभद्रोऽभ्यपतत्तूर्णंविकिरन्निशितांश्छरान् ५ सशल्यंपंचविंशत्याकृपंचनवभिःशरैः अश्वत्थामानमष्टाभिर्विव्याधभर
तर्षभ ६ आर्जुनिंतुततस्तूर्णंद्रौणिर्विव्याधपत्रिणा शल्योद्वादशभिश्चैवकृपश्चनिशितैस्त्रिभिः ७ लक्ष्मणस्तवपौत्रस्तु
सौभद्रंपर्यवस्थितं अभ्यवर्ततसंक्रुद्धस्तयोर्युद्धमवर्तत ८ दौर्योधनिस्तुसंक्रुद्धःसौभद्रंनिशितैःशरैः विव्याधसमरेराजं
स्तदद्भुतमिवाभवत् ९ अभिमन्युश्चसंक्रुद्धोभ्रातरंभरतर्षभ शरैःपंचशतैःक्षिप्रंक्षिप्रहस्तोऽभ्यविध्यत १० लक्ष्मणोऽपि
ततस्तस्यधनुश्चिच्छेदपत्रिणा मुष्टिदेशेमहाराजततउच्चुक्रुशुर्जनाः ११ तद्विहायधनुश्छिन्नंसौभद्रःपरवीरहा अन्यदा-
दत्तवांश्चित्रंकार्मुकंवेगवत्तरं १२

तौतत्रसमरेयुक्तौकृतप्रतिकृतैषिणौ अन्योन्यंनिशितैस्तीक्ष्णैर्जघ्नतुःपुरुषर्षभौ १३ ततोदुर्योधनोराजादृष्ट्वापुत्रंमहाबलं
पीडितंतवपौत्रेणप्रायात्तत्रजनेश्वरः १४ सन्निवृत्तेतवसुतेसर्वएवजनाधिपाः आर्जुनिंरथवंशेनसमंतात्पर्यवारयन् १५
सतैःपरिवृतःशूरैःशूरोयुधिसुदुर्जयः नस्मसंव्यथितोराजन्कृष्णातुल्यपराक्रमः १६ सौभद्रमथसंयुक्तंदृष्ट्वातत्रधनंजयः
अभिदुद्रावसंक्रुद्धस्त्रातुकामःस्वमात्मजं १७ ततःसरथनागाश्वाभीष्मद्रोणपुरोगमाः अभ्यवर्तंतराजानःसहसासव्यसा-
चिनम् १८ उद्धूतं सहसाभौमंनराश्वरथसादिभिः दिवाकरपथंप्राप्यरजस्तीव्रमदृश्यत १९ तानिनागसहस्राणिभूमि
पालशतानिच तस्यबाणपथंप्राप्यनाभ्यवर्तंतसर्वशः २० प्र णेदुःसर्वभूतानिबभूवुस्तिमिरादिशः कुरूणामनयस्ती-
व्रःप्रत्यपद्यतदारुणः २१ नाप्यंतरिक्षंनदिशोनभूमिर्नचभास्करः प्राज्ञायतनरश्रेष्ठशरसंघैःकिरीटिनः २२ सादितध्वज
नागाश्चहताश्वारथिनोभृशं विप्रद्रुतरथाःकेचिद्दृश्यंतेरथयूथपाः २३ विरथारथिनश्चान्येधावमानास्ततस्ततः तत्रतत्रै-
वदृश्यंतेसायुधैःसांगदैर्भुजैः २४ हयारोहाहयांस्त्यक्त्वागजारोहाश्चदंतिनः अर्जुनस्यभयाद्राजन्समंताद्विप्रदुद्रुवुः २५
रथेभ्यश्चगजेभ्यश्चहयेभ्यश्चनराधिपाः पातिताःपात्यमानाश्चदृश्यंतेऽर्जुनसायकैः २६ सगदानुद्यतान्बाहून्सखड्गांश्चविशां
पते सप्रासांश्चसतूणीरान्सशरान्सशरासनान् २७ सांकुशान्सपताकांश्चतत्रतत्रार्जुनोनृणां विचकर्तशरैरुग्रैरौद्रंबि-
भ्रद्वपुस्तदा २८ परिघाणांविदीर्णानांमुद्गराणांचमारिष प्रासानांभिंडिपालानांनिस्त्रिंशानांचसंयुगे २९ परश्वधानांतीक्ष्णा
नांतोमराणांचभारत वर्मणांचापविद्धानांकांचनानांचभूतले ३० ध्वजानांचर्मणांचैवव्यजनानांचसर्वशः छत्राणांहेमदंडानांतोम
राणांचभारत ३१ प्रतोदानांकशानांचयोक्त्राणांचैवमारिष राशयःस्मप्रदृश्यंतेविनिकीर्णारणक्षितौ नासीत्तत्रपुमान्कश्चित्तवसे
न्यस्यमारिष ३२ योऽर्जुनंसमरेशूरंप्रत्युदीयात्कथंचन योयोहिसमरेपार्थंप्रत्युद्यातिविशांपते ३३ सशरैर्विशिखैस्तीक्ष्णैःपर-
लोकायनीयते तेषुविद्रवमाणेषुतवयोधेषुसर्वशः ३४ अर्जुनोवासुदेवश्चशंखंदध्मतुरुत्तमौ तत्प्रभग्नंबलंदृष्ट्वापितादेवव्र-
तस्तव ३५ अब्रवीत्समरेशूरंभारद्वाजंस्मयन्निव एषपांडुसुतोवीरःकृष्णेनसहितोबली ३६ ६९ ६९

तथाकरोतिसैन्यानियथाकुर्याद्धनंजयः नह्येषसमरेशक्योजेतुमद्यकथंचन ३७ यथास्यदृश्यतेरूपंकालांतकयमोपमं न
निवर्तयितुंचापिशक्येयंमहतीचमूः ३८ अन्योन्यप्रेक्षयापश्यदुर्बलेयंवरूथिनी एषचास्तंगिरिश्रेष्ठंभानुमान्प्रतिपद्यते ३९
चक्षूंषिसर्वलोकस्यसंहरन्निवसर्वथा तत्रावहारंसंप्राप्तंमन्येहंपुरुषर्षभ ४० श्रांताभीताश्चयेयोधानयोत्स्यंतिकदाचन ए-
वमुक्त्वाततोभीष्मोद्रोणमाचार्यसत्तमम् ४१ अवहारमथोचक्रेतावकानांमहारथः ततोवहारःसैन्यानांतवतेषांचमारिष
अस्तंगच्छतिसूर्येऽभूत्संध्याचसमवर्तत ४२ इतिश्रीमन्महाभारतेभीष्म० द्वितीयदिवसयुद्धंनामपंचपंचाशत्तमोऽध्या
यः ५५ संजयउवाच प्रभातायांतुशर्वर्यांभीष्मःशांतनवस्ततः अनीकान्यथसंयानेव्यादिदेशपरंतपः १ गारुडंच
महाव्यूहंचक्रेशांतनवस्तदा पुत्राणांतेजयाकांक्षीवृद्धःकुरुपितामहः २ गरुडस्यस्वयंतुंडेपितादेवव्रतस्तव चक्षुषीचभरद्वा
जः कृतवर्माचसात्वतः ३ अश्वत्थामाकृपश्चैवशिरस्यास्तांयशस्विनौ त्रिगर्तैर्मत्स्यकैकेयैर्वाटधानैश्चसंयुतौ ४ भूरिश्रवाःश
लःशल्योभगदत्तश्चमारिष मद्रकाःसिंधुसौवीरास्तथापंचनदाश्चये ५ जयद्रथेनसहिताग्रीवायांसन्निवेशिताः पृष्ठेदुर्योधनो
राजासोदर्यःसानुगैर्वृतः ६ विंदानुविंदावावंत्यौकांबोजाश्चशकैःसह पुच्छमासन्महाराजशूरसेनाश्चमारिष ७ मागधाश्च-
कलिंगाश्चदासेरकगणैःसह दक्षिणंपक्षमासाद्यस्थिताव्यूहस्यदंशिताः ८ कारूषाश्चविकुंजाश्चमुंडाःकौंडीवृषास्तथा बृ-
हद्बलेनसहितावामपार्श्वेसमास्थिताः ९ व्यूढंदृष्ट्वातुतत्सैन्यंसव्यसाचीपरंतपः धृष्टद्युम्नेनसहितःप्रत्यव्यूहतसंयुगे १० ता-
वकानांतुतंव्यूहंप्रत्यव्यूहंतपांडवाः अर्धचंद्रेणव्यूहेनव्यूहंतमतिदारुणं ११ दक्षिणंशृंगमास्थायभीमसेनोव्यरोचत नानाश
स्त्रौघसंपन्नैर्नानादेश्यैर्नृपैर्वृतः १२ तदन्वेवविराटश्चद्रुपदश्चमहारथः तदनंतरमेवाथनीलोनीलायुधैःसह १३ नीलादनंतरं-
चैवधृष्टकेतुर्महारथः चेदिकाशिकरूषैश्चपौरवैश्चाभिसंवृतः १४ धृष्टद्युम्नःशिखंडीचपांचालाश्चप्रभद्रकाः मध्येसैन्येन-
महतास्थितायुद्धायभारत १५ तत्रैवधर्मराजोपिगजानीकेनसंवृतः ततस्तुसात्यकीराजन्द्रौपद्याःपंचचात्मजाः १६ अभि-
मन्युस्ततस्तूर्णमिरावांश्चततःपरं भैमसेनिस्ततोराजन्केकेयाश्चमहारथाः १७ ततोभूद्द्विपदांश्रेष्ठोवामपार्श्वमुपाश्रितः सर्वस्यजग-
तोगोप्तायस्यगोप्ताजनार्दनः १८

एवमेतंमहाव्यूहंमत्यव्यूहंतपांडवाः वधार्थंतवपुत्राणांतत्पक्षंयेनसंश्रिताः १९ ततःप्रववृतेयुद्धंव्यतिषक्तरथद्विपं तावका-
नांपरेषांचनिघ्नतामितरेतरं २० हस्त्यौघाश्चरथौघाश्चतत्रतत्रविशांपते संपतंतोव्यदृश्यंतनिघ्नंतस्तेपरस्परं २१ धावतांचरथौघा
नांयुध्यतांचपृथक्पृथक् बभूवतुमुलःशब्दोविमिश्रोदुंदुभिस्वनैः २२ दिवस्पृङ्नरवीराणांनिघ्नतामितरेतरं संप्रहारेतुमुलेतुमु-
लेतववतेषांचभारत २३ इतिश्रीमन्महाभा॰भी॰ गारुडार्धचंद्रव्यूहनिर्माणेषट्पंचाशत्तमोऽध्यायः ५६ संजयउवाच
ततोव्यूढेष्वनीकेषुतावकेष्वितरेषुच धनंजयोरथानीकमवधीत्तत्रभारत १ शरैरतिरथोयुद्धेपातयन्नथयूथपान् तेवध्यमानाः
पार्थेनकालेनेवयुगक्षये २ धार्तराष्ट्रारणेयत्तान्पांडवान्प्रत्ययोधयन् प्रार्थयानायशोदीप्तंमृत्युंकृत्वानिवर्तनं ३ एकाग्रमनसो-
भूत्वापांडवानांवरूथिनीं बभंजुर्बहुशोराजंस्तेचाभज्यंतसंयुगे ४ द्रवद्भिरथभग्नैश्चपरिवर्तद्भिरेवच पांडवैःकौरवेयैश्चनप्रा-
ज्ञायतकिंचन ५ उदतिष्ठद्रजोभौमंछादयानंदिवाकरं नदिशःप्रदिशश्चापितत्रजज्ञुःकथंचन ६ अनुमानेनसंज्ञाभिर्नाम-
गोत्रैश्चसंयुगे वर्ततेस्मतदायुद्धंतत्रतत्रविशांपते ७ नव्यूहोभिद्यतेतत्रकौरवाणांविशांपते रक्षितःसयथातेनभारद्वाजे-
नमारिष ८ तथैवपांडवेयानांरक्षितःसव्यसाचिना नाभिद्यतमहाव्यूहोभीमेनचसुरक्षितः ९ सेनाग्रादभिनिष्पत्यप्रायुध्यं
स्तत्रमानवाः उभयोःसेनयोराजन्व्यतिषक्तरथद्विपाः १० हयारोहैर्हयारोहाःपात्यंतेस्ममहाहवे ऋष्टिभिर्विमलाग्राभिःप्रा
सैरपिचसंयुगे ११ रथीरथिनमासाद्यबाणैःकनकभूषणैः पातयामाससमरेतस्मिन्नतिभयंकरे १२ गजारोहागजारोहान्ना
राचशरतोमरैः संयुक्तान्पातयामासुस्तवतेषांचसंघशः १३ पत्तिसंघारणेपत्तीन्भिंडिपालपरश्वधैः न्यपातयंतसंहृष्टाःप-
रस्परकृतागसः १४ रथीचसमरेराजन्नासाद्यगजयोधिनं सगजंपातयामासगजीचरथिनंतथा १५ रथिनंचहयारोहःप्रा-
सेनभरतर्षभ पातयामाससमरेरथीचहयसादिनं पदातीरथिनंसंख्येरथीचापिपदातिनं १६ न्यपातयच्छितैःशस्त्रैःसेन
योरुभयोरपि गजारोहाहयारोहान्पातयामासुराहवे १७ हयारोहागजस्थांश्चतदद्भुतमिवाभवत् गजारोहवरैश्चापि
तत्रतत्रपदातयः १८ पातिताःसमदृश्यंततैश्चापिगजयोधिनः पत्तिसंघाहयारोहैःसादिसंघाश्चपत्तिभिः १९

पात्यमानाव्यदृश्यंतशतशोऽथसहस्रशः ध्वजैस्तत्रापविद्धैश्चकार्मुकैस्तोमरैस्तथा २० परिस्तोमैःकुथाभिश्चकंबलैश्चमहा-
धनैः प्रासैस्तथागदाभिश्चपरिघैःकंपनैस्तथा शक्तिभिःकवचैश्चित्रैःकुणपैरंकुशैरपि २१ निस्त्रिंशैर्विमलैश्चैवस्वर्णपुंखैःश-
रैस्तथा भूर्भातिभरतश्रेष्ठस्रक्दामैरिवचित्रिता नराश्वकायैःपतितैर्दंतिभिश्चमहाहवे २२ अगम्यरूपापृथिवीमांसशो
णितकर्दमा प्रशशामरजोभौमंव्युक्षितंनरशोणितैः २४ दिशश्चविमलाःसर्वाःसमपद्यंतभारत उत्थितान्यगणेयानिकबं
धानिसमंततः २५ चिन्हभूतानिजगतोविनाशार्थायभारत तस्मिन्युद्धेमहारौद्रेवर्तमानेसुदारुणे २६ प्रत्यदृश्यंतरथिनो
धावमानाःसमंततः ततोभीष्मश्चद्रोणश्चसैंधवश्चजयद्रथः २७ पुरुमित्रोविकर्णश्चशकुनिश्चापिसौबलः एतेसमरदुर्धर्षाः
सिंहतुल्यपराक्रमाः २८ पांडवानामनीकानिबभंजुःसमरेस्थिताः तथैवभीमसेनोपिराक्षसश्चघटोत्कचः २९ सात्यकिश्चेकि
तानश्चद्रौपदेयाश्चभारत तावकांस्तवपुत्रांश्चसहिताःसर्वराजभिः ३० द्रावयामासूराजिस्थांस्त्रिदशादानवानिव तथातेस-
मरेन्योन्यंनिघ्नंतःक्षत्रियर्षभाः ३१ रक्तोक्षिताघोररूपाविरेजुःकिंशुकाइव विजित्यचरिपून्राजन्सेनयोरुभयोरपि ३२ व्यदृ-
श्यंतमहामात्राग्रहाइवनभस्तले ततोरथसहस्रेणपुत्रोदुर्योधनस्तव ३३ अभ्ययात्पांडवान्युद्धेराक्षसंचघटोत्कचं तथैवपांड
वाःसर्वैमहत्यासेनयासह ३४ भीष्मद्रोणौरणेशूरौप्रत्ययद्युररिंदमौ किरीटीतुययौक्रुद्धःसमंतात्पार्थिवोत्तमान् ३५ अर्जुनिः
सात्यकिश्चैवययतुःसौबलंबलं ततःप्रववृतेभूयःसंग्रामोलोमहर्षणः तावकानांपरेषांचजिगीषूणांपरस्परं ३६ इतिश्री
मन्महाभा० भीष्म० तृतीयदिनयुद्धारंभेसप्तपंचाशत्तमोऽध्यायः ५७ संजयउवाच ततस्तेपार्थिवाःक्रुद्धाःफाल्गुनंवी-
क्ष्यसंयुगे रथैरनेकसाहस्रैःसमंतात्पर्यवारयन् १ अथैनंरथवंशेनकोष्ठकीकृत्यभारत शरैःसुबहुसाहस्रैःसमंतात्पर्यवार-
यन् २ शक्तीश्चविमलास्तीक्ष्णागदाश्चपरिघैःसह प्रासान्परश्वधांश्चैवमुद्गरान्मुसलानपि ३ चिक्षिपुःसमरेक्रुद्धाःफाल्गु-
नस्यरथंप्रति अस्त्राणामथतांवृष्टिंशलभानामिवायतिं ४ रुरोधसर्वतःपार्थःशरैःकनकभूषणैः तत्रतल्लाघवंदृष्ट्वाबीभ
त्सोरतिमानुषं ५ देवदानवगंधर्वाःपिशाचोरगराक्षसाः साधुसाध्वितिराजेंद्रफाल्गुनंप्रत्यपूजयन् ६ ७ ७

सात्यकिश्चाभिमन्युश्चमहत्यासेनयासह गांधारान्समरेशूरानरुरुधुःसहसौबलान् ७ ततःसौबलकाःशूरावार्ष्णेयस्य रथोत्तमम् तिलशश्चिच्छिदुःक्रोधाच्छस्त्रैर्नानाविधैरपि ८ सात्यकिस्तुरथंत्यक्त्वावर्तमानेमहाहवे अभिमन्योरथंतूर्णमा रुरोहपरंतप ९ तावेकरथसंयुक्तौसौबलेयस्यवाहिनीं जघ्नतुर्निशितैस्तूर्णंशरैःसन्नतपर्वभिः १० द्रोणभीष्मौरणेयत्तौ धर्मराजस्यवाहिनीं नाशयेतांशरैस्तीक्ष्णैःकंकपत्रपरिच्छदैः ११ ततोधर्मसुतोराजामाद्रीपुत्रौचपांडवौ मिषतांसर्वसै- न्यानांद्रोणानीकमुपाद्रवन् १२ तत्राभूत्सुमहद्युद्धंतुमुलंलोमहर्षणं यथादेवासुरंयुद्धंपूर्वमासीत्सुदारुणं १३ कुर्वाणौ तुमहत्कर्मभीमसेनघटोत्कचौ दुर्योधनस्ततोभ्येत्यतावुभावप्यवारयत् १४ तत्राद्भुतमपश्यामहैडिंबस्यपराक्रमम् अ- तीत्यपितरंयुद्धेयदयुध्यतभारत १५ भीमसेनस्तुसंक्रुद्धोदुर्योधनममर्षणः हृद्यविध्यत्पृषत्केनप्रहसन्निवपांडवः १६ ततोदुर्योधनोराजाप्रहारवरपीडितः निषसादरथोपस्थेकश्मलंचजगामह १७ तंविसंज्ञमथोदृष्ट्वात्वरमाणोस्यसारथिः अपोवा हरणाद्राजंस्ततःसैन्यमभज्यत १८ ततस्तांकौरवींसेनांद्रवमाणांततस्ततः निघ्नन्भीमःशरैस्तीक्ष्णैरनुवव्राजपृष्ठतः १९ पा र्षतश्चरणश्रेष्ठोधर्मपुत्रश्चपांडवः द्रोणस्यपश्यतःसैन्यंगांगेयस्यचभारत २० जघ्नतुर्विशिखैस्तीक्ष्णैःपरानीकविनाशनैः द्रव माणंतुतत्सैन्यंतवपुत्रस्यसंयुगे २१ नाशक्नुतांवारयितुंभीष्मद्रोणौमहारथौ वार्यमाणंचभीष्मेणद्रोणेनचमहात्मना २२ विद्रवत्येवतत्सैन्यंपश्यतोर्द्रोणभीष्मयोः ततोरथसहस्रेषुविद्रवत्सुततस्ततः २३ तावास्थितावेकरथंसौभद्रशिनिपुंगवौ सौबलींसमरेसेनांनाशयेतांपरंतप २४ शुशुभातेततस्तौतुशैनेयकुरुपुंगवौ अमावास्यांगतौयद्वत्सोमसूर्यौनभस्तले २५ अर्जुनस्तुततःक्रुद्धस्तवसैन्यंविशांपते ववर्षशरवर्षेणधाराभिरिवतोयदः २६ वध्यमानंततस्तत्तुशरैःपार्थस्यसंयुगे दुद्रा वकौरवंसैन्यंविषादभयकंपितं २७ द्रवतस्तान्समालोक्यभीष्मद्रोणौमहाबलौ न्यवारयेतांसंक्रुद्धौदुर्योधनहितैषिणौ २८ ततोदुर्योधनोराजासमाश्वस्यविशांपते न्यवर्तयततत्सैन्यंद्रवमाणंसमंततः २९ यत्रयत्रसुतंतुभ्यंयोयःपश्यतिभारत ३० तत्रतत्रन्यवर्तंतक्षत्रियाणांमहारथाः तान्निवृत्तान्समीक्ष्यैवततोन्येपीतरेजनाः ३१ अन्योन्यस्पर्द्धयाराजँल्लज्जयाचाव तस्थिरे पुनरावर्ततांतेषांवेगआसीद्विशांपते ३२

३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६

पूर्यतःसागरस्येवचंद्रस्योदयनंप्रति सन्निवृत्तांस्ततस्तांस्तु दृष्ट्वाराजासुयोधनः ३३ अब्रवीत्त्वरितोगत्वाभीष्मंशांतनवंवं-
चः पितामहनिबोधेदंयत्त्वांवक्ष्यामिभारत ३४ नानुरूपमहंमन्येत्वयिजीवतिकौरव द्रोणेचास्त्रविदांश्रेष्ठेसपुत्रेससुहृ
ज्जने ३५ कृपेचैवमहेष्वासेद्रवतेयद्वरूथिनी नपांडवान्प्रतिबलांस्तवमन्येकथंचन ३६ तथाद्रोणस्यसंग्रामेद्रोणेश्वा-
पिकृपस्यच अनुग्राह्याःपांडुसुतानूनंतवपितामह ३७ यथेमांक्षमसेवीरवध्यमानांवरूथिनीं सोऽस्मिवाच्यस्त्वयारा-
जन्पूर्वमेवसमागमे ३८ नयोत्स्येपांडवान्संख्येनापिसात्यकिपार्षतो श्रुत्वाहंवचनंतुभ्यमाचार्यस्यचभारत ३९ कर्णेनस
हितःकृत्यंचिंतयानस्तदेवहि यदिनाहंपरित्याज्योयुवाभ्यामिहसंयुगे ४० विक्रमेणानुरूपेणयुध्यतांपुरुषर्षभौ एतच्छ्रु-
त्वावचोभीष्मःप्रहसन्वैमुहुर्मुहुः ४१ अब्रवीत्तनयंतुभ्यंक्रोधादुद्वृत्यचक्षुषी बहुशोऽसिमयाराजन्पथ्यमुक्तोहितंवचः
४२ अजेयाःपांडवायुद्धेदेवैरपिसवासवैः यत्तुशक्यमयाकर्तुंवृद्धेनात्रनृपोत्तम ४३ करिष्यामियथाशक्तिप्रेक्षेदानींसबां
धवः अद्यपांडुसुतान्सर्वान्ससैन्यान्सहबंधुभिः ४४ मिषतोवारयिष्यामिसर्वलोकस्यपश्यतः एवमुक्तस्तुभीष्मेणपुत्रस्त
वनरेश्वरः ४५ दध्मौशंखंमुदायुक्तोभेरीश्चसमताडयत् पांडवाश्चततोराजंश्रुत्वातुनिनदंमहत् दध्मुःशंखांश्चभेरीश्च
मुरजांश्चाभ्यवादयन् ४६ इतिश्रीमन्म० भीष्म० भीष्मदुर्योधनसंवादेअष्टपंचाशत्तमोऽध्यायः ५८ धृतराष्ट्रउवाच
प्रतिज्ञातेततस्तस्मिन्युद्धेभीष्मेणदारुणे ममपुत्रस्यवाक्यैस्तुक्रोधितेनविशांपते १ भीष्मःकिमकरोत्तत्रपांडवेयेषुसं-
जय पितामहेवापांचालास्तन्ममाचक्ष्वसंजय २ संजयउवाच गतपूर्वाह्णभूयिष्ठेतस्मिन्नहनिभारत पश्चिमांदिश-
मास्थायकिंचिद्यातेदिवाकरे ३ जयंप्राप्तेषुहृष्टेषुपांडवेषुमहात्मसु सर्वधर्मविशेषज्ञःपितादेवव्रतस्तव ४ अभ्ययाज्जव
नैरश्वैःपांडवानामनीकिनीं महत्यासेनयागुप्तस्तवपुत्रैश्चसर्वशः ५ प्रावर्ततततोयुद्धंतुमुलंलोमहर्षणं अस्माकंपांडवैः
सार्द्धमनयात्तवभारत ६ धनुषांकूजतांतत्रतलानांचाभिहन्यतां बभूवतुमुलःशब्दोगिरीणामिवदीर्यतां ७ तिष्ठस्थितोस्मि
विद्ध्येनंनिवर्तस्वस्थिरोभव स्थितोऽस्मिप्रहरस्वेतिशब्दाःश्रूयंतिसर्वशः ८ कांचनेषुतनुत्रेषुकिरीटेषुध्वजेषुच शिलाना
मिवशैलेषुपततांनामभूत्स्वनः ९ इतिश्रीम० भी० अष्टपंचाशत्तमोध्यायः ५८ १ २ ३ ४ ५ ६ ७ ८ ९ ४९

पतितान्युत्तमांगानिबाहवश्चविभूषिताः व्यचेष्टंतमहींप्राप्यशतशोथसहस्रशः १० कृत्तोत्तमांगाः केचित्तुतथैवोद्यतकार्मु-
काः प्रगृहीतायुधाश्चैवतस्थुःपुरुषसत्तमाः ११ प्रावर्ततमहावेगानदीरुधिरवाहिनी मातंगांगशिलाघोरामांसशोणितक-
र्दमा १२ वराश्वनरनागानांशरीरप्रभवातदा परलोकार्णवनदीगृध्रगोमायुमोदिनी १३ नदृष्टनश्रुतंचापियुद्धमेतादृशंनृप
यथातवकृतानांचपांडवानांचभारत १४ नासीद्रथपथस्तत्रयोधैर्युधिनिपातितैः गजैर्निपातितैर्नीलैर्गिरिशृंगैरिवावृतः
१५ विकीर्णैःकवचैश्चित्रैःशिरस्त्राणैश्चमारिष शुशुभेतद्रणस्थानंशरदीवनभस्तलं १६ विनिर्भिन्नानराःकेचिदंत्रापी
डमकर्षिणः अदीनाःसमरेशत्रूनभ्यधावंतदर्पिताः१७ तातभ्रातःसखेबंधोवयस्यमममातुल मामांपरित्यजेत्यन्येचुक्रु
शुःपतितारणे १८ अथाभ्येहित्वमागच्छकिंभीतोऽसिक्वयास्यसि स्थितोहंसमरेमाभैरितिचान्येविचुक्रुशुः १९ तत्रभी
ष्मःशांतनवोनित्यंमंडलकार्मुकः मुमोचबाणान्दीप्ताग्रानहीनाशीविषानिव २० शरैरेकायनीकुर्वन्दिशःसर्वायतव्रतः
जघानपांडवरथानादिश्यादिश्यभारत २१ नृत्यन्वैरथमार्गेषुदर्शयन्पाणिलाघवम् अलातचक्रवद्राजंस्तत्रतत्रस्मदृश्यते २२
तमेकंसमरेशूरंपांडवाःसृंजयैःसह अनेकशतसाहस्रंसमपश्यंतलाघवात् २३ मायाकृतात्मानमिवभीष्मंतत्रस्ममेनिरे पूर्वस्यां
दिशितंदृष्ट्वाप्रतीच्यांददृशुर्जनाः २४ उदीच्यांचैनमालोक्यदक्षिणस्यांतथैवच प्रतियुध्यन्ससमरेगांगेयःप्रत्यदृश्यत २५
नचैनंपांडवेयानांकश्चिच्छक्नोतिवीक्षितुम् विशिखानेवपश्यंतिभीष्मचापच्युतान्बहून् २६ कुर्वाणंसमरेकर्मसूदयानंचवाहि
नीम् व्याक्रोशंतरणेतत्रवीराबहुविधंबहु २७ अमानुषेणरूपेणचरंतंपितरंतव शलभाइवराजानःपतंतिस्मप्रमोहिताः २८
भीष्माग्निमभिसंक्रुद्धंविनाशायसहस्रशः नहिमोघःशरःकश्चिदासीद्भीष्मस्यसंयुगे २९ नरनागाश्वकायेषुबहुत्वाल्लघु-
योधिनः भिनत्येकेनचरणेसुमुक्तेनपत्रिणा ३० गजकंटकसंबद्धंवज्रेणेवशिलोच्चयं द्वौत्रीनपिगजारोहान्पिंडितान्पर्वता
निव ३१ नाराचेनसुतीक्ष्णेननिजघानपितातव योयोभीष्मंनरव्याघ्रमभ्येतियुधिकश्चन ३२ मुहूर्तदृष्टःसभयात्पतितो
भुविदृश्यते एवंसाधर्मराजस्यवध्यमानामहाचमूः ३३ भीष्मेणातुलवीर्येणव्यशीर्यतसहस्रधा प्राकंपतमहासेनाशरवर्षाभिपी
डिता ३४

३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८

पश्यतोवासुदेवस्यपार्थस्यचमहात्मनः यतमानापितेवीराद्राव्यमाणान्महारथान् ३५ नाशक्नुवन्वारयितुंभीष्मबाणप्रपीडिता
न् महेंद्रसमवीर्येणभज्यमानामहाचमूः ३६ अभज्यतमहाराजनचद्वौसहधावतः आविद्धरथनागाश्वंपतितध्वजकूबरम्
३७ अनीकंपांडुपुत्राणांहाहाभूतमचेतनं जघानात्रपितापुत्रंपुत्रश्चपितरंतथा ३८ प्रियंसखायंचाक्रंदेसखादैवबला-
त्कृतः विमुच्यकवचांश्चान्येपांडुपुत्रस्यसैनिकाः ३९ प्रकीर्यकेशान्धावंतःप्रत्यदृश्यंतभारत तद्गोकुलमिवोद्भ्रांतमुद्भ्रांतर
थयूथपम् ४० ददृशेपांडुपुत्राणांसैन्यमार्तस्वनंतदा प्रभज्यमानंसैन्यंचदृष्ट्वायादवनंदनः ४१ उवाचपार्थंकृष्णस्तन्नि
गृह्यरथसत्तमम् अयंसकालःसंप्राप्तःपार्थयःकांक्षितस्तव ४२ प्रहरास्मैनरव्याघ्रनचेन्मोहाद्विमुह्यसे यत्त्वयाकथितं-
वीरपुराराज्ञांसमागमे ४३ भीष्मद्रोणमुखान्सर्वान्धार्तराष्ट्रस्यसैनिकान् सानुबंधान्हनिष्यामियोमांयोत्स्यतिसंयुगे ४४
इतितत्कुरुकौंतेयसत्यंवाक्यमरिंदम बीभत्सोपश्यसैन्यंस्वंभज्यमानमितस्ततः ४५ द्रवतश्चमहीपालान्पश्ययौधिष्ठिरेबले
दृष्ट्वातुसमरेभीष्मंव्यात्ताननमिवांतकं ४६ भयार्ताःसंप्रणश्यंतिसिंहंक्षुद्रमृगाइव एवमुक्तःप्रत्युवाचवासुदेवंधनंज-
यः ४७ चोदयाश्वान्यतोभीष्मोविगाह्यैवंबलार्णवम् पातयिष्यामिदुर्धर्षंवृद्धंकुरुपितामहं ४८ ततोश्वान्रजतप्रख्यां
श्चोदयामासमाधवः यतोभीष्मरथोराजन्दुष्प्रेक्ष्योरश्मिवानिव ४९ ततस्तत्पुनरावृत्तंयुधिष्ठिरबलंमहत् दृष्ट्वापार्थं
महाबाहुंभीष्मायोद्यतमाहवे ५० ततोभीष्मःकुरुश्रेष्ठःसिंहवद्विनदन्मुहुः धनंजयरथंतूर्णंशरवर्षैरवाकिरत् ५१ क्ष
णेनसरथस्तस्यसध्वजःसहसारथिः शरवर्षेणमहतासंछन्नोनप्रदृश्यते ५२ वासुदेवस्त्वसंभ्रांतोधैर्यमास्थायसत्व
वान् चोदयामासतानश्वान्वितुन्नान्भीष्मसायकैः ५३ ततःपार्थोधनुर्गृह्यदिव्यंजलदनिःस्वनं पातयामासभीष्मस्य
धनुश्छित्वाशितैःशरैः ५४ सच्छिन्नधन्वाकौरव्यःपुनरन्यन्महद्धनुः निमेषांतरमात्रेणसज्जंचक्रेपितातव ५५ विच-
कर्षततोदोर्भ्यांधनुर्जलदनिःस्वनं अथास्यतदपिक्रुद्धश्चिच्छेदधनुरर्जुनः ५६ तस्यतत्पूजयामासलाघवंशांतनोःसु-
तः साधुपार्थमहाबाहोसाधुभोःपांडुनंदन ५७ त्वय्येवैतद्युक्तरूपंमहत्कर्मधनंजय प्रीतोऽस्मिसुदृढंपुत्रकुरुयुद्धंमयासह ५८

४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९

इतिपार्थंप्रशस्याथप्रगृह्यान्यन्महद्धनुः मुमोचसमरेवीरःशरान्पार्थरथंप्रति ५९ अदर्शयद्वासुदेवोहययानेपरंबलं मो-
घान्कुर्वंश्छरांस्तस्यमंडलान्यचरल्लघु ६० ततस्तुभीष्मःसुदृढंवासुदेवधनंजयौ विव्याधनिशितैर्बाणैःसर्वगात्रेषुमारि
ष ६१ शुशुभातेनरव्याघ्रौतौभीष्मशरविक्षतौ गोवृषाविवनर्दंतौविषाणोल्लिखितांकितौ ६२ पुनश्चापिसुसंक्रुद्धःश
रैःशतसहस्रशः कृष्णयोर्भृशसंक्रुद्धोभीष्मआवारयद्दिशः ६३ वार्ष्णेयंचशरैस्तीक्ष्णैःकंपयामासरोषितः मुहुरभ्यु-
त्स्मयन्भीष्मःप्रहस्यस्वनवत्तदा ६४ ततःकृष्णस्तुसमरेदृष्ट्वाभीष्मपराक्रमं संप्रेक्ष्यचमहाबाहुःपार्थस्यमृदुयुद्धतां
६५ तंभीष्मंशरवर्षाणिसृजंतमनिशंयुधि प्रतपंतमिवादित्यंमध्यमासाद्यसेनयोः वरान्वरान्विनिघ्नंतंपांडुपुत्रस्यसैनि
कान् ६६ युगांतमिवकुर्वाणंभीष्मंयौधिष्ठिरेबले अमृष्यमाणोभगवान्केशवःपरवीरहा ६७ अचिंतयदमेयात्मानास्तियौ-
धिष्ठिरंबलम् एकान्हाह्निरणेभीष्मोनाशयेद्दैत्यदानवान् ६८ किमुपांडुसुतान्युद्धेसबलान्सपदानुगान् द्रवतेचमहत्सैन्यंपां
डवस्यमहात्मनः ६९ एतेचकौरवास्तूर्णंप्रभग्नान्दृश्यसोमकान् आद्रवंतिरणेहृष्टाहर्षयंतःपितामहं ७० सोहंभीष्मंनिह
न्म्यद्यपांडवार्थायदंशितः भारमेनंविनेष्यामिपांडवानामहात्मनां ७१ अर्जुनोहिशरैस्तीक्ष्णैर्वध्यमानोहिसंयुगे कर्तव्यं
नाभिजानातिरणेभीष्मस्यगौरवात् ७२ तथाचिंतयतस्तस्यभूयएवपितामहः प्रेषयामाससंक्रुद्धःशरान्पार्थरथंप्रति
७३ तेषांबहुत्वात्तुभृशंशराणांदिशोथसर्वाःपिहिताबभूवुः नचांतरिक्षंनदिशोनभूमिर्नभास्करोदृश्यतरश्मिमाली ७४
ववुश्चवातास्तुमुलाःसधूमादिशश्चसर्वाःक्षुभिताबभूवुः द्रोणोविकर्णश्चजयद्रथश्चभूरिश्रवाःकृतवर्माकृपश्च ७५ श्रु-
तायुरंबष्ठपतिश्चराजाविंदानुविंदौचसुदक्षिणश्च प्राच्याश्चसौवीरगणाश्चसर्वेवशातयःक्षुद्रकमालवाश्च ७६ किरीटिनं
त्वरमाणाविसस्रुर्निदेशगाःशांतनवस्यराज्ञः तंवाजिपादातरथौघजालैरनेकसाहस्रशतैर्ददर्श ७७ किरीटिनंसंपरिवा
र्यमाणंशिनेर्नप्तावारणयूथपैश्च ततश्चदृष्ट्वार्जुनवासुदेवौपदातिनागाश्वरथैःसमंतात् ७८ अभिद्रुतौशस्त्रभृतांवरिष्ठौ
शिनिप्रवीरोभिससारतूर्णम् सतान्यनीकानिधनुष्मतांवरःशिनिप्रवीरःसहसाभिपत्य ७९ ८० ८०

चकारसाहाय्यमथार्जुनस्यविष्णुर्यथावृत्रनिषूदनस्य विशीर्णनागाश्वरथध्वजौघंभीष्मेणवित्रासितसर्वयोधम् ८० युधि ष्ठिरानीकमभिद्रवंतंप्रोवाचसंदृश्यशिनिप्रवीरः कक्षत्रियायास्यथनेषधर्मः सतांपुरस्तात्कथितःपुराणैः ८१ मास्मप्रतिज्ञां त्यजनप्रवीराःस्वंवीरधर्मान्प्रतिपालयध्वं तान्वासवानंतरजोनिशम्यनरेंद्रमुख्यान्द्रवतःसमेतान् ८२ पार्थस्यदृष्ट्वामृदुयु द्धतांचभीष्मंचसंख्येसमुदीर्यमाणम् असृष्यमाणःसततोमहात्मायशस्विनंसर्वदाशार्हभर्त्ता ८३ उवाचशैनेयमभिप्रशंस न्दृष्ट्वाकुरूनापततःसमंतात् येयांतियांत्वेवशिनिप्रवीरयेऽवस्थितास्सात्वततेपियांतु ८४ भीष्मंरथात्पश्यनिपात्यमानंद्रो णंचसंख्येसगणंमयाद्य नमेबलेसात्वतकौरवाणांकुद्धस्ययुद्धेतरणेधकश्चित् ८५ तस्मादहंगृह्यरथांगमुग्रंप्राणंहरिष्या मिमहाव्रतस्य निहत्यभीष्मंसगणंतथाजौद्रोणंचशैनेयरथप्रवीरो ८६ प्रीतिंकरिष्यामिधनंजयस्यराज्ञश्चभीमस्यतथा- श्विनोश्च निहत्यसर्वान्धृतराष्ट्रपुत्रांस्तत्पाक्षिकायेचनरेंद्रमुख्याः ८७ राज्येनराजानमजातशत्रुंसंपादयिष्याम्यहमद्य- हृष्टः ततःसुनाभंवसुदेवपुत्रःसूर्यप्रभंवज्रसहस्रतुल्यं ८८ क्षुरांतमुद्धाम्यभुजेनचक्रंरथादवप्लुत्यविसृज्यवाहान् संकंपयन्गांचरणैर्महात्मावेगेनकृष्णःप्रससारभीष्मं ८९ मदांधमाजौसमुदीर्णदर्पंसिंहोजिघांसन्निववारणेंद्रं सोभिद्रव- न्भीष्ममनीकमध्येकुद्धोमहेंद्रावरजःप्रमाथी ९० व्यालंबिपीतांततटश्चकाशेघनोयथाखेचिरमातिनद्धः सुदर्शनंचास्य- रराजशौरेस्तच्चक्रपद्मंसुभुजोरुनालं ९१ यथादिपद्मंतरुणार्कवर्णंरराजनारायणनाभिजातं तत्कृष्णकोपोदयसूर्यबु द्धंक्षुरांततीक्ष्णाग्रसुजातपत्रं ९२ तस्यैवदेहोरुसरःप्ररूढंरराजनारायणबाहुनालं तमात्तचक्रंप्रणदंतमुच्चैःकुद्धंमहेंद्रा वरजंसमीक्ष्य ९३ सर्वाणिभूतानिभृशंविनेदुःक्षयःकुरूणामितिचिंतयित्वा सवासुदेवःप्रगृहीतचक्रःसंवर्तयिष्यन्नि वजीवलोकं ९४ अभ्युत्पतंल्लोकगुरुर्बभासेभूतानिधक्ष्यन्निवधूमकेतुः तमापतंतंप्रगृहीतचक्रंसमीक्ष्यदेवंद्विपदांवरिष्ठ म् ९५ असंभ्रमात्कार्मुकबाणपाणीरथेस्थितःशांतनवोऽभ्युवाच एह्येहिदेवेशजगन्निवासनमोऽस्तुतेशार्ङ्गगदासिपा- णे ९६ प्रसह्यमांपातयलोकनाथरथोत्तमाद्भूतशरण्यसंख्ये त्वयाहतस्येहममाद्यकृष्णश्रेयःपरस्मिन्निहचैवलोके ९७

९८ ९९ १०० १ २ ३ ४ ५ ६ ७ ८ ९ ११०



संभावितोस्म्यंधकवृष्णिनाथलोकेस्त्रिभिश्चप्रथितप्रभावः श्रुत्वावाचः शांतनवस्यकृष्णोवेगेनधावंस्तमथाभ्युवाच ९८ त्वं
मूलमस्येहमुविक्षयस्यदुर्योधनंवाद्यसमुद्धरिष्यासि दुर्द्यूतदेवीनृपतिर्निवार्यः समंत्रिणाधर्मपथिस्थितेन ९९ त्याज्योथवाका
लपरीतबुद्धिर्धर्मातिगोयः कुलपांसनःस्यात् भीष्मस्तदाकर्ण्ययदुप्रवीरंराजापरंदेवतमित्युवाच १०० त्यक्तस्तकंसोयदु-
भिर्हितार्थसंबोध्यमानोनबुबोधराजा क्लेशायदेवाद्विपरीतबुद्धिः श्रोताहितंयस्यनकश्चिदस्ति १ रथादवप्लुत्यततस्त्वरा-
वान्पार्थः पदाप्लुत्ययदुप्रवीरं जग्राहपीनोन्नतलंबबाहुंबाह्वोर्हरिंव्यायतपीनबाहुः २ निगृह्यमाणस्तुतदादिदेवोभृशंस
रोषः किलचात्मयोगी आदायवेगेनजगामजिष्णुंविष्णुर्महावातइवैकवृक्षं ३ पार्थस्तुविष्टभ्यबलेनपादौभीष्मांतिकंतू-
र्णमभिद्रवंतं बलान्निजग्राहशनैर्महात्मापदेचराजन्दशमेकथंचित् ४ अवस्थितंतंचप्रणिपत्यकृष्णंप्रीतोऽर्जुनः कांचनचि
त्रमाली ५ उवाचकोपंप्रतिसंहरेतिगतिर्भवान्केशवपांडवानां नहास्यसेकर्मयथाप्रतिज्ञंपुत्रैःशपेकेशवसोदरैश्च ५ अं
तंगमिष्यामियथाकुरूणांत्वयाहमिंद्रानुजसंप्रयुक्तः ततः प्रतिज्ञांसमयंचतस्यजनार्दनः प्रीतमनानिशम्य ६ स्थितः प्रि
येकौरवसत्तमस्यरथंसचक्रःपुनराररोह सतानभीषून्पुनराददानः प्रगृह्यशंखंद्विषतांनिहंता ७ निनादयामासदि
शोनभश्चसपांचजन्यस्यरवेणशौरिः आविद्धनिष्कांगदकुंडलंतंरजोविकीर्णांचितपक्ष्मनेत्रं ८ विशुद्धदंष्ट्रंप्रगृहीतशं-
खंविचुक्रुशुः प्रेक्ष्यकुरुप्रवीराः मृदंगभेरीपटहप्रणादानेमिस्वनादुंदुभिनिस्वनाश्च ९ ससिंहनादाश्चबभूवुरुग्राः स-
र्वेष्वनीकेषुततः कुरूणां गांडीवघोषस्तनयित्नुकल्पोजगामपार्थस्यनभोदिशश्च ११० जग्मुश्चबाणाविमलाः प्रसन्नाः स
र्वादिशः पांडवचापमुक्ताः तंकौरवाणामधिपोबलेनभीष्मेणभूरिश्रवसाचसार्द्धं ११ प्रत्युद्ययावुद्यतबाणपाणिः कक्षंदि-
धक्षन्निवधूमकेतुः अथार्जुनायप्रजहारभल्लान्भूरिश्रवाःसप्तसुवर्णपुंखान् १२ दुर्योधनस्तोमरमुग्रवेगंशल्योगदांशां
तनवश्चशक्तिं ससप्तभिः सप्तशरप्रवेगान्संवार्यभूरिश्रवसाप्रमुक्तान् १३ शितेनदुर्योधनबाहुमुक्तंक्षुरेणतत्तोमरमुन्म
माथ ततः शुभ्रामापततींचशक्तिंविद्युत्प्रभांशांतनवेनमुक्ताम् १४

१११ १२ १३ १४

११५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६

गदांचमद्राधिपबाहुमुक्तां द्वाभ्यांशराभ्यांनिचकर्तवीरः ततोभुजाभ्यांबलवद्विकृष्यचित्रंधनुर्गांडिवमप्रमेयम् ११५ माहेंद्रमस्त्रं
विधिवत्सुघोरंप्रादुश्चकाराद्भुतमंतरिक्षे तेनोत्तमास्त्रेणततोमहात्मासर्वाण्यनीकानिमहाधनुष्मान् १६ शरौघजालैर्विमलाग्नि
वर्णैर्निवारयामासकिरीटमाली शिलीमुखाःपार्थधनुर्विसृष्टारथान्ध्वजाग्राणिधनूंषिबाहून् १७ निकृत्यदेहान्विविशुःपरे
षांनरेंद्रनागेंद्रतुरंगमाणाम् ततोदिशःसोऽनुदिशश्चपार्थःशरैःसुधारैर्निशितैर्वितत्य १८ गांडीवशब्देनमनांसितेषांकिरी-
टमालीव्यथयांचकार तस्मिंस्तथाघोरतमास्त्वमुष्टेशंखस्वनादुंदुभिनिस्वनाश्च १९ अंतर्हितागांडिवनिस्वनेनबभूवुरुग्राश्च
रथप्रणादाः गांडीवशब्दंनमथोविदित्वाविराटराजप्रमुखान्वीराः २० पांचालराजोद्रुपदश्चवीरस्तंदेशमाजग्मुरदीनसत्वाः
सर्वाणिसैन्यानितुतावकानिजग्मुर्यतोगांडिवजःप्रणादः २१ ततस्ततःसन्नतिमेवजग्मुर्नतंप्रतीपोऽभीससारकश्चित् तस्मिन्
सुघोरेनृपसंप्रहारेहताःप्रवीराःसरथाश्वसूताः २२ गजाश्चनाराचनिपाततप्तामहापताकाःशुभरुक्मकक्षाः परीतसत्वाःस
हसानिपेतुःकिरीटिनातत्रविभिन्नकायाः २३ दृढाहताःपत्रिभिरुग्रवेगैःपार्थेनभल्लैर्निशितैःशिताग्रैः निकृत्तयंत्रानिहतें
द्रजालाध्वजान्नृपाणांध्वजिनीमुखेषु २४ पदातिसंघाश्चरथाश्चसंख्येहयाश्चनागाश्चधनंजयेन बाणाहतास्तूर्णमपेतसत्वावि
ष्टभ्यगात्राणिनिपेतुरुर्व्यां २५ ऐंद्रेणतेनास्त्रवरेणराजन्महाहवेभिन्नतनुत्रकायाः ततःशरौघैर्निशितैःकिरीटिनानृदेहश-
स्त्रक्षतलोहितोदा २६ नदीसुघोरानरमेदफेनाप्रवर्तितातत्ररणाजिरेवै वेगेनसातीवपृथुप्रवाहापरेतनागाश्वशरीरतीरा
नरांत्रमज्जोद्धृतमांसपंकाप्रभूतरक्षोगणवृक्षभूता २७ शिरःकपालाकुलकेशशाद्वलाशरीरसंघातसहस्रमालिनी विकी-
र्णनानाकवचोर्मिसंकुलानराश्वनागास्थिनिकृत्तशर्करा २८ गोमायुशालावृककंकगृध्रैःक्रव्यादसंघैश्चतरक्षुभिश्च उपेतकू
लांददृशुर्मनुष्याःक्रूरांमहावैतरणीप्रकाशां २९ प्रवर्तितामर्जुनबाणसंघैर्मेदोवसासृक्प्रवहांसुभीमां हतप्रवीरांचतथैव
दृष्ट्वासेनांकुरूणामथफाल्गुनेन १३० तेचेदिपांचालकरूषमत्स्याःपार्थाश्चसर्वेसहिताःप्रणेदुः जयप्रगल्भाःपुरुषप्रवी-
राःसंत्रासयंतःकुरुवीरयोधान् ३१ हतप्रवीराणिबलानिदृष्ट्वाकिरीटिनाशत्रुभयावहेन वित्रास्यसेनांध्वजिनीपतीनांसिंहो-
मृगाणामिवयूथसंघान् ३२ २७ २८ २९ १३० ३१ ३२

विनेदतुस्तावतिहृषयुक्तौगांडीवधन्वाचजनार्दनश्च ततोरविंसंहृतरश्मिजालंदृष्ट्वाभृशंशस्त्रपरिक्षतांगाः ३३ तदैंद्रमस्त्रं-
विततंचघोरमसह्यमुद्दीक्ष्ययुगांतकल्पं अथापयानंकुरवः सभीष्माः सद्रोणदुर्योधनबाल्हिकाश्च ३४ चक्रुर्निशांसंधिगतां
समीक्ष्यविभावसोर्लोहितरागयुक्ताम् अवाप्यकीर्तिंचयशश्चलोकेविमृद्यशत्रूंश्चधनंजयोऽपि ३५ ययौनरेंद्रः सहसोदरैश्चसमा
सकर्माशिबिरंनिशायाम् ततः प्रजज्ञेतुमुलः कुरूणांनिशामुखेघोरतमः प्रणादः ३६ रणेरथानामयुतंनिहत्यगजाहताः सप्तशता
र्जुनेन प्राच्याश्चसौवीरगणाश्चसर्वेनिपातिताः क्षुद्रकमालवाश्च ३७ महत्कृतंकर्मधनंजयेनकर्तुंयथानार्हतिकश्चिदन्यः श्रु-
तायुरंबष्ठपतिश्चराजंस्तथैवदुर्मर्षणचित्रसेनौ ३८ द्रोणः कृपः सैंधवबाल्हिकौचभूरिश्रवाः शल्यशलौचराजन् अन्येचयो-
धाः शतशः समेताः क्रुद्धेनपार्थेनरणस्यमध्ये ३९ स्वबाहुवीर्येणजिताः सभीष्माः किरीटिनालोकमहारथेन इतिब्रुवंतः शिबि
राणिजग्मुः सर्वेरणाद्भारतयेत्वदीयाः ४० उल्कासहस्रैश्चसुसंप्रदीप्तैर्विभ्राजमानैश्चतथाप्रदीपैः किरीटिनात्रासितसर्वयो-
धाचक्रेनिवेशंध्वजिनीकुरूणां १४१ इतिश्रीमन्महाभारतेभी॰ तृतीयदिनयुद्धंनामएकोनषष्टितमोऽध्यायः ५९ संज-
यउवाच व्युष्टांनिशांभारतभारतानामनीकिनीनांप्रमुखेमहात्मा ययौसपत्नान्प्रतिजातकोपस्ततः समग्रेणबलेनभीष्मः १
तंद्रोणदुर्योधनबाल्हिकाश्चतथैवदुर्मर्षणचित्रसेनौ जयद्रथश्चातिबलोबलौघैर्नृपास्तथान्येप्रययुः समंतात् २ सतैर्महाद्भि-
श्चमहारथैश्चतेजस्विभिर्वीर्यवद्भिश्चराजन् रराजराजोत्तमराजमध्येमध्येसुराणामिवदेवराजः ३ तस्मिन्ननीकप्रमुखेविष-
क्तादोधूयमानाश्चमहापताकाः सुरक्तपीतासितपांडुराभामहागजस्कंधगताविरेजुः ४ सावाहिनीशांतनवेनराज्ञांमहारथैर्वा
रणवाजिभिश्च बभौसविद्युत्स्तनयित्नुकल्पाजलागमेद्यौरिवजातमेघा ५ ततोरणायाभिमुखीप्रयातापत्यर्जुनंशांतनवाभि
गुप्ता ससारसेनासहसाकुरूणांवेगोयथाभीमइवापगायाः ६ तंव्यालनानाविधगूढसारंगजाश्वपादातरथौघपक्षं व्यूहंम-
हामेघसमंमहात्माददर्शदूरात्कपिराजकेतुः ७ सनिर्ययौकेतुमतारथेननरर्षभः श्वेतहयेनवीरः वरूथिनीनांप्रमुखेमहात्माबलेर्द्वि-
तः सर्वसपत्नसेनां ८ सोपस्करंसोत्तरबंधुरेखंयंत्रायदूनामृषभेणसंख्ये कपिध्वजंप्रेक्ष्यविषेदुराजौसहैवपुत्रैस्तवकौरवेयाः ९ १३५

१० ११ १२ १३ १४ १५ १६ १७ १८ १९

प्रकर्षताग्रुमसुदायुधेनकिरीटिनालोकमहारथेन तंव्यूहराजंददृशुस्त्वदीयाश्चतुश्चतुर्व्यालसहस्रकीर्णम् १० यथाहिपूर्वे
ह्यनिधर्मराज्ञाव्यूहःकृतःकौरवसत्तमेन तथाभूतोमानुषेश्चेहलोकेनदृष्टपूर्वोनचविश्रुतश्च ११ ततोमहावेगसमाहतानि-
भेरीसहस्राणिविनेदुराजौ. शंखस्वनास्तूर्यरवाश्चजज्ञुःसर्वेष्वनीकेषुचसिंहनादाः १२ ततःसबाणानिमहास्वनानिविस्फा
र्यमाणानिधनूंषिवीरैः क्षणेनभेरीपणवप्रणादाननर्दधुःशंखमहास्वनाश्च १३ तच्छंखशब्दावृतमंतरिक्षमुद्भूतभौ-
मद्रुतरेणजालं महावितानाच्चततःप्रकाशमालोक्यवीराःसहसानिपेतुः १४ रथीरथेनाभिहतःससूतःपपातसाश्वःस-
रथःसकेतुः गजोगजेनाभिहतःपपातपदातिनाचाभिहतःपदातिः १५ आवर्तमानान्यभिवर्तमानैर्घोराकृतीन्यद्भुतदर्श-
नानि प्रासैश्चखड्गैश्चसमाहतानिसदश्ववृंदानिसदश्ववृंदैः १६ सुवर्णतारागणभूषितानिसूर्यप्रभाभानिशरावराणि विदा-
र्यमाणानिपरश्वधैश्चप्रासैश्चखड्गैश्चनिपेतुरुर्व्यां १७ गजैर्विषाणैर्वरहस्तरुग्णाःकेचित्ससूतारथिनःप्रपेतुः रथर्षभाश्चा-
पिरथर्षभेणप्रपेदिरेबाणहताःपृथिव्याम् १८ गजौघवेगोद्धतसादितानांश्रुत्वाविषेदुर्बहुधामनुष्याः आर्तस्वरंसादिप-
दातियूनांविषाणगात्रावरताडितानां १९ संभ्रांतनागाश्वरथेमुहूर्तेमहाक्षयेसादिपदातियूनां महारथैःसंपरिवार्यमाणो-
ददर्शभीष्मःकपिराजकेतुम् २० तंपंचतालोच्छ्रिततालकेतुःसदश्ववेगादतिवीर्यबाणं महास्त्रवेगाशनिदीप्तिमंतंकिरीटिनं-
शांतनवोभ्यधावत् २१ तथैवशक्रप्रतिमानकल्पमिंद्रात्मजंद्रोणमुखाभिसस्रुः कृपश्चशल्यश्चविविंशतिश्चदुर्योधनःसोम-
दत्तिश्चराजन् २२ ततोरथानीकमुखादुपेत्यसर्वास्त्रवित्कांचनचित्रवर्मा जवेनशूरोभिससारसर्वांस्तानर्जुनस्यात्मसुतोभिम-
न्युः २३ तेषांमहास्त्राणिमहाबलानामसह्यकर्माविनिहत्यकार्ष्णिः बभौमहामंत्रहुतार्चिर्मालीसदोगतःसन्भगवानिवाग्निः
२४ ततःसतूर्णंरुधिरोदकेनकृत्वानदींतांसमरेरिपूणां जगामसौभद्रमतीत्यभीष्मोमहारथंपार्थमहीनसत्वः २५ ततःप्रस-
ह्याद्भुतदर्शनेनगांडीवनिर्ह्रादमहास्वनेन विपाठजालेनमहास्त्रजालंविनाशयामासकिरीटमाली २६ तमुत्तमंसर्वधनुर्ध-
राणामशक्तकर्माकपिराजकेतुः भीष्मंमहात्मासववर्षतूयःशरैःसुतीक्ष्णैर्विमलैश्चभल्लैः २७ ६९ ६९ ६९

२० २१ २२ २३ २४ २५ २६ २७ ६९ ६९

तथैवभीष्माहतमंतरिक्षेमहास्त्रजालंकपिराजकेतोः विशीर्यमाणंददृशुस्त्वदीयादिवाकरेणेवतमोभिभूतं २८ एवंविधं-
कार्मुकभीमनादमदीनवत्सत्पुरुषोत्तमाभ्यां ददर्शलोकःकुरुसृंजयाश्चतद्द्वैरथंभीष्मधनंजयाभ्याम् २९ इति
श्रीमन्महाभारतेभीष्म॰ भीष्मार्जुनद्वैरथेषष्टितमोऽध्यायः ६० संजयउवाच द्रौणिर्भूरिश्रवाःशल्यश्चित्रसेनश्च-
मारिष पुत्रःसांयमनेश्चैवसौभद्रंसमयोधयन् १ संसक्तमतितेजोभिस्तमेकंददृशुर्जनाः पंचभिर्मनुजव्याघ्रैर्गजैःसिंहशिशुं
यथा २ नाभिलक्ष्यतयाकश्चिन्नशौर्येणपराक्रमे बभूवसदृशःकार्ष्णेर्नास्त्रेनापिचलाघवे ३ तथातमात्मजंयुद्धेविक्रमंतमरिं-
दमं दृष्ट्वापार्थोरणेयत्तःसिंहनादमथानदत् ४ पीडयानंचतत्सैन्यंपौत्रंतवविशांपते दृष्ट्वात्वदीयाराजेंद्रसमंतात्पर्यवारयन्
५ ध्वजिनीधार्तराष्ट्राणांदीनशत्रुरदीनवत् प्रत्युद्ययौससौभद्रस्तेजसाचबलेनच ६ तस्यलाघवमार्गस्थमादित्यसदृशप्रभं
प्रदृश्यतमहच्चापंसमरेयुध्यतःपरैः ७ सद्रौणिमिषुणैकेनविध्वाशल्यंचपंचभिः ध्वजंसांयमनेश्चापिसोष्टाभिःपर्यपातयत्
८ रुक्मदंडांमहाशक्तिंप्रेषितांसौमदत्तिना शितेनोरगसंकाशांपत्रिणाभिजहारतां ९ शल्यस्यचमहाघोरानस्यतःशत-
शःशरान् निवार्यार्जुनदायादोजघानचतुरोहयान् १० भूरिश्रवाश्चशल्यश्चद्रौणिःसांयमनिःशलः नाभ्यवर्तंतसंरब्धाः
कार्ष्णिबाहुबलोदयं ११ ततस्त्रिगर्तराजेंद्रमद्राश्चसहकेकयैः पंचविंशतिसाहस्रास्तवपुत्रेणचोदिताः १२ धनुर्वेदवि-
दोमुख्याअजेयाःशत्रुभिर्युधि सहपुत्रंजिघांसंतंपरिवव्रुःकिरीटिनं १३ तौतुतत्रपितापुत्रौपरिक्षिप्तौरथर्षभौ ददर्शरा
जन्पांचाल्यःसेनापतिरमित्रजित् १४ सवारणरथौघानांसहस्रैर्बहुभिर्वृतः वाजिभिःपत्तिभिश्चैवततःशतसहस्रशः १५
धनुर्विस्फार्यसंक्रुद्धश्चोदयित्वाचवाहिनीं ययौतन्मद्रकानीकंकेकयांश्चपरंतपः १६ तेनकीर्तिमतागुप्तमनीकंदृढधन्वना
प्रयुक्तरथनागाश्वंयोत्स्यमानमशोभत १७ सोर्जुनंप्रमुखेयांतंपांचालकुलवर्द्धनः त्रिभिःशारद्वतंबाणैर्जत्रुदेशेसमार्दय-
त् १८ ततःसमद्रकान्हित्वादशभिर्निशितैःशरैः पृष्ठरक्षंजघानाशुभल्लेनकृतवर्मणः १९ दमनंचापिदायादंपौरवस्यम-
हात्मनः जघानविपुलाग्रेणनाराचेनपरंतपः २० ततःसांयमनेपुत्रःपांचाल्यंयुद्धदुर्मदं अविध्यद्दशभिर्बाणैर्दशभिश्चास्यसारथिं
२१

सोतिविद्धोमहेष्वासः सृक्किणीपरिलेलिहन् भल्लेनभृशतीक्ष्णेनचकर्तास्यचकार्मुकं २२ तथैनंपंचविंशत्याक्षिप्रमेवस-
मार्दयत् अश्वांश्चास्यावधीद्राजन्नुभौतौपार्ष्णिसारथी २३ हताश्वेसरथेतिष्ठन्ददर्शभरतर्षभ पुत्रःसांयमनेःपुत्रंपांचा-
ल्यस्ययशस्विनः २४ संप्रगृह्यमहाघोरंनिस्त्रिंशवरमायसं पदातिस्तूर्णमानर्च्छद्रथस्थंद्रुपदात्मजं २५ तंमहौघमि-
वायांतंखात्पतंतमिवोरगं भ्रांतावरणनिस्त्रिंशंकालोत्सृष्टमिवांतकं २६ दीप्यमानमिवादित्यंमत्तवारणविक्रमं अप-
श्यन्पांडवास्तत्रधृष्टद्युम्नश्चपार्षतः २७ तस्यपांचालपुत्रस्तुप्रतीपमभिधावतः शितनिस्त्रिंशहस्तस्यशरावरणधा-
रिणः २८ बाणवेगमतीतस्यतथाभ्याशमुपेयुषः त्वरन्सेनापतिःक्रुद्धोबिभेदगदयाशिरः २९ तस्यराजन्सनिस्त्रिंशःसु
प्रभंचशरावरं हतस्यपतितंहस्तात्सोधमोऽप्यपतद्भुवि ३० तंनिहत्यगदाग्रेणलेभेसपरमंयशः पुत्रःपांचालराजस्य-
महात्माभीमविक्रमः ३१ तस्मिन्हतेमहेष्वासेराजपुत्रेमहारथे हाहाकारोमहानासीत्तवसैन्यस्यमारिष ३२ ततःसां-
यमनिःक्रुद्धोदृष्ट्वानिहतमात्मजं अभिदुद्राववेगेनपांचाल्यंयुद्धदुर्मदं ३३ तौतत्रसमरेवीरौसमेतौरथिनांवरौ ददृशुः
सर्वराजानःकुरवःपांडवास्तथा ३४ ततःसांयमनिःक्रुद्धःपार्षतंपरवीरहा आजघानत्रिभिर्बाणैस्तोत्रैरिवमहाद्विपं ३५
तथैवपार्षतंशूरःशल्यःसमितिशोभनः आजघानोरसिक्रुद्धस्ततोयुद्धमवर्तत ३६ इतिश्रीमन्म० भीष्म० सांयमनि-
पुत्रवधेएकषष्टितमोऽध्यायः ६१ धृतराष्ट्रउवाच दैवमेवपरंमन्येपौरुषादपिसंजय यत्सैन्यंममपुत्रस्यपांडुसै-
न्येनवध्यते १ नित्यंहिमामकान्सूतहतानेवहिशंससि अहतांश्चप्रहृष्टांश्चनित्यंशंससिपांडवान् २ हीनान्पुरुषकारे
णमामकानद्यसंजय पतितान्पात्यमानांश्चहतानेवचशंससि ३ युध्यमानान्यथाशक्तिघटमानाञ्जयंप्रति पांडवा-
विजयंत्येवहीयंतेचैवमामकाः ४ सोहंतीव्राणिदुःखानिदुर्योधनकृतानिच अश्रौषंसततंतातदुःसहानिबहूनिच
५ तमुपायंनपश्यामिजीयेरन्येनपांडवाः मामकावाजयंयुद्धेप्राप्नुयुर्येनसंजय ६ संजयउवाच क्षयंमनुष्यदे
हानांगजवाजिरथक्षयं शृणुराजन्स्थिरोभूत्वातवैवापनयोमहान् ७ धृष्टद्युम्नश्चशल्येनपीडितोनवभिःशरैः पीडया-
माससंक्रुद्धोमद्राधिपतिमायसैः ८

तत्राद्भुतमपश्यामपार्षतस्यपराक्रमम् न्यवारयतयत्तूर्णंशल्यंसमितिशोभनं ९ नांतरंददृशेकश्चित्तयोःसंरब्धयोरणे मु-
हूर्तमिवतद्युद्धंतयोःसमभवत्तदा १० ततःशल्योमहाराजधृष्टद्युम्नस्यसंयुगे धनुश्चिच्छेदभल्लेनपीतेननिशितेनच ११
अथैनंशरवर्षेणच्छादयामासभारत गिरिंजलागमेयद्वज्जलदाजलधारिणः १२ अभिमन्युस्तुसंक्रुद्धोधृष्टद्युम्नेचपीडिते
अभिदुद्राववेगेनमद्रराजरथंप्रति १३ ततोमद्राधिपरथंकार्ष्णिःसंप्राप्यकोपनः आर्तायनिममेयात्माविव्याधनिशितै
स्त्रिभिः १४ ततस्तुतावकाराजन्परीप्संतोऽर्जुनिंरणे मद्रराजरथंतूर्णंपरिवार्यावतस्थिरे १५ दुर्योधनोविकर्णश्चदुःशा
सनविविंशती दुर्मर्षणोदुःसहश्चचित्रसेनःस्तुदुर्मुखः १६ सत्यव्रतःपुरुमित्रोविकर्णश्चमहारथः एतेमद्राधिपरथंपा-
लयंतःस्थितारणे १७ तान्भीमसेनःसंक्रुद्धोधृष्टद्युम्नश्चपार्षतः द्रौपदेयाभिमन्युश्चमाद्रीपुत्रौचपांडवौ १८ धार्त्तरा-
ष्ट्रान्दशरथान्दशैवप्रत्यवारयन् नानारूपाणिशस्त्राणिविसृजंतोविशांपते १९ अभ्यवर्तंतसंक्रुद्धाःपरस्परवधैषिणः
तेवैसमीयुःसंग्रामेराजन्दुर्मंत्रितेतव २० तस्मिन्दशरथेक्रुद्धेवर्तमानेमहाभये तावकानांपरेषांचप्रेक्षकारथिनोभवन् २१
शस्त्राण्यनेकरूपाणिविसृजंतोमहारथाः अन्योन्यमभिनर्दंतःसंप्रहारंप्रचक्रिरे २२ तेतदाजातसंरंभाःसर्वेन्योन्यंजि
घांसवः अन्योन्यमभिनर्दंतःस्पर्द्धमानाःपरस्परं २३ अन्योन्यस्पर्द्धयाराजन्ज्ञातयःसंगतामिथः महास्त्राणिविमुंचंतः
समापेतुरमर्षणाः २४ दुर्योधनस्तुसंक्रुद्धोधृष्टद्युम्नंमहारणे विव्याधनिशितैर्बाणैश्चतुर्भिःसमरेद्रुतं २५ दुर्मर्षणश्चविंश
त्याचित्रसेनश्चपंचभिः दुर्मुखोनवभिर्बाणैर्दुःसहश्चापिसप्तभिः २६ विविंशतिःपंचभिस्तुत्रिभिर्दुःशासनस्तथा तान्प्र
त्यविध्यद्राजेंद्रपार्षतःशत्रुतापनः एकैकंपंचविंशत्यादर्शयन्हस्तलाघवम् २७ सत्यव्रतंचसमरेपुरुमित्रंचभारत अ
भिमन्युरविध्यत्तुदशाभिर्दशाभिःशरैः २८ माद्रीपुत्रौतुसमरेमातुलंमातृनंदनौ छादयेतांशरैस्तीक्ष्णैस्तदद्भुतमिवाभवत् २९
ततःशल्योमहाराजस्वस्त्रीयौरथिनांवरौ शरैर्बहुभिरानर्च्छत्कृतप्रतिकृतैषिणौ ३० छाद्यमानौततस्तौतुमाद्रीपुत्रौनचे-
लतुः अथदुर्योधनंदृष्ट्वाभीमसेनोमहाबलः ३१ विधित्सुःकलहस्यांतंगदांजग्राहपांडवः तमुद्यतगदंदृष्ट्वाकैलासमिवशृं-
गिणं ३२

३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३

भीमसेनंमहाबाहुंपुत्रास्तेप्राद्रवन्भयात् दुर्योधनस्ततःसंक्रुद्धोमागधंसमचोदयत् ३३ अनीकंदशसाहस्रंकुंजराणांतर-
स्विनां गजानीकेनसहितःस्तेनराजासुयोधनः ३४ मागधंपुरतःकृत्वाभीमसेनमथाभ्ययात् आपतंतंचतंदृष्ट्वागजानी
कंवृकोदरः ३५ गदापाणिरवारोहद्रथात्सिंहइवोन्नदन् अद्रिसारमयींगुर्वींप्रगृह्यमहतींगदाम् ३६ अभ्यधावद्गजानी
कंव्यादितास्यइवांतकः सगजान्गदयानिघ्नन्समरेव्यचरद्बली ३७ भीमसेनोमहाबाहुर्वृत्रहादानवेष्विव तस्यनादेन
महतामनोहृदयकंपिना ३८ व्यत्यचेष्टंतसंहत्यगजाभीमस्यनर्द्दतः ततस्तद्रौपदीपुत्राःसौभद्रश्चमहारथः ३९ नकु
लःसहदेवश्चधृष्टद्युम्नश्चपार्षतः पृष्ठंभीमस्यरक्षंतःशरवर्षेणवारणान् ४० अभ्यधावंतवर्षंतोमेघाइवगिरीनथ क्षु
रैःक्षुरप्रैर्भल्लैश्चपीतैरंजलिकैःशितैः ४१ व्याहरन्नुत्तमांगानिपांडवागजयोधिनां शिरोभिःप्रपतद्भिश्चबाहुभिश्च
विभूषितैः ४२ अश्मवृष्टिरिवाभातिपाणिभिश्चसहांकुशैः हृत्तोत्तमांगाःस्कंधेषुगजानांगजयोधिनः ४३ अदृश्यंताचलाग्रे
षुद्रुमाभग्नशिखाइव धृष्टद्युम्नहतानन्यानपश्याममहागजान् ४४ पतितान्पात्यमानांश्चपार्षतेनमहात्मना मागधोथमही
पालोगजमैरावतोपमम् ४५ प्रेषयामाससमरेसौभद्रस्यरथंप्रति तमापतंतंसंप्रेक्ष्यमागधस्यमहागजं ४६ निजघानेषुणा
वीरःसौभद्रःपरवीरहा तस्यावर्जितनागस्यकार्ष्णिःपरपुरंजयः ४७ राज्ञोरजतपुंखेनभल्लेनापाहरच्छिरः विगाह्यतद्गजा
नीकंभीमसेनोऽपिपांडवः ४८ व्यचरत्समरेमृद्नन्नाजानिंद्रोगिरीनिव एकप्रहारनिहतान्भीमसेनेनदंतिनः ४९ अपश्याम
रणेतस्मिन्गिरीन्वज्रहतानिव भग्नदंतान्भग्नकटान्भग्नसक्थींश्चवारणान् ५० भग्नपृष्ठत्रिकानंधान्निहतान्पर्वतोपमान्
अपश्यन्निहतान्नागान्नाजन्निष्ठीवतोपरान् ५१ वमंतोरुधिरंचान्येभिन्नकुंभामहागजाः विव्हलंतोगताभूमिंशैलाइवधरा
तले ५२ मेदोरुधिरदिग्धांगोवसामज्जासमुक्षितः व्यचरत्समरेभीमोदंडपाणिरिवांतकः ५३ गजानांरुधिरार्द्रांगींगदांबि-
भ्रद्वृकोदरः घोरःप्रतिभयश्चासीत्पिनाकीवपिनाकधृक् ५४ निर्मथ्यमानाःक्रुद्धेनभीमसेनेनदंतिनः सहसाप्राद्रवन्क्लिष्टा
मृद्नंतस्तववाहिनीम् ५५ तंहिवीरंमहेष्वासाःसौभद्रप्रमुखारथाः पर्यरक्षंतयुद्ध्यंतंवज्रायुधमिवामराः ५६ ध

४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६

शोणिताक्तांगदांबिभ्रदुक्षितोनागजशोणितैः कृतांतइवरौद्रात्माभीमसेनोव्यदृश्यत ५७ व्यायच्छमानंगदयादिक्षुसर्वासुभारत भीमसेनमपश्यामनृत्यंतमिवशंकरं ५८ यमदंडोपमांगुर्वीमिंद्राशनिसमस्वनां अपश्याममहाराजरौद्रींविशसनींगदां ५९ व्युन्मिश्रांकेशमज्जाभिःप्रदिग्धांरुधिरेणच पिनाकमिवरुद्रस्यक्रुद्धस्याभिघ्नतःपशून् ६० यथापशूनांसंघातंयष्ट्यापालःप्रकालयेत् तथाभीमोगजानीकंगदयापर्यकालयत् ६१ गदयावध्यमानाश्चमार्गणैस्तैसमंततः स्वान्स्यंदनान्विमृद्नंतःप्राद्रवन्कुजरास्ततः ६२ महावातइवाभ्राणिविभ्रमित्वारणाद्गजान् अतिष्ठत्समरेभीमःश्मशानइवशूलभृत् ६३ इतिश्रीमन्महाभा॰भीष्म॰भीमयुद्धेद्विषष्टितमोऽध्यायः ६२ संजयउवाच हतेतस्मिन्गजानीकेपुत्रोदुर्योधनस्तव भीमसेनंघ्नतेत्येवंसर्वसैन्यान्यचोदयत् १ ततःसर्वाणिसैन्यानिपुत्रस्यतवशासनात् अभ्यद्रवन्भीमसेनंनदंतंभैरवान्नवान् २ तंबलौघमपर्यंतंदेवैरपिसुदुःसहं आपतंतंसुदुष्पारंसमुद्रमिवपर्वणि ३ रथनागाश्वकलिलंशंखदुंदुभिनादितं अनंतरथपादातंरजसासंवृतोवृतं ४ सभीमसेनःसमरेमहोदधिमिवापरं सेनासागरमक्षोभ्यंवेलेवसमवारयत् ५ तदाश्चर्यमपश्यामपांडवस्यमहात्मनः भीमसेनस्यसमरेराजन्कर्मातिमानुषं ६ उदीर्णान्पार्थिवान्सर्वान्साश्वान्सरथकुंजरान् असंभ्रमंभीमसेनोगदयासमवारयत् ७ ससंवार्यबलौघांस्तान्गदयाबलिनांवरः आतिष्ठत्तुमुलेभीमोगिरिर्मेरुरिवाचलः ८ तस्मिन्सुतुमुलेघोरेरणेपरमदारुणे भ्रातरश्चैवपुत्राश्चधृष्टद्युम्नश्चपार्षतः ९ द्रौपदेयाभिमन्युश्चशिखंडीचापराजितः नप्राजहन्भीमसेनंभयेजातेमहाबलं १० ततःशैक्यायसींगुर्वीप्रगृह्यमहतींगदां अधावत्तावकान्योधान्दंडपाणिरिवांतकः ११ पोथयन्रथवृंदानिवाजिवृंदानिवाविभुः व्यचरत्समरेभीमोयुगांतेपावकोयथा १२ विनिघ्नन्समरेयोधान्युगांतेकालवद्विभुः ऊरुवेगेनसंकर्षन्रथजालानिपांडवः १३ बलानिचममर्दाशुनड्वलानिवकुंजरः मृद्नन्रथेभ्योरथिनोगजेभ्योगजयोधिनः १४ सादिनश्चाश्वपृष्ठेभ्योभूमौचापिपदातिनः गदयाव्यहनत्सर्वान्वातोवृक्षानिवौजसा १५ भीमसेनोमहाबाहुस्तवपुत्रस्यवैबले मेदोमज्जावसामांसैःप्रदिग्धारुधिरेणच १६ अदृश्यतमहारौद्रीगदानागाश्वघातिनी तत्रतत्रहतैश्चापिमनुष्यगजसादिभिः १७

१८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३०

रणांगणंतदभवन्मृत्योराघातसन्निभम् पिनाकमिवरुद्रस्यक्रुद्धस्याभिघ्नतःपशून् १८ यमदंडोपमामुग्रामिंद्राशनिसमप्रभां
दद्दशुर्भीमसेनस्यरौद्रींविशसनींगदां १९ आविध्यतोगदांतस्यकौंतेयस्यमहात्मनः बभौरूपंमहाघोरंकालस्येवजगत्क्षये २०
तंतथामहतींसेनांद्रावयंतंपुनःपुनः दृष्ट्वामृत्युमिवायांतंसर्वेविमनसोभवन् २१ यतोयतःप्रेक्षतेस्मगदामुद्यम्यपांडवः तेन
तेनस्मदीर्यंतेसर्वसैन्यानिभारत २२ प्रदारयंतंसैन्यानिबलौघेनापराजितं ग्रसमानमनीकानिव्यादितास्यमिवांतकं तंतथा
भीमकर्माणंप्रगृहीतमहागदं २३ दृष्ट्वावृकोदरंभीष्मःसहसैवसमभ्ययात् महतारथघोषेणरथेनादित्यवर्चसा २४ छा
दयंश्छरवर्षेणपर्जन्यइववृष्टिमान् तमायांतंतथादृष्ट्वाव्यात्ताननमिवांतकम् भीमसेनोमहाबाहुःप्रत्युदीयादमर्षितः
२५ तस्मिन्क्षणेसात्यकिःसत्यसंधःशिनिप्रवीरोभ्यपतत्पितामहं निघ्नन्नमित्रान्धनुषादृढेनसंकंपयंस्तवपुत्रस्यसेनां २६
तंयांतमश्वैरजतप्रकाशैःशरान्वपंतंनिशितान्सुपुंखान् नाशक्नुवन्वारयितुंतदानींसर्वेजनाभारतयेत्वदीयाः २७ अविध्य
देनंदशभिःपृषत्कैरलंबुषोराक्षसोसौतदानीं शरैश्चतुर्भिःप्रतिविध्यतंचनप्ताशिनेरभ्यपतद्रथेन २८ अन्वागतंवृष्णिवी
रंनिशम्यमध्येरिपूणांपरिवर्तमानं प्रावर्तयंतंकुरुपुंगवांश्चपुनःपुनश्चप्रणदंतमाजौ २९ योधास्त्वदीयाःशरवर्षैरवर्ष
न्मेघायथाभूधरमंबुवेगैः नाशक्नुवन्वारयितुंवरिष्ठंमध्यंदिनेसूर्यमिवातपंतं ३० नतत्रकश्चिन्नविषण्णआसीदृतेराजन्
मदत्तस्यपुत्रात् सत्वाददानोधनुरुग्रवेगंभूरिश्रवाभारतसोमदत्तिः दृष्ट्वारथान्स्वान्व्यपनीयमानान्प्रत्युद्ययौसात्य
किंयोद्धुमिच्छन् ३१ इतिश्रीमन्महाभा० भीष्मप० सात्यकिभूरिश्रवःसमागमेत्रिषष्टितमोऽध्यायः ६३ संजय-
उवाच ततोभूरिश्रवाराजन्सात्यकिंनवभिःशरैः अविध्यद्भृशसंक्रुद्धस्तोत्त्रैरिवमहाद्विपं १ कौरवंसात्यकिश्चापिश-
रैःसन्नतपर्वभिः अवारयदमेयात्मासर्वलोकस्यपश्यतः २ ततोदुर्योधनोराजासोदर्यैःपरिवारितः सोमदत्तिंरणेय-
त्तंसमंतात्पर्यवारयत् ३ तथैवपांडवाःसर्वेसात्यकिंतरसारणे परिवार्यस्थिताःसंख्येसमंतात्सुमहौजसः ४ भीमसे
नस्तुसंक्रुद्धोगदामुद्यम्यभारत दुर्योधनमुखाःसर्वपुत्रांस्तेपर्यवारयत् ५ रथैरनेकसाहस्रैःक्रोधामर्षसमन्विताः नं
दकस्तवपुत्रस्तुभीमसेनंमहाबलं ६

३१ इतिश्रीमन्म० भी० त्रिषष्टितमोध्यायः ६३ १ २ ३ ४ ५ ६ ६९

विध्याधनिशितैस्तीक्ष्णैः कंकपत्रैः शिलाशितैः दुर्योधनस्तदाराजन्भीमसेनंमहाहवे ७ आजघानोरसिक्रुद्धोमार्गणैर्नवभिः
शितैः ततोभीमोमहाबाहुःस्वरथंस्कमहाबलः ८ आरुरोहरथश्रेष्ठंविशोकंचेदमब्रवीत् एतेमहारथाःशूराधार्तराष्ट्रामहाब
लाः ९ मामेवमभिसंक्रुद्धाहंतुमभ्युद्यतायुधि एतानद्यहनिष्यामिपश्यतस्तेनसंशयः १० तस्मान्ममाश्वान्संग्रामेयत्तःसंयच्छसा-
रथे एवमुक्त्वाततःपार्थःपुत्रंतवविशांपते ११ विव्याधदशभिस्तीक्ष्णैःशरैःकनकभूषणैः नंदकंचत्रिभिर्बाणैःप्रत्यविध्यत्स्तनांत
रे १२ तंतुदुर्योधनःषष्ट्याविद्ध्वाभीमंमहाबलं त्रिभिरन्यैःसुनिशितैर्विशोकंप्रत्यविध्यत १३ भीमस्यचरणेराजन्धनुश्चि-
च्छेदभास्वरं मुष्टिदेशेशरैस्तीक्ष्णैस्त्रिभिराजौहसन्निव १४ भीमस्तुप्रेक्ष्ययंतारंविशोकंसंयुगेतदा पीडितंविशिखैस्तीक्ष्णै
स्तवपुत्रेणधन्विना १५ अमृष्यमाणःसंक्रुद्धोधनुर्दिव्यंपरामृशत् पुत्रस्यतेमहाराजवधार्थंपुरुषर्षभः १६ समाधत्तचसर-
ध्वःक्षुरप्रंलोमवाहिनं तेनचिच्छेदनृपतेर्भीमःकार्मुकमुत्तमं १७ अपास्यतुधनुश्छिन्नंपुत्रस्तेक्रोधमूर्छितः अन्यत्कार्मुक
मादायसत्वरंवेगवत्तरं १८ संधायविशिखंघोरंकालमृत्युसमप्रभं तेनाजघानसंक्रुद्धोभीमसेनंस्तनांतरे १९ सगाढविद्धो-
व्यथितःस्यंदनोपस्थआविशत् निषसादरथोपस्थेमूर्च्छांचाभिजगामह २० तंदृष्ट्वाव्यथितंभीममभिमन्युपुरोगमाः नामृ-
ष्यंतमहाभागाःपांडवानांमहारथाः २१ ततःसुतुमुलांवृष्टिंशराणामुग्रतेजसां पातयामासुरव्यग्राःपुत्रस्यतवमूर्द्धनि २२
प्रतिलभ्यततःसंज्ञांभीमसेनोमहाबलः दुर्योधनंत्रिभिर्विद्ध्वापुनर्विव्याधपंचभिः २३ शल्यंचपंचविंशत्याशरैर्विव्याधपांड-
वः रुक्मपुंखैर्महेष्वासःसविद्धोव्यपयाद्रणात् २४ प्रत्युद्ययुस्ततोवीरंतवपुत्राश्चतुर्दश सेनापतिःसुषेणश्चजलसंधःसुलो-
चनः २५ उग्रोभीमरथोभीमोवीरबाहुरलोलुपः दुर्मुखोदुष्प्रधर्षश्चविवित्सुर्विकटःसमः विसृजंतोबहून्बाणान्क्रोधसंरक्त
लोचनाः २६ भीमसेनमभिद्रुत्यविव्यधुःसहिताभृशं पुत्रांस्तवसंप्रेक्ष्यभीमसेनोमहाबलः २७ सृक्किणीविलिहन्वीरःप-
शुमध्येवृकोयथा अभिपत्यमहाबाहुर्गरुत्मानिववेगितः २८ सेनापतेःक्षुरप्रेणाशिरश्छिच्छेदपांडवः संप्रहृष्यचतदृष्ट्वा-
त्मात्रिभिर्बाणैर्महाभुजः २९ जलसंधंविनिर्भिद्यसोनयद्यमसादनं सुषेणंचततोहत्वाप्रेषयामासमृत्यवे ३० ६९

३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२

उग्रस्यसशिरस्त्राणंशिरश्चंद्रोपमंभुवि पातयामासभल्लेनकुंडलाभ्यांविभूषितं ३१ वीरबाहुंचसमत्यासाश्वकेतुंससारथिं
निनायसमरेभीमः परलोकायपांडवः ३२ भीमभीमरथौचोभौभीमसेनोहसन्निव भ्रातरौरभसौयुद्धेह्यनयद्यमसादनं ३३ त-
तः सुलोचनंभीमः क्षुरप्रेणमहामृधे मिषतांसर्वसैन्यानामनयद्यमसादनं ३४ पुत्रास्तुतत्रतंदृष्ट्वाभीमसेनपराक्रमं शेषायेन्ये
भवंस्तत्रतेभीमस्यभयात्तदा ३५ विप्रद्रुतारणाद्राजन्वध्यमानामहात्मना ततोब्रवीच्छांतनवः सर्वानेवमहारथान् ३६ ए
षभीमोरणेक्रुद्धोधार्तराष्ट्रान्महाबलान् यथाप्रज्ञान्यथावीरान्यथाशूरांश्चसंगतान् निपातयत्युग्रधन्वातंप्रगृण्हीतपांडवं
३७ एवमुक्तास्ततः सर्वेधार्तराष्ट्रस्यसैनिकाः अभ्यद्रवंतसंक्रुद्धाभीमसेनंमहाबलम् ३८ भगदत्तः प्रभिन्नेनकुंजरेणविशांप-
ते आपतत्सहसातत्रयत्रभीमोव्यवस्थितः ३९ आपतन्नेवचरणेभीमसेनंशिलाशितैः अदृश्यंसमरेचक्रेजीमूतइवभास्करं
४० अभिमन्युमुखास्तत्रनामृष्यंतमहारथाः भीमस्याच्छादनंसंख्येस्वबाहुबलमाश्रिताः ४१ तएनंशरवर्षेणसमंतात्पर्य-
वारयन् गजंचशरवृष्ट्यातुबिभिदुस्तेसमंततः ४२ सशरस्त्रवृष्ट्याभिहतः समस्तैस्तैर्महारथैः प्राग्ज्योतिषगजोराजन्नानालिं-
गैः स्तुतेजनैः ४३ संजातरुधिरोत्पीडः प्रेक्षणीयोभवद्रणे गभस्तिभिरिवार्कस्यसंस्यूतोजलदोमहान् ४४ संचोदितोमदस्रा
वीभगदत्तेनवारणः अभ्यधावततान्सर्वान्कालोत्सृष्टइवांतकः ४५ द्विगुणंजवमास्थायकंपयंश्चरणैर्महीं तस्यतत्सुमहद्रू-
पंदृष्ट्वासर्वेमहारथाः ४६ असह्यंमन्यमानाश्चतेविमनसोभवन् ततस्तुनृपतिः क्रुद्धोभीमसेनंस्तनांतरे ४७ आजघानन-
रव्याघ्रशरेणानतपर्वणा सोतिविद्धोमहेष्वासस्तेनराज्ञामहारथः ४८ मूर्च्छयाभिपरीतांगोध्वजयष्टिमुपाश्रितः तांस्तुभीता-
न्समालक्ष्यभीमसेनंचमूर्च्छितं ४९ ननादबलवन्नादंभगदत्तः प्रतापवान् ततोघटोत्कचोराजन्दृष्ट्वाभीमंतथागतं ५० सं-
क्रुद्धोराक्षसोघोरस्तत्रैवांतरधीयत सकृत्वादारुणांमायांभीरूणांभयवर्द्धिनीं ५१ अदृश्यतनिमेषार्द्धाद्घोररूपंसमाश्रितः
ऐरावतंसमारुह्यस्वयंमायामयंकृतं ५२ तस्यचान्येपिदिङ्नागाबभूवुरनुयायिनः अंजनोवामनश्चैवमहापद्मश्चसुप्रभः
५३ त्रयएतेमहानागाराक्षसैः समधिष्ठिताः महाकायास्त्रिधाराजन्प्रस्रवंतोमदंबहु ५४

४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४

तेजोवीर्यबलोपेतामहाजवपराक्रमाः घटोत्कचस्तुतंनागंप्रेषयामाससंयुगे ५५ सगजंभगदत्तंतुहंतुकामः परंतप ते-
चान्येचोदितानागाराक्षसैःसुमहाबलैः ५६ परिपेतुःसुसंक्रुद्धाश्चतुर्दंताश्चतुर्दिशम् भगदत्तस्यतंनागंविषाणैरवपीडयन्
संपीड्यमानस्तैर्नागैर्वेदनार्तःशराहतः ५७ अनदत्सुमहानादमिंद्राशनिसमंततः तस्यतंनदतोनादंसुघोरंभीमनिस्वनं
५८ श्रुत्वाभीष्मोब्रवीद्द्रोणंराजानंचसुयोधनं एषयुध्यतिसंग्रामेहैडिंबेनदुरात्मना ५९ भगदत्तोमहेष्वासःकृच्छ्रेच-
परिवर्तते राक्षसश्चमहाकायःसचराजातिकोपनः ६० एवंसमेतौसमरेकालमृत्युसमावुभौ श्रूयतेह्येषहृष्टानांपांडवा-
नांमहास्वनः ६१ हस्तिनश्चैवसुमहान्भीतस्यरुदितध्वनिः तत्रगच्छामभद्रंवोराजानंपरिरक्षितुं ६२ अरक्ष्यमाणःसमरेक्षि
प्रंप्राणान्विमोक्ष्यति तत्त्वरध्वंमहावीर्यामाचिरंकुरुतानघाः ६३ महान्हिवर्ततेरौद्रःसंग्रामोलोमहर्षणः भक्तश्चकुलपुत्रश्च-
शूरश्चपृतनापतिः ६४ युक्तंतस्यपरित्राणंकर्तुमस्माभिरच्युताः भीष्मस्यतद्वचःश्रुत्वाभारद्वाजपुरोगमाः ६५ सहिताःस
र्वराजानोभगदत्तपरीप्सया उत्तमंजवमास्थायप्रययुर्यत्रसोभवत् ६६ तान्प्रयातान्समालोक्ययुधिष्ठिरपुरोगमाः पांचा-
लाःपांडवैःसार्द्धंपृष्ठतोनुययुःपरान् ६७ तान्यनीकान्यथालोक्यराक्षसेंद्रःप्रतापवान् ननादसुमहानादंनादयानोनभस्त
लं ६८ तस्यापिनिनदंश्रुत्वादृष्ट्वानागांश्चयुध्यतः भीष्मःशांतनवोभूयोभारद्वाजमभाषत ६९ नरोचतेमेसंग्रामोहैडिंबेन
महात्मना बलवीर्यसमाविष्टःससहायश्चसांप्रतं ७० नैषशक्योयुधाजेतुमपिवज्रभृतास्वयं लब्धलक्षप्रहारीचवयंच-
श्रांतवाहनाः ७१ पांचालैःपांडवैश्चैवदिवसंक्षतविक्षताः तन्मेनरोचतेयुद्धंपांडवैर्जितकाशिभिः ७२ युज्यतामवहारोद्यश्वो
योत्स्यामःपरैःसह पितामहवचःश्रुत्वातथाचक्रुःमहर्षिताः ७३ उपायेनापयातास्तेघटोत्कचभयार्दिताः कौरवेषुनिवृत्तेषु-
पांडवाजितकाशिनः ७४ सिंहनादमकुर्वंतशंखवेणुस्वनैःसह एवंतदभवद्युद्धंदिवसंभरतर्षभ ७५ पांडवानांकुरूणांच
पुरस्कृत्यघटोत्कचं कौरवास्सुततस्तूर्णंप्रययुःशिबिरंस्वकं ७६ व्रीडान्वितानिशाकालेपांडवेयैःपराजिताः शरविक्षतगा
त्रास्सुपांडुपुत्रामहारथाः ७७ युद्धेसुमनसोराजन्जग्मुःस्वशिबिरंप्रति पुरस्कृत्यमहाराजभीमसेनघटोत्कचौ ७८

पूजयंतोमहाराजमुदापरमयायुताः नदंतोविविधान्नादांस्तूर्यस्वनविभूषितान् ७९ सिंहनादांश्चकुर्वाणाविमिश्रांश्छंखनिः
स्वनैः निनदंतोमहात्मानः कंपयंतश्चमेदिनीं ८० घट्टयंतश्चमर्माणितवपुत्रस्यमारिष प्रयाताःशिबिरायैवनिशाकालेपरंतपाः
८१ दुर्योधनस्तुनृपतिर्दीनोभ्रातृवधेनच मुहूर्तंचिंतयामासबाष्पशोकसमाकुलः ८२ ततःकृत्वाविधिंसर्वंशिबिरस्यय
थाविधि प्रदध्यौशोकसंतप्तोभ्रातृव्यसनकर्शितः ८३ इतिश्रीमन्महाभा० भी० चतुर्थदिवसयुद्धंनामचतुःषष्टित
मोऽध्यायः ६४ धृतराष्ट्रउवाच भयंमेसुमहज्जातंविस्मयश्चैवसंजय श्रुत्वापांडुकुमाराणांकर्मदेवैःसुदुष्करं १
पुत्राणांचपराभावंश्रुत्वासंजयसर्वशः चिंतामेमहतीभूताभविष्यतिकथंत्विति २ ध्रुवंविदुरवाक्यानिधक्ष्यंतिहृदयंमम य
थाहिदृश्यतेसर्वंदैवयोगेनसंजय ३ यत्रभीष्मसुखांश्छूरानस्त्रज्ञान्योधसत्तमान् पांडवानामनीकेषुयोधयंतिप्रहारिणः
४ किंतेतपन्महात्मानःपांडुपुत्रामहाबलाः किंतेदत्तवरास्तातकिंवाज्ञानंविदंतिते ५ येनक्षयंनगच्छंतिदिवितारागणा
इव पुनःपुनर्नमृष्यामिहतंसैन्यंचपांडवैः ६ मय्येवदंडःपततिदैवात्परमदारुणः यथावध्याःपांडुसुतायथावध्याश्चमेसुताः
७ एतन्मेसर्वमाचक्ष्वयथातत्त्वेनसंजय नहिपारंप्रपश्यामिदुःखस्यास्यकथंचन ८ समुद्रस्येवमहतोभुजाभ्यांप्रपतन्न
रः पुत्राणांव्यसनंमन्येध्रुवंप्राप्तंसुदारुणं ९ घातयिष्यतिमेपुत्रान्सर्वान्भीमोनसंशयः नहिपश्यामितंवीरंयोमेरक्षे
त्सुतान्रणे १० ध्रुवंविनाशःसमरेपुत्राणांममसंजय तस्मान्मेकारणंसूतयुक्तंचैवविशेषतः ११ पृच्छतोवैयथातत्त्वंसर्व
माख्यातुमर्हसि दुर्योधनस्तुयच्चक्रेदृष्ट्वास्वान्विमुखान्रणे १२ भीष्मद्रोणौकृपश्चैवसौबलेयोजयद्रथः द्रौणिर्वापिमहे
ष्वासोविकर्णोवामहाबलः १३ निश्चयोवापिकस्तेषांतदाह्यासीन्महात्मनां विमुखेषुमहाप्राज्ञममपुत्रेषुसंजय १४ संजय
उवाच शृणुराजन्नवहितःश्रुत्वाचैवावधारय नैवमंत्रकृतंकिंचिन्नैवमायांतथाविधां १५ नवैविभीषिकांकांचिद्राजन्कुर्वंति
पांडवाः युध्यंतितेयथान्यायंशक्तिमंतश्चसंयुगे १६ धर्मेणसर्वकार्याणिजीवितादीनिभारत आरंभंतेसदापार्थाःप्रार्थया
नामहद्यशः १७ नतेयुद्धान्निवर्तंतेधर्मोपेतामहाबलाः श्रियापरमयायुक्तायतोधर्मस्ततोजयः १८ ६५ ६५

तेनावध्यारणेपार्थाजयस्तुक्ताश्चपार्थिव नवपुत्रादुरात्मानः पापेष्वभिरताःसदा १९ निष्ठुराहीनकर्माणस्तेनहीयंतिसं-
युगे कुबहूनिनृशंसानिपुत्रैस्तवजनेश्वर २० निकृतानीहपांडूनांनीचैरिवयथानरैः सर्वंचतदनादृत्यपुत्राणांतवकि-
ल्बिषं २१ सापन्हवास्तथैवासन्पांडवाःपांडुपूर्वज नचैनान्बहुमन्येंतेपुत्रास्तवविशांपते २२ तस्यपापस्यसततंक्रिय-
माणस्यकर्मणः संप्राप्तंसुमहद्घोरंफलंकिंपाकसन्निभं २३ तत्तद्भुंक्ष्वमहाराजसपुत्रःससुहृज्जनः नावबुध्यसियद्रा
जन्वार्यमाणःसुहृज्जनैः २४ विदुरेणाथभीष्मेणद्रोणेनचमहात्मना तथामयाचाप्यसकृद्वार्यमाणोनबुध्यसे २५ वा
क्यंहितंचपथ्यंचमंदःपथ्यमिवौषधं पुत्राणांमतमास्थायजितान्पश्यसिपांडवान् २६ शृणुभूयोयथातत्वंयन्मांत्वम-
नुपृच्छसि कारणंभरतश्रेष्ठपांडवानांजयंप्रति २७ तत्तेहंकथयिष्यामियथाश्रुतमरिंदम दुर्योधनेनसंपृष्टएतमर्थं
पितामहः २८ दृष्ट्वाभ्रातॄन्रणेसर्वान्विजितान्सुमहारथान् शोकसंमूढहृदयोनिशाकालेस्मकौरवः २९ पितामहमहा-
प्राज्ञंविनयेनोपगम्यह यदब्रवीत्सुतस्तेसौतन्मेशृणुजनेश्वर ३० दुर्योधनउवाच द्रोणश्चत्वंचशल्यश्चकृपो-
द्रौणिस्तथैवच कृतवर्माचहार्दिक्यःकांबोजश्चसुदक्षिणः ३१ भूरिश्रवाविकर्णश्चभगदत्तश्चवीर्यवान् महारथाः
समाख्याताःकुलपुत्रास्तनुत्यजः ३२ त्रयाणामपिलोकानांपर्याप्ताइतिमेमतिः पांडवानांसमस्ताश्चनतिष्ठंतिपराक्र-
मे ३३ तत्रमेसंशयोजातस्तन्ममाचक्ष्वपृच्छतः यंसमाश्रित्यकौंतेयाजयंत्यस्मान्पदेपदे ३४ श्रीभीष्मउवाच शृणु-
राजन्वचोमह्यंयत्त्वांवक्ष्यामिकौरव बहुशश्चमयोक्तोसिनचमेतत्त्वयाश्रुतं ३५ क्रियतांपांडवैःसार्द्धंशमोभ रतसत्तम
एतत्क्षेममहंमन्येपृथिव्यास्तववाविभो ३६ भुंक्ष्वेमांपृथिवींराजन्भ्रातृभिःसहितःसुखी सुहृदस्तर्पयन्सर्वान्नंदयस्वा
पिबांधवान् ३७ नचमेक्रोशतस्तातश्रुतवानसिवैपुरा तदिदंसमनुप्राप्तंयत्पांडूनवमन्यसे ३८ यश्चहेतुरवध्यत्वेतेषा-
मक्लिष्टकर्मणां तंशृणुष्वमहाराजममकीर्तयतःप्रभो ३९ नास्तिलोकेषुतद्भूतंभवितानोभविष्यति योजयेत्पांडवान्स
र्वान्पालितान्शार्ङ्गधन्वना ४० यत्तुमेकथितंतातमुनिभिर्भावितात्मभिः पुराणगीतंधर्मज्ञतच्छृणुष्वयथातथं ४१

४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३

पुराकिलकुरुः सर्वेऋषयश्चसमागताः पितामहमुपासेदुः पर्वतेगंधमादने ४२ तेषांमध्येसमासीनः प्रजापतिरपश्यत वि
मानंजाज्वलद्भासास्थितंप्रवरमंबरे ४३ ध्यानेनावेद्यतद्ब्रह्माकृत्वाचनियतोंजलिं नमश्चकारहृष्टात्मापुरुषपरमेश्वरं ४४
ऋषयस्त्वथदेवाश्चदृष्ट्वाब्रह्माणमुत्थितं स्थिताः प्रांजलयः सर्वेपश्यंतोमहदद्भुतं ४५ यथावच्चतमभ्यर्च्यब्रह्माब्रह्मविदांवरः
जगादजगतः स्रष्टापरंपरमधर्मवित् ४६ विश्वावसुर्विश्वमूर्तिर्विश्वेशोविष्वक्सेनोविश्वकर्मावशीच विश्वेश्वरोवासुदेवोऽसि-
तस्माद्योगात्मानंदेवतंत्वामुपेमि ४७ जयविश्वमहादेवजयलोकहितेरत जययोगीश्वरविभोजययोगपरावर ४८ पद्मना
भविशालाक्षजयलोकेश्वरेश्वर भूतभव्यभवन्नाथजयसौम्यात्मजात्मज ४९ असंख्येयगुणाधारजयसर्वपरायण नारा-
यणसुदुष्पारजयशार्ङ्गधनुर्धर ५० जयसर्वगुणोपेतविश्वमूर्तेनिरामय विश्वेश्वरमहाबाहोजयलोकार्थतत्पर ५१ महोरग
वराहाद्यहरिकेशविभोजय हरिवासदिशामीशविश्ववासामिताव्यय ५२ व्यक्ताव्यक्तमितस्थाननियतेंद्रियसत्क्रिय असं-
ख्येयात्मभावज्ञजयगंभीरकामद ५३ अनंतविदितब्रह्मनित्यंभूतविभावन कृतकार्यकृतप्रज्ञधर्मज्ञविजयाजय ५४ गुह्या
त्मन्सर्वयोगात्मन्स्फुटसंभूतसंभव भूतात्मनत्वलोकेशजयभूतविभावन ५५ आत्मयोनेमहाभागकल्पसंख्येयतत्पर उ-
द्भावनमनोभावजयब्रह्मजनप्रिय ५६ निसर्गसर्गनिरतकामेशपरमेश्वर अमृतोद्भवसद्भावमुक्तात्मविजयप्रद ५७ प्रजा-
पतिपतेदेवपद्मनाभमहाबल आत्मभूतमहाभूतकर्मात्मन्जयसर्वदा ५८ पादौतवधरादेवीदिशोबाहुर्दिवः शिरः मूर्ति-
स्तेहंसुराःकायश्चंद्रादित्यौचचक्षुषी ५९ बलंतपश्चसत्यंचधर्मकर्मात्मजंतव तेजोग्निः पवनश्वासआपस्तेस्वेदसंभवाः
६० अश्विनौश्रवणौनित्यौदेवीजिव्हासरस्वती वेदाःसंस्कारनिष्ठाहित्वदीयंजगदाश्रितं ६१ नसंख्यांनपरीमाणंनतेजो
नपराक्रमं नबलंयोगयोगीशजानीमस्तेनसंभवं ६२ त्वद्भक्तिनिरतादेवनियमैस्त्वांसमाश्रिताः अर्चयामःसदाविष्णोप
रमेशंमहेश्वरं ६३ ऋषयोदेवगंधर्वायक्षराक्षसपन्नगाः पिशाचामानुषाश्चैवमृगपक्षिसरीसृपाः ६४ एवमादिमया-
सृष्टपृथिव्यांत्वत्प्रसादज पद्मनाभविशालाक्षकृष्णदुःस्वप्ननाशन ६५ त्वंगतिःसर्वभूतानांत्वंनेतात्वंजगन्मुखं त्वत्प्रसादे-
नदेवेशसुखिनोविबुधाःसदा ६६

५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६

पृथिवीनिर्भयादेवत्वत्प्रसादात्सदाभवत् तस्माद्भवविशालाक्षयदुवंशविवर्द्धनः ६७ धर्मसंस्थापनार्थायदैतेयानांवधायच
जगतोधारणार्थायविज्ञाप्यंकुरुमेविभो ६८ यत्तत्परमकंगुह्यंत्वत्प्रसादादिदंप्रभो वासुदेवतदेतत्तेमयोद्गीतंयथातथं ६९
सृष्ट्वासंकर्षणंदेवंस्वयमात्मानमात्मना कृष्णात्वमात्मनास्राक्षीःप्रद्युम्नंह्यात्मसंभवं ७० प्रद्युम्नाच्चानिरुद्धंतुयंविदुर्विष्णुम
व्ययं अनिरुद्धोसृजन्मांवैब्रह्माणंलोकधारिणं ७१ वासुदेवमयःसोऽहंत्वयैवास्मिविनिर्मितः विसृज्यभागशोह्यात्मानंव्रज
मानुषतांविभो ७२ तत्रासुरवधंकृत्वासर्वलोकहितायवै धर्मंस्थाप्ययशःप्राप्ययोगंप्राप्स्यसितत्वतः ७३ त्वांहिब्रह्मर्ष-
योलोकेदेवाश्चामितविक्रम तैस्तैःस्वैर्नामभिर्युक्तागायंतिपरमाद्भुतं ७४ स्थिताश्चसर्वेत्वयिभूतसंघाःकृत्वाश्रयंत्वांवरदंसु
बाहो अनादिमध्यांतमपारयोगंलोकस्यसेतुंप्रवदंतिविप्राः ७५ इतिश्रीमन्महाभारतेभीष्मप॰ पंचषष्टितमोऽध्यायः
६५ भीष्मउवाच ततःसभगवान्देवोलोकानामीश्वरेश्वरः ब्रह्माणंप्रत्युवाचेदंस्निग्धगंभीरयागिरा १ विदितंता
तयोगान्मेसर्वमेतत्तवेप्सितं तथातद्भवितेत्युक्त्वातत्रैवांतरधीयत २ ततोदेवर्षिगंधर्वाविस्मयंपरमंगताः कौतूहलपराःस-
र्वेपितामहमथाब्रुवन् ३ कोन्वयंयोभगवताप्रणम्यविनयाद्विभो वाग्भिःस्तुतोवरिष्ठाभिःश्रोतुमिच्छामतंवयं ४ एवमु-
क्तस्तुभगवान्प्रत्युवाचपितामहः देवब्रह्मर्षिगंधर्वान्सर्वान्मधुरयागिरा ५ यत्तत्परंभविष्यंचभवितायच्चयत्परं भूता-
त्मायःप्रभुश्चैवब्रह्मयच्चपरंपदं ६ तेनास्मिकृतसंवादःप्रसन्नेनसुरर्षभाः जगतोनुग्रहार्थाययाचितोमेजगत्पतिः ७
मानुषंलोकमातिष्ठवासुदेवइतिश्रुतः असुराणांवधार्थायसंभवस्वमहीतले ८ संग्रामेनिहतायेतेदैत्यदानवराक्षसाः
तइमेनृषुसंभूताघोररूपामहाबलाः ९ तेषांवधार्थंभगवान्नरेणसहितोबली मानुषींयोनिमास्थायचरिष्यतिमहीतले
१० नरनारायणौयौतौपुराणावृषिसत्तमौ अजेयौहिरणेयत्तौसमेतावमरैरपि ११ सहितौमानुषेलोकेसंभूतावमितद्युती
मूढास्त्वेतौनजानंतिनरनारायणावृषी १२ यस्याहमात्मजःपुत्रःसर्वस्यजगतःपतिः वासुदेवोर्चनीयोवःसर्वलोकमहेश्वरः
१३ तथामनुष्योयमितिकदाचित्सुरसत्तमाः नावज्ञेयोमहावीर्यःशंखचक्रगदाधरः १४ ६६ ६६ ६६

१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७

एतत्परमकंगुह्यमेतत्परमकंपदम् एतत्परमकंब्रह्मएतत्परमकंयशः १५ एतदक्षरमव्यक्तमेतत्तच्छाश्वतंमहः यत्त-
त्पुरुषसंज्ञेयंगीयतेज्ञायतेच्चयत् १६ एतत्परमकंतेजएतत्परमकंसुखम् एतत्परमकंसत्यंकीर्तितंविश्वकर्मणा १७
तस्मात्सुरासुरैःसर्वैःसेंद्रैश्चामितविक्रमः नावज्ञेयोवासुदेवोमानुषोयमितिप्रभो १८ यश्चमानुषमात्रोयमितिब्रूया-
त्समंदधीः हृषीकेशमवज्ञानात्तमाहुःपुरुषाधमं १९ योयोगिनंमहात्मानंप्रविष्टंमानुषींतनुं अवमन्येद्वासुदेवं तमा-
हुस्तामसंजनाः २० देवंचराचरात्मानंश्रीवत्सांकंसुवर्चसं पद्मनाभंनजानातितमाहुस्तामसंजनाः २१ किरीटकौस्तुभध
रंमित्राणामभयंकरं अवजानन्महात्मानंघोरेतमसिमज्जति २२ एवंविदित्वातत्वार्थंलोकानामीश्वरेश्वरः वासुदेवोन
मस्कार्यःसर्वलोकैःसुरोत्तमाः २३ भीष्मउवाच एवमुक्त्वासभगवान्सदेवर्षिगणान्सुरा विसृज्यसर्वभूतानिजगा
मभवनंस्वकं २४ ततोदेवाःसगंधर्वामुनयोप्सरसोपिच कथांतांब्रह्मणागीतांश्रुत्वाप्रीत्यादिवंययुः २५ एवंश्रुतंमयात
तातऋषीणांभाविताात्मनां वासुदेवंकथयतांसमवायेपुरातनं २६ जामदग्न्यस्यरामस्यमार्कंडेयस्यधीमतः व्यासनारद
योश्चापिश्रुतंश्रुतविशारद २७ एतमर्थंचविज्ञायश्रुत्वाचप्रभुमव्ययं वासुदेवंमहात्मानंलोकानामीश्वरंप्रभुं २८ य-
स्यस्यादात्मजोब्रह्मासर्वस्यजगतःपिता कथंनवासुदेवोयमर्च्यश्रेष्ठश्चमानवैः २९ वारितोसिपुरातातमुनिभिर्भाविता-
त्मभिः मागच्छसंयुगंतेनवासुदेवेनधन्विना ३० पांडवैःसार्द्धमितियत्तत्त्वंमोहान्नबुद्ध्यसे मन्येत्वांराक्षसंक्रूरंतथाचासि
तमोवृतः ३१ तस्माद्विषसिगोविंदंपांडवंचधनंजयं नरनारायणौदेवौकोन्योद्विष्याद्धिमानवः ३२ तस्माद्ब्रवीमितेराजन्नेषो-
वैशाश्वतोव्ययः सर्वलोकमयोनित्यःशास्ताधात्रीधरोध्रुवः ३३ लोकान्धारयतेयस्त्रींश्चराचरगुरुःप्रभुः योद्धाजय
श्चजेताचसर्वप्रकृतिरीश्वरः ३४ राजन्सत्वमयोह्येषतमोरजविवर्जितः यतःकृष्णस्ततोधर्मोयतोधर्मस्ततोजयः ३५ त-
स्यमाहात्म्ययोगेनयोगेनात्ममयेनच धृताःपांडुसुताराजन्जयश्चैषांभविष्यति ३६ श्रेयोयुक्तांसदाबुद्धिंपांडवानांदधा-
तियः बलंचापिरणेनित्यंभयेभ्यश्चैवरक्षति ३७ सएषशाश्वतोदिव्यःसर्वभूतमयःशिवः वासुदेवइतिप्रोक्तोयन्मांपृच्छसिभार
त ३८

२८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८

ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चकृतलक्षणैः सेव्यतेभ्यर्च्यतेचैवनित्ययुक्तैःस्वकर्मभिः ३९ द्वापरस्ययुगस्यांतेआदौकलियुगस्यच सात्वतंविधिमास्थायगीतःसंकर्षणेनयः ४० सएवसर्वंस्फुरमर्त्यलोकंससमुद्रकक्षांतरिताःपुरीश्च युगेयुगेमानुषंचैववासंपुनःपुनःसृजतेविश्वकर्मा ४१ इतिश्रीमन्महाभा॰भीष्मप॰विश्वोपाख्यानेषट्षष्टितमोऽध्यायः ६६

दुर्योधनउवाच वासुदेवोमहद्भूतंसर्वदैवतदैवतं नपरंपुंडरीकाक्षाद्दृश्यतेभरतर्षभ १ मार्कंडेयश्चगोविंदंकथयत्यद्भुतंमहत् सर्वभूतानिभूतात्मामहात्मापुरुषोत्तमः २ आपोवायुश्चतेजश्चत्रयमेतदकल्पयत् अहृत्वापृथिवींदेवःसर्वलोकेश्वरःप्रभुः ३ अप्सुवैशयनंचक्रेमहात्मापुरुषोत्तमः सर्वतेजोमयोदेवोयोगात्सुष्वापतत्रह ४ मुखतःसोऽग्निमसृजत्प्राणाद्वायुमथासृजत् सरस्वतींचवेदांश्चवासुदेवोमहामनाः ५ एषलोकान्ससर्जादौदेवांश्चर्षिगणैःसह निधनंचैवमृत्युंचप्रजानांप्रभवोप्ययो ६ एषधर्मश्चधर्मात्मावरदःसर्वकामदः एषकर्ताचकार्यंचपूर्वदेवःस्वयंप्रभुः ७ भूतंभव्यंभविष्यच्चपूर्वमेतदकल्पयत् स्रष्टारंजगतश्चापिमहात्माप्रभुरव्ययः उभेसंध्येदिशःखंचनियमंचजनार्दनः ८ ऋषींश्चैवहिगोविंदस्तपश्चैवाभ्यकल्पयत् प्रजापतिश्चजगतोवरदःप्रभुरव्ययः ९ अग्रजंसर्वभूतानांसंकर्षणमकल्पयत् शेषंचाकल्पयद्देवमनंतमितियंविदुः १० योधारयतिभूतानिधरांचेमांसपर्वतां ध्यानयोगेनविप्रांश्चतंवदंतिमहौजसं ११ कर्णस्रोतोभवंचापिमधुनाममहौजसं तमुग्रमुग्रकर्माणमुग्रांबुद्धिंसमाश्रितं १२ ब्रह्मणोपचितिंयातुंजघानपुरुषोत्तमः तस्यतातवधाद्देवाऋषिदानवमानवाः १३ मधुसूदनमित्याहुर्ऋषयश्चजनार्दनं वराहश्चैवसिंहश्चत्रिविक्रमगतिःप्रभुः १४ एषमातापिताचैवसर्वेषांप्राणिनांहरिः परंहिपुंडरीकाक्षान्नभूतंनभविष्यति १५ मुखतोजनयद्विप्रान्बाहुभ्यांक्षत्रियांस्तथा वैश्यांश्चाप्यूरुतोराजंश्छूद्रान्पादात्तथैवच १६ तपसानियतोदेवोविधानंसर्वदेहिनां ब्रह्मभूताममावास्यांपौर्णमास्यांतथैवच १७ योगभूतंपरिचरन्केशवंमहदाप्नुयात् केशवःपरमंतेजःसर्वभूतजगत्पतिः १८ एवमाहुर्हृषीकेशंमुनयोवैनराधिप एतमेवविजानीयादाचार्यंपितरंगुरुं १९ कृष्णोयस्यप्रसीदेतलोकास्तेनाक्षयाजिताः यश्चैवैनंभयस्थानेकेशवंशरणंव्रजेत् २०

सदानरः पठंश्चेदंस्वस्तिमान्ससुखीभवेत् येचकृष्णंप्रपद्यंतेतेनमुह्यंतिमानवाः २१ भयेमहतिमग्नांश्चत्रातिनित्यंजनार्दनः एवंयुधिष्ठिरोज्ञात्वायाथातथ्येनभारत २२ सर्वात्मनामहाभागकेशवंजगदीश्वरं प्रपन्नःशरणंराजन्योगानामीश्वरंप्रभुं २३ इतिश्रीमन्महाभारतेभी० विश्वोपाख्यानेसप्तषष्टितमोध्यायः ६७ भीष्मउवाच शृणुचेदंमहाराजब्रह्मभूतंस्तवंमम ब्रह्मर्षिभिश्चदेवैश्चयःपुराकथितोभुवि १ साध्यानामपिदेवानांदेवदेवेश्वरःप्रभुः लोकभावनभावज्ञ इतित्वांनारदोब्रवीत् २ भूतंभव्यंभविष्यंचमार्कंडेयोभ्युवाचह यज्ञंत्वांचैवदेवानांतपश्चतपसामपि ३ देवानामपिदेवंचत्वामाहभगवान्भृगुः पुराणंचैवपरमंविष्णोरूपंतवेतिच ४ वासुदेवोवसूनांत्वंशक्रंस्थापयतांतथा देवदेवोसिदेवानांमितिद्वैपायनोब्रवीत् ५ पूर्वेप्रजापतेःसर्गेदक्षमाहुःप्रजापतिं स्रष्टारंसर्वभूतानामंगिरास्त्वांतथाब्रवीत् ६ अव्यक्तंतेशरीरोत्थंव्यक्तंतेमनसिस्थितं देवावाक्संभवश्चेतिदेवलस्त्वांतथाब्रवीत् ७ शिरसातेदिवंव्याप्तंबाहुभ्यांपृथिवीधृता जठरंतेत्रयोलोकाःपुरुषोऽसिसनातनः ८ एवंत्वामभिजानंतितपसाभावितानराः आत्मदर्शनतृप्तानामृषीणांचापिसत्तमः ९ राजर्षीणामुदाराणामाहवेष्वनिवर्तिनां सर्वधर्मप्रधानानांत्वंगतिर्मधुसूदन १० इतिनित्यंयोगविद्भिर्भगवान्पुरुषोत्तमः सनत्कुमारप्रमुखैःस्तूयतेभ्यर्च्यतेहरिः ११ एषतेविस्तरस्तातसंक्षेपश्चप्रकीर्तितः केशवस्ययथातत्वंसुप्रीतोभवकेशवे १२ संजयउवाच पुण्यंश्रुत्वेतदाख्यानंमहाराजसुतस्तव केशवंबहुमेनेसपांडवांश्चमहारथान् १३ तमब्रवीन्महाराजभीष्मःशांतनवःपुनः माहात्म्यंतेश्रुतंराजन्केशवस्यमहात्मनः १४ नरस्यचयथातत्वंयन्मांत्वंपरिपृच्छसि यदर्थंनृषुसंभूतौनरनारायणावुभौ १५ अवध्यौचयथावीरौसंयुगेष्वपराजितौ यथाचपांडवाराजन्नवध्यायुधिकस्यचित् १६ प्रीतिमान्हिदृढंकृष्णःपांडवेषुयशस्विषु तस्माद्ब्रवीमिराजेंद्रशमोभवतुपांडवैः १७ पृथिवींभुंक्ष्वराजेंद्रसहितोभ्रातृभिर्बलीनरनारायणौदेवाववज्ञायविनंक्ष्यसि १८ एवमुक्त्वातवपितातूष्णीमासीद्विशांपते व्यसर्जयच्चराजानंशिबिरंचविवेशह १९ राजाचशिबिरंप्रायात्प्रणिपत्यमहात्मने शिश्येचशयनेशुभ्रेतांरात्रिंभरतर्षभ २० इतिश्रीमन्म० भी० विश्वोपाख्यानेअष्टषष्टितमोऽध्यायः ६८

८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० इतिश्रीम० भी० अष्टषष्टितमो० ६८

संजयउवाच व्युषितायांचशर्वर्यामुदितेचदिवाकरे उभेसेनेमहाराजयुद्धायैवसमीयतुः १ अभ्यधावंश्चसंक्रुद्धाःपरस्प-
रजिगीषवः तेसर्वेसहितायुद्धेसमालोक्यपरस्परं २ पांडवाधार्तराष्ट्राश्चराजन्दुर्मंत्रितेतव व्यूहौचव्यूह्यसन्नद्धाःसंप्रहृष्टाः
प्रहारिणः ३ अरक्षन्मकरव्यूहंभीष्मोराजन्समंततः तथैवपांडवाराजन्नरक्षन्व्यूहमात्मनः ४ सनिर्ययौमहाराजपितादेव
व्रतस्तव महतारथवंशेनसंवृतोरथिनांवरः ५ इतरेचान्वयुःसर्वेयथा स्थानमवस्थिताः रथिनःपत्तिनश्चैवदंतिनःसादि-
नस्तथा ६ तान्दृष्ट्वाप्रोद्यतान्संख्येपांडवाश्चयशस्विनः श्येनेनव्यूहराजेनतेनाजय्येनसंयुगे ७ अशोभतमुखेतस्यभीम-
सेनोमहाबलः नेत्रेशिखंडीदुर्धर्षोधृष्टद्युम्नश्चपार्षतः ८ शीर्षेतस्याभवद्वीरःसात्यकिःसत्यविक्रमः विधुन्वन्गांडिवंपा-
र्थोग्रीवायामभवत्तदा९अक्षौहिण्यासबलयावामःपक्षोभवत्तदा महात्माद्रुपदःश्रीमान्सहपुत्रेणसंयुगे १० दक्षिण-
श्चाभवत्पक्षःकैकयोक्षौहिणीपतिः पृष्ठतोद्रौपदेयाश्चसौभद्रश्चापिवीर्यवान् ११ पृष्ठेसमभवच्छ्रीमान्स्वयंराजायुधिष्ठिरः
भ्रातृभ्यांसहितोवीरोयमाभ्यांचारुविक्रमः १२ प्रविश्यतुरणेभीमोमकरंमुखतस्तदा भीष्म मासाद्यसंग्रामेछादयामा-
ससायकैः १३ ततोभीष्मोमहास्त्राणिपातयामासवीर्यवान् मोहयत्पांडुपुत्राणांव्यूहंसैन्यंमहाहवे १४ सम्मुह्यतितदासै-
न्येत्वरमाणोधनंजयः भीष्मंशरसहस्रेणविव्याधरणमूर्द्धनि १५ प्रतिसंधायचास्त्राणिभीष्ममुक्तानिसंयुगे स्वेनानीके
नहृष्टेनयुद्धायसमवस्थितः १६ ततोदुर्योधनोराजाभारद्वाजमभाषत पूर्वंदृष्ट्वावधंघोरंबलस्यबलिनांवरः १७ भ्रातृ
णांचवधंसंख्येत्वरमाणोमहारथः आचार्यसततंत्वंहिहितकामोममानघ १८ वयंहित्वांसमाश्रित्यभीष्मंचैवपितामह-
हं देवानपिरणेजेतुंप्रार्थयामोनसंशयः १९ किमुपांडुसुतान्युद्धेहीनवीर्यपराक्रमान् सतथाकुरुभद्रंतेयथावध्यं
तिपांडवाः २० एवमुक्तस्ततोद्रोणस्तवपुत्रेणसंयुगे अभिनत्पांडवानीकंप्रेक्षमाणस्यसात्यकेः २१ सात्यकिश्चततो-
द्रोणंवारयामासभारत ततःप्रववृतेयुद्धंघोररूपंभयानकं २२ शैनेयंतुरणेक्रुद्धोभारद्वाजःप्रतापवान् अविध्यद्दश-
भिर्बाणैर्जत्रुदेशेस्मयन्निव २३ भीमसेनस्ततःक्रुद्धोभारद्वाजमविध्यत सरक्षन्सात्यकिंराजन्द्रोणाच्छस्त्रभृतांवरात्
२४

ततोद्रोणश्चभीष्मश्चतथाशल्यश्चमारिष भीमसेनंरणेक्रुद्धाश्छादयांचक्रिरेशरैः २५ अथाभिमन्युःसंक्रुद्धोद्रौपदेयाश्चमारिष विव्यधुर्निशितैर्बाणैःसर्वांस्तानुद्यतायुधान् २६ भीष्मद्रोणौतुसंक्रुद्धावापतंतौमहाबलौ प्रत्युद्ययौशिखंडीचमहेष्वासोमहाहवे २७ प्रगृह्यबलवद्वीरोधनुर्जलदनिःस्वनं अभ्यवर्षच्छरैस्तूर्णंछादयानोदिवाकरं २८ शिखंडिनंतथासाद्यभरतानांपितामहः अवर्जयतसंग्रामेस्त्रीत्वंतस्यानुसंस्मरन् २९ ततोद्रोणोमहाराजअभ्यद्रवततंरणे रक्षमाणस्तदाभीष्मंतव पुत्रेणचोदितः ३० शिखंडीतुसमासाद्यद्रोणंशस्त्रभृतांवरं अवर्जयतसंत्रस्तोयुगांताग्निमिवोज्वलं ३१ ततोबलेनमहतापुत्रस्तवविशांपते जुगोपभीष्ममासाद्यप्रार्थयानोमृधंतदा ३२ तथैवपांडवाराजन्पुरस्कृत्यधनंजयं भीष्ममेवाभ्यवर्ततजयेकृत्वादृढांमतिं ३३ तद्युद्धमभवद्घोरंदेवानांदानवैरिव जयमाशंसतांसंख्येयशश्चमहदद्भुतं ३४ इतिश्रीमन्महाभारतेभी० पंचमदिनयुद्धारंभेएकोनसप्ततितमोऽध्यायः ६९ संजयउवाच अकरोत्तुमुलंयुद्धंभीष्मःशांतनवस्तदा भीमसेनभयादिच्छन्पुत्रांस्तारयितुंनव १ पूर्वाण्हेतन्महारौद्रंराज्ञांयुद्धमवर्तत कुरूणांपांडवानांचमुख्यशूरविनाशने २ तस्मिन्नाकुलसंग्रामेवर्तमानेमहाभये अभवत्तुमुलःशब्दःसंस्पृशन्गगनंमहान् ३ नदद्भिश्चमहानागैर्हेषमाणैश्चवाजिभिः भेरीशंखनिनादैश्चतुमुलंसमपद्यत ४ युयुत्सवस्तेविक्रांताविजयायमहाबलाः अन्योन्यमभिगर्जंतोगोष्ठेषु वृषभाइव ५ शिरसांपात्यमानानांसमरेनिशितैःशरैः अश्मवृष्टिरिवाकाशेबभूवभरतर्षभ ६ कुंडलोष्णीषधारीणिजातरूपोज्वलानिच पतितानिस्मदृश्यंतेशिरांसिभरतर्षभ ७ विशिखोन्मथितैर्गात्रैःशिरोभिश्चसकुंडलैः सहस्ताभरणैश्चान्यैरभवच्छादितामही ८ कवचोपहितैर्गात्रैर्भुजैश्चसमलंकृतैः मुखैश्चचंद्रसंकाशैरक्तांतनयनैस्तथा ९ गजवाजिमनुष्याणांसर्वगात्रैश्चभूपते आसीत्सर्वासमाकीर्णामुहूर्तेनवसुंधरा १० रजोमेघैश्चतुमुलैःशस्त्रविद्युत्प्रकाशिभिः आयुधानांचनिर्घोषःस्तनयित्नुसमोभवत् ११ ससंप्रहारस्तुमुलःकटुकःशोणितोदकः प्रावर्ततकुरूणांचपांडवानांचभारत १२ तस्मिन्महाभयेघोरेतुमुलेलोमहर्षणे ववृषुःशरजालानिक्षत्रियायुद्धदुर्मदाः १३

क्रोशंतिकुंजराश्चात्रशरवर्षप्रतापिताः तावकानांपरेषांचपर्यधावन्समुद्यताः १४ संरब्धानांनृवीराणांधीराणामतितेजसां धनुषांतलघोषेणनप्राज्ञायतकिंचन १५ उत्थितेषुकबंधेषुसर्वतःशोणितोदके अपरेपर्यधावंतनृपारिपुवधोद्यताः १६ शरशक्तिगदाभिश्चखड्गैश्चामिततेजसः निजघ्नुःसमरेन्योन्यंशूराःपरिघबाहवः १७ बभ्रमुःकुंजराश्चात्रशरैर्मुक्तानिरंकुशाः अश्वाश्चपर्यधावंतहतारोहादिशोदश १८ उत्पत्यनिपतंत्यन्येशरघातप्रपीडिताः तावकानांपरेषांचपर्यधावन्समंततः १९ शरशक्तिगदाभिश्चखड्गैश्चपतितैर्भुवि गदानांपरिघाणांचहस्तानांचोरुभिःसह २० पादानांभूषणानांचकेयूराणांचसर्वशः राशयश्चात्रदृश्यंतेभीमभीष्मसमागमे २१ अश्वानांधावमानानांकुंजराणांनिवर्तता संघाताःस्मप्रदृश्यंतेतत्रतत्रविशांपते २२ गदाभिरसिभिःप्रासैर्बाणैश्चानतपर्वभिः जघ्नुःपरस्परंतत्रक्षत्रियाःकालचोदिताः २३ अपरेबाहुभिर्वीरानियुद्धकुशलायुधि बहुधासमसज्जंतआयसैःपरिघैरिव २४ मुष्टिभिर्जानुभिश्चैवतलैःकीलैर्विशांपते अन्योन्यंजघ्निरे-वीरास्तावकाःपांडवैःसह २५ पतितैःपात्यमानैश्चविचेष्टद्भिश्चभूतले घोरमायोधनंजज्ञेतत्रतत्रनरेश्वर २६ विरथारथिनश्चात्रनिस्त्रिंशवरधारिणः अन्योन्यमभ्यधावंतपरस्परवधैषिणः २७ ततोदुर्योधनोराजाकलिंगैर्बहुभिर्वृतः पुरस्कृत्यरणेभीष्मंपांडवानभ्यवर्तत २८ तथैवपांडवाःसर्वेपरिवार्यवृकोदरं भीष्ममभ्यद्रवन्क्रुद्धारणेरभसवाहनाः २९ इ-तिश्रीमन्महाभा॰ भीष्म॰ संकुलयुद्धेसप्ततितमोऽध्यायः ७०

संजयउवाच दृष्ट्वाभीष्मेणासंसक्तान्भ्रातॄनन्यांश्चबांधवान् समभ्यधावद्गांगेयमुद्यतास्त्रोधनंजयः १ पांचजन्यस्यनिर्घोषंधनुषोगांडिवस्यच ध्वजंचदृष्ट्वापार्थस्यसर्वान्नोभयमाविशत् २ सिंहलांगूलमाकाशेज्वलंतमिवपर्वतं असज्जमानंवृक्षेषुधूमराशिमिवोत्थितं ३ बहुवर्णंचचित्रंचदिव्यंवानरलक्षणं अपश्यामम्महाराजध्वजंगांडीवधन्वनः ४ विद्युतंमेघमध्यस्थांभ्राजमानामिवांबरे ददृशुःगांडिवंयोधारुक्मपृष्ठंमहामृधे ५ अशुश्रुमभृशंचास्यशक्रस्येवाभिगर्जतः सुघोरंतलयोःशब्दंनिघ्नतस्तववाहिनीं ६ चंडवातोयथामेघःसविद्युत्स्तनयित्नुमान् दिशःसंप्लावयामासशरवर्षैःसमंततः ७ अभ्यधावतगांगेयंभैरवास्त्रोधनंजयः दिशंप्राचींप्रतीचींचनजानीमोस्त्रमोहिताः ८

९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२

कांदिग्भूताः श्रांतपत्राहताश्वाहतचेतसः अन्योन्यमभिसंक्लिश्ययोधास्तेभरतर्षभ ९ भीष्ममेवाभिलीयंतेसहसर्वैस्तव
वात्मजैः तेषामार्तायनमभूद्भीष्मःशांतनवोरणे १० समुत्पततिवित्रस्तारथेभ्योरथिनस्तथा सादिनश्चाश्वपृष्ठेभ्योभूमे-
श्चापिपदातयः ११ श्रुत्वागांडीवनिर्घोषंविस्फूर्जितमिवाशनेः सर्वसैन्यानिभीतानिव्यवालीयंतभारत १२ अथकांबोज-
जैरश्वैर्महद्भिःशीघ्रगामिभिः गोपानांबहुसाहस्रैर्बलैर्गोपायनैर्वृतः १३ मद्रसौवीरगांधारैस्त्रैगर्तैश्चविशांपते सर्वकालिं
गमुख्यैश्चकलिंगाधिपतिर्वृतः १४ नानानरगणौघेनदुःशासनपुरःसरः जयद्रथश्चनृपतिःसहितःसर्वराजभिः १५ ह-
यारोहवराश्चैवतवपुत्रेणचोदिताः चतुर्दशसहस्राणिसौबलंपर्यवारयन् १६ ततस्तेसहिताःसर्वेविभक्तरथवाहनाः पांड-
वाःसमरेजघ्नुःस्तावकान्भरतर्षभ १७ रथिभिर्वारणैरश्वैःपादातैश्चसमीरितं घोरमायोधनंजज्ञेमहाभ्रसदृशंरजः १८
तोमरप्रासनाराचगजाश्वरथयोधिनां बलेनमहताभीष्मःसमसज्जत्किरीटिना १९ आवंत्यःकाशिराजेनभीमसेनेनसैंधवः अ
जातशत्रुर्मद्राणामृषभेणयशस्विना २० सहपुत्रःसहामात्यःशल्येनसमसज्जत विकर्णःसहदेवेनचित्रसेनःशिखंडिना २१
मत्स्यादुर्योधनंजग्मुःशकुनिंचविशांपते द्रुपदश्चेकितानश्चसात्यकिश्चमहारथः २२ द्रोणेनसमसज्जंतसपुत्रेणमहात्मना
कृपश्चकृतवर्माचधृष्टद्युम्नमभिद्रुतौ एवंप्रवाजिताश्वानिभ्रांतनागरथानिच समसज्जंतयुद्धानितत्रतत्रससंततः २४
निरभ्रेविद्युतस्तीव्रादिशश्चरजसावृताः प्रादुरासन्महोल्काश्चसनिर्घाताविशांपते २५ प्रादुर्बभौमहावातःपांसुवर्षपपातच
नभस्यंतर्दधेसूर्यःसैन्येनरजसावृतः २६ प्रमोहःसर्वभूतानामतीवसमपद्यत रजसांचाभिभूतानामस्त्रजालैश्चयुध्यतां २७
वीरबाहुविसृष्टानांसर्वावरणभेदिनां संन्हादःशरजालानामतीवसमपद्यत २८ प्रकाशंचक्रुराकाशमुद्यतानिभुजोत्तमैः
नक्षत्रविमलाभानिशस्त्राणिभरतर्षभ २९ आर्षभाणिविचित्राणिरुक्मजालावृतानिच संपेतुर्दिक्षुसर्वासुचर्माणि भरतर्ष
भ सूर्यवर्णैश्चनिस्त्रिंशैःपात्यमानानिसर्वशः ३० दिक्षुसर्वास्वदृश्यंतशरीराणिशिरांसिच भग्नचक्राक्षनीडाश्चनिपातितमहा
ध्वजाः ३१ हताश्वाःपृथिवींजग्मुःस्तत्रतत्रमहारथाः परिपेतुर्हयाश्चात्रकेचिच्छस्त्रकृतव्रणाः ३२ ५ ५

२३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ५५ ५५

३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ इतिश्रीमन्महाभा॰ भी॰ संकुलयुद्धेएकसप्त-



रथाश्वपरिवर्तेतेहतेषुरथयोधिषु शराहताभिन्नदेहाबद्धयोक्त्राहयोत्तमाः ३३ युगानिपर्यकर्षंततत्रतत्रहिभारत अदृश्यंतस-
सूताश्वसाश्वाःसरथयोधिनः ३४ एकेनबलिनाराजन्बाणेननिहतारणे गंधहस्तमदस्रावमाघ्रायबहवोरणे ३५ संनिपातेबलौ
घानांघातमाददिरेगजाः सतोरणमहामात्रैःपतद्भिश्चगतासुभिः ३६ बभूवायोधनंछन्नंनाराचाभिहतेर्गजैः सन्निपातेबलौघा
नांचोदितैर्वरवारणैः ३७ निपेतुर्युधिसंभग्नाःसयोधाःसर्वतोगजाः नागराजोपमैर्हस्तैर्नागैराक्षिप्यसंयुगे ३८ व्यदृश्यंतम
हाराजसंभग्नरथकूबराः विशीर्णरथजालाश्चकेशेष्वाक्षिप्यदंतिभिः ३९ द्रुमशाखाइवाविद्धानिष्पिष्टारथिनोरणे रथेषुच
रथान्युद्धेसंसक्तान्वरवारणाः ४० विकर्षंतोदिशःसर्वाःसंपेतुःसर्वशब्दगाः तेषांतथाकर्षतांचगजानांरूपमाबभौ ४१ स
रःसुनलिनीजालंविषक्तमिवकर्षतां एवंसंच्छादितंतत्रबभूवायोधनंमहत् सादिभिश्चपदातैश्चसध्वजैश्चमहारथैः ४२ इ
तिश्रीमन्महाभारतेभीष्म॰ संकुलयुद्धेएकसप्ततितमोऽध्यायः ७१ संजयउवाच शिखंडीसहमत्स्येनविराटेनविशांप
ते भीष्ममाशुमहेष्वासमाससादसुदुर्जयम् १ द्रोणंकृपंविकर्णंचमहेष्वासान्महाबलान् राज्ञश्चान्यान्रणेशूरान्बहूनार्च्छद्धनंज
यः २ सैंधवंचमहेष्वासंसामात्यंसहबंधुभिः प्राच्यांश्चदाक्षिणात्यांश्चभूमिपान्भूमिपर्षभ ३ पुत्रंचतेमहेष्वासंदुर्योधनममर्षणं दुः
सहंचैवसमरेभीमसेनोभ्यवर्तत ४ सहदेवश्चशकुनिमुलूकंचमहारथं पितापुत्रोमहेष्वासावभ्यवर्तंतदुर्जयौ ५ युधिष्ठिरो
महाराजगजानीकंमहारथः समवर्ततसंग्रामेपुत्रेणानिकृतस्तव ६ माद्रीपुत्रस्तुनकुलःशूरःसंक्रंदनोयुधि त्रिगर्तानांरथो
दारैःसमसज्जतपांडवः ७ अभ्यवर्तंतदुर्धर्षाःसमरेशाल्वकेकयान् सात्यकिश्चेकितानश्चसौभद्रश्चमहाबलः ८ धृष्ट-
केतुश्चसमरेराक्षसश्चघटोत्कचः पुत्राणांतेरथानीकंप्रत्युद्ययुराहवे ९ सेनापतिरमेयात्माधृष्टद्युम्नोमहारथः द्रोणेनस
मरेराजन्समीयायोग्रकर्मणा १० एवमेतेमहेष्वासास्तावकाःपांडवैःसह समेत्यसमरेशूराःसंप्रहारंप्रचक्रिरे ११ मध्यंदिन-
गतेसूर्येनभस्याकुलतांगते कुरवःपांडवेयाश्चनिजघ्नुरितरेतरं १२ ध्वजिनोहेमचित्रांगाविचरंतोरणाजिरे सपताकारथा
रेजुर्वैयाघ्रपरिवारणाः १३ समेतानांचसमरेजिगीषूणांपरस्परं बभूवतुमुलःशब्दःसिंहानामिवगर्जताम् १४ ६९

तितमोऽध्यायः ७१ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ ६९

१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८

तत्राद्भुतमपश्याम संप्रहारं सुदारुणं यदकुर्वन्रणे वीराः सृंजयाः कुरुभिः सह १५ नैव खं न दिशो राजन्न सूर्यं शत्रुतापन विदिशो वाप्यपश्याम शरैर्मुक्तैः समंततः १६ शक्तीनां विमलाग्राणां तोमराणां तथास्यतां निस्त्रिंशानां च पीतानां नीलोत्पलनिभाः प्रभाः १७ कवचानां विचित्राणां भूषणानां प्रभास्तथा खं दिशः प्रदिशश्चैव भासयामासुरोजसा १८ वपुर्भिश्च नरेंद्राणां चंद्रसूर्यसमप्रभैः विरराज तदा राजंस्तत्र तत्र रणांगणं १९ रथसिंहा नरव्याघ्राः समायांतश्च संयुगे विरेजुः समरे राजन्ग्रहा इव नभस्तले २० भीष्मस्तु रथिनां श्रेष्ठो भीमसेनं महाबलं अवारयत संक्रुद्धः सर्वसैन्यस्य पश्यतः २१ ततो भीष्मविनिर्मुक्ता रुक्मपुंखाः शिलाशिताः अभ्यघ्नन्समरे भीमं तैलधौताः सुतेजनाः २२ तस्य शक्तिं महावेगां भीमसेनो महाबलः क्रुद्धाशीविषसंकाशां प्रेषयामास भारत २३ तामापतंतीं सहसा रुक्मदंडां दुरासदां चिच्छेद समरे भीष्मः शरैः सन्नतपर्वभिः २४ ततोपरेण भल्लेन पीतेन निशितेन च कार्मुकं भीमसेनस्य द्विधा चिच्छेद भारत २५ सात्यकिस्तु ततस्तूर्णं भीष्ममासाद्य संयुगे आकर्णप्रहितैस्तीक्ष्णैर्निशितैस्तिग्मतेजनैः २६ शरैर्बहुभिरानर्च्छत्पितरं ते जनेश्वर ततः संधाय वै तीक्ष्णं शरं परमदारुणं वार्ष्णेयस्य रथाद्भीष्मः पातयामास सारथिं २७ तस्याश्वाः प्रद्रुता राजन्निहते रथसारथौ तेन तेनैव धावंति मनोमारुतरंहसः २८ ततः सैन्यस्य सर्वस्य निःस्वनस्तुमुलोभवत् हाहाकारश्च संजज्ञे पांडवानां महात्मना २९ अभिद्रवत गृह्णीत हयान्यच्छत धावत इत्यासीत्तुमुलः शब्दो युयुधानरथं प्रति ३० एतस्मिन्नेव काले तु भीष्मः शांतनवस्तदा अवधीत्पांडवीं सेनामासुरीमिव वृत्रहा ३१ ते वध्यमाना भीष्मेण पांचालाः सोमकैः सह आर्यां युद्धे मतिं कृत्वा भीष्ममेवाभिदुद्रुवुः ३२ धृष्टद्युम्नमुखाश्चापि पार्थाः शांतनवं रणे अभ्यधावन्जिघांसंतस्तव पुत्रस्य वाहिनीं ३३ तथैव तावका राजन्भीष्मद्रोणमुखाः परान् अभ्यधावंत वेगेन ततो युद्धमवर्तत ३४ इति श्रीमन्महाभा० भीष्मप० द्विसप्ततितमोऽध्यायः ७२ संजय उवाच विराटोऽथ त्रिभिर्बाणैर्भीष्ममार्च्छन्महारथं विव्याध तुरगांश्चास्य त्रिभिर्बाणैर्महारथः १ तं प्रत्यविध्यद्दशभिर्भीष्मः शांतनवः शरैः रुक्मपुंखैर्महेष्वासः कृतहस्तो महाबलः २ द्रौणिर्गांडीवधन्वानं भीमधन्वा महारथः अविध्यादिषुभिः षड्भिर्दृढहस्तः स्तनांतरे ३ कार्मुकं तस्य चिच्छेद फाल्गुनः परवीरहा अविध्यच्च भृशं तीक्ष्णैः पत्रिभिः शत्रुकर्शनः ४ २९ ३० ३१ ३२ ३३ ३४ इति श्रीम० भीष्म० द्विसप्ततितमोध्यायः ७२ १ २ ३ ४

सोऽन्यत्कार्मुकमादाय वेगवान्क्रोधमूर्छितः अमृष्यमाणः पार्थेन कार्मुकच्छेदमाहवे ५ अविध्यत्फाल्गुनं राजन्नवत्या निशि
तैः शरैः वासुदेवं च सप्तत्या विव्याध परमेषुभिः ६ ततः क्रोधाभिताम्राक्षः सह कृष्णेन फाल्गुनः दीर्घमुष्णं च निश्वस्य चिंतयित्वा-
मुहुर्मुहुः ७ धनुः संपीड्य वामेन करेणामित्रकर्शनः गांडीवधन्वा संक्रुद्धः शितान्सन्नतपर्वणः ८ जीवितांतकरान्घोरान्समाधत्त
शिलीमुखान् तैस्तूर्णं समरे विद्ध्वा द्रौणिं बलवतां वरः ९ तस्य ते कवचं भित्वा पपुः शोणितमाहवे नविव्यथे विनिर्भिन्नो द्रौणिर्गांडीव
धन्वना १० तथैव च शरान्पार्थे प्रतिमुंचन्नविह्वलः तस्थौ स समरे राजंस्त्रातुमिच्छन्महाव्रतं ११ तस्य तत्सुमहत्कर्म शशंसुः कुरु
सत्तमाः यत्कृष्णाभ्यां समेताभ्यामभ्यापतत संयुगे १२ स हि नित्यमनीकेषु युध्यते भयमास्थितः अस्त्रग्रामं ससंहारं द्रोणात्प्राप्य सु
दुर्लभं १३ ममाचार्यसुतो ह्येष द्रोणस्यातिप्रियः सुतः ब्राह्मणश्च विशेषेण माननीयो ममेति च १४ समास्थाय मतिं वीरो बीभत्सुः
शत्रुतापनः कृपां चक्रे रथश्रेष्ठो भारद्वाजसुतं प्रति १५ द्रौणिं त्यक्त्वा ततो युद्धे कौंतेयः श्वेतवाहनः युयुधे तावकान्निघ्नंस्त्वरमाणः
पराक्रमी १६ दुर्योधनस्तु दशभिर्गार्ध्रपत्रैः शिलाशितैः भीमसेनं महेष्वासं रुक्मपुंखैः समर्दयत् १७ भीमसेनस्तु संक्रुद्धः परासु
करणं दृढं चित्रं कार्मुकमादत्त शरांश्च निशितान्दश १८ आकर्णप्रहितैस्तीक्ष्णैर्वेगितैस्तिग्मतेजितैः अविध्यत्तूर्णमव्यग्रः कुरु
राजं महोरसि १९ तस्य कांचनसूत्रस्तु शरैः परिवृतो मणिः रराजोरसि खे सूर्यो ग्रहैरिव समावृतः २० पुत्रस्तु तव तेजस्वी भीमसे
नेन ताडितः नामृष्यत यथा नागस्तलशब्दं समीरितं २१ ततः शरैर्महाराज रुक्मपुंखैः शिलाशितैः भीमं विव्याध संक्रुद्धस्त्रा-
यमाणो वरूथिनीं २२ तौ युध्यमानौ समरे भृशमन्योन्यविक्षतौ पुत्रौ ते देवसंकाशौ व्यरोचेतां महाबलौ २३ चित्रसेनं नरव्याघ्रः
सौभद्रः परवीरहा अविध्यन्निशितैर्बाणैः पुरुमित्रं च सप्तभिः २४ सत्यव्रतं च सप्तत्या विद्ध्वा शक्रसमो युधि नृत्यन्निव रणे वी
रआर्तिं नः समजीजनत् २५ तं प्रत्यविध्यद्दशभिश्चित्रसेनः शिलीमुखैः सत्यव्रतश्च नवभिः पुरुमित्रश्च सप्तभिः २६ स विद्धो-
विक्षरन्रक्तं शत्रुसंवारणं महत् चिच्छेद चित्रसेनस्य चित्रं कार्मुकमार्जुनिः २७ भित्वा चास्य तनुत्राणं शरेणोरस्यताडयत्
ततस्ते तावका वीरा राजपुत्रा महारथाः २८ समेत्य युधि संरब्धा विव्यधुर्निशितैः शरैः तदा तांश्च सर्वांश्छरैस्तीक्ष्णैर्जघान परमास्त्रवित्

तस्यदृष्ट्वातुतत्कर्मपरिवव्रुःकृतास्तव दहंतंसमरेयोधांस्तवकक्षंयथोल्बणं ३० अपेतशिशिरेकालेसमिद्धमिवपावकम् अभ्य-
रोचतसौभद्रस्तवसैन्यानिशातयन् ३१ तत्तस्यचरितंदृष्ट्वापौत्रस्तवविशांपते लक्ष्मणोभ्यपतत्तूर्णंसात्वतीपुत्रमाहवे ३२ अभि
मन्युस्तुसंक्रुद्धोलक्ष्मणंशुभलक्षणम् विव्याधविशिखैःषड्भिःसारथिंचत्रिभिःशरैः ३३ तथैवलक्ष्मणोराजन्सौभद्रंनिशितैःशरैः
अविध्यतमहाराजतदद्भुतमिवाभवत् ३४ तस्याश्वांश्चतुरोहत्वासारथिंचमहारथः अभ्यद्रवतसौभद्रोलक्ष्मणंनिशितैःशरैः
३५ हताश्वेतुरथेतिष्ठन्लक्ष्मणःपरवीरहा शक्तिंचिक्षेपसंक्रुद्धःसौभद्रस्यरथंप्रति ३६ तामापतंतींसहसाघोररूपांदुरास-
दां अभिमन्युःशरैस्तीक्ष्णैश्चिच्छेदभुजगोपमां ३७ ततःस्वरथमारोप्यलक्ष्मणंगौतमस्तदा अपोवाहरथेनाजौसर्वसैन्य
स्यपश्यतः ३८ ततःसमाकुलेतस्मिन्वर्तमानेमहाभये अभ्यद्रवन्जिघांसंतःपरस्परवधैषिणः ३९ तावकाश्चमहेष्वासाःपां
डवाश्चमहारथाः जुह्वंतःसमरेप्राणान्निजघ्नुरितरेतरं ४० मुक्तकेशाविकवचाविरथाश्छिन्नकार्मुकाः बाहुभिःसमयुध्यं
तसृंजयाःकुरुभिःसह ४१ ततोभीष्मोमहाबाहुःपांडवानांमहात्मनां सेनांजघानसंक्रुद्धोदिव्यैरस्त्रैर्महाबलः ४२ हतेश्वरै
र्गजैस्तत्रनरैरश्वैश्चपातितैः रथिभिसादिभिश्चैवसमास्तीर्यतमेदिनी ४३ इतिश्रीमन्महाभा॰भी॰ द्वंद्वयुद्धेत्रिसप्तति
तमोऽध्यायः ७३ संजयउवाच अथराजन्महाबाहुःसात्यकिर्युद्धदुर्मदः विकृष्यसमरेचापंभारसाधनमुत्तमं १
प्रामुंचत्पुंखसंयुक्तांश्छरानाशीविषोपमान् प्रगाढंलघुचित्रंचदर्शयन्हस्तलाघवं २ तस्यविक्षिपतश्चापंशरानन्यांश्चमुंचतः
आददानस्यभूयश्चसंदधानस्यचापरान् ३ क्षिपतश्चशरांस्तस्यरणेशत्रून्विनिघ्नतः ददृशेरूपमत्यर्थंमेघस्येवप्रवर्षतः ४ तमु
दीर्यंतमालोक्यराजादुर्योधनस्तदा रथानामयुतंतस्यप्रेषयामासभारत ५ तांस्तुसर्वान्महेष्वासान्सात्यकिःसत्यविक्रमः
जघानपरमेष्वासोदिव्येनास्त्रेणवीर्यवान् ६ सकृत्वादारुणंकर्मप्रगृहीतशरासनः आससादततोवीरोभूरिश्रवसमाहवे ७
सहिसंदृश्यसेनांतांयुयुधानेनपीडितां अभ्यधावतसंक्रुद्धःकुरूणांकीर्तिवर्द्धनः ८ इंद्रायुधसवर्णंतुसविस्फार्यमहद्धनुः
व्यसृजद्वज्रसंकाशांश्छरानाशीविषोपमान् ९ सहस्रशोमहाराजदर्शयन्पाणिलाघवं शरांस्तान्मृत्युसंस्पर्शान्सात्यकेस्तुपदा
नुगाः १०

नविषेहुस्तदाराजन्दुद्रुवुस्तेसमंततः विहायसमरेराजन्सात्यकिंयुद्धदुर्मदं ११ तंदृष्ट्वायुयुधानस्यसुतादशमहाबलाः महा-
रथाःसमाख्याताश्चित्रवर्मायुधध्वजाः १२ समासाद्यमहेष्वासंभूरिश्रवसमाहवे उचुःसर्वेसुसंरब्धायूपकेतुंमहाहवे १३ भो-
भोःकौरवदायादसहस्माभिर्महाबल एह्येयुध्यस्वसंग्रामेसमस्तैःपृथगेववा १४ अस्मान्वात्वंपराजित्ययशःप्राप्नुहिसंयुगे
वयंत्वांवापराजित्यप्रीतिंदास्यामहेपितुः १५ एवमुक्तस्तदाशूरैस्तानुवाचमहाबलः वीर्यश्लाघीनरश्रेष्ठस्तान्दृष्ट्वासमवस्थि
तान् १६ साध्विदंकथ्यतेवीरायद्येवंमतिरद्यवः युध्यध्वंसहितायत्तान्निहनिष्यामिवोरणे १७ एवमुक्तामहेष्वासास्तेवीराःक्षि
प्रकारिणः महताशरवर्षेणअभ्यवर्षन्नरिंदमाः १८ अपराण्हेमहाराजसंग्रामस्तुमुलोभवत् एकस्यचबहूनांचसमेतानांर
णाजिरे १९ तमेकंरथिनांश्रेष्ठंशरैस्तेसमवाकिरन् प्रावृषीवयथामेरुंसिषिचुर्जलदान्नृप २० तैस्तुमुक्तांश्छरौघांस्तान्यमदं-
डाशनिप्रभान् असंप्राप्तानसंभ्रांतश्चिच्छेदाशुमहारथः २१ तत्राद्भुतमपश्यामःसौमदत्तेःपराक्रमं यदेकोबहुभिर्युद्धेसमस-
ज्जदभीतवत् २२ विसृज्यशरवृष्टिंतांदशराजन्महारथाः परिवार्यमहाबाहुंनिहंतुमुपचक्रमुः २३ सौमदत्तिस्ततःक्रुद्धस्तेषां-
चापानिभारत चिच्छेददशभिर्बाणैर्निमेषेणमहारथः २४ अथैषांछिन्नधनुषांभल्लैःसन्नतपर्वभिः चिच्छेदसमरेराजंश्छि
रांसिभरतर्षभ २५ तेहतान्यपतन्भूमौवज्ररुग्णाइवद्रुमाः तान्दृष्ट्वानिहतान्वीरान्रणेपुत्रान्महाबलान् २६ वार्ष्णेयोविनद
न्राजन्भूरिश्रवसमभ्यगात् रथंरथेनसमरेपीडयित्वामहाबलौ २७ तावन्योन्यस्यसमरेनिहत्यरथवाजिनः विरथावभिव
ल्गंतौसमेयातांमहारथौ २८ प्रगृहीतमहाखड्गौतौचर्मवरधारिणौ शुशुभातेनरव्याघ्रौयुद्धायसमवस्थितौ २९ ततःसा-
त्यकिमभ्येत्यनिस्त्रिंशवरधारिणं भीमसेनस्तुतंराजन्रथमारोपयत्तदा ३० तवापितनयोराजन्भूरिश्रवसमाहवे आरोप-
यद्रथंतूर्णंपश्यतांसर्वधन्विनां ३१ तस्मिंस्तथावर्तमानेरणेभीष्मंमहारथं अयोधयंतसंरब्धाःपांडवाभरतर्षभ ३२ लोहि-
तायतिचादित्येत्वरमाणोधनंजयः पंचविंशतिसाहस्रान्निजघानमहारथान् ३४ तेहिदुर्योधनादिष्टास्तदापार्थनिबर्हणे अ-
प्राप्येवगतानाशंशलभाइवपावके ३४ ततोमत्स्याःकेकयाश्चधनुर्वेदविशारदाः परिवव्रूरणेपार्थंसहपुत्रंमहारथम् ३५

जगामास्तमथादित्योरजोमेघैःसमुत्थितैः एतस्मिन्नेवकालेतुसूर्येऽस्तमुपगच्छति सर्वेषामेवसैन्यानांप्रमोहःसमपद्यत ३६ अव
हारंततश्चक्रेपितादेवव्रतस्तव संध्याकालेमहाराजसैन्यानांश्रांतवाहनः ३७ पांडवानांकुरूणांचपरस्परसमागमे तेसेनेभृशसंविग्ने
ययतुःस्वंनिवेशनं ३८ ततःस्वशिबिरंगत्वान्यविशंस्तत्रभारत पांडवाःसृंजयैःसार्द्धंकुरवश्चयथाविधि ३९ इतिश्रीमन्महाभा
र०भीष्मपर्वणिपंचमदिवसयुद्धंनामचतुःसप्ततितमोऽध्यायः ७४ संजयउवाच विहृत्यतेततोराजन्सहिताःकुरुपांडवाः
व्यतीतायांतुशर्वर्यांपुनर्युद्धायनिर्ययुः १ ततःशब्दोमहानासीत्तवतेषांचभारत युज्यतांरथमुख्यानांकल्प्यतांचापिदंतिनां २
सन्नह्यतांपदातीनांहयानांचैवभारत शंखदुंदुभिनिर्घोषास्तुमुलाःसर्वतोभवन् ३ ततोयुधिष्ठिरोराजाधृष्टद्युम्नमभाषत व्यूहं-
व्यूहमहाबाहोमकरंशत्रुतापनं ४ एवमुक्तस्तुपार्थेनधृष्टद्युम्नोमहारथः व्यादिदेशमहाराजरथिनोरथिनांवरः ५ शिरोऽभूद्द्रु-
पदस्तस्यपांडवश्चधनंजयः चक्षुषीसहदेवश्चनकुलश्चमहारथः ६ तुंडमासीन्महाराजभीमसेनोमहाबलः सौभद्रोद्रौपदेया
श्चराक्षसश्चघटोत्कचः ७ सात्यकिर्धर्मराजश्चव्यूहग्रीवांसमास्थिताः पृष्ठमासीन्महाराजविराटोवाहिनीपतिः ८ धृष्टद्युम्ने-
नसहितोमहत्यासेनयावृतः केकयाभ्रातरःपंचवामंपक्षंसमाश्रिताः ९ धृष्टकेतुर्नरव्याघ्रश्चेकितानश्चवीर्यवान् दक्षिणंपक्ष
माश्रित्यस्थितावूहस्यदक्षिणे १० पादयोस्तुमहाराजस्थितःश्रीमान्महारथः कुंतीभोजःशतानीकोमहत्यासेनयावृतः ११ शि
खंडीतुमहेष्वासःसोमकैःसंवृतोबली इरावांश्चनृपःपुच्छेमकरस्यव्यवस्थितौ १२ एवमेतंमहाव्यूहंव्यूह्यभारतपांडवाः सूर्योद
येमहाराजपुनर्युद्धायदंशिताः १३ कौरवानभ्ययुस्तूर्णंहस्त्यश्वरथपत्तिभिः समुच्छ्रितैर्ध्वजैश्छत्रैःशस्त्रैश्चविमलैःशितैः १४
व्यूढंदृष्ट्वातुतत्सैन्यंपितादेवव्रतस्तव क्रौंचेनमहताराजन्प्रत्यव्यूहतवाहिनीं १५ तस्यतुंडेमहेष्वासोभारद्वाजोभ्यवर्तत अ-
श्वत्थामाकृपश्चैवचक्षुरास्तांनरेश्वर १६ कृतवर्मातुसहितःकांबोजवरबाल्हिकैः शिरस्यासीन्नरश्रेष्ठःश्रेष्ठःसर्वधनुष्मतां १७
ग्रीवायांशूरसेनस्तुतवपुत्रश्चभारत दुर्योधनोमहाराजराजभिर्बहुभिर्वृतः १८ प्राग्ज्योतिषस्तुसहितोमद्रसौवीरकेकयैः उ
रस्यभून्नरश्रेष्ठमहत्यासेनयावृतः १९ स्वसेनयाचसहितःसुशर्माप्रस्थलाधिपः वामंपक्षंसमाश्रित्यदंशितःसमवस्थितः २०

तुषारायवनाश्चैवशकैश्चसहचूलिकैः दक्षिणंपक्षमाश्रित्यस्थिताव्यूहस्यभारत २१ श्रुतायुश्चशतायुश्चसौमदत्तिश्चमारिष
व्यूहस्यजघनेतस्यरक्षमाणाःपरस्परं २२ ततोयुद्धायसंजग्मुःपांडवाःकौरवैःसह सूर्योदयेमहाराजततोयुद्धमवर्तत २३ प्रती-
यूरथिनोनागानागाश्चरथिनोययुः हयारोहाहयारोहान्रथिनश्चापिसादिनः २४ सादिनश्चहयान्राजन्कुंजराश्चमहारणे ह-
स्त्यारोहान्रथान्राजन्रथिनश्चापिसादिनः २५ रथिनःपत्तिभिःसार्द्धंसादिनश्चापिपत्तिभिः अन्योन्यंसमरेराजन्प्रत्यधावन्नम-
र्षिताः २६ भीमसेनार्जुनयमैर्गुप्ताश्चान्यैर्महारथैः शोभतेपांडवीसेनानक्षत्रैरिवशर्वरी २७ तथाभीष्मकृपद्रोणशल्यदुर्योधनादि-
भिः तवापिविबभौसेनाग्रहैर्द्यौरिवसंवृता २८ भीमसेनस्तुकौंतेयोद्रोणंदृष्ट्वापराक्रमी अभ्ययाज्जवनैरश्वैर्भारद्वाजस्यवा-
हिनीं २९ द्रोणस्तुसमरेक्रुद्धोभीमंनवभिरायसैः विव्याधसमरेराजन्मर्माण्युद्दिश्यवीर्यवान् ३० दृढाहतस्ततोभीमोभारद्वाजे-
नसंयुगे सारथिंप्रेषयामासयमस्यसदनंप्रति ३१ ससंगृह्यस्वयंवाहान्भारद्वाजःप्रतापवान् व्यधमत्पांडवींसेनांतूलराशिमि
वानलः ३२ तेवध्यमानाद्रोणेनभीष्मेणाचनरोत्तम सृंजयाःकैकयैःसार्द्धंपलायनपराभवन् ३३ तथैवतावकंसैन्यंभीमार्जुनप-
रिक्षतं मुह्यतेतत्रतत्रैवसमदेववरांगना ३४ अभिद्येतांततोव्यूहौतस्मिन्वीरवरक्षये आसीद्व्यतिकरोघोरस्तवतेषांचभारत
३५ तदद्भुतमपश्यामतावकानांपरैःसह एकायनगताःसर्वेयद्युद्ध्यंतभारत ३६ प्रतिसंधायचास्त्राणितेन्योन्यस्यविशांपते
युयुधुःपांडवाश्चैवकौरवाश्चमहामृधे ३७ इतिश्रीमन्महाभारतेभीष्म॰ षष्ठदिनयुद्धारंभेपंचसप्ततितमोऽध्यायः ७५
धृतराष्ट्रउवाच एवंबहुगुणंसैन्यमेवंबहुविधंपरं व्यूढमेतद्यथाशास्त्रममोघंचैवसंजय १ तुष्टमस्माकमत्यंतमभिकामंचनः
सदा प्रह्वमव्यसनोपेतंपुरस्ताद्दृष्टविक्रमं २ नातिवृद्धमबालंचनकृशंनचपीवरं लघुवृत्तायतप्रायंसारगात्रमनामयं ३
आत्तसन्नाहशस्त्रंचबहुशस्त्रपरिग्रहं असियुद्धेनियुद्धेचगदायुद्धेचकोविदं ४ प्रासर्ष्टितोमरेष्वाजौपरिघेष्वायसेषुच भिंदि
पालेषुशक्तिषुमुसलेषुचसर्वशः ५ कंपनेषुचचापेषुकणपेषुचसर्वशः क्षेपणेषुचचित्रेषुमुष्टियुद्धेषुचक्षमं ६ अपरोक्षं
चविद्यासुव्यायामेषुकृतश्रमं शस्त्रग्रहणविद्यासुसर्वासुपरिनिष्ठितं ७ आरोहेपर्यवस्कंदेसरणेसांतरप्लुते सम्यक्प्रहरणे
यानेव्यपयानेचकोविदं ८

नागाश्वरथयानेषुबहुशःसुपरीक्षितं परीक्ष्यचयथान्यायंवेतनेनोपपादितं ९ नगोष्ठ्यानोपकारेणनसंबंधनिमित्ततः नसौहृदबलेनापिनकुलीनपरिग्रहैः १० समृद्धजनमार्यंचतुष्टसत्कृतबांधवं कृतोपकारभूयिष्ठंयशस्विचमनस्विच ११ सजवैश्चनरैर्मुख्यैर्बहुशोमुख्यकर्मभिः लोकपालोपमैस्तातपालितंलोकविश्रुतैः १२ बहुभिःक्षत्रियैर्गुप्तंपृथिव्यांलोकसंमतैः अस्मानभिगतैःकामान्सबलैःसपदानुगैः १३ महोदधिमिवापूर्णमापगाभिःसमंततः अपक्षैःपक्षिसंकाशैरथैर्नागैश्चसंवृतं १४ नानायोधजनंभीमंवाहनोर्मितरंगिणं क्षेपण्यसिगदाशक्तिशरप्रासैःसमाकुलं १५ ध्वजभूषणसंबाधंरत्नपट्टैःसुसंचितं वाहनैःपरिधावद्भिर्वायुवेगविकंपितं १६ अपारमिवगर्जंतंसागरप्रतिमंमहत् द्रोणभीष्माभिसंगुप्तंगुप्तंचकृतवर्मणा १७ कृपदुःशासनाभ्यांचजयद्रथमुखैस्तथा भगदत्तविकर्णाभ्यांद्रौणिसौबलबाल्हिकैः १८ गुप्तंप्रवीरैर्लोकस्यसारवद्भिर्महात्मभिः यद्हन्यतसंग्रामेदिष्टमत्रपुरातनं १९ नैतादृशंसमुद्योगंदृष्टवंतोऽथमानुषाः ऋषयोवामहाभागाःपुराणाभुविसंजय २० ईदृशोऽपिबलौघस्तुयुक्तःशास्त्रार्थसंपदा वध्यतेयत्रसंग्रामेकिमन्यद्भागधेयतः २१ विपरीतमिदंसर्वंप्रतिभातिस्मसंजय यत्रेदृशंबलंघोरंनातरद्युधिपांडवान् २२ अथवापांडवार्थायदेवास्तत्रसमागताः युध्यंतेमामकंसैन्यंयथाविध्यंतिसंजय २३ उक्तोहिविदुरेणेहहितंपथ्यंचनित्यशः नचगृण्हातितन्मंदःपुत्रोदुर्योधनोमम २४ तस्यमन्येमतंपूर्वंसर्वज्ञस्यमहात्मनः आसीद्यथागतंतातयेनदृष्टमिदंपुरा २५ अथवाभाव्यमेवंहिसंजयैतेनसर्वथा पुराधात्रायथासृष्टंतत्तथाननदन्यथा २६ इतिश्रीमन्महाभा० भी० धृतराष्ट्रचिंतायांषट्सप्ततितमोऽध्यायः ७६ संजयउवाच आत्मदोषात्त्वयाराजन्प्राप्तंव्यसनमीदृशं नहिदुर्योधनस्तातपश्यतेभरतर्षभ १ यानित्वंदृष्टवान्राजन्धर्मसंकरकाणिते तवदोषात्पुराहत्तंद्यूतमेतद्विशांपते २ तवदोषेणयुद्धंचप्रवृत्तंसहपांडवैः त्वमेवाद्यफलंभुंक्ष्वकृत्वाकिल्बिषमात्मनः ३ आत्मनैवकृतंकर्मआत्मनैवोपभुज्यते इहवाप्रेत्यवाराजंस्त्वयाप्राप्तंयथातथं ४ तस्माद्राजन्स्थिरोभूत्वाप्राप्येदंव्यसनमहत् शृणुयुद्धंयथावृत्तंशंसतोममारिष ५ भीमसेनःसुनिशितैर्बाणैर्भित्वामहाचमूम् आससादततोवीरःसर्वान्दुर्योधनानुजान् ६

दुःशासनंदुर्विषहंदुःसहंदुर्मदंजयं जयसेनंविकर्णंचचित्रसेनंसुदर्शनं ७ चारुचित्रंस्कवर्माणंदुष्कर्णंकर्णमेवच एतानन्यां
श्चस्कबहून्समीपस्थान्महारथान् ८ धार्त्तराष्ट्रान्स्कसंक्रुद्धान्दृष्ट्वाभीमोमहाबलः भीष्मेणसमरेगुप्तांप्रविवेशमहाचमूं ९ अ
थालोक्यप्रविष्टंतमूचुस्तेसर्वएवहि जीवग्राहंनिगृण्हीमोवयमेतंनराधिपाः १० सतैःपरिवृतःपार्थैर्भ्रातृभिःकृतनिश्चयैः
प्रजासंहरणेसूर्यःक्रूरैरिवमहाग्रहैः ११ संप्राप्यमध्यंव्यूहस्यनभीःपांडवमाविशत् यथादेवास्करेयुद्धेमहेंद्रःप्राप्यदानवान् १२
ततःशतसहस्राणिरथिनांसर्वशस्त्रिणां उद्यतानिशरैर्घोरैस्तमेकमनुवव्रिरे १३ सतेषांप्रवरान्योधान्हस्त्यश्वरथसादिनः जघा-
नसमरेश्शूरोधार्तराष्ट्रानचिंतयन् १४ तेषांव्यवसितंज्ञात्वाभीमसेनोजिघृक्षतां समस्तानांवधेराजन्मतिंचक्रेमहाबलः१५
ततोरथंसमुत्सृज्यगदामादायपांडवः जघानधार्तराष्ट्राणांतंबलौघमहार्णवं १६ भीमसेनेप्रविष्टेतुधृष्टद्युम्नोपिपार्षतः द्रोणमु
त्सृज्यतरसाप्रययौयत्रसौबलः १७ निवार्यमहतींसेनांतावकानांनरर्षभः आससादरथंतूर्णंभीमसेनस्यसंयुगे १८ दृष्ट्वा
विशोकंसमरेभीमसेनस्यसारथिं धृष्टद्युम्नोमहाराजदुर्मनागतचेतनः १९ अपृच्छत्बाष्पसंरुद्धोनिश्वसन्वाचमीरयन् म
मप्राणैःप्रियतमःक्वभीमइतिदुःखितः २० विशोकस्तमुवाचेदंधृष्टद्युम्नंकृतांजलिः संस्थाप्यमामिहबलीपांडवःस्कमहाबलः
२१ प्रविष्टोधार्त्तराष्ट्राणामेकोबलमहार्णवं मामुक्त्वापुरुषव्याघ्रप्रीतियुक्तमिदंवचः २२ प्रतिपालयमांसूतनियम्याश्वान्मुहूर्त-
कं यावदेतान्निहन्म्यद्ययइमेमद्वधोद्यताः २३ ततोदृष्ट्वागदाहस्तंप्रधावंतंमहाबलं सर्वेषामेवसैन्यानांसंहर्षःसमजायत
२४ तस्मिन्स्कतुमुलेयुद्धेवर्तमानेमहाभये भित्वाराजन्महाव्यूहंप्रविवेशसखातव २५ विशोकस्यवचःश्रुत्वाधृष्टद्युम्नोपि-
पार्षतः प्रत्युवाचततःसूतंरणमध्येमहाबलः २६ नहिमेजीवितेनापिविद्यतेद्यप्रयोजनं भीमसेनंरणेहित्वास्नेहमुत्सृज्यपां-
डवैः २७ यदियामिविनाभीमंकिंमांक्षत्रंवदिष्यति एकायनगतेभीमेमयिचावस्थितेयुधि २८ अस्वस्तितस्यकुर्वंतिदेवाःशक्र
पुरोगमाः यःसहायान्परित्यज्यस्वस्तिमानाव्रजेद्गृहान् २९ समेभीमःसखाचैवसंबंधीचमहाबलः भक्तोमेभक्तिमांश्चाहंत-
स्मिन्नरिनिषूदन ३० सोहंतत्रगमिष्यामियत्रयातोवृकोदरः निघ्नंतंमारिपून्पश्य दानवानिववासवम् ३१ ६९ ६९

३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५

एवमुक्त्वाततोवीरोयययोमध्येनभारत भीमसेनस्यमार्गेषुगदाप्रमथितेर्गजेः ३२ सददर्शतदाभीमंदहंतंरिपुवाहिनीं वातोवृक्षा-
निवबहून्प्रभंजंतंरणेनृपान् ३३ तेहन्यमानाःसमरेरथिनःसादिनस्तथा पादातादंतिनश्चैवचक्रुरार्तस्वरंमहत् ३४ हाहाकारश्च
संजज्ञेतवसैन्यस्यमारिष वध्यतेभीमसेनेनकृतिनाचित्रयोधिना ३५ ततःकृतास्त्रास्तेवीरापरिवार्यवृकोदरम् अभीताःसमकुर्वंत
शस्त्रवृष्टिंसमंततः ३६ अभिद्रुतंशस्त्रभृतांवरिष्ठंसमंततःपांडवलोकवीरम् सैन्येनघोरेणसुसंहतेनदृष्ट्वाबलीपार्षतोभीमसे-
नं ३७ अथोपगच्छच्छरविक्षतांगंपदातिनंक्रोधविषंवमंतं आश्वासयन्पार्षतोभीमसेनंगदाहस्तंकालमिवांतकाले ३८ निः
शल्यमेनंचचकारतूर्णमारोपयच्चात्मरथेमहात्मा भृशंपरिष्वज्यचभीमसेनमाश्वासयामासचशत्रुमध्ये ३९ भ्रातॄनथोपेत्यतवा
पिपुत्रस्तस्मिन्विमर्देसहसाभ्युवाच अयंदुरात्माद्रुपदस्यपुत्रःसमागतोभीमसेनेनसार्द्धं ४० तंयामसर्वेसहितानिहंतुंमानोरिपुः
प्रार्थयतामनीकं श्रुत्वाथवाक्यंतममृष्यमाणाज्येष्ठाज्ञयाचोदिताधार्तराष्ट्राः ४१ वधायनिष्येतुरुदायुधास्तेयुगक्षयेकेतवोयद्व
दुग्राः प्रगृह्यचित्राणिधनूंषिवीराज्यानेमिघोषैःप्रविकंपयंतः ४२ शरैरवर्षन्द्रुपदस्यपुत्रंयथांबुदाभूधरंवारिजालैः निहत्यतां
श्चापिशरैःसुतीक्ष्णैर्नविव्यथेसमरेचित्रयोधी ४३ समभ्युदीर्णांश्चतवात्मजांस्तथानिशम्यवीरानभितःस्थितान्रणे जिघांसुरु-
ग्रंद्रुपदात्मजोयुवाप्रमोहनास्त्रंयुयुजेमहारथः ४४ क्रुद्धोभृशंतवपुत्रेषुराजन्दैत्येषुयद्वत्समरेमहेंद्रः ततोव्यमुह्यंतरणेनृवी
राःप्रमोहनास्त्राहतबुद्धिसत्वाः ४५ प्रदुद्रुवुःकौरवाश्चैवसर्वेसवाजिनागाःसरथाःसमंतात् परीतकालानिवनष्टसंज्ञान्मो
होपेतांस्तवपुत्रान्निशम्य ४६ एतस्मिन्नेवकालेतुद्रोणःशस्त्रभृतांवरः द्रुपदंत्रिभिरासाद्यशरैर्विव्याधदारुणैः ४७ सोतिवि
द्धस्तदाराजन्रणाद्द्रोणेनपार्थिवः अपायाद्द्रुपदोराजन्पूर्ववैरमनुस्मरन् ४८ जित्वाद्रोणस्तुद्रुपदंशंखंदध्मौप्रतापवान् तस्य
शंखस्वनंश्रुत्वावित्रेसुःसर्वसोमकाः ४९ अथशुश्रावतेजस्वीद्रोणःशस्त्रभृतांवरः प्रमोहनास्त्रेणरणेमोहितानात्मजांस्तव ५०
ततोद्रोणोराजगृद्धीत्वरितोभ्याययौरणात् तत्रापश्यन्महेष्वासोभारद्वाजःप्रतापवान् ५१ धृष्टद्युम्नंचभीमंचविचरंतौमहारणे
मोहाविष्टांश्चतेपुत्रानपश्यत्समहारथः ५२ ततःप्रज्ञास्त्रमादायमोहनास्त्रंव्यशातयत् अथप्रत्यागतप्राणास्तवपुत्रामहारथाः ५३

४६ ४७ ४८ ४९ ५० ५१ ५२ ५३

पुनर्युद्धायसमरेप्रययुर्भीमपार्षतौ ततोयुधिष्ठिरःप्राहसमाहूयस्वसैनिकान् ५४ गच्छंतुपदवींशक्त्याभीमपार्षतयोर्युधि सौ-
भद्रप्रमुखावीरारथाद्वादशदंशिताः ५५ प्रवृत्तिमधिगच्छंतुनेहिसुध्यतिमेमनः तएवंसमनुज्ञाताःशूराविक्रांतयोधिनः ५६
बाढमित्येवमुक्त्वातुसर्वेपुरुषमानिनः मध्यंदिनगतेसूर्येप्रययुःसर्वएवहि ५७ कैकेयाद्रौपदेयाश्चधृष्टकेतुश्चवीर्यवान् अ-
भिमन्युंपुरस्कृत्यमहत्यासेनयावृताः ५८ तेकृत्वासमरेव्यूहंसूचीमुखमरिंदमाः बिभिदुर्धार्तराष्ट्राणांतद्रथानीकमाहवे ५९
तान्प्रयातान्महेष्वासानभिमन्युपुरोगमान् भीमसेनभयाविष्टाधृष्टद्युम्नविमोहिता ६० नसंधारयितुंशक्तातवसेनानराधिप
मदमूर्छान्वितात्माहिप्रमदेवाध्वनिस्थिता ६१ तेभियायमहेष्वासाःस्ववर्णविकृतध्वजाः परीप्संतोभ्यधावंतधृष्टद्युम्नवृकोद-
रौ ६२ तौचदृष्ट्वामहेष्वासानभिमन्युपुरोगमान् बभूवतुर्मुदायुक्तौनिघ्नंतौतववाहिनीं ६३ दृष्ट्वाचसहसायांतंपांचाल्योगुरुमा
त्मनः नाशंसतवधंवीरःपुत्राणांतव॰पार्षतः ६४ ततोरथंसमारोप्यकेकेयस्यवृकोदरं अभ्यधावत्सुसंक्रुद्धोद्रोणमिष्वस्त्रपा
रगं ६५ तस्यापिपततस्तूर्णंभारद्वाजःप्रतापवान् क्रुद्धश्चिच्छेदभल्लेनधनुःशत्रुनिषूदनः ६६ अन्यांश्चशतशोबाणान्प्रेषया
मासपार्षते दुर्योधनहितार्थायभर्तुःपिंडमनुस्मरन् ६७ अथान्यद्धनुरादायपार्षतःपरवीरहा द्रोणंविव्याधसप्तत्यारुक्मपुं
खैःशिलाशितैः ६८ तस्यद्रोणःपुनश्चापंचिच्छेदामित्रकर्शनः हयांश्चचतुरस्तूर्णंचतुर्भिःसायकोत्तमैः ६९ वैवस्वतक्षयंघो-
रंप्रेषयामासभारत सारथिंचास्यभल्लेनप्रेषयामासमृत्यवे ७० हताश्वात्सरथात्तूर्णमवप्लुत्यमहारथः आरुरोहमहाबा-
हुरभिमन्योर्महारथं ७१ ततःसरथनागाश्वासमकंपतवाहिनी पश्यतोभीमसेनस्यपार्षतस्यचपश्यतः ७२ तत्प्रभग्नंबलं
दृष्ट्वाद्रोणेनामिततेजसा नाशक्नुवन्वारयितुंसमस्तास्तेमहारथाः ७३ वध्यमानंतुतत्सैन्यंद्रोणेननिशितैःशरैः व्यभ्रमत्तत्र
तत्रैवक्षोभ्यमाणइवार्णवः ७४ तथादृष्ट्वाचतत्सैन्यंजहृषेचबलंतव दृष्ट्वाचार्यंचसंक्रुद्धंदहंतंरिपुवाहिनीं चुक्रुशुःसर्वतो
योधाःसाधुसाध्विविभारत ७५ इतिश्रीमन्महाभा॰भी॰सप्तसप्ततितमोऽध्यायः ७७ संजयउवाच ततोदुर्योध
नोराजामोहात्प्रत्यागतस्तदा शरवर्षैःपुनर्भीमंप्रत्यवारयदच्युतं १ एकीभूताःपुनश्चैवतवपुत्रामहारथाः समेत्यसमरेभी-
मंयोधयामासुरुद्यताः २

३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६

भीमसेनोपिसमरेसंप्राप्यस्वरथंपुनः समारुह्यमहाबाहुर्ययौयत्रतवात्मजः ३ प्रगृह्यचमहावेगःपराक्रुकरणंदृढं चित्रंशरासनंसंख्येशरैर्विव्याधतेस्रुतं ४ ततोदुर्योधनोराजन्भीमसेनंमहाबलं नाराचेनस्रुतीक्ष्णेनभृशंमर्मण्यताडयत् ५ सोतिविद्धोमहेष्वासस्तवपुत्रेणधन्विना संरक्तनयनःक्रोधाद्वेगादाकृष्यकार्मुकं ६ दुर्योधनंत्रिभिर्बाणैर्बाह्वोरुरसिचार्पयत् स तथाभिहतोराजन्नाचलद्गिरिराडिव ७ तौदृष्ट्वासमरेक्रुद्धौविनिघ्नंतौपरस्परं दुर्योधनानुजाःसर्वेशूराःसंत्यक्तजीविताः ८ संस्मृत्यमंत्रितंपूर्वंनिग्रहेभीमकर्मणः निश्चयंपरमंकृत्वानिगृहीतुंप्रचक्रमुः ९ तानापततएवाजौभीमसेनोमहाबलः अभ्युद्ययौमहाराजगजःप्रतिगजानिव १० भृशंक्रुद्धश्चतेजस्वीनाराचेनसमार्पयत् चित्रसेनंमहाराजतवपुत्रंमहायशाः ११ तथेतरांस्तवस्रुतांस्ताडयामासभारत शरैर्बहुविधैःसंख्येरुक्मपुंखैःस्रुवेगितैः १२ ततःसंस्थाप्यसमरेस्वान्यनीकानिसर्वशः अभिमन्युप्रभृतयस्तेद्वादशमहारथाः १३ प्रेषिताधर्मराजेनभीमसेनपदानुगाः प्रत्युद्ययुर्महाराजराजपुत्रान्महारथान् १४ दृष्ट्वारथस्थांस्तांश्छूरान्सूर्याग्निसमतेजसः सर्वानेवमहेष्वासान्भ्राजमानांश्छ्रियावृतान् १५ महाहवेदीप्यमानान्सुवर्णविकृतोज्वलान् तत्यजुःसमरेभीमंतवपुत्रामहाबलाः तान्नामृष्यतकौंतेयोजीवमानागताइति १६ इतिश्रीमन्महाभारतेभी० भीमयुद्धे अष्टसप्ततितमोध्यायः ७८ संजयउवाच अन्वीयचपुनःसर्वांस्तवपुत्रानपीडयत् अभिमन्युश्चसमरेभीमसेनेनसंयुतः १ पार्षतेनचसंप्रेक्ष्यतवसैन्यंमहारथः दुर्योधनप्रभृतयःप्रगृहीतशरासनाः २ भृशमश्वैःप्रजवितैःप्रययुर्यत्रतेरथाः अपराह्णेततोराजन्प्रावर्ततमहान्रणः ३ तावकानांचबलिनांपरेषांचैवभारत अभिमन्युर्विकर्णस्यहयान्हत्वामहाहवे ४ अथैनंपंचविंशत्याक्षुद्रकाणांसमाचिनोत् हताश्वंरथमुत्सृज्यविकर्णस्तुमहारथः ५ आरुरोहरथंराजंश्चित्रसेनस्यभास्वरं स्थितावेकरथेतौतुभ्रातरौकुरुवर्द्धनौ ६ आर्जुनिःशरवर्षेणछादयामासभारत दुर्जयोथविकर्णश्चकार्ष्णिंपंचभिरायसैः ७ विव्याधतेननाकंपत्कार्ष्णिर्मेरुरिवस्थितः दुःशासनस्तुसमरेकेकेयान्पंचमारिष ८ योधयामासराजेंद्रतदद्भुतमिवाभवत् द्रौपदेयारणेक्रुद्धादुर्योधनमवारयन् ९ एकैकस्त्रिभिरानर्च्छत्पुत्रंतवविशांपते पुत्रोपितवदुर्द्धर्षान्द्रौपद्यास्तनयान्रणे १० ९ ९

इतिश्रीमन्महाभा० भीमयुद्धेअष्टसप्ततितमोऽध्यायः ७८ १ २ ३ ४ ५ ६ ७ ८ ९ १०

सायकैर्निशितैराजन्नाजघानपृथक्पृथक् तैश्चापिविद्धःशुशुभेरुधिरेणसमुक्षितः ११ गिरिःप्रस्रवणैर्यद्वद्गैरिधातुविमिश्रितैः
भीष्मोपिसमरेराजन्पांडवानांवरूथिनीं १२ कालयामासबलवान्पालःपशुगणानिव ततोगांडीवनिर्घोषःप्रादुरासीद्विशांपते
१३ दक्षिणेनवरूथिन्याःपार्थस्यारीन्विनिघ्नतः उत्तस्थुःसमरेतत्रकबंधानिसहस्रशः १४ कुरूणांचापिसैन्येषुपांडवानांचभा-
रत शोणितोदंशरावर्तंगजद्वीपंहयोर्मिणं १५ रथनौभिर्नरव्याघ्राःप्रतेरुःसैन्यसागरं छिन्नहस्ताविकवचाविदेहाश्चनरोत्त
माः १६ पतितास्तत्रदृश्यंतेशतशोथसहस्रशः निहतैर्मत्तमातंगैःशोणितौघपरिप्लुतैः १७ भूर्भातिभरतश्रेष्ठपर्वतैराचितायथा
तत्राद्भुतमपश्यामतवतेषांचभारत १८ नतत्रासीत्पुमान्कश्चिद्योयोद्धुंनाभिकांक्षति एवंयुयुधिरेवीराःप्रार्थयानामहद्यशः
तावकाःपांडवैःसार्द्धंकांक्षमाणाजयंयुधि १९ इतिश्रीमन्महाभा॰भी॰संकुलयुद्धेएकोनाशीतितमोऽध्यायः ७९
संजयउवाच ततोदुर्योधनोराजालोहितायतिभास्करे संग्रामरभसोभीमंहंतुकामोभ्यधावत १ तमायांतमभिप्रेक्ष्यनृवीरं
दृढवैरिणं भीमसेनःसुसंक्रुद्धइदंवचनमब्रवीत् २ अयंसकालःसंप्राप्तोवर्षपूगाभिकांक्षितः अद्यत्वांनिहनिष्यामियदिनोत्सृ
जसेरणं ३ अद्यकुंत्याःपरिक्लेशंवनवासंचकृत्स्नशः द्रौपद्याश्चपरिक्लेशंप्रणोत्स्यामिहतेत्वयि ४ यत्पुरामत्सरोभूत्वापांडवानव
मन्यसे तस्यपापस्यगांधारेपश्यव्यसनमागतं ५ कर्णस्यमतमास्थायसौबलस्यचयत्पुरा अचिंत्यपांडवान्कामाद्यथेष्टंकृतवान-
सि ६ याचमानंचयन्मोहाद्दाशार्हमवमन्यसे उलूकस्यसमादेशंयद्ददासिचहृष्टवत् ७ तेनत्वांनिहनिष्यामिसहितंसर्वबांधवैः
शमीकरिष्येतत्पापंयत्पुराकृतवानसि ८ एवमुक्त्वाधनुर्घोरंविकृष्योद्भ्राम्यचासकृत् समादायशरान्घोरान्महाशनिसमप्रभा-
न् ९ षड्विंशत्तरसाक्रुद्धोमुमोचाशुसुयोधने ज्वलिताग्निशिखाकारान्वज्रकल्पानजिह्मगान् १० ततोस्यकार्मुकंद्वाभ्यांसू-
तंद्वाभ्यांचविव्यधे चतुर्भिर्जवनानश्वाननयद्यमसादनं ११ द्वाभ्यांचसुविकृष्टाभ्यांशराभ्यामरिमर्दनः चिच्छेदसमरेछत्रंरा-
ज्ञस्तस्यरथोत्तमात् १२ त्रिभिश्चतस्याचिच्छेदज्वलंतंध्वजमुत्तमं छित्वातंचननादोच्चैस्तवपुत्रस्यपश्यतः १३ रथाच्चसध्वजः
श्रीमान्नानारत्नविभूषितः पपातसहसाभूमौविद्युज्जलधरादिव १४ ज्वलंतंसूर्यसंकाशंनागंमणिमयंशुभं ध्वजंकुरुपतेश्छि
न्नंददृशुःसर्वपार्थिवाः १५

१६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९

अथैनंदशभिर्बाणैस्तोत्रैरिवमहागजं आजघानरणेभीमः स्मयन्निवमहारथः १६ ततस्तुराजासिंधूनांरथश्रेष्ठोमहाबलः दुर्यो
धनस्यजग्राहपार्ष्णिंसत्पुरुषैःसह १७ कृपश्चरथिनांश्रेष्ठःकौरव्यममितौजसं आरोपयद्रथंराजन्दुर्योधनममर्षणं १८ सगा
ढविद्धोव्यथितोभीमसेनेनसंयुगे निषसादरथोपस्थेराजादुर्योधनस्तदा १९ परिवार्यरणेभीमंहंतुकामोजयद्रथः रथैरनेक
साहस्रैर्भीमस्यावारयद्दिशः २० धृष्टकेतुस्ततोराजन्नभिमन्युश्चवीर्यवान् कैकेयाद्रौपदेयाश्चतवपुत्रानयोधयन् २१ चित्र
सेनःसुचित्रश्चचित्रांगश्चित्रदर्शनः सुचारुश्चारुचित्रश्चतथानंदोपनंदकौ २२ अष्टावेतेमहेष्वासाःसुकुमारायशस्विनः अ-
भिमन्युरथंराजन्समंतात्पर्यवारयन् २३ आजघानततस्तूर्णमभिमन्युर्महामनाः एकैकंपंचभिर्विद्ध्वाशरैःसन्नतपर्वभिः २४
वज्रमृत्युप्रतीकाशैर्विचित्रायुधनिःसृतैः अमृष्यमाणास्तेसर्वेसौभद्रंरथसत्तमं २५ ववर्षुर्मार्गणैस्तीक्ष्णैर्गिरिंमेरुमिवांबुदाः
सपीड्यमानःसमरेकृतास्त्रोयुद्धदुर्मदः २६ अभिमन्युर्महाराजतावकान्समकंपयत् यथादेवासुरेयुद्धेवज्रपाणिर्महासुरान्
२७ विकर्णायततश्चाभल्लान्प्रेषयामासभारत चतुर्दशरथश्रेष्ठोघोरानाशीविषोपमान् २८ सतैर्विकर्णस्यरथात्पातयामासवी
र्यवान् ध्वजंसूतंहयांश्चापंनृत्यमानइवाहवे २९ ततश्चान्यांश्छरान्पीतानकुंठाग्रानजिह्मगान् प्रेषयामाससौभद्रोविकर्णा
यमहाबलः ३० तेविकर्णंसमासाद्यकंकबर्हणवाससः भित्वादेहंगताभूमिंश्वसंतइवपन्नगाः ३१ तेशराहेमपुंखाग्राव्यदृश्यं
तमहीतले विकर्णरुधिरक्लिन्नावमंतइवशोणितं ३२ विकर्णंवीक्ष्यनिर्भिन्नंतस्यैवान्येसहोदराः अभ्यद्रवंतसमरेसौभद्रप्रमु
खान्रथान् ३३ अभियायतथैवाशुरथांस्तान्सूर्यवर्चसः अविध्यन्समरेन्योन्यंसंरब्धायुद्धदुर्मदाः ३४ दुर्मुखःश्रुतकर्माणंवि
ध्वासप्तभिराशुगैः ध्वजमेकेनचिच्छेदसारथिंचास्यसप्तभिः ३५ अश्वान्जांबूनदैर्जालैःप्रच्छन्नान्वातरंहसः जघानषड्भि-
रासाद्यसारथिंचाभ्यपातयत् ३६ सहतास्वेरथेतिष्ठंश्छ्रुतकर्मामहाबलः शक्तिंचिक्षेपसंक्रुद्धोमहोल्कांज्वलितामिव ३७ सादु
र्मुखस्यविपुलंवर्मभित्वायशस्विनः विदार्यप्राविशद्भूमिंदीप्यमानास्वतेजसा ३८ तंदृष्ट्वाविरथंतत्रसुतसोमोमहाबलः पश्य-
तांसर्वसैन्यानांरथमारोपयत्स्वकम् ३९ श्रुतकीर्तिर्महावीरोजयत्सेनंसुतंतव अभ्ययात्समरेराजन्हंतुकामोयशस्विनं ४०

३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२

तस्यविक्षिपतश्चापंश्रुतकीर्तेर्महात्मनः चिच्छेदसमरेराजन्जयसेनःकृतस्तव ४१ क्षुरप्रेणसुतीक्ष्णेनप्रहसन्निवभारत तंदृ
ष्ट्वाच्छिन्नधन्वानंशतानीकःसहोदरं ४२ अभ्यपद्यततेजस्वीसिंहवद्विनदन्मुहुः शतानीकस्ततःसमरेदृढंविस्फार्यकार्मुकं ४३ वि
व्याधदशभिस्तूर्णंजयसेनंशिलीमुखैः ननादसुमहानादंप्रभिन्नइववारणः ४४ अथान्येनसुतीक्ष्णेनसर्वावरणभेदिना ज-
यसेनंशतानीकोविव्याधसमरेभृशं ४५ तथातस्मिन्वर्तमानेदुष्कर्णोभ्रातुरंतिके चिच्छेदसशरंचापंनाकुलेःक्रोधमूर्छितः ४६
अथान्यद्धनुरादायभारसाधनमुत्तमं समादत्तशरान्घोरांश्छतानीकोमहाबलः ४७ तिष्ठतिष्ठेतिचामंत्र्यदुष्कर्णंभ्रातुरग्रतः मु
मोचास्मैशितान्बाणान्ज्वलितान्पन्नगानिव ४८ ततोस्यधनुरेकेनद्वाभ्यांसूतंचमारिष चिच्छेदसमरेतूर्णंतंचविव्याधसप्त-
भिः ४९ अश्वान्मनोजवांस्तस्यकल्माषान्वीतकल्मषः जघाननिशितैस्तूर्णंसर्वान्द्वादशभिःशरैः ५० अथापरेणभल्लेनसुयुक्ते
नारिघातिना दुष्कर्णंसमरेराजन्क्रुद्धोविव्याधपत्रिणा ५१ सपपाततनोभूमौवज्ररुग्ण इवद्रुमः दुष्कर्णंनिहतंदृष्ट्वापंचराज
न्महारथाः ५२ जिघांसंतःशतानीकंसमंतात्पर्यवारयन् छाद्यमानंशरव्रातैःशतानीकंयशस्विनं ५३ अभ्यधावंतसंक्रुद्धाःकै
केयाःपंचसोदराः तानभ्यापततःप्रेक्ष्यतवपुत्रामहारथान् ५४ प्रत्युद्ययुर्महाराजगजाइवमहागजान् दुर्मुखोदुर्जयश्चैवत
थादुर्धर्षणोयुवा ५५ शत्रुंजयःशत्रुसहःसर्वेक्रुद्धायशस्विनः प्रत्युद्याताममहाराजकैकेयान्भ्रातरःसमं ५६ रथैर्नगरसंका
शैर्हयैर्युक्तैर्मनोजवैः नानावर्णविचित्राभिःपताकाभिरलंकृतैः ५७ वरचापधरावीराविचित्रकवचध्वजाः विविशुस्तेपरंसै-
न्यंसिंहाइववनाद्वनं ५८ तेषांसुतुमुलंयुद्धंव्यतिषक्तरथद्विपं अवर्ततमहारौद्रंनिघ्नतामितरेतरं ५९ अन्योन्यागस्कृतांरा
जन्यमराष्ट्रविवर्द्धनं मुहूर्तास्तमितेसूर्येचक्रुर्युद्धंसुदारुणं ६० रथिनःसादिनश्चैवव्यकीर्यंतसहस्रशः ततःशांतनवःक्रुद्धःशरैः
सन्नतपर्वभिः ६१ नाशयामासतांसेनांभीष्मस्तेषांमहात्मनां पांचालानांचसैन्यानिशरैर्निन्येयमक्षयं ६२ एवंभित्वामहेष्वासः
पांडवानामनीकिनीं कृत्वावहारंसैन्यानांययौस्वशिबिरंप्रति ६३ धर्मराजोपिसंप्रेक्ष्यधृष्टद्युम्नवृकोदरौ मूर्ध्निचैनावुपाघ्रायसं
हृष्टःशिबिरंययौ ६४ इतिश्रीमन्महाभारतेभीष्मप॰ षष्ठमदिवसयुद्धसमाप्तिर्नामअशीतितमोऽध्यायः ८० ६९

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५

संजयउवाच अथशूरामहाराजपरस्परकृतागसः जग्मुःस्वशिबिराण्येवरुधिरेणसमुक्षिताः १ विश्रम्यचयथान्यायंपू-
जयित्वापरस्परं सन्नद्धाःसमदृश्यनभूयोयुद्धचिकीर्षया २ ततस्तवसुतोराजंश्चिंतयाभिपरिप्लुतः प्रस्रवच्छोणिताक्तांगंप-
प्रच्छेदंपितामहं ३ सैन्यानिघोराणिभयानकानिव्यूढानिसम्यग्बहुलध्वजानि विदार्यहत्वाचनिपीड्यशूरास्तेपांडवानांत्वरि
तामहारथाः ४ संमोह्यसर्वान्युधिकीर्तिमंतोव्यूहंत्वतन्मकरंवज्रकल्पं प्रविश्यभीमेननिबर्हितोस्मिघोरैःशरैर्मृत्युदंडप्रकाशैः
५ क्रुद्धंसमुद्वीक्ष्यभयेनराजन्संमूर्च्छितोनलभेशांतिमद्य इच्छेप्रसादात्तवसत्यसंधप्राप्तुंजयंपांडवेयांश्चहंतुं ६ तेनैवमुक्तः
प्रहसन्महात्मादुर्योधनंजातमन्युंविदित्वा तंप्रत्युवाचाविमनामनस्वीगंगासुतःशस्त्रभृतांवरिष्ठः ७ परेणयत्नेनविगाह्यसेनां
सर्वात्मनाहंतवराजपुत्र इच्छामिदातुंविजयंसुखंचनचात्मानंछादयेहंत्वदर्थे ८ एतेतुरौद्राबहवोमहारथायशस्विनःशूरत
माःकृतास्त्राः येपांडवानांसमरेसहायाजितक्लमाःक्रोधविषंवमंतः ९ तेनेहशक्याःसहसाविजेतुंवीर्योन्नताःकृतवैरास्त्वया-
च अहंह्येतान्प्रतियोत्स्यामिराजन्सर्वात्मनाजीवितंत्यज्यवीर १० रणेतवार्थायमहानुभावनजीवितंरक्षितव्यंमयाद्य सर्वा-
स्तवार्थायसदेवदैत्यांल्लोकान्दहेयंकिमुशत्रूंस्तवेह ११ तान्पांडवान्योधयिष्यामिराजन्प्रियंचतेसर्वमहंकरिष्ये श्रुत्वैवमेतत्प
रमप्रतीतोदुर्योधनःशांतमनेबभूव १२ सर्वाणिसैन्यानिततःप्रहृष्टोनिर्गच्छतेत्याहनृपांश्चसर्वान् तदाज्ञयातातविनिर्ययुर्द्रुतं
रथाश्वपादातगजायुतानि १३ प्रहर्षयुक्तानितुनानिराजन्महांतिनानायुधशस्त्रवंति स्थितानिनागाश्वपदातिमंतिविरेजुराजौ
तवराजन्बलानि १४ वृंदैःस्थिताश्चापिसुसंप्रयुक्ताश्चकाशिरेदंतिगणाःसमंतात् शस्त्रास्त्रविद्भिर्नरदेवयोधैरनुष्ठिताःसैन्यग-
णास्त्वदीयाः १५ रथैश्चपादातगजाश्वसंघैःप्रयाद्भिराजौविधिवत्प्रणुन्नैः समुद्धृतंतैस्तरुणार्कवर्णंरजोबभौ छादयत्सूर्यरश्मी
न् १६ रेजुःपदातारथदंतिसंस्थावातेरिताभ्राम्यमाणाःसमंतात् नानारंगाःसमरेतत्रराजन्मेघैर्युक्ताविद्युतःखेयथैव १७ धनूं-
षिविस्फारयतांनृपाणांबभूवशब्दस्तुमुलोऽतिघोरः निर्मथ्यतोदेवमहासुरौघैर्यथार्णवस्यादियुगेतदानीं १८ तदुग्रनादंबहुव-
र्णरूपंतवात्मजानांसमुदीर्णवर्णं बभूवसैन्यंरिपुसैन्यहंतृयुगांतमेघौघनिभंतदानीं १९ इतिश्रीम० भी० भीष्मदुर्योधनसंवा
देएकाशीतितमोऽध्यायः ८१ १६ १७ १८ १९

संजयउवाच अथात्मजंतवपुनर्गांगेयोध्यानमास्थितं अब्रवीद्भरतश्रेष्ठसंप्रहर्षकरंवचः १ अहंद्रोणश्चशल्यश्चकृतवर्माच-
सात्वतः अश्वत्थामाविकर्णश्चसोमदत्तोथसैंधवैः २ विंदानुविंदावावंत्यौबाल्हिकःसहबाल्हिकैः त्रिगर्तराजोऽथबलीमागधश्च
कृदुर्जयः ३ बृहद्बलश्चकौशल्यश्चित्रसेनोविविंशतिः रथाश्चबहुसाहस्राःशोभमानामहाध्वजाः ४ देशजाश्चहयाराजन्सारू-
ढाहयसादिभिः गजेंद्राश्चमदोन्नद्धाःप्रभिन्नकरटामुखाः ५ पादाताश्चरथाःशूरानानाप्रहरणायुधाः नानादेशसमुत्पन्नास्त्व
दर्थेयोद्धुमुद्यताः ६ एतेचान्येचबहवस्त्वदर्थेत्यक्तजीविताः देवानपिरणेजेतुंसमर्थाइतिमेमतिः ७ अवश्यंतुमयाराजंस्तव
वाच्यंहितंसदा अशक्याःपांडवाजेतुंदेवैरपिसवासवैः ८ वासुदेवसहायाश्चमहेंद्रसमविक्रमाः सर्वथाऽहंतुराजेंद्रकरिष्ये
वचनंतव ९ पांडवान्वारणेजेष्येमांवाजेष्यंतिपांडवाः एवमुक्त्वाददौचास्मैविशल्यकरणींशुभां १० ओषधींवीर्यसंपन्नांविश
ल्यश्चाभवत्तदा ततःप्रभातेविमलेस्वेनसैन्येनवीर्यवान् ११ अव्यूहतस्वयंव्यूहंभीष्मोव्यूहविशारदः मंडलंमनुजश्रेष्ठोनानाश
स्त्रसमाकुलं १२ संपूर्णंयोधमुख्यैश्चतथादंतिपदातिभिः रथैरनेकसाहस्रैःसमंतात्परिवारितं १३ अश्ववृंदैर्महद्भिश्चऋष्टितो
मरधारिभिः नागेनागेरथाःसप्तसप्तचाश्वारथेरथे १४ अन्वश्वंदशधानुष्काधानुष्केसप्तचारिणः एवंव्यूढंमहाराजतवसै-
न्यंमहारथैः १५ स्थितंरणायमहतेभीष्मेणयुधिपालितं दशाश्वानांसहस्राणिदंतिनांचतथैवच १६ रथानामयुतंचापिपु
त्राश्चतवदंशिताः चित्रसेनादयःशूराअभ्यरक्षन्पितामहं १७ रक्ष्यमाणश्चतैःशूरैर्गोप्यमानाश्चतेनते सन्नद्धाःसमदृश्यं
तराजानश्चमहाबलाः १८ दुर्योधनस्तुसमरेदंशितोरथमास्थितः व्यभ्राजतश्रियाजुष्टोयथाशक्रस्त्रिविष्टपे १९ ततःश-
ब्दोमहानासीत्पुत्राणांतवभारत रथघोषश्चविपुलोवादित्राणांचनिस्वनः २० भीष्मेणधार्तराष्ट्राणांव्यूढःप्रत्यङ्मुखोयुधि
मंडलःसमहाव्यूहोदुर्भेद्योमित्रघातिनां २१ सर्वतःशुशुभेराजन्रणेरीणांदुरासदः मंडलंतुसमालोक्यव्यूहंपरमदारुणं
२२ स्वयंयुधिष्ठिरोराजाव्यूहंवज्रमथाकरोत् तथाव्यूढेष्वनीकेषुयथास्थानमवस्थिताः २३ रथिनःसादिनश्चैवसिंहनादमथा
नदन् बिभित्सवस्ततोव्यूहंनिर्ययुर्युद्धकांक्षिणः २४ इतरेतरयोःशूराःसहसैन्याःप्रहारिणः भारद्वाजोययौमत्स्यंद्रौणिश्चापिशि-
खंडिनं २५

२६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९

स्वयंदुर्योधनोराजापार्षतंसमुपाद्रवत् नकुलःसहदेवश्चराजन्मद्रेशमीयतुः २६ विंदानुविंदावावंत्योयुधामन्युमभिद्रुतो सर्वे
नृपास्तसमरेधनंजयमयोधयन् २७ भीमसेनंरणेयत्तोहार्दिक्यःसमवारयत् चित्रसेनंविकर्णंचतथादुर्मर्षणंविभुः २८ आ
र्जुनिःसमरेराजं स्तवपुत्रानयोधयत् प्राग्ज्योतिषंतुराजानंहैडिंबोराक्षसोत्तमः २९ अभिदुद्राववेगेनमत्तोमत्तमिवद्विपं अ
लंबुषस्तदाराजन्सात्यकिंयुद्धदुर्मदं ३० ससैन्यंसमरेक्रुद्धोराक्षसःसमभिद्रवत् भूरिश्रवारणेयत्तोधृष्टकेतुमयोधयत्
३१ श्रुतायुषंतुराजानंधर्मपुत्रोयुधिष्ठिरः चेकितानश्चसमरेकृपमेवान्वयोधयत् ३२ शेषाःप्रतिययुर्यत्ताभीमसेनंमहा
रथं ततोराजसहस्राणिपरिवव्रुर्धनंजयं ३३ शक्तितोमरनाराचगदापरिघपाणयः अर्जुनस्तभृशंक्रुद्धोवार्ष्णेयमिदमब्र-
वीत् ३४ पश्यमाधवसैन्यानिधार्तराष्ट्रस्यसंयुगे व्यूढानिव्यूहविदुषागांगेयेनमहात्मना ३५ युद्धाभिकामांश्छूरांश्चपश्य-
माधवदंशितान् त्रिगर्तराजंसहितंभ्रातृभिःपश्यकेशव ३६ अद्यैतान्घातयिष्यामिपश्यतस्तेजनार्दन यइमेमांयदुश्रेष्ठ-
योद्धुकामारणाजिरे ३७ एतावदुक्त्वाकौंतेयोधनुर्ज्यामवमृज्यच ववर्षशरवर्षाणिनराधिपगणान्प्रति ३८ तेपितंपरमेष्वा-
साःशरवर्षैरपूरयन् तडागंवारिधाराभिर्यथाप्रावृषितोयदाः ३९ हाहाकारोमहानासीत्तवसैन्येविशांपते छाद्यमानोभृशं
कृष्णोशरैर्दृष्ट्वामहारणे ४० देवादेवर्षयश्चैवगंधर्वाश्चमहोरगाः विस्मयंपरमंजग्मुर्दृष्ट्वाकृष्णोतथाचितौ ४१ ततःक्रुद्धो
र्जुनोराजन्नैंद्रमस्त्रमुदैरयत् तत्राद्भुतमपश्यामविजयस्यपराक्रमं ४२ शस्त्रवृष्टिंपरैर्मुक्तांशरौघैर्यदवारयत् नचशस्त्रैर
निर्भिन्नःकश्चिदासीद्विशांपते ४३ एषांराजसहस्राणांहयानांदंतिनांतथा द्वाभ्यांशरैस्त्रिभिश्चान्यान्पार्थोविव्याधमा-
रिष ४४ तेहन्यमानाःपार्थेनभीष्मंशांतनवंययुः अगाधेमज्जमानानांभीष्मस्त्रातातदाभवत् ४५ आपतद्भिश्चतैस्तत्रप्र
भग्नंतावकंबलं संचुक्षुभेमहाराजवातैरिवमहार्णवः ४६ इतिश्रीमन्महाभा०भी०सप्तमदिवसयुद्धारंभेद्व्यशीतितमोऽ
ध्यायः ८२ संजयउवाच तथाप्रवृत्तेसंग्रामेनिवृत्तेचसुशर्मणि प्रभग्नेषुचवीरेषुपांडवेनमहात्मना १ क्षुभ्यमाणे-
बलेतूर्णंसागरप्रतिमेतव प्रत्युद्यातेचगांगेयेत्वरितंविजयंप्रति २ दृष्ट्वादुर्योधनोराजन्रणेपार्थस्यविक्रमं त्वरमाणःसम-
भ्येत्यसर्वांस्तानब्रवीन्नृपान् ३ ४० ४१ ४२ ४३ ४४ ४५ ४६ इतिश्रीमन्म०भी०द्व्यशीतितमोऽध्यायः ८२ १ २ ३

तेषांचप्रमुखेशूरंस्कशर्माणंमहाबलं मध्येसर्वस्यसैन्यस्यभृशंसंहर्षयन्नथ ४ एषभीष्मःशांतनवोयोद्धुकामोधनंजयं सर्वात्मनाकुरुश्रेष्ठस्त्यक्त्वाजीवितमात्मनः ५ तंप्रयांतंपरान्वीरान्सर्वसैन्येनभारत संयत्ताःसमरेसर्वेपालयध्वंपितामहं ६ बाढमित्येवसुक्त्वातुतान्यनीकानिसर्वशः नरेंद्राणांमहाराजअनुजग्मुःपितामहं ७ ततःप्रयातःसहसाभीष्मःशांतनवोर्जुनं रणेभारतमायांतमाससादमहाबलं ८ महाश्वेताश्वयुक्तेनभीमवानरकेतुना महतामेघनादेनरथेनातिविराजता ९ समरेसर्वसैन्यानामुपयातंधनंजयं अभवत्तुमुलोनादोभयाद्दृष्ट्वाकिरीटिनं १० अभीषुहस्तंकृष्णंचदृष्ट्वादित्यमिवापरं मध्यंदिनगतेसूर्येनशेकुरभिवीक्षितुं ११ तथाशांतनवंभीष्मंश्वेताश्वंश्वेतकार्मुकं नशेकुःपांडवाद्रष्टुंश्वेतंग्रहमिवोदितं १२ ससर्वतःपरिवृतस्त्रिगर्तैःस्वमहात्मभिः भ्रातृभिस्तवपुत्रैश्चतथान्यैश्चमहारथैः १३ भारद्वाजस्तुसमरेभृशंविव्याधपत्रिणा ध्वजंचास्यशरेणाजौधनुश्चैकेनचिच्छिदे १४ तदपास्यधनुश्छिन्नंविराटोवाहिनीपतिः अन्यदादत्तवेगेनधनुर्भारसहंदृढम् १५ शरांश्चाशीविषाकारान्ज्वलितान्पन्नगानिव द्रोणंत्रिभिःप्रविव्याधचतुर्भिश्चास्यवाजिनः १६ ध्वजमेकेनविव्याधसारथिंचास्यपंचभिः धनुश्चैकेषुणाविध्यत्तत्राक्रुध्यद्द्विजर्षभः १७ तस्यद्रोणोवधीदश्वांश्छरैःसन्नतपर्वभिः अष्टाभिर्भरतश्रेष्ठसूतमेकेनपत्रिणा १८ सहताश्वादवप्लुत्यस्यंदनाद्धतसारथिः आरुरोहरथंतूर्णंपुत्रस्यरथिनांवरः १९ ततस्तौतुपितापुत्रौभारद्वाजंरथेस्थितौ महताशरवर्षेणवारयामासतुर्बलात् २० भारद्वाजस्ततःक्रुद्धःशरमाशीविषोपमं चिक्षेपसमरेतूर्णंशंखंप्रतिजनेश्वर २१ सतस्यहृदयंभित्वापीत्वाशोणितमाहवे जगामधरणींबाणोलोहितार्द्रकृतच्छविः २२ सपपातरणेतूर्णंभारद्वाजशराहतः हित्वाधनुःशरांश्चैवपितुरेवसमीपतः २३ हतंस्वमात्मजंदृष्ट्वाविराटःप्राद्रवद्भयात् उत्सृज्यसमरेद्रोणंव्यात्ताननमिवांतकं २४ भारद्वाजस्ततस्तूर्णंपांडवानांमहाचमूं वारयामाससमरेशतशोथसहस्रशः २५ शिखंड्यपिमहाराजद्रोणिमासाद्यसंयुगे आजघानभ्रुवोर्मध्येनाराचैस्त्रिभिराशुगैः २६ सबभौनरशार्दूलोललाटेसंस्थितैस्त्रिभिः शिखरैःकांचनमयैर्मेरुस्त्रिभिरिवोच्छ्रितैः २७ अश्वत्थामाततःक्रुद्धोनिमेषार्द्धाच्छिखंडिनः सूतंरथमथोराजंस्तूरगानायुधंध्वजं २८

२९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१

शरैर्बहुभिराच्छिद्यपातयामाससंयुगे सहताश्वाद्वरूथुत्यरथाद्वैरथिनांवरः २९ खड्गमादायनिशितंविमलंचशरावरं श्येनव
द्विचरन्क्रुद्धः शिखंडीशत्रुतापनः ३० सखड्गस्यमहाराजचरतस्तस्यसंयुगे नांतरंददृशेद्रौणिस्तदद्भुतमिवाभवत् ३१ त-
तःशरसहस्राणिबहूनिभरतर्षभ प्रेषयामाससमरेद्रौणिःपरमकोपनः ३२ तामापतंतींसमरेशरवृष्टिंसुदारुणां असि
नातीक्ष्णधारेणचिच्छेदबलिनांवरः ३३ ततोस्यविमलंद्रौणिःशतचंद्रंमनोरमं चर्मांच्छिनदसिंचास्यखंडयामाससंयुगे
३४ शरैश्चबहुशोराजंस्तंचविव्याधपत्रिभिः शिखंडीतुततःखड्गंखंडितंतेनसायकैः ३५ आविध्यव्यसृजत्तूर्णंज्वलंतमि
वपन्नगं तमापतंतंसहसावज्राशनिसमस्वनं ३६ चिच्छेदसमरेद्रौणिर्दर्शयन्पाणिलाघवं शिखंडिनंचविव्याधशरैर्बहु
भिरायसैः ३७ शिखंडीतुभृशंराजंस्ताड्यमानःशितैःशरैः आरुरोहरथंतूर्णंमाधवस्यमहात्मनः ३८ सात्यकिश्चापिसं
क्रुद्धोराक्षसंतंमहाहवे अलंबुषंशरैर्घोरैर्विव्याधबलिनंबली ३९ राक्षसेंद्रस्ततस्तस्यधनुश्चिच्छेदभारत अर्धचंद्रेणस
मरेतंचविव्याधसायकैः ४० मायांचराक्षसींकृत्वाशरवर्षैरवाकिरत् तत्राद्भुतमपश्यामशैनेयस्यपराक्रमं ४१ नासंभ्रम
द्यत्समरेवध्यमानःशितैःशरैः ऐंद्रमस्त्रंचवार्ष्णेयोयोजयामासभारत ४२ विजयाद्यदनुप्राप्तंमाधवेनमहात्मना तदस्त्रं
भस्मसात्कृत्वामायांतांराक्षसींतदा ४३ अलंबुषंशरैर्घोरैरभ्याकिरतसर्वशः पर्वतंवारिधाराभिःप्रावृषीवबलाहकः ४४
तंतथापीडितंतेनमाधवेनयशस्विना प्रदुद्रावभयाद्रक्षोहित्वासात्यकिमाहवे ४५ तमजेयंराक्षसेंद्रंसंख्येमघवताअपि शैनेयः
प्राणदज्जित्वायोधानांतवपश्यतां ४६ अवधीत्तावकांश्चापिसात्यकिःसत्यविक्रमः निशितैर्बहुभिर्बाणैस्तेद्रवंतभयार्दिताः
४७ एतस्मिन्नेवकालेतुद्रुपदस्यात्मजोबली धृष्टद्युम्नोमहाराजतवपुत्रंजनेश्वरं ४८ छादयामाससमरेशरैःसन्नतपर्वभिः
सं छाद्यमानोविशिखैर्धृष्टद्युम्नेनमारिष ४९ विव्यथेनचराजेंद्रतवपुत्रोजनेश्वरः धृष्टद्युम्नंचसमरेतूर्णंविव्याधपत्रिभिः
५० षष्ट्याचत्रिंशताचैवतदद्भुतमिवाभवत् तस्यसेनापतिःक्रुद्धोधनुश्चिच्छेदमारिष ५१ हयांश्चचतुरःशीघ्रंनिजघानमहाब-
लः शरैश्चैनंसुनिशितैःक्षिप्रंविव्याधसप्तभिः ५२ सहताश्वान्महाबाहुरवप्लुत्यरथाद्बली पदातिरसिमुद्यम्यप्राधावत्पार्षतंप्रति
५३

४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४

शकुनिस्तुसमभ्येत्यराजगृद्धीमहाबलः राजानंसर्वलोकस्यरथमारोपयत्स्वकं ५४ ततोनृपंपराजित्यपार्षतःपरवीरहा निज घ्नेतावकंसैन्यंवज्रपाणिरिवासुरान् ५५ कृतवर्मारणेभीमंशरैरार्छन्महारथं प्रच्छादयामासचतंमहामेघोरविंयथा ५६ ततःप्रहस्यसमरेभीमसेनःपरंतपः प्रेषयामाससंक्रुद्धःसायकान्कृतवर्मणे ५७ तैर्हन्यमानोनिरथःसात्वतःशस्त्रकोविदः नाकंपतमहाराजभीमसमार्छच्छितैःशरैः ५८ तस्याश्वांश्चतुरोहत्वाभीमसेनोमहाबलः सारथिंपातयामासध्वजंचसुपरिष्कृतं ५९ शरैर्बहुविधैश्चैनमाचिनोत्परवीरहा शकलीकृतसर्वांगश्वाविद्धःसमदृश्यत ६० हताश्वाच्चरथात्तूर्णंवृषकस्यरथंययौ श्यालस्यतेमहाराजतवपुत्रस्यपश्यतः ६१ भीमसेनोपिसंक्रुद्धस्तवसैन्यंसमाद्रवत् निजघानचसंक्रुद्धोदंडपाणिरिवांतकः ६२ इतिश्रीमन्महाभा॰ भी॰ द्वैरथयुद्धेत्र्यशीतितमोऽध्यायः ८३ धृतराष्ट्रउवाच सुबहूनिविचित्राणि द्वैरथानिचसंजय पांडूनांमामकैःसार्द्धमश्रौषंतवजल्पतः १ नचैवमामकंकंचिद्धृष्टंशंससिसंजय नित्यंपांडुसुतान्हृष्टा नभग्नांश्चैवशंससि २ जीयमानान्विमनसोमामकान्विगतौजसः वदसेसंयुगेसूतदिष्टमेवनसंशयः ३ संजयउवाच यथाशक्तियथोत्साहंयुद्धेचेष्टंतितावकाः दर्शयंतःपरंशक्त्यापौरुषंपुरुषर्षभाः ४ गंगायाःसुरनद्यावैस्वादुभूतंयथोदकं महोदधिगुणाभ्यासाल्लवणत्वंनियच्छति ५ तथातत्पौरुषंराजंस्तावकानांमहात्मनां प्राप्यपांडुसुतान्वीरान्व्यर्थीभवतिसंयुगे ६ घटमानान्यथाशक्तिकुर्वाणान्कर्मदुष्करं नदोषेणकुरुश्रेष्ठस्वान्योधान्गंतुमर्हसि ७ तवापराधात्सुमहान्सपुत्रस्यविशांपते पृथिव्याःप्रक्षयोघोरोयमराष्ट्रविवर्द्धनः ८ आत्मदोषात्समुत्पन्नंशोचितुंनार्हसेनृप नहिरक्षंतिराजानःसर्वथात्रापिजीवितं ९ युद्धेनसुकृतांल्लोकानिच्छंतिवसुधाधिपाः चमूंविगाह्ययुध्यंतिनित्यंस्वर्गपरायणाः १० पूर्वाण्हेतुमहाराजप्रावर्ततजनक्षयः तन्ममैकमनाभूत्वाशृणुदेवासुरोपमं ११ आवंत्यौतुमहेष्वासौमहात्मानौमहाकृती इरावंतमभिप्रेक्ष्यसमेयातांरणोत्कटौ १२ तेषांप्रववृतेयुद्धंतुमुलंलोमहर्षणम् इरावांस्तुसुसंक्रुद्धोभ्रातरौदेवरूपिणौ १३ विव्याधनिशितैस्तूर्णंशरैःसन्नतपर्वभिः तावेनंप्रत्यविध्येतांसमरेचित्रयोधिनौ १४ ५ ७ ५

युध्यतांहितनोराजन्विशेषोनस्मदृश्यते यततांशत्रुनाशायकृतप्रतिकृतैषिणां १५ इरावांस्तुरणेराजन्ननुविंदस्यसायकैः च
तुर्भिश्चतुरोवाहाननयद्यमसादनं १६ भल्लाभ्यांचसुतीक्ष्णाभ्यांधनुःकेतुंचमारिष चिच्छेदसमरेराजंस्तदद्भुतमिवाभवत् १७
त्यक्त्वानुविंदोथरथंविंदस्यरथमास्थितः धनुर्गृहीत्वासुदृढंभारसाहमनुत्तमम् १८ तावेकस्थौरणेवीरावावंत्यौबलिनांवरौ
शरान्मुमुचतुस्तूर्णमिरावतिमहात्मनि १९ ताभ्यांमुक्तामहावेगाःशराःकनकभूषणाः दिवाकररथंप्राप्यच्छादयामासुरंब
रं २० इरावांस्तुरणेक्रुद्धोभ्रातरौतौमहारथौ ववर्षशरवर्षेणसारथिंचाभ्यपातयत् २१ तस्मिन्निपतितेराजन्गतसत्वेथसार
थौ रथःप्रदुद्रावदिशःसमुद्भ्रांतहयस्ततः २२ तौसजित्वामहाराजनागराजसुतासुतः पौरुषंख्यापयंस्तूर्णंव्यधमत्तववाहि
नीं २३ साबध्यमानासमरेधार्तराष्ट्रीमहाचमूः वेगान्बहुविधांश्चक्रेविषंपीत्वेवमानवः २४ हैडिंबोराक्षसेंद्रस्तुभगदत्तंसमा-
द्रवत् रथेनादित्यवर्णेनसध्वजेनमहाबलः २५ ततःप्राग्ज्योतिषोराजानागराजंसमास्थितः यथावज्रधरःपूर्वंसंग्रामेतार-
कामये २६ तत्रदेवाःसगंधर्वाऋषयश्चसमागताः विशेषंनस्मविविदुर्हैडिंबभगदत्तयोः २७ यथासुरपतिःशक्रस्त्रासयामास-
दानवान् तथैवसमरेराजाद्रावयामासपांडवान् २८ तेनविद्राव्यमाणास्तेपांडवाःसर्वतोदिशं त्रातारंनाभ्यविंदंतस्वेष्वनीके
षुभारत २९ भैमसेनिंरथस्थंतुतत्रापश्यामभारत शेषाविमनसोभूत्वाप्राद्रवंतमहारथाः ३० निवृत्तेषुतुपांडूनांपुनःसैन्येषु
भारत आसीन्निष्टानकोघोरस्तवसैन्यस्यसंयुगे ३१ घटोत्कचस्ततोराजन्भगदत्तंमहारणे शरैःप्रच्छादयामासमेरुंगिरिमिवां
बुदः ३२ निहत्यतांश्छरान्राजाराक्षसस्यधनुश्च्युतान् भैमसेनिंरणेतूर्णंसर्वमर्मस्वताडयत् ३३ सताड्यमानोबहुभिःशरैःस
न्नतपर्वभिः नविव्यथेराक्षसेंद्रोभिद्यमानइवाचलः ३४ तस्यप्राग्ज्योतिषःक्रुद्धस्तोमरान्सचतुर्दश प्रेषयामाससमरेतांश्च
चिच्छेदराक्षसः ३५ सतांश्छित्वामहाबाहुस्तोमरान्निशितैःशरैः भगदत्तंचविव्याधसप्तत्याकंकपत्रिभिः ३६ ततःप्राग्ज्यो
तिषोराजाप्रहसन्निवभारत तस्याश्वांश्चतुरोराजन्पातयामाससायकैः ३७ सहताश्वेरथेतिष्ठन्राक्षसेंद्रःप्रतापवान् श-
क्तिंचिक्षेपवेगेनप्राग्ज्योतिषगजंप्रति ३८ तामापतंतींसहसाहेमदंडांप्रवेगितां त्रिधाचिच्छेदनृपतिःसात्वकीर्यतमेदिनीं ३९

शक्तिंविनिहतांदृष्ट्वाहैडिंबःप्राद्रवद्भयात् यथेंद्रेणरणेपूर्वंनमुचिर्दैत्यसत्तमः ४० नंविजित्यरणेशत्रुंविक्रांतंरव्यातपौरुषं अजे
यसमरेराजन्यमेनवरुणेनच ४१ पांडवींसमरेसेनांसंममर्दसकुंजरः यथावनगजोराजन्मृद्नंश्चरतिपद्मिनीं ४२ मद्रेश्वरश्च
समरेयमाभ्यांसहसंगतः स्वस्त्रीयौछादयांचक्रेशरौघैःपंडुनंदनौ ४३ सहदेवस्तुसमरेमातुलंदृश्यसंगतं अवारयच्छ-
रौघेणमेघोयद्वद्दिवाकरं ४४ छाद्यमानःशरौघेणहृष्टरूपतरोभवत् तयोश्चाप्यभवत्प्रीतिरतुलामातृकारणात् ४५ ततः
प्रहस्यसमरेनकुलस्यमहारथः अश्वान्वैचतुरोराजश्चतुर्भिःसायकोत्तमैः ४६ प्रेषयामाससमरेयमस्यसदनंप्रति हताश्वा
त्तुरथात्तूर्णमवप्लुत्यमहारथः ४७ आरुरोहततोयानंभ्रातुरेवयशस्विनः एकस्थौतुरणेशूरौदृढेविक्षिप्यकार्मुके ४८ म-
द्रराजरथंक्रुद्धौछादयामासतुःक्षणात् संच्छाद्यमानोबहुभिःशरैःसन्नतपर्वभिः ४९ स्वस्त्रीयाभ्यांनरव्याघ्रोनाकंपतयथा
चलः प्रहसन्निवतांचापिशरवृष्टिंजघानह ५० सहदेवस्ततःक्रुद्धःशरमुद्यम्यवीर्यवान् मद्रराजमभिप्रेक्ष्यप्रेषयामासभार-
त ५१ सशरःप्रेषितस्तेनगरुत्मानिववेगवान् मद्रराजंविनिर्भिद्यनिपपातमहीतले ५२ सगाढविद्धोव्यथितोरथोपस्थेमहार-
थः निषसादमहाराजकश्मलंचजगामह ५३ तंविसंज्ञंनिपतितंसूतःसंप्रेक्ष्यसंयुगे अपोवाहरथेनाजौयमाभ्यामतिपीडि
तं ५४ दृष्ट्वामद्रेश्वररथंधार्तराष्ट्राःपराङ्मुखं सर्वेविमनसोभूत्वानेदमस्तीत्यचिंतयन् ५५ निर्जित्यमातुलंसंख्येमाद्रीपुत्रौ
महारथौ दध्मतुर्मुदितौशंखौसिंहनादंविनेदतुः ५६ अभ्यद्रवेतांसंहृष्टौतवसैन्यंविशांपते यथादैत्यचमूंराजन्निंद्रोपेंद्रा
विवामरौ ५७ इतिश्रीमन्महाभारतेभी॰ द्वंद्वयुद्धेचतुरशीतितमोऽध्यायः ८४ संजयउवाच ततोयुधिष्ठिरोरा-
जामध्यंप्राप्तेदिवाकरे श्रुतायुषमभिप्रेक्ष्यचोदयामासवाजिनः १ अभ्यधावत्ततोराजाश्रुतायुषमरिंदमं विनिघ्नन्साय
कैस्तीक्ष्णैर्नवभिर्नतपर्वभिः २ ससंवार्यरणेराजन्प्रेषितोधर्मसूनुना शरान्सप्तमहेष्वासःकौंतेयायसमार्पयत् ३ तेत-
स्यकवचंभित्वापपुःशोणितमाहवे असूनिवविचिन्वंतोदेहेतस्यमहात्मनः ४ पांडवस्तुभृशंविद्धस्तेनराज्ञामहात्मना
रणेवराहकर्णेनराजानंहृद्यधिविव्यधे ५ अथापरेणभल्लेनकेतुंतस्यमहात्मनः रथश्रेष्ठोरथात्तूर्णंभूमौपार्थोन्यपातयत् ६

७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१

केतुंनिपतितंदृष्ट्वाश्रुतायुःसतुपार्थिवः पांडवंविशिखैस्तीक्ष्णैराजन्विव्याधसप्तभिः ७ ततःक्रोधात्प्रजज्वालधर्मराजोयुधिष्ठिरः यथायुगांतेभूतानिधक्ष्यन्निवहुताशनः ८ क्रुद्धंतुपांडवंदृष्ट्वादेवगंधर्वराक्षसाः प्रविव्यथुर्महाराजव्याकुलंचाप्यभूज्जगत् ९ सर्वेषांचैवभूतानांमिदमासीन्मनोगतं त्रींल्लोकानद्यसंक्रुद्धोनृपोयंधक्ष्यतीतिवै १० ऋषयश्चैवदेवाश्चचक्रुःस्वस्त्ययनंमहत् लोकानांनृपशांत्यर्थंक्रोधितेपांडवेतदा ११ सचक्रोधसमाविष्टःसृक्किणीपरिसंलिहन् दधारात्मवपुर्घोरंयुगांतादित्यसंन्निभं १२ ततः सर्वाणिसैन्यानितावकानिविशांपते निराशान्यभवंस्तत्रजीवितंप्रतिभारत १३ सतुधैर्येणतंकोपंसन्निवार्यविशांपते श्रुतायुषःप्रचिच्छेदमुष्टिदेशेमहद्धनुः १४ अथैनंछिन्नधन्वानंनाराचेनस्तनांतरे निर्बिभेदरणेराजासर्वसैन्यस्यपश्यतः १५ सत्वरंचरणे राजंस्तस्यवाहान्महात्मनः निजघानशरैःक्षिप्रंसूतंचसुमहाबलः १६ हताश्वंतुरथंत्यक्त्वादृष्ट्वाराज्ञश्चपौरुषं विप्रदुद्राववेगेनश्रुतायुःसमरात्तदा १७ तस्मिन्जितेमहेष्वासेधर्मपुत्रेणसंयुगे दुर्योधनबलंराजन्सर्वमासीत्पराङ्मुखं १८ एतत्कृत्वामहाराजधर्मराजोयुधिष्ठिरः व्यात्ताननोयथाकालस्तवसैन्यंजघानह १९ चेकितानश्चवार्ष्णेयोगौतमंरथिनांवरं प्रेक्षतांसर्वसैन्यानांछादयामाससायकैः २० सन्निवार्यशरांस्तान्स्तुकृपःशारद्वतोयुधि चेकितानंरणेयत्तंराजन्विव्याधपत्रिभिः २१ अथापरेणभल्लेनधनुश्चिच्छेदमारिष सारथिंचास्यसमरेक्षिप्रहस्तोन्यपातयत् २२ हयांश्चास्यावधीद्राजन्नुभौतौपार्ष्णिसारथी सोवप्लुत्यरथात्तूर्णंगदांजग्राहसात्वतः २३ सतयावीरघातिन्यागदयागदिनांवरः गौतमस्यहयान्हत्वासारथिंचाप्यपातयत् २४ भूमिष्ठोगौतमस्तस्यशरांश्चिक्षेपषोडश तेशराःसात्वतंभित्वाप्राविशंतधरातलं २५ चेकितानस्ततःक्रुद्धःपुनश्चिक्षेप तांगदां गौतमस्यवधाकांक्षीवृत्रस्येवपुरंदरः २६ तामापतंतींविपुलामश्मगर्भांमहागदां शरैरनेकसाहस्रैर्वारयामासगौतमः २७ चेकितानस्ततःखड्गंकोशादुध्धृत्यभारत लाघवंपरमास्थायगौतमंसमुपाद्रवत् २८ गौतमोपिधनुस्त्यक्त्वाप्रगृह्यासिंसुसंयतः वेगेनमहताराजंश्चेकितानमुपाद्रवत् २९ तावुभौबलसंपन्नौनिस्त्रिंशवरधारिणौ निस्त्रिंशाभ्यांसुतीक्ष्णाभ्यामन्योन्यंसंततक्षतुः ३० निस्त्रिंशवेगाभिहतौततस्तौपुरुषर्षभौ धरणीमनुसंप्राप्तौसर्वभूत निषेवितां ३१ ५२

२२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ५२ ५२

मूर्च्छयाभिपरीतांगोव्यायामेनविमोहितौ ततोभ्यधावद्वेगेनकरकर्षःसुहृत्तया ३२ चेकितानंतथाभूतंदृष्ट्वासमरदुर्मदं रथमा-
रोपयच्चैनंसर्वसैन्यस्यपश्यतः ३३ तथैवशकुनिःशूरःश्यालस्तवविशांपते आरोपयद्रथंतूर्णंगौतमंरथिनांवरं ३४ सौमदत्तिं-
तथाक्रुद्धोधृष्टकेतुर्महाबलः नवत्यानिशितैर्बाणैराजन्विव्याधवक्षसि ३५ सौमदत्तिरुरस्थैस्तैर्भृशंबाणैरशोभत मध्यंदिने
महाराजरश्मिभिस्तपनोयथा ३६ भूरिश्रवास्तुसमरेधृष्टकेतुंमहारथं हतसूतहयंचक्रेविरथंसायकोत्तमैः ३७ विरथंचै-
नमालोक्यहताश्वंहतसारथिं महताशरवर्षेणच्छादयामाससंयुगे ३८ सचतंरथमुत्सृज्यधृष्टकेतुर्महामनाः आरुरोह-
ततोयानंशतानीकस्यमारिष ३९ चित्रसेनोविकर्णश्चराजन्दुर्मर्षणस्तथा रथिनोहेमसन्नाहाःसौभद्रमभिदुद्रुवुः ४० अ
भिमन्योस्ततस्तैस्तुघोरंयुद्धमवर्तत शरीरस्ययथाराजन्वातपित्तकफैस्त्रिभिः ४१ विरथांस्तवपुत्रांस्तुकृत्वाराजन्महाहवे
नजघाननरव्याघ्रःस्मरन्भीमवचस्तदा ४२ ततोराज्ञांबहुशतैर्गजाश्वरथयायिभिः संवृतंसमरेभीष्मंदेवैरपिदुरासदं ४३
प्रयांतंशीघ्रमुद्वीक्ष्यपरित्रातुंसुतांस्तव अभिमन्युंसमुद्दिश्यबालमेकंमहारथं ४४ वासुदेवमुवाचेदंकौंतेयःश्वेतवाहनः
चोदयाश्वान्हृषीकेशयत्रैतेबहुलारथाः ४५ एतेहिबहवःशूराःकृतास्त्रायुद्धदुर्मदाः यथाहन्युर्ननःसेनांतथामाधवचोदय
४६ एवमुक्तःसवार्ष्णेयःकौंतेयेनामितौजसा रथंश्वेतैर्हयैर्युक्तंप्रेषयामाससंयुगे ४७ निष्टानकोमहानासीत्तवसैन्यस्यमा
रिष यदर्जुनोरणेक्रुद्धःसंयतस्तावकान्प्रति ४८ समासाद्यतुकौंतेयोराज्ञस्तान्भीष्मरक्षिणः सुशर्माणमथोराजन्निदंवच
नमब्रवीत् ४९ जानामित्वांयुधिश्रेष्ठमत्यंतंपूर्ववैरिणं अनयस्याद्यसंप्राप्तंफलंपश्यसुदारुणं ५० अद्यत्वांदर्शयिष्यामिपूर्व
प्रेतान्पितामहान् एवंप्रजल्पतस्तस्यबीभत्सोःशत्रुतापन ५१ श्रुत्वापिपरुषंवाक्यंसुशर्मारथयूथपः नचैनमब्रवीत्किंचि
च्छुभंवायदिवाशुभं ५२ अभिगत्यार्जुनंवीरंराजभिर्बहुभिर्वृतः पुरस्तात्पृष्ठतश्चैवपार्श्वतश्चैवसर्वतः ५३ परिवार्यार्जुनं
संख्येतवपुत्रामहारथाः शरैःसंच्छादयामासुर्मेघाइवदिवाकरं ५४ ततःप्रववृतेघोरःसंग्रामःशोणितोदकः तावकानां
चसमरेपांडवानांचभारत ५५ इतिश्रीमन्महाभारतेभीष्मपर्वणिसुशर्मार्ऽजुनसमागमेपंचाशीतितमोऽध्यायः ८५

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५

संजयउवाच सतुद्यमानस्तुशरैर्धनंजयःपदाहतोनागइवश्वसन्बली बाणेनबाणेनमहारथानांचिच्छेदचापानिरणेप्र-
सह्य १ चिच्छेदचापानिचतानिराज्ञांतेषांरणेवीर्यवतांक्षणेन विव्याधबाणैर्युगपन्महात्मानिःशेषतांतेष्वथमन्यमानः २
निपेतुराजौरुधिरप्रदिग्धास्तेनाडिताःशक्रसुतेनराजन् विभिन्नगात्राःपतितोत्तमांगागतासवश्छिन्नतनुत्रकायाः ३ महींग
ताःपार्थबलाभिभूताविचित्ररूपायुगपद्विनेशुः दृष्ट्वाहतांस्तान्युधिराजपुत्रांस्त्रिगर्तराजःप्रययौरथेन ४ तेषांरथानामथ
पृष्ठगोपाद्वात्रिंशदन्येप्यपतंतपार्थं तथैवतेषांपरिवार्यपार्थंविकृष्यचापानिमहारवाणि ५ अवीवृषन्बाणमहौघवृष्ट्या-
यथागिरिंतोयधराजलौघैः सपीड्यमानस्तुशरौघवृष्ट्याधनंजयस्तान्युधिजातरोषः ६ षष्ट्याशरैःसंयतितैलधौतैर्जघानतान-
प्यथपृष्ठगोपान् षष्टिंरथांस्तानवजित्यसंख्येधनंजयःप्रीतमनायशस्वी ७ अथात्वरद्भीष्मवधायजिष्णुर्बलानिराज्ञांस
मरेनिहत्य त्रिगर्तराजोनिहतान्समीक्ष्यमहात्मनातानथबंधुवर्गान् ८ रणेपुरस्कृत्यनराधिपांस्तान्जगामपार्थंत्वरितो
वधाय अभिद्रुतंचास्त्रविदांवरिष्ठंधनंजयंवीक्ष्यशिखंडिमुख्याः ९ अभ्युद्ययुस्तेशितशस्त्रहस्तारिरक्षिषंतोरथमर्जुनस्य
पार्थोपितानापततःसमीक्ष्यत्रिगर्तराज्ञासहितान्नृवीरान् १० विध्वंसयित्वासमहाधनुष्मान्गांडीवमुक्तैर्निशितैःपृषत्कैः भी-
ष्मंयियासुर्युधिसंददर्शदुर्योधनंसैंधवादींश्चराज्ञः ११ आवारयिष्णूनथसंप्रयायमुहूर्तमायोध्यरथेनवीरः उत्सृज्यराजान-
मनंतवीर्योजयद्रथादींश्चनृपान्महौजाः १२ ययौततोभीमबलोमनस्वीगांगेयमाजौशरचापपाणिः युधिष्ठिरश्चोग्रबलोम-
हात्मासमाययौत्वरितोजातकोपः १३ मद्राधिपंसमभित्यज्यसंख्येस्वभागमाप्तंतमनंतकीर्तिः सार्द्धंसमाद्रीसुतभीमसेनै-
र्भीष्मंययौशांतनवंरणाय १४ तैःसंप्रयुक्तःसमहारथाग्र्यैर्गंगासुतःसमरेचित्रयोधी नविव्यथेशांतनवोमहात्मासमागतैः
पांडुसुतैःसमस्तैः १५ अथैत्यराजायुधिसत्यसंधोजयद्रथोत्युग्रबलोमनस्वी चिच्छेदचापानिमहारथानांप्रसह्यतेषांधनु
षावरेण १६ युधिष्ठिरंभीमसेनंयमौचकृष्णांचपार्थंयुधिजातकोपः दुर्योधनोवैरविषोमहात्माजघानबाणैरनलप्रकाशैः
१७ कृपेणशल्येनशलेनचैवतथाविभोचित्रसेनेनचाजौ विद्धाःशरैस्तेभिविवृद्धकोपैर्देवायथादैत्यगणैःसमेतैः १८ ५

१६ १७ १८ ५९ ५९ ५९ ५९ ५९ ५९ ५९

छिन्नायुधंशांतनवेनराज्ञाशिखंडिनंप्रेक्ष्यचजातकोपः अजातशत्रुःसमरेमहात्माशिखंडिनंक्रुद्धउवाचवाक्यं १९ उक्त्वा
तथात्वंपितुरग्रतोमामहंहनिष्यामिमहाव्रततं भीष्मंशरौघैर्विमलार्कवर्णैःसत्यंवदामीतिकृताप्रतिज्ञा २० त्वयानचैनांस-
फलांकरोषिदेवव्रतंयन्ननिहंसियुद्धे मिथ्याप्रतिज्ञोभवमानृवीररक्षस्वधर्मंचयशःकुलंच २१ प्रेक्षस्वभीष्मंयुधिभीम-
वेगंसर्वांस्तपंतंममसैन्यसंघान् शरौघजालैरतितिग्मतेजनैः कालोयथाकालकृतःक्षणेन २२ निकृत्तचापःसमरेनपेक्षःपरा
जितःशांतनवेनराज्ञा विहायबंधूनथसोदरांश्चक्कयास्यसेनानुरूपंतवेदं २३ दृष्ट्वाहिभीष्मंतमनंतवीर्यंभग्नंचसैन्यंद्रवमा-
णमेतत् भीतोऽसिनूनंद्रुपदस्यपुत्रतथाहितेमुखवर्णोऽप्रहृष्टः २४ आज्ञायमानेनधनंजयेनमहाहवेपश्ययुक्तंनृवीरं क-
थंहिभीष्मात्प्रथितःपृथिव्यांभयंत्वमद्यप्रकरोषिवीर २५ सधर्मराजस्यवचोनिशम्यरूक्षाक्षरंविप्रलापापविद्धं प्रत्यादेशंम
न्यमानोमहात्माप्रतत्वरेभीष्मवधायराजन् २६ तमापतंतंहिमहाजवेनशिखंडिनंभीष्ममभिद्रवंतं आवारयामासहिशल्य-
एनमस्त्रेणघोरेणसुदुर्जयेन २७ सचापिदृष्ट्वासमुदीर्यमाणमस्त्रंयुगांताग्निसमप्रकाशं नासंभ्रमद्द्रुपदस्यपुत्रोराजन्म
हेंद्रप्रतिमप्रभावः २८ तस्थौचतत्रैवमहाधनुष्मांश्छरैस्तद स्त्रंप्रतिबाधमानः अथाददेवारुणमन्यदस्त्रमुग्रंशिखंडीप्रति-
घातमस्य २९ तदस्त्रमस्त्रेणनिवार्यमाणंस्वस्थाःसुरादद्दृशुःपार्थिवाश्च भीष्मस्तुराजन्समरेमहात्माधनुःसचित्रंध्वजमे
वचापि ३० छित्वानदत्पांडुसुतस्यवीरोयुधिष्ठिरस्याजमीढस्यराज्ञः ततःसमुत्सृज्यधनुःसबाणंयुधिष्ठिरंवीक्ष्यभयाभि-
भूतं ३१ गदांप्रगृह्याथपपातसंख्येजयद्रथंभीमसेनःपदातिः तमापतंतंमहताजवेनजयद्रथःसगदंभीमसेनं ३२ विव्या-
धघोरैर्यमदंडकल्पैःशितैःशरैर्वैनवभिःसमंतात् अचिंतयित्वासशरांस्तरस्वीवृकोदरःक्रोधपरीतचेताः ३३ जघान-
वाहान्समरेसमस्तान्पारावतान्सिंधुराजस्यसंख्ये ततोभिवीक्ष्याप्रतिमप्रभावस्तवात्मजस्त्वरमाणोरथेन ३४ अभ्याय
योभीमसेनंनिहंतुंसमुद्यतास्त्रःसुरराजकल्पः भीमोप्यथैनंसहसाविनद्यप्रत्युद्ययौगदयातर्जमानः ३५ समुद्यतां-
तांयमदंडकल्पांदृष्ट्वागदांतेकुरवःसमंतात् विहायसर्वेतवपुत्रमुग्रांभैमींगदांतांपरिहर्तुकामाः ३६ ६९ ६९

अपक्रांतास्तुमुलेसंविमर्देसुदारुणेभारतमोहनीये अमूढचेतास्त्वथचित्रसेनोमहागदामापततींनिरीक्ष्य ३७ रथंस-
मुत्सृज्यपदातिराजोप्रगृह्यखड्गंविमलंचचर्म अवप्लुतःसिंहइवाचलाग्राज्जगामतंभूमिपभूमिदेशं ३८ गदापिसाप्राप्यर
थंसुचित्रंसाश्वंससूतंविनिहत्यसंख्ये जगामभूमिंज्वलितामहोल्काभ्रष्टांबराद्गामिवसंचरंती ३९ आश्चर्यरूपंसुमहत्त्व
दीयादृष्ट्वेवतद्भारतसंप्रहृष्टाः सर्वेविनेदुःसहिताःसमंतात्प्रपूजिरेतवपुत्रंससैन्याः ४० इतिश्रीमन्महाभारतेभी॰
चित्रसेनरथभंगेषडशीतितमोऽध्यायः ८६ संजयउवाच विरथंतुसमासाद्यचित्रसेनंमनस्विनं रथमारोपयामासवि
कर्णस्तनयस्तव १ तस्मिंस्तथावर्तमानेतुमुलेसंकुलेभृशं भीष्मःशांतनवस्तूर्णंयुधिष्ठिरमुपाद्रवत् २ ततःसरथनागाश्वाः
समकंपंतसृंजयाः मृत्योरास्यमनुप्राप्तंमेनिरेचयुधिष्ठिरं ३ युधिष्ठिरोपिकौरव्योयमाभ्यांसहितःप्रभुः महेष्वासंनरव्या-
घ्रंभीष्मंशांतनवंययौ ४ ततःशरसहस्राणिप्रमुंचत्पांडवोयुधि भीष्मंसंच्छादयामासयथामेघोदिवाकरं ५ तेनसम्य
क्प्रणीतानिशरजालानिभागशः प्रतिजग्राहगांगेयःशतशोथसहस्रशः ६ तथैवशरजालानिभीष्मेणास्तानिमारिष आ
काशेसमदृश्यंतखगमानांव्रजाइव ७ निमेषार्द्धाच्चकौंतेयंभीष्मःशांतनवोयुधि अदृश्यंसमरेचक्रेशरजालानिभागशः ८
ततोयुधिष्ठिरोराजाकौरव्यस्यमहात्मनः नाराचंप्रेषयामासक्रुद्धआशीविषोपमं ९ असंप्राप्तंतुतंतत्रक्षुरप्रेणमहारथः
चिच्छेदसमरेराजन्भीष्मस्तस्यधनुश्च्युतं १० तंतुछित्वारणेभीष्मोनाराचंकालसंमितं निजघ्नेकौरवेंद्रस्यहयान्कांचन
भूषणान् ११ हताश्वंतुरथंत्यक्त्वाधर्मपुत्रोयुधिष्ठिरः आरुरोहरथंतूर्णंनकुलस्यमहात्मनः १२ यमावपिचसंक्रुद्धोससा
साद्यरणेतदा शरैःसंच्छादयामासभीष्मःपरपुरंजयः १३ तौतुदृष्ट्वामहाराजभीष्मबाणप्रपीडितौ जगामाथपरांचिंतां
भीष्मस्यवधकांक्षया १४ ततोयुधिष्ठिरोवश्यान्राज्ञस्तान्समचोदयत् भीष्मंशांतनवंसंख्येनिहतेतिसुहृद्गणान् १५ त
तस्तेपार्थिवाःसर्वेश्रुत्वापार्थिवभाषितं महतारथवंशेनपरिवव्रुःपितामहं १६ ससमंतात्परिवृतःपितादेवव्रतस्तव चिक्री
डधनुषाराजन्पातयानोमहारथान् १७ तंचरंतंरणेपार्थाददृशुःकौरवंयुधि मृगमध्येप्रविश्येवयथासिंहंमहावने १८

तर्जयानंरणेशूरांस्त्रासयानंचसायकैः दृष्ट्वाभेरुर्महाराजसिंहंमृगगणाइव १९ रणेभरतसिंहस्यददृशुःक्षत्रियागतिं अग्नेर्वायुसहायस्ययथाकक्षंदिधक्षतः २० शिरांसिरथिनांभीष्मःपातयामाससंयुगे तालेभ्यइवपक्वानिफलानिकुशलोनरः २१ पतद्भिश्चमहाराजशिरोभिर्धरणीतले बभूवतुमुलःशब्दःपततामश्मनामिव २२ तस्मिन्स्तुतुमुलेयुद्धेवर्तमानेभयानके सर्वेषामेवसैन्यानामासीद्व्यतिकरोमहान् २३ भिन्नेषुतेषुव्यूहेषुक्षत्रियाइतरेतरं एकमेकंसमाहूययुद्धायैवोपतस्थिरे २४ शिखंडीतुसमासाद्यभरतानांपितामहं अभिदुद्राववेगेनतिष्ठतिष्ठेतिचाब्रवीत् २५ अनादृत्यततोभीष्मस्तंशिखंडिनमाहवे प्रययौसृंजयान्क्रुद्धःस्त्रीत्वंचिंत्यशिखंडिनः २६ सृंजयास्तुततोहृष्टादृष्ट्वाभीष्मंमहारथं सिंहनादान्बहुविधांश्चक्रुःशंखविमिश्रितान् २७ ततःप्रववृतेयुद्धंव्यतिषक्तरथद्विपं अपरांदिशमास्थायास्थितेसवितरिप्रभो २८ धृष्टद्युम्नोथपांचाल्यःसात्यकिश्चमहारथः पीडयंतौभृशंसैन्यंशक्तितोमरवृष्टिभिः २९ शरैर्बहुविधैराजन्नाजघ्नुस्तावकान्रणे तेहन्यमानाःसमरेतावकाःपुरुषर्षभ ३० आर्यांयुद्धेमतिंकृत्वानत्यजंतिस्मसंयुगं यथोत्साहंचसमरेजघ्नुर्लोकंमहारथाः ३१ तत्राक्रंदोमहानासीत्तावकानांमहात्मनां वध्यतांसमरेराजन्पार्षतेनमहात्मना ३२ तंश्रुत्वानिनदंघोरंतावकानांमहारथौ विंदानुविंदावावंत्यौपार्षतंप्रत्युपस्थितौ ३३ तौतस्यतुरगान्हत्वात्वरमाणौमहारथौ छादयामासतुरुभौशरवर्षेणपार्षतं ३४ अवप्लुत्याथपांचाल्योरथात्तूर्णंमहाबलः आरुरोहरथंतूर्णंसात्यकेःसुमहात्मनः ३५ ततोयुधिष्ठिरोराजामहत्यासेनयावृतः आवंत्यौसमरेक्रुद्धावधावत्परंतपौ ३६ तथैवतवपुत्रोपिसर्वोद्योगेनमारिष विंदानुविंदौसमरेपरिवार्यावतस्थिवान् ३७ अर्जुनश्चापिसंक्रुद्धःक्षत्रियान्क्षत्रियर्षभ अयोधयतसंग्रामेवज्रपाणिरिवासुरान् ३८ द्रोणश्चसमरेक्रुद्धःपुत्रस्यप्रियकृत्तव व्यधमत्सर्वपांचालांस्तूलराशिमिवानलः ३९ दुर्योधनपुरोगास्तुपुत्रास्तवविशांपते परिवार्यरणेभीष्मंयुयुधुःपांडवैःसह ४० ततोदुर्योधनोराजालोहितायतिभास्करे अब्रवीत्तावकान्सर्वांस्त्वरध्वमितिभारत ४१ युध्यतांतुतथातेषांकुर्वतांकर्मदुष्करं अस्तंगिरिमथारूढेनप्रकाशतिभास्करे ४२ ७ ७ ७ ७

प्रावर्ततनदीघोराशोणितौघतरंगिणी गोमायुशतसंकीर्णाक्षणेनक्षणदामुखे ४३ शिवाभिरशिवाभिश्चरुवंतीभिः समंततः घो
रमायोधनंजज्ञेभूतसंघसमाकुलं ४४ राक्षसाश्चपिशाचाश्चतथान्येपिशिताशनाः समंततोव्यदृश्यंतशतशोथसहस्रशः ४५ अ
र्जुनोथसुशर्मादीन्राज्ञःसहपदानुगान् विजित्यपृतनामध्येययौस्वशिबिरंप्रति ४५ युधिष्ठिरोपिकौरव्योभ्रातृभिःसहितस्तदा
ययौस्वशिबिरंराजन्निशायांसेनयावृतः ४७ भीमसेनोपिराजेंद्रदुर्योधनमुखान्रथान् अवजित्यनृपान्संख्येययौस्वशिबिरंप्रति ४८
दुर्योधनोपिनृपतिःपरिवार्यमहारणे भीष्मंशांतनवंतूर्णंप्रयातःशिबिरंप्रति ४९ द्रोणोद्रौणिःकृपःशल्यःकृतवर्माचसात्वतः परिवा
र्यचमूंसर्वंप्रययुःशिबिरंप्रति ५० तथैवसात्यकीराजन्धृष्टद्युम्नश्चपार्षतः परिवार्यरणेयोधान्ययतुःशिबिरंप्रति ५१ एवमेतेम
हाराजतावकाःपांडवैःसह पर्यवर्ततसहितानिशाकालेपरंतपाः ५२ ततःस्वशिबिरंगत्वापांडवाःकुरवस्तथा न्यविशंतमहारा-
जपूजयंतःपरस्परं ५३ रक्षांकृत्वात्मनःशूराहत्वागुल्मान्यथाविधि अपनीयचशल्यांस्तेस्नात्वाचविधिवज्जलैः ५४ कृतस्व-
स्त्ययनाःसर्वेस्तूयमानाश्चबंदिभिः गीतवादित्रशब्देनचिक्रीडुस्तेयशस्विनः ५५ मुहूर्तादिवतत्सर्वमभवत्स्वर्गसंमितं नहियुद्ध
कथांकांचित्तत्रचक्रुर्महारथाः ५६ तेप्रसुप्तेबलेतत्रपरिश्रांतजनेनृप हस्त्यश्वबहुलेराजन्प्रेक्षणीयेबभूवतुः ५७ इति-
श्रीमन्महाभा॰तेभी॰ सप्तमदिवसयुद्धसमाप्तिर्नामसप्ताशीतितमोऽध्यायः ८७ संजयउवाच परिणाम्यनिशांतांतुसुख
सुप्ताजनेश्वराः कुरवःपांडवाश्चैवपुनर्युद्धायनिर्ययुः १ ततःशब्दोमहानासीत्सैन्ययोरुभयोरपि निर्गच्छमानयोःसंख्येसा
गरप्रतिमोमहान् २ ततोदुर्योधनोराजाचित्रसेनोविविंशतिः भीष्मश्चरथिनांश्रेष्ठोभारद्वाजःसवैद्विजः ३ एकीभूताःसुसं
यत्ताःकौरवाणांमहारथाः व्यूहायनिदधूराजन्पांडवान्प्रतिदंशिताः ४ भीष्मःकृत्वामहाव्यूहंपितातवविशांपते सागरप्रति-
मंघोरंवाहनोर्मितरंगिणं ५ अग्रतःसर्वसैन्यानांभीष्मःशांतनवोययौ मालवैर्दाक्षिणात्यैश्चआवंत्यैश्चसमन्वितः ६ ततोनं
तरमेवासीद्भारद्वाजःप्रतापवान् पुलिंदैःपारदैश्चापितथाक्षुद्रकमालवैः ७ द्रोणादनंतरोयत्तोभगदत्तःप्रतापवान् मागधै
श्चकलिंगैश्चपिशाचैश्चविशांपते ८ प्राग्ज्योतिषादनुनृपःकौशल्योथबृहद्बलः मेकलैस्त्रैपुरैश्चैवचिबुकैश्चसमन्वितः ९

बृहद्बलस्ततःशूरस्त्रैगर्तःप्रस्थलाधिपः कांबोजैर्बहुभिःसार्द्धंप्रवरैश्चसहस्रशः १० द्रौणिस्तरभसःशूरस्त्रिगर्तानन्नुभारत प्र-
ययौसिंहनादेननादयानोधरातलं ११ तथासर्वेणसैन्येनराजादुर्योधनस्तदा द्रौणेरनंतरंप्रायात्सोदरैःपरिवारितः १२ दुर्यो-
धनादनुततःकृपःशारद्वतोययौ एवमेषमहाव्यूहःप्रययौसागरोपमः १३ रेजुस्तत्रपताकाश्चश्वेताच्छत्राणिवाविभो अंग
दान्यथचित्राणितोमराणिधनूंषिच १४ तंतुदृष्ट्वामहाव्यूहंतावकानांमहारथः युधिष्ठिरोब्रवीत्तूर्णंपार्षतंपृतनापतिं १५
पश्यव्यूहंमहेष्वासनिर्मितंसागरोपमं प्रतिव्यूहंत्वमपिमेकुरुपार्षतसत्वरं १६ ततःसपार्षतःशूरोव्यूहंचक्रेसुदारुणं शृं-
गाटकंमहाराजपरव्यूहविनाशकं १७ शृंगाभ्यांभीमसेनश्चसात्यकिश्चमहारथः रथैरनेकसाहस्रैस्तथाहयपदातिभिः
१८ नाभ्यामभून्नरश्रेष्ठःश्वेताश्वःकृष्णसारथिः मध्येयुधिष्ठिरोराजामाद्रीपुत्रौचपांडवौ १९ तथेतरेमहेष्वासाःसहसै-
न्यामहारथाः व्यूहंतंपूरयामासुर्व्यूहशास्त्रविशारदाः २० अभिमन्युस्ततःपश्चाद्विराटश्चमहारथः द्रौपदेयाश्चसंहृष्टा
राक्षसश्चघटोत्कचः २१ एवमेतंमहाव्यूहंव्यूह्यभारतपांडवाः अतिष्ठन्समरेशूरायोद्धुकामाजयैषिणः २२ भेरीशब्दाश्च
तुमुलाविमिश्राःशंखनिःस्वनैः क्ष्वेडितास्फोटितोत्क्रुष्टैःसुभीमाःसर्वतोदिशः २३ ततःशूराःसमासाद्यसमरेतेपरस्परं ने-
त्रैरनिमिषैराजन्नवैक्षंतपरस्परं २४ नामभिस्तेमनुष्येंद्रपूर्वंयोधाःपरस्परं युद्धायसमवर्तंतसमाहूयेतरेतरं २५ ततःप्र
वृत्तेयुद्धंघोररूपंभयानकं तावकानांपरेषांचनिघ्नतामितरेतरं २६ नाराचानिशिताःसंख्येसंपतंतिस्मभारत व्यात्तान
नाभयकराउरगाइवसर्वशः २७ निष्पेतुर्विमलाःशक्त्यस्तैलधौताःसमंततः अंबुदेभ्योयथाराजन्भ्राजमानाःशतह्र-
दाः २८ गदाश्चविमलैःपट्टैःपिनद्धाःस्वर्णभूषिताः पतंत्यस्तत्रदृश्यंतेगिरिशृंगोपमाःशुभाः २९ निस्त्रिंशाश्चव्यराजंतवि
मलांबरसन्निभाः आर्षभाणिचचर्माणिशतचंद्राणिभारत ३० अशोभंतरणेराजन्पतमानानिसर्वशः तेन्योन्यंसमरेसे
नेयुध्यमानेनराधिप ३१ अशोभेतांयथादेवदैत्यसेन्येसमुद्यते अभ्यद्रवंतसमरेतेअन्योन्यंसमंततः ३२ रथास्तुरथिभि
स्तूर्णंप्रेषिताःपरमाहवे युगैर्युगानिसंश्लिष्ययुयुधुःपार्थिवर्षभाः ३३ दंतिनांयुध्यमानानांसंघर्षात्पावकोभवत् दंतेषुभर-
तश्रेष्ठसधूमःसर्वतोदिशः ३४

भासैरभिहताःकेचिद्गजयोधाःसमंततः पतमानास्मदृश्यंतेगिरिशृंगान्नगाइव ३५ पादाताश्चाप्यदृश्यंतनिघ्नंतोहिपरस्परं
चित्ररूपधराःशूरानखरभासयोधिनः ३६ अन्योन्यंतेसमासाद्यकुरुपांडवसैनिकाः शरैर्नानाविधाकारैरयोनिन्युर्यमक्षयं
३७ तत्रशांतनवोभीष्मोरथघोषेणनादयन् अभ्यागमद्रणेपांडून्धनुःशब्देनमोहयन् ३८ पांडवानांरथाश्चापिनदंतोभैरवंर
वं अभ्यद्रवंतसंयत्ताधृष्टद्युम्नपुरोगमाः ३९ ततःप्रववृतेयुद्धंतवतेषांचभारत नराश्वरथनागानांव्यतिषक्तंपरस्परं ४०
इतिश्रीमन्महाभा० भीष्मप० अष्टमदिनयुद्धारंभेअष्टाशीतितमोऽध्यायः ८८ संजयउवाच भीष्मंतुसमरेक्रुद्धंप्रतपंतं-
समंततः नशेकुःपांडवाद्रष्टुंतपंतमिवभास्करं १ ततःसर्वाणिसैन्यानिधर्मपुत्रस्यशासनात् अभ्यधावंतगांगेयंमर्दयंतंशितैः
शरैः २ सतुभीष्मोरणश्लाघीसोमकान्सहसृंजयान् पांचालांश्चमहेष्वासान्पातयामाससायकैः ३ तेवध्यमानाभीष्मेणपां-
चालाःसोमकैःसह भीष्ममेवाभ्ययुस्तूर्णंत्यक्त्वामृत्युकृतंभयं ४ सतेषांरथिनांवीरोभीष्मःशांतनवोबली चिच्छेदसमरेरा-
जन्बाहूनथशिरांसिच ५ विरथान्रथिनश्चक्रेपितादेवव्रतस्तव पतितान्युत्तमांगानिहयेभ्योहयसादिनां ६ निर्मनुष्यांश्च-
मातंगान्निर्वृक्षानिवपर्वतान् अपश्याममहाराजभीष्मास्त्रेणप्रमोहितान् ७ नतत्रासीत्पुमान्कश्चित्पांडवानांविशांपते अ
न्यत्ररथिनांश्रेष्ठाद्भीमसेनान्महाबलात् ८ सहिभीष्मंसमासाद्यवारयामाससंयुगे ततोनिष्टानकोघोरोभीष्मभीमस-
मागमे ९ बभूवसर्वसैन्यानांघोररूपोभयानकः तथैवपांडवाहृष्टाःसिंहनादमथानदन् १० ततोदुर्योधनोराजासोदर्यैःपरिवा-
रितः भीष्मंजुगोपसमरेवर्तमानेमहाक्षये ११ भीमस्तुसारथिंहत्वाभीष्मस्यरथिनांवरः प्रद्रुताश्वेरथेतस्मिन्द्रवमानेसमंत-
तः १२ सुनाभस्यक्षुरेणाशुशिरश्चिच्छेदभारत पूर्णायतविसृष्टेनसहतोन्यपतद्भुवि १३ हतेतस्मिन्महाराजतवपुत्रेमहारथे ना
मृष्यंतरणेशूराःसोदराःसप्तसंयुगे १४ आदित्यकेतुर्बह्वाशीकुंडधारोमहोदरः अपराजितःपंडितकोविशालाक्षश्चदुर्जयः
१५ पांडवंचित्रसन्नाहाविचित्रकवचायुधाः अभ्यद्रवंतसंग्रामेयोद्धुकामारिमर्दनाः १६ महोदरस्तुसमरेभीमंविव्याधपत्रिभिः न
वभिर्वज्रसंकाशैर्नमुचिंवृत्रहायथा १७ आदित्यकेतुःसप्तत्याबह्वाशीचापिपंचभिः नवत्याकुंडधारस्तुविशालाक्षश्चसप्तभिः
१८

अपराजितोमहाराजपराजिष्णुर्महारथः शरैर्बहुभिरानर्च्छद्भीमसेनंमहाबलं १९ रणेपंडितकश्चैनंत्रिभिर्बाणैःसमर्पयत् स
तन्नममृषेवीरःशत्रुभिर्वधमाहवे २० धनुःप्रपीड्यवामेनकरेणामित्रकर्शनः शिरश्चिच्छेदसमरेशरेणानतपर्वणा २१ अपरा
जितस्यसुनसंतवपुत्रस्यसंयुगे पराजितस्यभीमेननिपपातशिरोमहीं २२ अथापरेणभल्लेनकुंडधारंमहारथं प्राहिणोन्मृ-
त्युलोकायसर्वसैन्यस्यपश्यतः २३ ततःपुनरमेयात्मासंप्रधायशिलीमुखं प्रेषयामाससमरेपंडितंप्रतिभारत २४ सशरःपं-
डितंहत्वाविवेशधरणीतलं यथानरंनिहत्याशुभुजगःकालचोदितः २५ विशालाक्षशिरश्छित्वापातयामासभूतले त्रिभिःश
रैरदीनात्मास्मरन्क्लेशंपुरातनं २६ महोदरंमहेष्वासंनाराचेनस्तनांतरे विव्याधसमरेराजन्सहतोन्यपतद्भुवि २७ आदित्यके
तोश्चकेतुंचच्छित्वाबाणेनसंयुगे भल्लेनभृशतीक्ष्णेनशिरश्चिच्छेदभारत २८ बह्वाशिनंततोभीमःशरेणानतपर्वणा प्रेषयामा
ससंक्रुद्धोयमस्यसदनंप्रति २९ प्रदुद्रुवुस्ततस्तेऽन्येपुत्रास्तवविशांपते मन्यमानाहितत्सत्यंसभायांतस्यभाषितं ३० ततोदुर्यो
धनोराजाभ्रातृव्यसनकर्शितः अब्रवीत्तावकान्सर्वान्भीमोयंवध्यतामिति ३१ एवमेतेमहेष्वासाःपुत्रास्तवविशांपते भ्रातॄन्सं
दृश्यनिहतान्स्मरंतोहितद्वचः ३२ यदुक्तवान्महाप्रज्ञःक्षत्ताहितमनामयं तदिदंसमनुप्राप्तंवचनंसत्यवादिनः ३३ लोभमोह
समाविष्टःपुत्रप्रीत्याजनाधिप नबुध्यसेपुरायत्तुतथ्यमुक्तंहितंवचः ३४ तथैववधार्थायपुत्राणांपांडवोबली नूनंजातोमहा
बाहुर्यथाहंतीहकौरवान् ३५ ततोदुर्योधनोराजाभीष्ममासाद्यमारिष दुःखेनमहताविष्टोविललापातिदुःखितः ३६ निहताभ्रा
तरःशूराभीमसेनेनमेयुधि यतमानास्तथान्येपिहन्यंतेसर्वसैनिकाः ३७ भवान्मध्यस्थितंतयानित्यमस्मानुपेक्षते सोहंकाप
थमारूढःपश्यदैवमिदंमम ३८ संजयउ० एतच्छ्रुत्वावचःक्रूरंपितादेवव्रतस्तव दुर्योधनमिदंवाक्यमब्रवीत्साश्रुलोचनं
३९ उक्तमेतन्मयापूर्वंद्रोणेनविदुरेणच गांधार्याचयशस्विन्यातत्त्वंताननबुद्धवान् ४० समयश्चमयापूर्वंकृतोवःशत्रुसूद-
न नाहंयुधिविमोक्तव्योनाप्याचार्यःकथंचन ४१ यंयंहिधार्तराष्ट्राणांभीमोद्रक्ष्यतिसंयुगे हनिष्यतिरणेतंतंसत्यमे-
तद्ब्रवीमिते ४२ सत्वंराजन्स्थिरोभूत्वादृढांकृत्वारणेमतिम् योधयस्वरणेपार्थान्स्वर्गंकृत्वापरायणम् ४३ ६९

नशक्याः पांडवाजेतुंदेवैरपिसवासवैः तस्माद्युद्धेस्थिरांकृत्वामतिंयुध्यस्वभारत ४४ इतिश्रीमन्महाभा० भी० आदित्य-
केतुप्रभृतिवधेएकोननवतितमोऽध्यायः ८९ धृतराष्ट्रउवाच दृष्ट्वाममहतान्पुत्रान्बहूनेकेनसंजय भीष्मोद्रोणःकृ-
पश्चैवकिमकुर्वतसंयुगे १ अहन्यहनिमेपुत्राः क्षयंगच्छंतिसंयुगे मन्येहंसर्वथासूतदैवेनोपहतोभृशं २ यत्रमेतनयाः
सर्वेहीयंतेनजयंत्युत यत्रभीष्मस्यद्रोणस्यकृपस्यचमहात्मनः ३ सौमदत्तेश्चवीरस्यभगदत्तस्यचोभयोः अश्वत्थाम्नस्त
थातातशूराणांसुमहात्मनां ४ अन्येषांचैवशूराणांमध्यगास्तनयामम यदहन्यंतसंग्रामेकिमन्यद्भागधेयतः ५ नहिदुर्यो
धनोमंदः पुराप्रोक्तमबुध्यत वार्यमाणोमयातातभीष्मेणविदुरेणच ६ गांधार्याचैवदुर्मेधाः सततंहितकाम्यया नाबुध्यत-
पुरामोहात्तस्यप्राप्तमिदंफलं ७ यद्भीमसेनः समरेपुत्रान्ममविशेषतः अहन्यहनिसंक्रुद्धोनयतेयमसादनं ८ संजयउ०
इदंतत्समनुप्राप्तंक्षत्तुर्वचनमुत्तमं नबुद्धवानसिविभोप्रोच्यमानंहितंतदा ९ निवारयसुतान्द्यूतात्पांडवान्माद्रुहेतिच सु
हृदांहितकामानांब्रुवतांतत्तदेवच १० नशुश्रूषसितद्वाक्यमार्तः पथ्यमिवौषधं तदेवत्वामनुप्राप्तंवचनंसाधुभाषितं ११ वि-
दुरद्रोणभीष्माणांतथान्येषांहितैषिणां अकृत्वावचनंपथ्यंक्षयंगच्छंतिकौरवाः १२ तदेतत्समनुप्राप्तंपूर्वमेवविशांपते
तस्मात्त्वंमेशृणुतत्त्वेनयथायुद्धमवर्तत १३ मध्याह्नेसुमहारौद्रः संग्रामः समपद्यत लोकक्षयकरोराजंस्तन्मेनिगदतः शृणु
१४ ततः सर्वाणिसैन्यानिधर्मपुत्रस्यशासनात् संरब्धान्यभ्यधावंतभीष्ममेवजिघांसया १५ धृष्टद्युम्नः शिखंडीचसात्यकि
श्चमहारथः युक्तानीकामहाराजभीष्ममेवसमभ्ययुः १६ विराटोद्रुपदश्चैवसहितः सर्वसोमकैः अभ्यद्रवंतसंग्रामेभीष्म-
मेवमहारथाः १७ कैकेयाधृष्टकेतुश्चकुंतीभोजश्चदंशितः युक्तानीकामहाराजभीष्ममेवसमभ्ययुः १८ अर्जुनोद्रौपदेया
श्चचेकितानश्चवीर्यवान् दुर्योधनसमादिष्टान्राज्ञः सर्वान्समभ्ययुः १९ अभिमन्युस्तथावीरोहैडिंबश्चमहारथः भीमसेनश्च
संक्रुद्धस्त्वभ्यधावतकौरवान् २० द्विधाभूतैरवध्यंतपांडवैः कौरवायुधि तथैवकौरवैराजन्नवध्यंतपरेरणे २१ द्रोणश्चरथिनांश्रे
ष्ठः सोमकान्सृंजयैः सह अभ्यद्रवतसंक्रुद्धः प्रेषयिष्यन्यमक्षयं २२ तत्राक्रंदोमहानासीत्सृंजयानांमहात्मनां वध्यतांसमरेरा
जन्भारद्वाजेनधन्विना २३ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ २३

द्रोणेननिहतास्तत्रक्षत्रियाबहवोरणे विचेष्टंतोव्यदृश्यंतव्याधिक्लिन्नानराइव २४ कूजतांक्रंदतांचैवस्तनतांचैवसंयुगे अ-
भिसंश्रूयतेशब्दः क्षुत्क्लेशानांनृणामिव २५ तथैवकौरवेयाणांभीमसेनोमहाबलः चकारकदनंघोरंक्रुद्धःकालइवापरः २६
वध्यतांसर्वसैन्यानामन्योन्येनमहाहवे प्रावर्ततनदीघोराशोणितौघतरंगिणी २७ स संग्रामोमहाराजघोररूपोभवन्महान्
कुरूणांपांडवानांचयमराष्ट्रविवर्द्धनः २८ ततोभीमोरणेक्रुद्धोरभसश्चविशेषतः गजानीकंसमासाद्यप्रेषयामासमृत्यवे २९
तत्रभारतभीमेननाराचाभिहतागजाः पेतुःसेदुश्चनेदुश्चदिशःसंपरिबभ्रमुः ३० छिन्नहस्तामहानागाश्छिन्नगात्राश्चमारिष
क्रौंचवद्व्यनदंतश्चपृथिवीमधिशिश्यिरे ३१ नकुलःसहदेवश्चहयानीकमभिद्रुतौ तेहयाःकांचनापीडारुक्मभांडपरिच्छ-
दाः ३२ वध्यमानाव्यदृश्यंतशतशोथसहस्रशः पतद्भिश्चहयैराजन्समाकीर्यतमेदिनी ३३ निर्जिह्वैश्चश्वसद्भिश्चकूज-
द्भिश्चगतासुभिः हयैर्बभौनरश्रेष्ठनानारूपधरैर्धरा ३४ अर्जुनेनहतैःसंख्येतथाभारतराजभिः प्रबभौवसुधाघोरातत्रत
त्रविशांपते ३५ रथैर्भग्नैर्ध्वजैश्छिन्नैश्छत्रैश्चसुमहाप्रभैः चामरव्यजनैश्छिन्नैर्निकृत्तैश्चमहायुधैः ३६ हारैर्निष्कैः
सकेयूरैःशिरोभिश्चसकुंडलैः उष्णीषैरपविद्धैश्चपताकाभिश्चसर्वशः ३७ अनुकर्षैःशुभैराजन्योक्त्रैश्चसहरश्मिभिः सं
छन्नावसुधाभातिवसंतेकुसुमैरिव ३८ एवमेषक्षयोवृत्तःपांडूनामपिभारत क्रुद्धेशांतनवेभीष्मेद्रोणेचरथसत्तमे ३९ अ
श्वत्थाम्निकृपेचैवतथैवकृतवर्मणि तथेतरेषुक्रुद्धेषुतावकानामपिक्षयः ४० इतिश्रीमन्महाभा॰भी॰ अष्टदिनयुद्धेनव
तितमोऽध्यायः ९० संजयउवाच वर्तमानेतथारौद्रेराजन्वीरवरक्षये शकुनिःसौबलःश्रीमान्पांडवान्समुपाद्र
वत् १ तथैवसात्वतोराजन्हार्दिक्यःपरवीरहा अभ्यद्रवतसंग्रामेपांडवानांवरूथिनीं २ ततःकांबोजमुख्यानांनदीजा
नांचवाजिनां आरट्टानांमहीजानांसिंधुजानांचसर्वशः ३ वनायुजानांशुभ्राणांतथापर्वतवासिनां वाजिनांबहुभिःसं
ख्येसमंतात्पर्यवारयन् ४ येचापरेतित्तिरिजाजवनावातरंहसः सुवर्णालंकृतैस्तत्रवर्मवद्भिःसुकल्पितैः ५ हयैर्वात
जवैर्मुख्यैःपांडवस्यसुतोबली अभ्यवर्ततनत्सैन्यंहृष्टरूपंपरंतप ६ अर्जुनस्यसुतःश्रीमानिरावान्नामवीर्यवान् सुता
यांनागराजस्यजातःपार्थेनधीमता ७

ऐरावतेनसादत्ताअनपत्यामहात्मना पत्यौहतेसुपर्णेनकृपणादीनचेतना ८ भार्यार्थितांचजग्राहपार्थःकामवशानुगां
एवमेषसमुत्पन्नःपरक्षेत्रेर्जुनात्मजः ९ सनागलोकेसंवृद्धोमात्राचपरिरक्षितः पितृव्येनपरित्यक्तःपार्थद्वेषाद्दुरात्मना
१० रूपवान्बलसंपन्नोगुणवान्सत्यविक्रमः इंद्रलोकंजगामाशुश्रुत्वातत्रार्जुनंगतं ११ सोभिगम्यमहाबाहुःपितरंसत्य-
विक्रमः अभ्यवादयदव्यग्रोविनयेनकृतांजलिः १२ न्यवेदयतचात्मानमर्जुनस्यमहात्मनः इरावानस्मिभद्रंतेपुत्रश्चाहं
तवप्रभो १३ मातुःसमागमोयश्चतत्सर्वंप्रत्यवेदयत् तच्चसर्वंयथावृत्तमनुसस्मारपांडवः १४ परिष्वज्यसुतंचापिसोत्म-
नःसदृशंगुणैः प्रीतिमानभवत्पार्थोदेवराजनिवेशने १५ सोर्जुनेनसमादिष्टोदेवलोकेतदानृप प्रीतिपूर्वंमहाबाहुःस्व-
कार्यंप्रतिभारत १६ युद्धकालेत्वयास्माकंसाह्यंदेयमितिप्रभो बाढमित्येवमुक्त्वाचयुद्धकालइहागतः १७ कामवर्णजवैर-
श्वैःसंवृतोबहुभिर्नृप तेहयाकांचनापीडानानावर्णमनोजवाः १८ उत्पेतुःसहसाराजन्हंसाइवमहोदधौ तेत्वदीयान्समा
साद्यहयसंघान्महाजवान् १९ क्रोडैःक्रोडानभिघ्नंतोघोणाभिश्चपरस्परं निपेतुःसहसाराजन्सुवेगाभिहताभुवि २०
निपतद्भिस्तथातैश्चहयसंघैःपरस्परं शुश्रुवेदारुणःशब्दःसुपर्णपतनेयथा २१ तथैवचमहाराजसमेत्यान्योन्यमाहवे
परस्परवधंघोरंचक्रुस्तेहयसादिनः २२ तस्मिंस्तथामहाघोरेसंकुलेतुमुलेभृशम् उभयोरपिसंभ्रांताहयसंघाःसमंततः
२३ प्रक्षीणसायकाःशूरानिहताश्वाःसमाहताः विलयंसमनुप्राप्तास्तक्षमाणाःपरस्परं २४ ततःक्षीणेहयानीकेकिं-
चिच्छिष्टेचसंयुगे सौबलस्यानुजाःशूरानिर्गतारणमूर्द्धनि २५ वायुवेगसमस्पर्शान्वायुवेगसमान्जवे आरुह्यशीलसंप-
न्नान्वयस्थांस्तुरगोत्तमान् २६ गजोगवाक्षोवृषभश्चर्मवानार्जवःशुकः षडेतेबलसंपन्नानिर्ययुर्महतोबलात् २७ वार्य-
माणाःशकुनिनास्वैश्चयोधैर्महाबलैः सन्नद्धायुद्धकुशलारौद्ररूपामहाबलाः २८ तदनीकंमहाबाहोभित्वापरमदुर्जयं
बलेनमहतायुक्ताःस्वर्गायविजयैषिणः २९ विविशुस्तेतदाहृष्टागांधारायुद्धदुर्मदाः तान्प्रविष्टांस्तदाहृष्टाइरावानपिवीर्य-
वान् ३० अब्रवीत्समरेयोधान्विचित्राभरणायुधान् यथैतेधार्तराष्ट्रस्ययोधाःसानुगवाहनाः ३१ ६२ ६२

हन्यंतेसमरेसर्वेतथानीतिर्विधीयतां बाढमित्येवमुक्त्वातेसर्वेयोधाइरावतः ३२ जघ्नुस्तेषांबलानीकंदुर्जयंसमरेपरैः तदनीक
मनीकेनसमरेवीक्ष्यपातितं ३३ अमृष्यमाणास्तेसर्वेसुबलस्यात्मजारणे इरावंतमभिद्रुत्यसर्वतःपर्यवारयन् ३४ ताडयं
तःशितैःप्रासैश्चोदयंतःपरस्परं तेशूराःपर्यधावंतकुर्वंतोमहदाकुलं ३५ इरावानपिनिर्विद्धःप्रासैस्तीक्ष्णैर्महात्मभिः स्र
वतारुधिरेणाक्तस्तोत्रैर्विद्धइवद्विपः ३६ उरस्यपिचपृष्ठेचपार्श्वयोश्चभृशाहतः एकोबहुभिरत्यर्थंधैर्याद्राजन्नविव्यथे ३७
इरावानथसंक्रुद्धःसर्वांस्तान्निशितैःशरैः मोहयामाससमरेविद्ध्वापरपुरंजयः ३८ प्रासानुत्कृत्यसर्वांश्चस्वशरीरादरिंद-
मः तैरेवताडयामाससुबलस्यात्मजान्रणे ३९ निकृष्यचशितंखड्गंगृहीत्वाचशरावरं पदातिस्तूर्णमागच्छत्तान्जिघांसुःसौ-
बलान्युधि ४० ततःप्रत्यागतप्राणाःसर्वेतेसुबलात्मजाः भूयःक्रोधसमाविष्टाइरावंतमथाद्रवन् ४१ इरावानथखड्गेनदर्श
यन्पाणिलाघवं अभ्यधावततान्सर्वान्सौबलान्बलदर्पितः ४२ लाघवेनाथचरतःसर्वेतेसुबलात्मजाः अंतरंनाभ्यगच्छंत
चरंतःशीघ्रगैर्हयैः ४३ भूयिष्ठमथतंसंख्येसंप्रदृश्यततःपुनः परिवार्यभृशंसर्वेग्रहीतुमुपचक्रमुः ४४ अथाभ्याशगता
नांसखड्गेनामित्रकर्शनः असिहस्तापहस्ताभ्यांतेषांगात्राण्यकृंतत ४५ आयुधानिचसर्वेषांबाहूनपिविभूषितान् अपतं
तनिकृत्तांगाभूताभूमौगतासवः ४६ वृषभस्तुमहाराजबहुधापरिरक्षितः अमुच्यतमहारौद्रात्तस्माद्वीरावकर्तनात् ४७ ता
न्सर्वान्पतितान्दृष्ट्वाभीतोदुर्योधनस्तव अभ्यभाषतसंक्रुद्धोराक्षसंघोरदर्शनं ४८ आर्ष्यशृंगिंमहेष्वासंमायाविनमरिंदमं
वैरिणंभीमसेनस्यपूर्वंबकवधेनवै ४९ पश्यवीरयथाह्येषफाल्गुनस्यसुतोबली मायावीविप्रियंघोरमकार्षीन्मेबलक्ष
यं ५० त्वंचकामगमस्तातमायास्त्रेचविशारदः कृतवैरश्चपार्थेनतस्मादेनंरणेजहि ५१ बाढमित्येवमुक्त्वातुराक्षसोघो
रदर्शनः प्रययौसिंहनादेनयत्रार्जुनसुतोयुवा ५२ स्वारूढैर्युद्धकुशलैर्विमलप्रासयोधिभिः वीरैःप्रहारिभिर्युक्तैःस्वैर
नीकैःसमावृतः ५३ हतशेषैर्महाराजद्विसाहस्रैर्हयोत्तमैः निहंतुकामःसमरेइरावंतंमहाबलं ५४ इरावानपिसंक्रुद्धस्त्व
रमाणःपराक्रमी हंतुकामममित्रघ्नोराक्षसंप्रत्यवारयत् ५५ तमापतंतंसंप्रेक्ष्यराक्षसःसुमहाबलः त्वरमाणस्ततोमायां-
प्रयोक्तुमुपचक्रमे ५६

गजानीकेनभीमस्यतावव्वारयतांदिशः भूरिश्रवाःशलश्चैवसोबलश्च विशांपते २६ शरौघैर्विमलैस्तीक्ष्णैर्माद्रीपुत्रावववार
यन् भीष्मस्तुसहितःसंख्येधार्तराष्ट्रैःससैनिकैः २७ युधिष्ठिरंसमासाद्यसर्वतः पर्यवारयत् आपतंतंगजानीकंदृष्ट्वापार्थो
वृकोदरः २८ लेलिहन्सृक्किणीवीरोमृगराडिवकानने भीमस्तुरथिनांश्रेष्ठोगदांगृह्यमहाहवे २९ अवप्लुत्यरथात्तूर्णंतव-
सैन्यान्यभीषयत् तमुद्वीक्ष्यगदाहस्तंततस्तेगजसादिनः ३० परिवव्रूरणेयत्ताभीमसेनंसमंततः गजमध्यमनुप्राप्तः पांड-
वःसव्यराजत ३१ मेघजालस्यमहतोयथामध्यगतोरविः व्यधमत्सगजानीकंगदयापांडवर्षभः ३२ महाभ्रजालमतुलं
मातरिश्वेवसंततं तेवध्यमानाबलिनाभीमसेनेनदंतिनः ३३ आर्त्तनादंरणेचक्रुर्गर्जंतोजलदाइव बहुधादारितश्चैवविषाणैस्त-
त्रदंतिभिः ३४ फुल्लाशोकनिभःपार्थःशुशुभेरणमूर्द्धनि विषाणेदंतिनंगृह्यनिर्विषाणमथाकरोत् ३५ विषाणेनचतेनैवकुंभे
भ्याहत्यदंतिनं पातयामाससमरेदंडहस्तइवांतकः ३६ शोणिताक्तांगदांबिभ्रन्मेदोमज्जाकृतच्छविः कृताभ्यंगःशोणितेन
रुद्रवत्प्रत्यदृश्यत ३७ एवंतेवध्यमानाश्चहतशेषामहागजाः प्राद्रवंतदिशोराजन्विमृद्नंतःस्वकंबलं ३८ द्रवद्भिस्तैर्महाना
गैःसमंताद्भरतर्षभ दुर्योधनबलंसर्वंपुनरासीत्पराङ्मुखं ३९ इतिश्रीमन्महाभा० भी० भीमपराक्रमेत्र्यधिकशततमो
ध्यायः १०३ संजयउवाच मध्यंदिनेमहाराजसंग्रामःसमपद्यत लोकक्षयकरोरौद्रोभीष्मस्यसहसोमकैः १ गांगेयो
रथिनांश्रेष्ठःपांडवानामनीकिनीं व्यधमन्निशितैर्बाणैःशतशोथसहस्रशः २ सममर्दच्चतत्सैन्यंपितादेवव्रतस्तव धान्याना
मिवलूनानांप्रकरंगोगणाइव ३ धृष्टद्युम्नःशिखंडीचविराटोद्रुपदस्तथा भीष्ममासाद्यसमरेशरैर्जघ्नुर्महारथं ४ धृष्टद्यु
म्नंततोविद्ध्वाविराटंचशरैस्त्रिभिः द्रुपदस्यचनाराचंप्रेषयामासभारत ५ तेनविद्धामहेष्वासाभीष्मेणामित्रकर्षिणा चु-
क्रुधुः समरेराजन्पादस्पृष्टाइवोरगाः ६ शिखंडीतंचविव्याधभारतानांपितामहं स्त्रीमयंमनसाध्यात्वानास्मैप्राहरदच्यु
तः ७ धृष्टद्युम्नस्तुसमरेक्रोधेनाग्निरिवज्वलन् पितामहंत्रिभिर्बाणैर्बाह्वोरुरसिचार्पयत् ८ द्रुपदःपंचविंशत्याविराटोदश
भिःशरैः शिखंडीपंचविंशत्याभीष्मंविव्याधसायकैः ९ सोतिविद्धोमहाराजशोणितौघपरिप्लुतः वसंतेपुष्पशबलोरक्ताशोकइवा
बभौ १०

तान्प्रत्यविध्यद्गांगेयस्त्रिभिस्त्रिभिरजिह्मगैः द्रुपदस्यचभल्लेनधनुश्चिच्छेदमारिष ११ सोन्यत्कार्मुकमादायभीष्मंविव्याधपंच
भिः सारथिंचत्रिभिर्बाणैःसुशितैरणमूर्द्धनि १२ तथाभीमोमहाराजद्रौपद्याःपंचचात्मजाः केकेयाभ्रातरःपंचसात्यकिश्चैवसा
त्वतः १३ अभ्यद्रवंतगांगेयंयुधिष्ठिरपुरोगमाः रिरक्षिषंतःपांचालान्धृष्टद्युम्नपुरोगमान् १४ तथैवतावकाःसर्वेभीष्मरक्षार्थ-
मुद्यताः प्रत्युद्ययुःपांडुसेनांसहसैन्यानराधिप १५ तत्रासीत्सुमहद्युद्धंतवतेषांचसंकुलं नराश्वरथनागानांयमराष्ट्रविवर्द्धनं
१६ रथीरथिनमासाद्यप्राहिणोद्यमसादनं तथेतरान्समासाद्यनरनागाश्वसादिनः १७ अनयन्परलोकायशरैःसन्नतपर्वभिः
शरैश्चविविधैर्घोरैस्तत्रतत्रविशांपते १८ रथास्तुरथिभिर्हीनाहतसारथयस्तथा विप्रद्रुताश्चसमरेदिशोजग्मुःसमंततः १९
मृद्गमानान्नरान्राजन्हयाश्चसुबहून्रणे वातायमानादृश्यंतेगंधर्वनगरोपमाः २० रथिनश्चरथैर्हीनावर्मिणस्तेजसायुताः कुंड
लोष्णीषिणःसर्वेनिष्कांगदविभूषणाः २१ देवपुत्रसमाःसर्वेशौर्येशक्रसमायुधि ऋध्यावैश्रवणंचातिनयेनचबृहस्पतिं २२ स-
र्वलोकेश्वराःशूरास्तत्रतत्रविशांपते विप्रद्रुताव्यदृश्यंतप्राकृताइवमानवाः २३ दंतिनश्चनरश्रेष्ठहीनाःपरमसादिभिः मृद्नं-
तःस्वान्यनीकानिनिपेतुःसर्वशब्दगाः २४ चर्मभिश्चामरैश्चित्रैःपताकाभिश्चमारिष छत्रैःशितैर्हेमदंडैश्चामरैश्चसमंततः
२५ विशीर्णैर्विप्रधावंतोदृश्यंतेस्मदिशोदश नवमेघप्रतीकाशाजलदोपमनिस्वनाः २६ तथैवदंतिभिर्हीनागजारोहाविं-
शांपते प्रधावंतोन्वदृश्यंततवतेषांचसंकुले २७ नानादेशसमुत्थांश्चतुरंगान्हेमभूषितान् वातायमानानद्राक्षंशतशोथ
सहस्रशः २८ अश्वारोहान्हतैरश्वैर्गृहीतासीन्समंततः द्रवमाणानपश्यामद्राव्यमाणांश्चसंयुगे २९ गजोगजंसमासाद्य
द्रवमाणंमहाहवे ययौप्रमृद्यतरसापादातान्वाजिनस्तथा ३० तथैवचरथान्राजन्प्रममर्दरणेगजः रथाश्चैवसमासाद्यप-
तितांस्तुरगान्भुवि ३१ व्यमृद्नन्समरेराजंस्तुरगाश्चनरान्रणे एवंतेबहुधाराजन्प्रत्यमृद्नन्परस्परं ३२ तस्मिन्रौद्रेतथा
युद्धेवर्तमानेमहाभये प्रावर्ततनदीघोराशोणितांत्रतरंगिणी ३३ असिसंघातसंबाधाकेशशैवलशाद्वला रथह्रदाशरा-
वर्ताहयमीनादुरासदा ३४ शीर्षोपलसमाकीर्णाहस्तिग्राहसमाकुला कवचोष्णीषफेनौघाधनुर्वेगासिकच्छपा ३५

पताकाध्वजवृक्षाढ्यामर्त्यकूलापहारिणी क्रव्यादहंससंकीर्णायमराष्ट्रविवर्द्धिनी ३६ तांनदींक्षत्रियाःशूरारथनागहयप्लवैः
प्रतेरुर्बहवोराजन्भयंत्यक्त्वामहारथाः ३७ अपोवाहरणेभीरून्कश्मलेनाभिसंवृतान् यथावैतरणीप्रेतान्प्रेतराजपुरंप्रति
३८ प्राक्रोशन्क्षत्रियास्तत्रदृष्ट्वातद्वैशसंमहत् दुर्योधनापराधेनगच्छंतिक्षत्रियाःक्षयं ३९ गुणवत्सुकथंद्वेषंधृतराष्ट्रोजने-
श्वरः कृतवान्पांडुपुत्रेषुपापात्मालोभमोहितः ४० एवंबहुविधावाचःश्रूयंतेस्मपरस्परं पांडवस्तवसंयुक्ताःपुत्राणांतसुदा
रुणाः ४१ तानिशम्यततोवाचःसर्वयोधैरुदाहृताः आगस्कृत्सर्वलोकस्यपुत्रोदुर्योधनस्तव ४२ भीष्मंद्रोणंकृपंचैवशल्यं
चोवाचभारत युध्यध्वमनहंकाराःकिंचिरंकुरुथेतिच ४३ ततःप्रववृतेयुद्धंकुरूणांपांडवैःसह अक्षद्यूतकृतंराजन्सु-
घोरंवैशसंतदा ४४ यत्पुरानविगृण्हासिवार्यमाणोमहात्मभिः वैचित्रवीर्यतस्येदंफलंपश्यसुदारुणं ४५ नहिपांडुसु-
ताराजन्ससैन्याःसपदानुगाः रक्षंतिसमरेप्राणान्कौरवावापिसंयुगे ४६ एतस्मात्कारणाद्घोरोवर्ततेस्वजनक्षयः दैवाद्वा
पुरुषव्याघ्रतवचापनयान्नृप ४७ इतिश्रीमन्महाभा॰ भीष्मप॰ संकुलयुद्धेचतुरधिकशततमोऽध्यायः १०४
संजयउवाच अर्जुनस्तान्नरव्याघ्रोसुशर्मानुचरान्नृपान् अनयत्प्रेतराजस्यसदनंसायकैःशितैः १ सुशर्माचततोबा-
णैःपार्थंविव्याधसंयुगे वासुदेवंचसप्तत्यापार्थंचनवभिःपुनः २ तान्निवार्यशरौघेणशक्रसूनुर्महारथः सुशर्मणोरणे-
योधान्प्राहिणोद्यमसादनं ३ तेवध्यमानाःपार्थेनकालेनेवयुगक्षये व्यद्रवंतरणेराजन्भयेजातेमहारथाः ४ उत्सृज्य
तुरगान्केचिद्रथान्केचिच्चमारिष गजानन्येसमुत्सृज्यप्राद्रवंतदिशोदश ५ अपरेतुतदादायवाजिनागरथान्रणे त्वरया
परयायुक्ताःप्राद्रवंतविशांपते ६ पादाताश्चापिशस्त्राणिसमुत्सृज्यमहारणे निरपेक्षास्मधावंततेनतेनस्मभारत ७
वार्यमाणाःसुबहुशस्त्रैगर्तेनसुशर्मणा तथान्यैःपार्थिवश्रेष्ठैर्नव्यतिष्ठंतसंयुगे ८ तद्बलंप्रद्रुतंदृष्ट्वापुत्रोदुर्योधनस्तव
पुरस्कृत्यरणेभीष्मंसर्वसैन्यपुरस्कृतः ९ सर्वोद्योगेनमहताधनंजयमुपाद्रवत् त्रिगर्ताधिपतेरर्थेजीवितस्यविशांपते
१० सएकःसमरेतस्थौकिरन्बहुविधांश्छरान् भ्रातृभिःसहितःसर्वैःशेषाहिप्रद्रुतानराः ११

तथैवपांडवाराजन्सर्वेद्योगेनदंशिताः प्रययुःफाल्गुनार्थाययत्रभीष्मोव्यतिष्ठत १२ ज्ञायमानारणेवीर्यंघोरंगांडीवधन्वनः हाहा
कारकृतोत्साहाभीष्मंजग्मुःसमंततः १३ ततस्तालध्वजःशूरःपांडवानांवरूथिनीं छादयामाससमरेशरैःसन्नतपर्वभिः १४
एकीभूतास्ततःसर्वेकुरवःसहपांडवैः अयुध्यंतमहाराजमध्यंप्राप्तेदिवाकरे १५ सात्यकिःकृतवर्माणंविद्ध्वापंचभिराशुगैः अ
तिष्ठदाहवेशूरःकिरन्बाणान्सहस्रशः १६ तथैवद्रुपदोराजाद्रोणंविद्ध्वाशितैःशरैः पुनर्विव्याधसप्तत्यासारथिंचास्यपंचभिः १७
भीमसेनस्तुराजानंबाल्हीकंप्रपितामहं विद्ध्वानदन्महानादंशार्दूलइवकानने १८ आर्जुनिश्चित्रसेनेनविद्धोबहुभिराशुगैः
चित्रसेनंत्रिभिर्बाणैर्विव्याधसमरेभृशं १९ समागतौतौतुरणेमहामात्रौव्यरोचतां यथादिविमहाघोरौराजन्बुधशनैश्चरौ
२० तस्याश्वांश्चतुरोहत्वासूतंचनवभिःशरैः ननादबलवन्नादंसौभद्रःपरवीरहा २१ हताश्वात्तुरथात्तूर्णंसोवप्लुत्यमहार-
थः आरुरोहरथंतूर्णंदुर्मुखस्यविशांपते २२ द्रोणश्चद्रुपदंभित्वाशरैःसन्नतपर्वभिः सारथिंचास्यविव्याधत्वरमाणःपराक्रमी २३
पीड्यमानस्ततोराजाद्रुपदोवाहिनीमुखे अपायाज्जवनैरश्वैःपूर्ववैरमनुस्मरन् २४ भीमसेनस्तुराजानंमुहूर्तादिवबाल्हिकं व्य
श्वसूतरथंचक्रेसर्वसैन्यस्यपश्यतः २५ ससंभ्रमोमहाराजसंशयंपरमंगतः अवप्लुत्यततोवाहाद्बाल्हीकःपुरुषोत्तमः २६ आ
रुरोहरथंतूर्णंलक्ष्मणस्यमहारणे सात्यकिःकृतवर्माणंवारयित्वामहारणे २७ शरैर्बहुविधैराजन्नाससादपितामहं सविद्ध्वा
भारतंषष्ट्यानिशितैर्लोमवाहिभिः २८ नृत्यन्निवरथोपस्थेविधुन्वानोमहद्धनुः तस्यायसींमहाशक्तिंचिक्षेपाथपितामहः
२९ हेमचित्रांमहावेगांनागकन्योपमांशुभां तामापतंतींसहसामृत्युकल्पांसुदुर्जयां ३० व्यंसयामासवार्ष्णेयोलाघवेनमहाय-
शाः अनासाद्यतुवार्ष्णेयंशक्तिःपरमदारुणा ३१ न्यपतद्धरणीपृष्ठेमहोल्केवमहाप्रभा वार्ष्णेयस्तुततोराजन्स्वांशक्तिंकनकप्रभां
३२ वेगवद्गृह्यचिक्षेपपितामहरथंप्रति वार्ष्णेयभुजवेगेनप्रणुन्नासामहाहवे ३३ अभिदुद्राववेगेनकालरात्रिर्यथानरं तामा
पतंतींसहसाद्विधाचिच्छेदभारत ३४ क्षुरप्राभ्यांसुतीक्ष्णाभ्यांसाव्यशीर्यतमेदिनीं छित्वाशक्तिंतुगांगेयःसात्यकिंनवभिःश
रैः ३५ आजघानोरसिक्रुद्धःप्रहसंश्छत्रुकर्शनः ततःसरथनागाश्वाःपांडवाःपांडुपूर्वज ३६ ६९ ६९ ६९

परिवव्रूरणेभीष्मंमाधवत्राणकारणात् ततःप्रववृतेयुद्धंतुमुलंलोमहर्षणं पांडवानांकुरूणांचसमरेविजयैषिणां ३७ इति-
श्रीमन्महाभा० भीष्म० पंचाधिकशततमोध्यायः १०५ संजयउवाच दृष्ट्वाभीष्मंरणेक्रुद्धंपांडवैरभिसंवृतं यथामेघैर्महाराज
तपांतेदिविभास्करं १ दुर्योधनोमहाराजदुःशासनमभाषत एषशूरोमहेष्वासोभीष्मःशूरनिषूदनः २ छादितःपांडवैःशूरैःस-
मंताद्भरतर्षभ तस्यकार्यंत्वयावीररक्षणंसुमहात्मनः ३ रक्ष्यमाणोहिसमरेभीष्मोस्माकंपितामहः निहन्यात्समरेयत्तान्पांचाला-
न्पांडवैःसह ४ तत्रकार्यतमंमन्येभीष्मस्यैवाभिरक्षणं गोप्ताह्येषमहेष्वासोभीष्मोस्माकंमहाव्रतः ५ सभवान्सर्वसैन्येनपरिवार्य
पितामहं समरेकर्मकुर्वाणंदुष्करंपरिरक्षतु ६ सएवमुक्तःसमरेपुत्रोदुःशासनस्तव परिवार्यस्थितोभीष्मंसैन्येनमहतावृतः ७
ततःशतसहस्राणांहयानांसुबलात्मजः विमलप्रासहस्तानामृष्टितोमरधारिणां ८ दर्पितानांसुवेशानांबलस्थानांपताकिनां शि
क्षितैर्युद्धकुशलैरुपेतानांनरोत्तमैः ९ नकुलंसहदेवंचधर्मराजंचपांडवं न्यवारयन्नरश्रेष्ठान्परिवार्यसमंततः १० ततोदुर्योधनो
राजाशूराणांहयसादिनां अयुतंप्रेषयामासपांडवानांमहारणे ११ तैःप्रविष्टैर्महावेगैर्गरुत्मद्भिरिवाहवे खुराहताधराराजंश्च-
कंपेचननादच १२ खुरशब्दश्चसुमहान्वाजिनांशुश्रुवेतदा महावंशवनस्येवदह्यमानस्यपर्वते १३ उत्पतद्भिश्चतैस्तत्रसमुद्धू-
तंमहद्रजः दिवाकररथंप्राप्यच्छादयामासभास्करं १४ वेगवद्भिर्हयैस्तैस्तुक्षोभितापांडवीचमूः निपतद्भिर्महावेगैर्हंसैरिव
महत्सरः १५ हेषतांचैवशब्देननप्राज्ञायततकिंचन ततोयुधिष्ठिरोराजामाद्रीपुत्रौचपांडवौ १६ प्रत्यघ्नंस्तरसावेगंसमरेहयसा
दिनां उद्वृत्तस्यमहाराजप्रावृट्कालेतिपूर्यतः १७ पौर्णमास्यामंबुवेगंयथावेलामहोदधेः ततस्तेरथिनोराजञ्छरैःसन्नतप-
र्वभिः १८ न्यकृंतन्नुत्तमांगानिशरेणहयसादिनां तेनिपेतुर्महाराजनिहतादृढधन्विभिः १९ नागैरिवमहानागायथावद्गि
रिगह्वरे तेपिप्रासैःसुनिशितैःशरैःसन्नतपर्वभिः २० न्यकृंतन्नुत्तमांगानिविचरंतोदिशोदिश अथाहताहयारोहाऋष्टि-
भिर्भरतर्षभ २१ अत्यजन्नुत्तमांगानिफलानीवमहाद्रुमाः ससादिनोहयाराजंस्तत्रतत्रनिषूदिताः २२ पतिताःपात्यमानाश्चप्र
त्यदृश्यंतसर्वशः वध्यमानाहयाश्चैवप्राद्रवंतभयार्दिताः २३ यथासिंहंसमासाद्यमृगाःप्राणपरायणाः पांडवाश्चमहाराजजित्वाशत्रू
न्महामृधे २४

दध्मुःशंखांश्चभेरीश्चताडयामासुराहवे ततोदुर्योधनोदीनोदृष्ट्वासैन्यंपराजितं २५ अब्रवीद्भरतश्रेष्ठमद्रराजमिदंवचः एषपां
डुसुतोज्येष्ठोयमाभ्यांसहितोरणे २६ पश्यतांवोमहाबाहोसेनांद्रावयतिप्रभो तंवारयमहाबाहोवेलेवमकरालयं २७ त्वंहिसं
श्रूयसेत्यर्थमसह्यबलविक्रमः पुत्रस्यतवतद्वाक्यंश्रुत्वाशल्यःप्रतापवान् २८ सययौरथवंशेनयत्रराजायुधिष्ठिरः तदापतद्वै-
सहसाशल्यस्यसुमहद्बलं २९ महौघवेगंसमरेवारयामासपांडवः मद्रराजंचसमरेधर्मराजोमहारथः ३० दशभिःसायकै
स्तूर्णमाजघानस्तनांतरे नकुलःसहदेवश्चतंसप्तभिरजिह्मगैः ३१ मद्रराजोपितान्सर्वानाजघानत्रिभिस्त्रिभिः युधिष्ठिरंपुनः
षष्ट्याविव्याधनिशितैःशरैः ३२ माद्रीपुत्रौचसंभ्रांतौद्वाभ्यांद्वाभ्यामताडयत् ततोभीमोमहाबाहुर्दृष्ट्वाराजानमाहवे ३३ मद्र
राजरथंप्राप्तंमृत्योरास्यगतंयथा अभ्यपद्यतसंग्रामेयुधिष्ठिरमामित्रजित् ३४ ततोयुद्धंमहाघोरंप्रावर्ततसुदारुणं अपरांदि
शमास्थायपतमानेदिवाकरे ३५ इतिश्रीमन्महाभा॰भी॰शल्यधर्मसमागमेषडधिकशततमोऽध्यायः १०६ संज
यउवाच ततःपितातवक्रुद्धोनिशितैःसायकोत्तमैः आजघानरणेपार्थान्सहसेनान्समंततः १ भीमंद्वादशभिर्विद्ध्वासात्यकिं
नवभिःशरैः नकुलंचत्रिभिर्विद्ध्वासहदेवंचसप्तभिः २ युधिष्ठिरंद्वादशभिर्बाह्वोरुरसिचार्पयत् धृष्टद्युम्नंततोविद्ध्वाननना-
दसुमहाबलः ३ तंद्वादशार्धेनर्नकुलोमाधवश्चत्रिभिःशरैः धृष्टद्युम्नश्चसप्तत्याभीमसेनश्चसप्तभिः ४ युधिष्ठिरोद्वादशभिः
प्रत्यविद्ध्यत्पितामहं द्रोणस्तुसात्यकिंविद्ध्वाभीमसेनमविद्ध्यत ५ एकैकंपंचभिर्बाणैर्यमदंडोपमैःशितैः तौचतंप्रतिविव्ध्ये
तांत्रिभिस्त्रिभिरजिह्मगैः ६ तौत्रैरिवमहानागंद्रोणंब्राह्मणपुंगवं सौवीराःकितवाःप्राच्याःप्रतीच्योदीच्यमालवाः ७ अ
भीषाहाःशूरसेनाःशिवयोथवशातयः संग्रामेनाजहुर्भीष्मंवध्यमानाःशितैःशरैः ८ तथैवान्येमहीपालानानादेशसमागताः
पांडवानभ्यवर्तंतविविधायुधपाणयः ९ तथैवपांडवाराजन्परिवव्रुःपितामहं ससमंतात्परिवृतोरथौघैरपराजितः १० गह
नेग्निरिवोत्सृष्टःप्रजज्वालदहन्परान् रथाग्न्यगारश्चापार्चिरसिशक्तिगदेंधनः ११ शरस्फुलिंगोभीष्माग्निर्ददाहक्षत्रियर्षभा
न् सुवर्णपुंखैरिषुभिर्गार्द्धपक्षैःसुतेजनैः १२ कर्णिनालीकनाराचैश्छादयामासतद्बलं अपातयद्ध्वजांश्चैवरथिनश्चाशितैःशरैः १३

१४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७

मुंडतालवनानीवचकारसरथव्रजान् निर्मनुष्यान्रथान्राजन्गजानश्वांश्वसंयुगे १४ अकरोत्स महाबाहुः सर्वशस्त्रभृतांवरः तस्य
ज्यातलनिर्घोषंविस्फूर्जितमिवाशनेः १५ निशम्यसर्वभूतानिसमकंपतभारत अमोघाह्यपतन्बाणाःपितुस्तेभरतर्षभ १६ नासज्जंत
तनुत्रेषुभीष्मचापच्युताःशराः हतवीरान्रथान्राजन्संयुक्तान्जवनैर्हयैः १७ अपश्यामसहाराजक्रियमाणान्रणाजिरे चेदिकाशि
करूषाणांसहस्राणिचतुर्दश १८ महारथाःसमाख्याताःकुलपुत्रास्तनुत्यजः अपरावर्तिनः सर्वेस्रुवर्णविकृतध्वजाः १९ संग्रा-
मेभीष्ममासाद्यव्यादितास्यमिवांतकं निमग्नाःपरलोकायसवाजिरथकुंजराः २० भग्नाक्षोपस्करान्कांश्चिद्भग्नचक्रांश्चभारत
अपश्याममहाराजशतशोथसहस्रशः २१ सवरूथैरथैर्भग्नैरथिभिश्चनिपातितैः शरैःस्रुकवचैश्छिन्नैःपट्टिशैश्चविशांपते २२
गदाभिर्भिंडिपालैश्चनिशितैश्वशिलीमुखैः अनुकर्षैरुपासंगैश्चक्रैर्भग्नैश्चमारिष २३ बाहुभिःकार्मुकैःखड्गैःशिरोभिश्चसकुंडलैः
तलत्रैरंगुलित्रैश्चध्वजैश्चविनिपातितैः २४ चापैश्चबहुधाच्छिन्नैःसमास्तीर्यतमेदिनी हतारोहागजाराजन्हयाश्चहतसादिनः २५
न्यपतंतगतप्राणाःशतशोथसहस्रशः यतमानाश्चतेवीराद्रवमाणान्महारथान् २६ नाशक्नुवन्वारयितुंभीष्मबाणप्रपीडितान्
महेंद्रसमवीर्येणवध्यमानामहाचमूः २७ अभज्यतमहाराजनचद्वौसहधावतः आविद्धरथनागाश्वंपतितध्वजसंकुलं २८
अनीकंपांडुपुत्राणांहाहाभूतमचेतनं जघानात्रपितापुत्रंपुत्रश्चपितरंतथा २९ प्रियंसखायंचाक्रंदेसखादैवबलात्कृतः विमुक्त
कवचानन्येपांडुपुत्रस्यसैनिकाः ३० प्रकीर्यकेशान्धावंतःप्रत्यदृश्यंतसर्वशः तद्गोकुलमिवोद्भ्रांतमुद्भ्रांतरथकूबरं ३१ ददृशेपांडुपु
त्रस्यसैन्यमार्तस्वरंतदा प्रभज्यमानंसैन्यंतुदृष्ट्वायादवनंदनः ३२ उवाचपार्थंबीभत्सुंनिगृह्यरथमुत्तमं अयंसकालःसंप्राप्तः
पार्थयःकांक्षितस्तव ३३ प्रहरास्मिन्नरव्याघ्रनचेन्मोहाद्विमुह्यसि यत्पुराकथितंवीरराज्ञांतेषांसमागमे ३४ विराटनगरेता
तसंजयस्यसमीपतः भीष्मद्रोणमुखान्सर्वान्धार्तराष्ट्रस्यसैनिकान् ३५ सानुबंधान्हनिष्यामियेमांयोत्स्यंतिसंगरे इतितत्कु-
रुकौंतेयसत्यंवाक्यमरिंदम ३६ क्षत्रधर्ममनुस्मृत्ययुध्यस्वविगतज्वरः इत्युक्तोवासुदेवेनतिर्यग्दृष्टिरधोमुखः ३७ अकामइ
वबीभत्सुरिदंवचनमब्रवीत् अवध्यानांवधंकृत्वाराज्यंवानरकोत्तरं ३८ दुःखानिवनवासेवाकिंनुमेस्यात्कृतंभवेत् चोदयाश्वा
न्यतोभीष्मःकरिष्येवचनंतव ३९ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९

पातयिष्यामिदुर्द्धर्षंभीष्मंकुरुपितामहं सचाश्वान्रजतप्रख्यांश्चोदयामासमाधवः ४० यतोभीष्मस्ततोराजन्दुष्प्रेक्ष्योरश्मिवानि-
व ततस्तत्पुनराववृत्तंयुधिष्ठिरबलंमहत् ४१ दृष्ट्वापार्थंमहाबाहुंभीष्मायोद्यतमाहवे ततोभीष्मःकुरुश्रेष्ठःसिंहवद्विनदन्मुहुः ४२
धनंजयरथंशीघ्रंशरवर्षैरवाकिरत् क्षणेनसरथस्तस्यसहयःसहसारथिः ४३ शरवर्षेणमहतानप्राज्ञायतभारत वासुदेवस्त्व-
संभ्रांतोधैर्यमास्थायसत्वरः ४४ चोदयामासतानश्वान्वितुन्नान्भीष्मसायकैः ततःपार्थोधनुर्गृह्यदिव्यंजलदनिस्वनं ४५ पा-
तयामासभीष्मस्यधनुश्छित्वाशितैःशरैः सच्छिन्नधन्वाकौरव्यःपुनरन्यन्महद्धनुः ४६ निमेषांतरमात्रेणसज्जंचक्रेपितातव च
कर्षच्चततोदोर्भ्यांधनुर्जलदनिस्वनं ४७ अथास्यतदपिक्रुद्धश्छिच्छेदधनुरर्जुनः तस्यतत्पूजयामासलाघवंशांतनोःसुतः ४८
साधुसाधुमहाबाहोसाधुकुंतीसुतेतिच समाभाष्यैवमपरंप्रगृह्यरुचिरंधनुः ४९ मुमोचसमरेभीष्मःशरान्पार्थरथंप्रति
अदर्शयद्वासुदेवोहययानेपरंबलं ५० मोघीकुर्वंश्छरांस्तस्यमंडलानिनिदर्शयन् शुशुभातेनरव्याघ्रौतौभीष्मशरविक्षतौ ५१
गोवृषाविवसंरब्धौविषाणोल्लिखितांकितौ वासुदेवस्तुसंप्रेक्ष्यपार्थस्यमृदुयुद्धतां ५२ भीष्मंचशरवर्षाणिसृजंतमनिशंयुधि
प्रतपंतमिवादित्यंमध्यमासाद्यसेनयोः ५३ वरान्वरान्विनिघ्नंतंपांडुपुत्रस्यसैनिकान् युगांतमिवकुर्वाणंभीष्मंयौधिष्ठिरेब-
ले ५४ नामृष्यतमहाबाहुर्माधवःपरवीरहा उत्सृज्यरजतप्रख्यान्हयान्पार्थस्यमारिष ५५ वासुदेवस्ततोयोगीप्रचस्कंद
महारथात् अभिदुद्रावभीष्मंसभुजप्रहरणोबली ५६ प्रतोदपाणिस्तेजस्वीसिंहवद्विनदन्मुहुः दारयन्निवपद्भ्यांसजगतींजग
दीश्वरः ५७ क्रोधताम्रेक्षणःकृष्णोजिघांसुरमितद्युतिः ग्रसन्निवचेतांसितावकानांमहाहवे ५८ दृष्ट्वामाधवमाक्रंदेभी-
ष्मायोद्यतमंतिके हतोभीष्मोहतोभीष्मस्तत्रतत्रवचोमहत् ५९ अश्रूयतमहाराजवासुदेवभयात्तदा पीतकौशेयसंवीतो
मणिश्यामोजनार्दनः ६० शुशुभेविद्रवन्भीष्मंविद्युन्मालीयथांबुदः ससिंहइवमातंगंयूथर्षभइवर्षभं ६१ अभिदुद्राव-
वेगेनविनदन्यादवर्षभः तमापतंतंसंप्रेक्ष्यपुंडरीकाक्षमाहवे ६२ असंभ्रमंरणेभीष्मोविचकर्षमहद्धनुः उवाचचैवगोविं-
दमसंभ्रांतेनचेतसा ६३ एह्येहिपुंडरीकाक्षदेवदेवनमोस्तुते मामद्यसात्वतश्रेष्ठपातयस्वमहाहवे ६४ ५ ५ १८१

त्वयाहिदेवसंग्रामेहतस्यापिममानघ श्रेयएवपरंकृष्णलोकेभवतिसर्वतः ६५ संभावितोस्मिगोविंदत्रैलोक्येनाद्यसंयुगे प्रहर स्वयथेष्टंवैदासोस्मितवचानघ ६६ अन्वगेवततःपार्थस्समभिद्रुत्यकेशवं निजग्राहमहाबाहुंबाहुभ्यांपरिगृह्यवै ६७ निगृह्य माणःपार्थेनकृष्णोराजीवलोचनः जगामैवैनमादायवेगेनपुरुषोत्तमः ६८ पार्थस्तुविष्टभ्यबलाच्चरणौपरवीरहा निजग्राह-हृषीकेशंकथंचिद्दशमेपदे ६९ ततएवमुवाचार्तःक्रोधपर्याकुलेक्षणं निश्वसंतंयथानागमर्जुनःप्रणयात्सखा ७० निवर्तस्व-महाबाहोनानृतंकर्तुमर्हसि यत्त्वयाकथितंपूर्वंनयोत्स्यामीतिकेशव ७१ मिथ्यावादीतिलोकस्त्वांकथयिष्यतिमाधव ममैष भारःसर्वोहिहनिष्यामिपितामहं ७२ शपेकेशवशस्त्रेणसत्येनसुकृतेनच अंतंयथागमिष्यामिशत्रूणांशत्रुसूदन ७३ अ-द्यैवपश्यदुर्द्धर्षंपात्यमानंमहारथं तारापतिमिवापूर्णमंतकालेयदृच्छया ७४ माधवस्तुवचःश्रुत्वाफाल्गुनस्यमहात्मनः अ किंचिदुक्त्वासक्रोधआरुरोहरथंपुनः ७५ तौरथस्थौनरव्याघ्रौभीष्मःशांतनवःपुनः ववर्षशरवर्षेणमेघोवृष्ट्यायथाचलं ७६ प्राणानादत्तयोधानांपितादेवव्रतस्तव गभस्तिभिरिवादित्यस्तेजांसिशिशिरात्यये ७७ यथाकुरूणांसैन्यानिबभंजु र्युधिपांडवाः तथापांडवसैन्यानिबभंजयुधितेपिता ७८ हतविद्रुतसैन्यास्तुनिरुत्साहाविचेतसः निरीक्षितुंनशेकुस्ते भीष्ममप्रतिमंरणे ७९ मध्यंगतमिवादित्यंप्रतपंतंस्वतेजसा तेवध्यमानाभीष्मेणशतशोथसहस्रशः ८० वीक्षांचक्रुर्म-हाराजपांडवाभयपीडिताः तथापांडवसैन्यानिद्रवमाणानिभारत ८१ त्रातारंनाध्यगच्छंतगावःपंकगताइव पिपीलिकाइ वक्षुण्णादुर्बलाबलिनारणे ८२ महारथंभारतदुःप्रकंपंशरोर्मिणंप्रतपंतंनरेंद्रान् भीष्मंनशेकुःप्रतिवीक्षितुंनेशरार्चिषंसू र्यमिवातपंतम् ८३ विमृद्नतस्तुस्यतुपांडुसेनामस्तंजगामाथसहस्ररश्मिः ततोबलानांश्रमकर्शितानांमनोवहारंप्रतिसंबभूव ८४ इतिश्रीमन्महाभा० भी० नवमदिवसयुद्धसमाप्तिर्नामसप्ताधिकशततमोऽध्यायः १०७ संजयउवाच युध्य तामेवतेषांतुभास्करेस्तमुपागते संध्यासमभवद्घोरानापश्यामततोरणं १ ततोयुधिष्ठिरोराजासंध्यांसंदृश्यभारत वध्य मानंचभीष्मेणत्यक्तास्त्रंभयविह्वलं २ स्वसैन्यंचपरावृत्तंपलायनपरायणं भीष्मंचयुधिसंरब्धंपीडयंतंमहारथं ३

सोमकांश्चजितान्दृष्ट्वानिरुत्साहान्महारथान् चिंतयित्वाततोराजाअवहारमरोचयत् ४ ततोवहारंसैन्यानांचक्रेराजायुधिष्ठिरः
तथैवतवसैन्यानामवहारोह्यभूत्तदा ५ ततोवहारंसैन्यानांकृत्वातत्रमहारथाः न्यविशंतकुरुश्रेष्ठसंग्रामेक्षतविक्षताः ६ भी-
ष्मस्यसमरेकर्मचिंतयानास्तुपांडवाः नालभंतदाशांतिंभीष्मबाणप्रपीडिताः ७ भीष्मोपिसमरेजित्वापांडवान्सहसृंजयान् पूज्य
मानस्तवसुतैर्वंद्यमानश्चभारत ८ न्यविशत्कुरुभिःसार्द्धंहृष्टरूपैःसमंततः ततोरात्रिःसमभवत्सर्वभूतप्रमोदिनी ९ तस्मि
न्रात्रिमुखेघोरेपांडवावृष्णिभिःसह सृंजयाश्चदुराधर्षामंत्रायसमुपाविशन् १० आत्मनिःश्रेयसंसर्वेप्राप्तकालंमहाबलाः मं
त्रयामासुरव्यग्रामंत्रनिश्चयकोविदाः ११ ततोयुधिष्ठिरोराजामंत्रयित्वाचिरंनृप वासुदेवंसमुद्वीक्ष्यवचनंचेदमाददे १२ कृ-
ष्णपश्यमहात्मानंभीष्मंभीमपराक्रमं गजंनलवनानीवविमृद्नंतंबलंमम १३ नचैवैनंमहात्मानमुत्सहामोनिरीक्षितुं लेलिह्य
मानंसैन्येषुप्रवृद्धमिवपावकं १४ यथाघोरोमहानागस्तक्षकोवैविषोल्बणः तथाभीष्मोरणेक्रुद्धस्तीक्ष्णशस्त्रःप्रतापवान् १५
गृहीतचापःसमरेप्रमुंचन्निशितांश्छरान् शक्योजेतुंयमःक्रुद्धोवज्रपाणिश्चदेवराट् १६ वरुणःपाशभृद्वापिसगदोवाधने-
श्वरः नतुभीष्मःसुसंक्रुद्धःशक्योजेतुंमहाहवे १७ सोहमेवंगतेकृष्णनिमग्नःशोकसागरे आत्मनोबुद्धिदौर्बल्याद्भीष्ममा
साद्यसंयुगे १८ वनंयास्यामिदुर्द्धर्षश्रेयोवैतत्रमेगतं नयुद्धंरोचतेकृष्णहंतिभीष्मोहिनःसदा १९ यथाप्रज्वलितंवन्हिंपतं
गःसमभिद्रवन् एकतोमृत्युमभ्येतितथाहंभीष्ममेयिवान् २० क्षयंनीतोस्मिवार्ष्णेयराज्यहेतोःपराक्रमी भ्रातरश्चैवमेशू
राःसायकैर्भृशपीडिताः २१ मत्कृतेभ्रातृसौहार्दाद्राज्यभ्रष्टावनंगताः परिक्लिष्टातथाकृष्णामत्कृतेमधुसूदन २२ जीवितंबहु
मन्येहंजीवितंह्यद्यदुर्लभं जीवितस्याद्यशेषेणचरिष्येधर्ममुत्तमं २३ यदितेहमनुग्राह्योभ्रातृभिःसहकेशव स्वधर्मस्याविरोधे
नहितंव्याहरकेशव २४ एवंश्रुत्वावचस्तस्यकारुण्याद्बहुविस्तरं प्रत्युवाचततःकृष्णःसांत्वयानोयुधिष्ठिरं २५ धर्मपुत्रविषा
दंत्वंमाकृथाःसत्यसंगरः यस्यतेभ्रातरःशूरादुर्जयाःशत्रुसूदनाः २६ अर्जुनोभीमसेनश्चवाय्वग्निसमतेजसौ माद्रीपुत्रौच-
विक्रांतौत्रिदशानामिवेश्वरौ २७ मांवानियुंक्ष्वसौहार्दाद्योत्स्येभीष्मेणपांडव त्वद्युक्तोमहाराजकिंनकुर्यांमहाहवे २८

२९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२

हनिष्यामिरणेभीष्ममाहूयपुरुषर्षभं पश्यतांधार्तराष्ट्राणांयदिनेच्छतिफाल्गुनः २९ यदिभीष्मेहतेवीरेजयंपश्यसिपांडव हंता
स्म्येकरथेनाद्यकुरुवृद्धंपितामहं ३० पश्यमेविक्रमंराजन्महेंद्रस्येवसंयुगे विमुंचंतंमहास्त्राणिपातयिष्यामितंरथात् ३१ यःश
त्रुःपांडुपुत्राणामच्छत्रुःसनसंशयः मदर्थाभवदीयायेयेमदीयास्तवैवते ३२ तवभ्राताममसखासंबंधीशिष्यएवच मांसान्यु
त्कृत्यदास्यामिफाल्गुनार्थेमहीपते ३३ एषचापिनरव्याघ्रोमत्कृतेजीवितंत्यजेत् एषनःसमयस्ताततारयेमपरस्परं ३४ स
मांनियुंक्ष्वराजेंद्रयथायोद्धाभवाम्यहं प्रतिज्ञातमुपप्लव्येयत्तत्पार्थेनपूर्वतः ३५ घातयिष्यामिगांगेयमितिलोकस्यसन्नि-
धौ परिरक्ष्यमिदंतावद्वचःपार्थस्यधीमतः ३६ अनुज्ञातंतुपार्थेनमयाकार्यंनसंशयः अथवाफाल्गुनस्यैवभारःपरमितोरणे
३७ सहनिष्यतिसंग्रामेभीष्मंपरपुरंजय अशक्यमपिकुर्याद्धिरणेपार्थःसमुद्यतः ३८ त्रिदशान्वासमुद्युक्तान्सहितान्दैत्य
दानवैः निहन्यादर्जुनःसंख्येकिमुभीष्मंनराधिप ३९ विपरीतोमहावीर्योगतसत्वोल्पजीवनः भीष्मःशांतनवोनूनंकर्तव्यं-
नावबुध्यते ४० युधिष्ठिरउवाच एवमेतन्महाबाहोयथावदसिमाधव सर्वेह्येतेनपर्याप्तास्तववेगविधारणे ४१ नियतंसम-
वाप्स्यामिसर्वमेतद्यथेप्सितं यस्यमेपुरुषव्याघ्रभवान्पक्षेव्यवस्थितः ४२ सेंद्रानपिरणेदेवान्जयेयंजयतांवर त्वयानाथेन
गोविंदकिमुभीष्मंमहारथं ४३ नतुत्वामनृतंकर्तुमुत्सहेस्वात्मगौरवात् अयुध्यमानःसाहाय्यंयथोक्तंकुरुमाधव ४४ समय
स्तुकृतःकश्चिन्ममभीष्मेणसंयुगे मंत्रयिष्येतवार्थायनतुयोत्स्येकथंचन ४५ दुर्योधनार्थेयोत्स्यामिसत्यमेतदितिप्रभो
सहिराज्यस्यमेदातामंत्रस्यैवचमाधव ४६ तस्माद्देवव्रतंभूयोवधोपायार्थमात्मनः भवतासहिताःसर्वेप्रयाममधुसूदन ४७
तद्वयंसहितागत्वाभीष्ममाशुनरोत्तमं नचिरात्सर्ववार्ष्णेयमंत्रंपृच्छामकौरवं ४८ सवक्ष्यतिहितंवाक्यंसत्यमस्माञ्जना-
र्दन यथाचवक्ष्यतेकृष्णतथाकर्तास्मिसंयुगे ४९ सनोजयस्यदातास्यान्मंत्रस्यचदृढव्रतः बालाःपित्राविहीनाश्चतेनसं-
वर्द्धितावयं ५० तंचेत्पितामहंवृद्धंहंतुमिच्छामिमाधव पितुःपितरमिष्टंचधिगस्तुक्षत्रजीविकां ५१ संजयउवाच ततो
ब्रवीन्महाराजवार्ष्णेयःकुरुनंदनं रोचतेमेमहाप्राज्ञराजेंद्रतवभाषितं ५२ देवव्रतःकृतीभीष्मःप्रेक्षितेनापिनिर्दहेत् गम्यतां-
सवधोपायंप्रष्टुंसागरगासुतं ५३ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३

वक्तुमर्हतिसत्यंसत्वयापृष्टोविशेषतः तेवयंतत्रगच्छामःप्रष्टुंकुरुपितामहं ५४ गत्वाशांतनवंवृद्धंमंत्रंपृच्छामभारत सनोदा
स्यतिमंत्रंयंतेनयोत्स्यामहेपरान् ५५ एवमामंत्र्यतेवीराःपांडवाःपांडुपूर्वज जग्मुस्तेसहिताःसर्वेवासुदेवश्चवीर्यवान् ५६
विमुक्तशस्त्रकवचाभीष्मस्यसदनंप्रति प्रविश्यचतदाभीष्मंशिरोभिःप्रणिपेदिरे ५७ पूजयंतोमहाराजपांडवाभरतर्षभ
प्रणम्यशिरसाचैनंभीष्मंशरणमभ्ययुः ५८ तानुवाचमहाबाहुर्भीष्मःकुरुपितामहः स्वागतंतववार्ष्णेयस्वागतंतेधनंजय ५९
स्वागतंधर्मपुत्रायभीमाययमयोस्तथा किंवाकार्यंकरोम्यद्ययुष्माकंप्रीतिवर्द्धनं ६० सर्वात्मनापिकर्तास्मियद्यपिस्यात्सुदुष्करं त
थाब्रुवाणंगांगेयंप्रीतियुक्तंपुनःपुनः ६१ उवाचराजादीनात्माप्रीतियुक्तमिदंवचः कथंजयेमसर्वज्ञकथंराज्यंलभेमहि ६२ प्र-
जानांसंक्षयोनस्यात्कथंतन्मेवदप्रभो भवान्हिनोवधोपायंब्रवीतुस्वयमात्मनः ६३ भवंतंसमरेवीरविषहेमकथंवयं नहितेसू
क्ष्ममप्यस्तिरंध्रंकुरुपितामह ६४ मंडलेनैवधनुषादृश्यसेसंयुगे सदा आददानंसंदधानंविकर्षंतंधनुर्नच ६५ पश्यामस्त्वांम
हाबाहोरथेसूर्यमिवापरं रथाश्वनरनागानांहंतारंपरवीरहन् ६६ कोह्यन्योत्सहतेजेतुंत्वांपुमान्भरतर्षभ वर्षताशरवर्षाणि
संयुगेवैशसंकृतं ६७ क्षयंनीताहिपृतनासंयुगेमहतीमम यथायुधिजयेमत्वांयथाराज्यंभृशंमम ६८ ममसैन्यस्यचक्षेमं-
तन्मेब्रूहिपितामह ततोऽब्रवीच्छांतनवःपांडवान्पांडुपूर्वजः ६९ नकथंचनकौंतेयमयिजीवतिसंयुगे जयोभवतिसर्वज्ञसत्य
मेतद्ब्रवीमिते ७० निर्जितेमयियुद्धेनरणेजेष्यथपांडवाः क्षिप्रंमयिप्रहरध्वंयदीच्छथरणेजयं ७१ अनुजानामिवःपार्थाः
प्रहरध्वंयथासुखं एवंहिसुकृतंमन्येभवतांविदितोह्यहं हतेमयिहतंसर्वंतस्मादेवंविधीयतां ७२ युधिष्ठिरउवाच ब्रूहि
तस्मादुपायंनोयथायुद्धेजयेमहि भवंतंसमरेक्रुद्धंदंडहस्तमिवांतकं ७३ शक्योवज्रधरोजेतुंवरुणोथयमस्तथा नभवान्स
मरेशक्यःसेंद्रैरपिसुरासुरैः ७४ भीष्मउवाच सत्यमेतन्महाबाहोयथावदसिपांडव नाहंजेतुंरणेशक्यःसेंद्रैरपिसुरा
सुरैः ७५ आत्तशस्त्रोरणेयत्तोगृहीतवरकार्मुकः ततोमांन्यस्तशस्त्रंतुएतेहन्युर्महारथाः ७६ निक्षिप्तशस्त्रेपतितेविमुक्तकव
चध्वजे द्रवमाणेचभीतेचतवचास्मीतिवादिनि ७७ स्त्रियांस्त्रीनामधेयेचविकलेचैकपुत्रिणि अप्रशस्तेनरेचैवनयुद्धंरोचतेमम
७८

७९ ८० ८१ ८२ ८३ ८४ ८५ ८६ ८७ ८८ ८९ ९० ९१

इमंमेशृणुराजेंद्रसंकल्पंपूर्वचिंतितं अमंगल्यध्वजंदृष्ट्वानयुध्येयंकदाचन ७९ यएषद्रौपदोराजंस्तवसैन्येमहारथः शिखं-
डीसमरामर्षीशूरश्चसमितिंजयः ८० यथाभवच्चस्त्रीपूर्वंपश्चात्पुंस्त्वंसमागतः जानंतिचभवंतोपिसर्वमेतद्यथातथं ८१ अ-
र्जुनःसमरेशूरःपुरस्कृत्यशिखंडिनं मामेवविशिखैस्तीक्ष्णैरभिद्रवतुदंशितः ८२ अमंगल्यध्वजेतस्मिन्स्त्रीपूर्वेचविशेषतः
नप्रहर्तुमभीप्सामिगृहीतेषुःकथंचन ८३ तदंतरंसमासाद्यपांडवोमांधनंजयः शरैर्घातयतुक्षिप्रंसमंताद्भरतर्षभ ८४ न
तंपश्यामिलोकेषुमांहन्याद्यःसमुद्यतं ऋतेकृष्णान्महाभागात्पांडवाद्वाधनंजयात् ८५ एषतस्मात्पुरोधायकंचिदन्यंममाग्र
तः आत्तशस्त्रोरणेयत्तोगृहीतवरकार्मुकः ८६ मांपातयतुबीभत्सुरेवंतवजयोध्रुवं एतत्कुरुष्वकौंतेययथोक्तंममसुव्रत
संग्रामेधार्तराष्ट्रांश्चहन्याःसर्वान्समागतान् ८७ संजयउवाच तेतुज्ञात्वाततःपार्थाजग्मुःस्वशिबिरंप्रति अभिवाद्यम
हात्मानंभीष्मंकुरुपितामहं ८८ तथोक्तवतिगांगेयेपरलोकायदीक्षिते अर्जुनोदुःखसंतप्तःसव्रीडमिदमब्रवीत् ८९ गुरु
णाकुलवृद्धेनकृतप्रज्ञेनधीमता पितामहेनसंग्रामेकथंयोद्धास्मिमाधव ९० क्रीडताहिमयाबाल्येवासुदेवमहामनाः पांसु
रूषितगात्रेणमहात्माकलुषीकृतः ९१ यस्याहमधिरुह्यांकंबालःकिलगदाग्रज तातेत्यवोचंपितरंपितुःपांडोर्महात्मनः ९२
नाहंतातस्तवपितुस्ततोस्मितवभारत इतिमामब्रवीद्बाल्येयःसवध्यःकथंमया ९३ कामंवध्यतुसैन्यंमेनाहंयोत्स्येमहात्म
ना जयोवास्तुवधोवामेकथंवाकृष्णमन्यसे ९४ वासुदेवउवाच प्रतिज्ञायवधंजिष्णोपुराभीष्मस्यसंयुगे क्षत्रधर्म-
स्थितःपार्थकथंनैनंहनिष्यसि ९५ पातयैनंरथात्पार्थक्षत्रियंयुद्धदुर्मदं नाहत्वायुधिगांगेयंविजयस्तेभविष्यति ९६ दृष्ट-
मेतत्पुरादेवैर्गमिष्यतियमक्षयं यद्दृष्टंहिपुरापार्थतत्तथाननदन्यथा ९७ नहिभीष्मंदुराधर्षंव्यात्ताननमिवांतकं त्वदन्यः
शक्नुयाद्योद्धुमपिवज्रधरःस्वयं ९८ जहिभीष्मंस्थिरोभूत्वाशृणुचेदंवचोमम यथोवाचपुराशक्रंमहाबुद्धिर्बृहस्पतिः ९९
ज्यायांसमपिचेद्वृद्धंगुणैरपिसमन्वितं आततायिनमायांतंहन्याद्घातकमात्मनः १०० शाश्वतोयंस्थितोधर्मःक्षत्रियाणांधनंज
य योद्धव्यंरक्षितव्यंचयष्टव्यंचानुसूयुभिः १ अर्जुनउवा० शिखंडीनिधनंकृष्णभीष्मस्यभविताध्रुवं दृष्ट्वैवहिसदाभीष्मःपां
चाल्यंविनिवर्तते १०२ ९२ ९३ ९४ ९५ ९६ ९७ ९८ ९९ १०० १०१ १०२

तेवयंप्रमुखेनस्यपुरस्कृत्यशिखंडिनं गांगेयंपातयिष्यामउपायेनेतिमेमतिः १०३ अहमन्यान्महेष्वासान्वारयिष्यामिसायकैः शिखंड्यपियुधांश्रेष्ठंभीष्ममेवाभियोधयेत् १०४ श्रुतंहिकुरुमुख्यस्यनाहंहन्यांशिखंडिनं कन्याह्येषापुराभूत्वापुरुषःसमपद्यत १०५ इत्येवंनिश्चयंकृत्वापांडवाःसहबांधवाः अनुमान्यमहात्मानंप्रययुर्हृष्टमानसाः १०६ इतिश्रीमन्महाभारते भी॰ नवमदिवसावहारोत्तरमंत्रेअष्टोत्तरशततमोऽध्यायः १०८ धृतराष्ट्रउवाच कथंशिखंडीगांगेयमभ्यवर्ततसंयुगे पांडवांश्चकथंभीष्मस्तन्ममाचक्ष्वसंजय १ संजयउ॰ ततस्तेपांडवाःसर्वेसूर्यस्योदयनंप्रति ताड्यमानासुभेरीषुमृदंगेष्वानकेषुच २ ध्मायत्सुदधिवर्णेषुजलजेषुसमंततः शिखंडिनंपुरस्कृत्यनिर्याताःपांडवायुधि ३ कृत्वाव्यूहंमहाराजसर्वशत्रुनिबर्हणं शिखंडीसर्वसैन्यानामग्रआसीद्विशांपते ४ चक्ररक्षौततस्तस्यभीमसेनधनंजयौ पृष्ठतोद्रौपदेयाश्चसौभद्रश्चैववीर्यवान् ५ सात्यकिश्चेकितानश्चतेषांगोप्तामहारथः धृष्टद्युम्नस्ततःपश्चात्पांचालैरभिरक्षितः ६ ततोयुधिष्ठिरोराजायमाभ्यांसहितःप्रभुः प्रययौसिंहनादेननादयन्भरतर्षभ ७ विराटस्तुततःपश्चात्स्वेनसैन्येनसंवृतः द्रुपदश्चमहाबाहोततःपश्चादुपाद्रवत् ८ केकयाभ्रातरःपंचधृष्टकेतुश्चवीर्यवान् जघनंपालयामासुःपांडुसैन्यस्यभारत ९ एवंव्यूह्यमहासैन्यंपांडवास्तववाहिनीं अभ्यद्रवंतसंग्रामेत्यक्त्वाजीवितमात्मनः १० तथैवकुरवोराजन्भीष्मंकृत्वामहारथं अग्रतःसर्वसैन्यानांप्रययुःपांडवान्प्रति ११ पुत्रैस्तवदुराधर्षैरक्षितःसुमहाबलैः ततोद्रोणोमहेष्वासःपुत्रश्चास्यमहाबलः १२ भगदत्तस्ततःपश्चाद्गजानीकेनसंवृतः कृपश्चकृतवर्माचभगदत्तमनुव्रतौ १३ कांबोजराजोबलवांस्ततःपश्चात्सुदक्षिणः मागधश्चजयत्सेनःसौबलश्चबृहद्बलः १४ तथैवान्येमहेष्वासाःसुशर्मप्रमुखान्नृपाः जघनंपालयामासुस्तवसैन्यस्यभारत १५ दिवसेदिवसेप्राप्तेभीष्मःशांतनवोयुधि आसुरानकरोद्व्यूहान्पैशाचानथराक्षसान् १६ ततःप्रववृतेयुद्धंतववतेषांचभारत अन्योन्यंनिघ्नतांराजन्यमराष्ट्रविवर्द्धनं १७ अर्जुनप्रमुखाःपार्थाःपुरस्कृत्यशिखंडिनं भीष्मंयुद्धेभ्यवर्तंतकिरंतोविविधाञ्छरान् १८ तत्रभारतभीमेनताडितास्तावकाःशरैः रुधिरौघपरिक्लिन्नाःपरलोकंययुस्तदा १९ नकुलःसहदेवश्चसात्यकिश्चमहारथः तवसैन्यंसमासाद्यपीडयामासुरोजसा २०

पक्षांतरमाह रथस्येति एकस्य रथस्य पंचाशद्गजाः पंचसहस्रं अश्वाः पंचत्रिंशत्सहस्रं पदातयः परिवार इत्यर्थः २३ अत्र रथादीनां प्राधान्याभिप्रायेण परिवारात्पबहुत्वेऽज्ञेये साधारणी तु संख्या आदिपर्वण्युक्ता एकोरथो गजश्चैको नराः पंच पदातयः त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयत इत्यादिना तामेवानुसरति सेनेति तत्र गजानां रथानां च तुल्यसंख्योक्तिः पूर्वोक्तसंख्योपलक्षणार्था तेन पंचविंशतिशतानि मनुष्याः पंचदशशतं तुरगा इत्यपि ज्ञेयम् पृतनायां तु पंचसहस्रं नागास्तावंतो रथाः पंचविंशतिसहस्रं नराः पंचदशसहस्रं अश्वाः वाहिन्यां पंचाशत्सहस्रं नागास्तावंतो रथाः सार्द्धलक्षद्वयं नराः सार्द्धलक्षं अश्वा इति ज्ञेयम् २४

रथस्य नागाः पंचाशन्नागस्यासन्शतं हयाः हयस्य पुरुषाः सप्त भिन्नसंधानकारिणः २३ सेना पंचशतं नागा रथास्तावंत एव च दशसेना च पृतना पृतना दश वाहिनी २४ सेना च वाहिनी चैव पृतना ध्वजिनी चमूः अक्षौहिणीति पर्यायैर्निरुक्ता च वरूथिनी २५ एवं व्यूढान्यनीकानि कौरवेयेण धीमता अक्षौहिण्यो दशैका च संख्याताः सप्त चैव ह २६ अक्षौहिण्यस्तु सप्तैव पांडवानामभूद्बलम् अक्षौहिण्यो दशैका च कौरवाणामभूद्बलम् २७ नराणां पंचपंचाशदेषा पत्तिर्विधीयते सेनामुखं च तिस्रस्ता गुल्म इत्यभिशब्दितम् २८ त्रयो गुल्मा गणस्त्वासीद्गणास्त्वयुतशोऽभवन् दुर्योधनस्य सेनासु योत्स्यमानाः प्रहारिणः २९ तत्र दुर्योधनो राजा शूरान्बुद्धिमतो नरान् प्रसमीक्ष्य महाबाहुश्चक्रे सेनापतींस्तदा ३० पृथगक्षौहिणीनां च प्रणेतॄन्नरसत्तमान् विधिवत्पूर्वमानीय पार्थिवानभ्यभाषत ३१ कृपं द्रोणं च शल्यं च सैंधवं च जयद्रथम् सुदक्षिणं च कांबोजं कृतवर्माणमेव च ३२ द्रोणपुत्रं च कर्णं च भूरिश्रवसमेव च शकुनिं सौबलं चैव बाल्हिकं च महाबलं ३३ दिवसे दिवसे तेषां प्रतिवेलं च भारत चक्रे स विविधाः पूजाः प्रत्यक्षं च पुनः पुनः ३४ तथा विनियताः सर्वे ये च तेषां पदानुगाः बभूवुः सैनिका राज्ञां प्रियं राज्ञश्चिकीर्षवः ३५ इति श्रीमन्महाभारते उद्योगपर्वणि अभिनिर्याणपर्वणि पंचपंचाशदधिकशततमोऽध्यायः १५५ वैशंपायन उ० ततः शांतनवं भीष्मं प्रांजलिर्धृतराष्ट्रजः सह सर्वैर्महीपालैरिदं वचनमब्रवीत् १ ऋते सेनाप्रणेतारं पृतना सुमहत्यपि दीर्यते युद्धमासाद्य पिपीलिकपुटं यथा

२

एवमपि पूर्वोक्ताक्षौहिणीसंख्यया विसंवाद एवेत्याशंक्याह सेनेति सेनादयः शब्दाः पर्यायाः न तु संख्येयाभेदमात्रेण नानार्थाः एकस्मिन्नपि भीमसेने दशनागसहस्रबलत्वस्मरणात् एवं च बलस्यैवेयं एकादश सप्तेति संख्या न संख्येयस्येति भावः पांडवानां हीनबलत्वेपि असंख्येयं वासुदेवबलं तत्र सहायीभूतमिति जयोऽभूदिति द्रष्टव्यम् २५ २६ २७ नराणामिति अयुत इत्यनेन नराणामंतो नास्तीति दर्शितम् २८ २९ ३० ३१ ३२ ३३ ३४ ३५ इति उ० नी० पंचपं० शततमोऽध्यायः १५५ तत इति १ २

२ ४ ५ ६ ७ ८ ९ १० उशनसाशुक्रेणअसंहार्यः पितुर्वरदानात् कालेनापिसंहर्तुमशक्यः ११ १२ कुमारः कार्तिकेयः १३ १४ पावकिः कार्तिकेयए



नहिजातुद्वयोर्बुद्धिः समाभवतिकर्हिचित् शौर्यंचबलनेतॄणांस्पर्धतेचपरस्परम् ३ श्रूयतेचमहाप्राज्ञहैहयानमितौजसः अभ्य
युर्ब्राह्मणाःसर्वेसमुच्छ्रितकुशध्वजाः ४ तानभ्ययुस्तदावैश्याःशूद्राश्चैवपितामह एकतस्तुत्रयोवर्णाएकतःक्षत्रियर्षभाः ५ ततो
युद्धेष्वभज्यंतत्रयोवर्णाःपुनःपुनः क्षत्रियाश्चजयंत्येवबहुलंचैकतोबलम् ६ ततस्तेक्षत्रियानेवपप्रच्छुर्द्विजसत्तमाः तेभ्यःशशंसुर्ध
र्मज्ञायाथातथ्यंपितामह ७ वयमेकस्यशृण्वानामहाबुद्धिमतोरणे भवंतस्तुपृथक्सर्वेस्वबुद्धिवशवर्तिनः ८ ततस्तेब्राह्मणाश्चक्रु
रेकंसेनापतिंद्विजम् नयेषुकुशलंशूरमजयन्क्षत्रियांस्ततः ९ एवंयेकुशलंशूरंहितेप्सितमकल्मषम् सेनापतिंप्रकुर्वंतितेजयंतिर
णेरिपून् १० भवानुशनसातुल्योहितैषीचसदामम असंहार्यःस्थितोधर्मेसनःसेनापतिर्भव ११ रश्मिमतामिवादित्योवीरुधामिवचं
द्रमाः कुबेरइवयक्षाणांदेवानामिववासवः १२ पर्वतानांयथामेरुःसुपर्णःपक्षिणांयथा कुमारइवदेवानांवसूनामिवहव्यवाट् १३
भवताहिवयंगुप्ताःशक्रेणेवदिवौकसः अनाधृष्याभविष्यामस्त्रिदशानामपिध्रुवम् १४ प्रयातुनोभवानग्रेदेवानामिवपावकिः वयं
त्वामनुयास्यामःसौरभेयाइवर्षभम् १५ भीष्मउवाच एवमेतन्महाबाहोयथावदसिभारत यथैवहिभवंतोमेतथैवमम
पांडवाः १६ अपिचैवमयाश्रेयोवाच्यंतेषांनराधिप संयोद्धव्यंतवार्थाययथामेसमयःकृतः १७ नतुपश्यामियोद्धारमात्मनःसदृ
शंभुवि ऋतेतस्मान्नरव्याघ्रात्कुंतीपुत्राद्धनंजयात् १८ सहिवेदमहाबुद्धिर्दिव्यान्यस्त्राण्यनेकशः नतुमांविवृतोयुद्धेजातुयुध्ये
तपांडवः १९ अहंचैवक्षणेनैवनिर्मनुष्यमिदंजगत् कुर्यांशस्त्रबलेनैवससुरासुरराक्षसम् २० नत्वेवोत्सादनीयामेपांडोःपुत्रा
जनाधिप तस्माद्योधान्हनिष्यामिप्रयोगेणायुतंसदा २१ एवमेषांकरिष्यामिनिधनंकुरुनंदन नचेत्तेमांहनिष्यंतिपूर्वमेवसमा
गमे २२ सेनापतिर्भविष्यामिसमयेनापरेणते भविष्यामियथाकामंतन्मेश्रोतुमिहार्हसि २३ कर्णोवायुध्यतांपूर्वमहंवापृथि
वीपते स्पर्धतेहिसदात्यर्थंसूतपुत्रोमयारणे २४ कर्णउवाच नाहंजीवतिगांगेयेराजन्योत्स्येकथंचन हतेभीष्मेतुयो
त्स्यामिसहगांडीवधन्वना २५ वैशंपायनउवा॰ ततःसेनापतिंचक्रेविधिवद्भूरिदक्षिणं धृतराष्ट्रात्मजोभीष्मंसोभिषिक्तो
व्यरोचत २६

व १५ १६ १७ १८ विवृतोविस्पष्टोभूत्वेत्यर्थः १९ २० नमेमयाउत्सादनीयाःनाशयितुंशक्याःसदाप्रत्यहम् २१ २२ २३ २४ २५ २६

२७ २८ पातयंतः मूर्छितानिकुर्वंतः २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ इत्युद्योगेटीकायांषट्पंचा० शततमोऽध्यायः १५६ आपगेयमिति १ २ ३

ततोभेरीश्चशंखांश्चशतशोथसहस्रशः वादयामासुरव्यग्रावादकाराजशासनात् २७ सिंहनादाश्चविविधावाहनानांचनिस्व
नाः प्रादुरासन्ननभ्रेचवर्षंरुधिरकर्दमम् २८ निर्घाताः पृथिवीकंपागजबृंहितनिस्वनाः आसंश्चसर्वयोधानांपातयंतोमनांस्युत २९
वाचश्चाप्यशरीरिण्योदिवश्चोल्काःप्रपेदिरे शिवाश्चभयवेदिन्योनेदुर्दीप्तनराभृशम् ३० सेनापत्येयदाराजागांगेयमभिषिक्तवान्
तदैतान्युग्ररूपाणिबभूवुःशतशोनृप ३१ ततःसेनापतिंकृत्वाभीष्मंपरबलार्दनम् वाचयित्वाद्विजश्रेष्ठान्गोभिर्निष्कैश्चभूरिशः ३२
वर्धमानोजयाशीर्भिर्निर्ययौसैनिकैर्वृतः आपगेयंपुरस्कृत्यभ्रातृभिःसहितस्तदा ३३ स्कंधावारेणमहताकुरुक्षेत्रंजगामह ३४
परिक्रम्यकुरुक्षेत्रंकर्णेनसहकौरवः शिबिरंमापयामाससमेदेशेजनाधिप ३५ मधुरानूरवरेदेशेप्रभूतयवसेंधने यथैवहास्तिन
पुरंतद्वच्छिबिरमाबभौ ३६ इतिश्रीम० उ० अभिनिर्यात्रायांभीष्मसैनापत्येषट्पं० शततमोऽध्यायः १५६ जनमेजयउ०
आपगेयंमहात्मानंभीष्मंशस्त्रभृतांवरम् पितामहंभारतानांध्वजंसर्वमहीक्षिताम् १ बृहस्पतिसमंबुद्ध्याक्षमयापृथिवीसमं
समुद्रमिवगांभीर्येहिमवंतमिवस्थिरम् २ प्रजापतिमिवोदार्येतेजसाभास्करोपमम् महेंद्रमिवशत्रूणांध्वंसनंशरवृष्टिभिः ३ र
णयज्ञेप्रविततेसुभीमेलोमहर्षणे दीक्षितंचिररात्रायश्रुत्वातत्रयुधिष्ठिरः ४ किमब्रवीन्महाबाहुःसर्वशस्त्रभृतांवरः भीमसेनार्जु
नौवापिकृष्णोवाप्रत्यभाषत ५ वैशंपायनउ० आपद्धर्मार्थकुशलोमहाबुद्धिर्युधिष्ठिरः सर्वान्भ्रातृन्समानीयवासुदेवं
चशाश्वतम् ६ उवाचवदतांश्रेष्ठःसांत्वपूर्वमिदंवचः पर्याक्रामतसैन्यानियत्तास्तिष्ठतदंशिताः ७ पितामहेनवोयुद्धंपूर्वमेवभवि
ष्यति तस्मात्सप्तसुसेनासुप्रणेतॄन्ममपश्यत ८ कृष्णउवाच यथार्हतिभवान्वक्तुमस्मिन्कालेह्युपस्थिते तथेदमर्थव
द्वाक्यमुक्तंतेभरतर्षभ ९ रोचतेमेमहाबाहोक्रियतांयदनंतरम् नायकास्तवसेनायांक्रियतामिहसप्तवै १० वैशंपायनउ०
ततोद्रुपदमानाय्यविराटंशिनिपुंगवम् धृष्टद्युम्नंचपांचाल्यंधृष्टकेतुंचपार्थिवम् ११ शिखंडिनंचपांचाल्यंसहदेवंचमागधम्
एतान्सप्तमहाभागान्वीरान्युद्धाभिकांक्षिणः १२ सेनाप्रणेतॄन्विधिवदभ्यषिंचद्युधिष्ठिरः सर्वसेनापतिंचात्रधृष्टद्युम्नंचकारह
१३

४ ५ ६ ७ ८ ९ १० ११ १२ १३ ६९ ६९ ६९ ६९ ६९ ६९ ६९ ६९

द्रोणांतहेतोरुत्पन्नोयइद्धाज्ज्ञातवेदसः सर्वेषामेवतेषांतुसमस्तानांमहात्मनाम् १४ सेनापतिपतिंचक्रेगुडाकेशंधनंजयम्
अर्जुनस्यापिनेताचसंयंताचैववाजिनाम् १५ संकर्षणानुजःश्रीमान्महाबुद्धिर्जनार्दनः तदृष्ट्वोपस्थितंयुद्धंसमासन्नमहा
त्ययम् १६ प्राविशद्भवनंराजन्पांडवानांहलायुधः सहाक्रूरप्रभृतिभिर्गदसांबोद्धवादिभिः १७ रौक्मिणेयाहुकसुतैश्चारुदेष्णपु
रोगमैः वृष्णिमुख्यैरधिगतैर्व्याघ्रैरिवबलोत्कटैः १८ अभिगुप्तोमहाबाहुर्मरुद्भिरिववासवः नीलकौशेयवसनःकैलासशिखरो
पमः १९ सिंहखेलगतिःश्रीमान्मदरक्तांतलोचनः तंदृष्ट्वाधर्मराजश्चकेशवश्चमहाद्युतिः २० उदतिष्ठत्ततःपार्थोभीमकर्मावृको
दरः गांडीवधन्वायेचान्येराजानस्तत्रकेचन २१ पूजयांचक्रिरेतेवैसमायांतंहलायुधम् ततस्तंपांडवोराजाकरेपस्पर्शपाणि
ना २२ वासुदेवपुरोगास्तंसर्वएवाभ्यवादयन् विराटद्रुपदौवृद्धावभिवाद्यहलायुधः २३ युधिष्ठिरेणसहितउपाविशदरिंदमः
ततस्तेषूपविष्टेषुपार्थिवेषुसमंततः वासुदेवमभिप्रेक्ष्यरौहिणेयोभ्यभाषत २४ भवितायंमहारौद्रोदारुणःपुरुषक्षयः दिष्टमेतद्ध्रु
वंमन्येनशक्यमभिवर्तितुम् २५ तस्माद्युद्धात्समुत्तीर्णानपिवःससुहृज्जनान् अरोगानक्षतैर्देहैर्द्रष्टास्मीतिमतिर्मम २६ समेतं
पार्थिवंक्षत्रंकालपक्वमसंशयम् विमर्दश्चमहान्भावीमांसशोणितकर्दमः २७ उक्तोमयावासुदेवःपुनःपुनरुपह्वरे संबंधिषु
समांवृत्तिंवर्तस्वमधुसूदन २८ पांडवाहियथास्माकंतथादुर्योधनोनृपः तस्यापिक्रियतांसाह्यंसपर्येतिपुनःपुनः २९ तच्चमेना
करोद्वाक्यंत्वदर्थेमधुसूदनः निर्विष्टःसर्वभावेनधनंजयमवेक्ष्यह ३० ध्रुवोजयःपांडवानामितिमेनिश्चितामतिः तथाह्यभिनिवे
शोयंवासुदेवस्यभारत ३१ नचाहमुत्सहेकृष्णामृतेलोकमुदीक्षितुम् ततोहमनुवर्तामिकेशवस्यचिकीर्षितम् ३२ उभौशिष्यौ
हिमेवीरौगदायुद्धविशारदौ तुल्यस्नेहोस्म्यतोभीमेतथादुर्योधनेनृपे ३३ तस्माद्यास्यामितीर्थानिसरस्वत्यानिषेवितुम् नहि
शक्ष्यामिकौरव्यान्नश्यमानानुपेक्षितुम् ३४ एवमुक्त्वामहाबाहुरनुज्ञातश्चपांडवैः तीर्थयात्रांययौरामोनिवर्त्यमधुसूदनम्
३५ इतिश्रीमन्महाभारतेउद्योगपर्वणिअभिनिर्यात्रायांसप्तपंचाशदधिकशततमोऽध्यायः १५७

एतस्मिन्निति आकूतीनांसंकल्पानां सत्यसंकल्पइत्यर्थः २ ३ ४ ५ ६ मौरवान् आंत्रलंति मयान् येरिदानींशार्ङ्गंधनुषिज्याक्रिपते ७ ८ ९ १० ११ १२ १३

वैशंपायनउवाच एतस्मिन्नेवकालेतुभीष्मकस्यमहात्मनः हिरण्यरोम्णोनृपतेःसाक्षादिंद्रसखस्यवै १ आकूतीनामधिप
तिर्भोजस्यातियशस्विनः दाक्षिणात्यपतेःपुत्रोदिक्षुरुक्मीतिविश्रुतः २ यःकिंपुरुषसिंहस्यगंधमादनवासिनः कृत्स्नंशिष्योधनु
र्वेदंचतुष्पादमवाप्तवान् ३ योमाहेंद्रंधनुर्लेभेतुल्यंगांडीवतेजसा शार्ङ्गेणचमहाबाहुःसम्मितंदिव्यलक्षणम् ४ त्रीण्येवैतानिदि
व्यानिधनूंषिदिविचारिणाम् वारुणंगांडिवंतत्रमाहेंद्रंविजयंधनुः शार्ङ्गंतुवैष्णवंप्राहुर्दिव्यंतेजोमयंधनुः ५ धारयामासतत्कृष्णः
परसेनाभयावहम् गांडीवंपावकाल्लेभेपांडवेपाकशासनिः ६ द्रुमाद्रुक्मीमहातेजाविजयंप्रत्यपद्यत संछिद्यमौरवान्पाशा
न्निहत्यमुरमोजसा ७ निर्जित्यनरकंभौममाहृत्यमणिकुंडले षोडशस्त्रीसहस्राणिरत्नानिविविधानिच ८ प्रतिपेदेहृषीके
शःशार्ङ्गंचधनुरुत्तमम् रुक्मीतुविजयंलब्ध्वाधनुर्मेघनिभस्वनम् ९ विभीषयन्निवजगत्पांडवानभ्यवर्तत नामृष्यतपुरायो
सौस्वबाहुबलगर्वितः रुक्मिण्याहरणंवीरोवासुदेवेनधीमता कृत्वाप्रतिज्ञांनाहत्वानिवर्तिष्येजनार्दनम् ११ ततोन्वधावद्वा
र्ष्णेयंसर्वशस्त्रभृतांवरं सेनयाचतुरंगिण्यामहत्यादूरपातया १२ विचित्रायुधवर्मिण्यागंगयेवप्रवृद्धया ससमासाद्यवार्ष्णेयं
योगानामीश्वरंप्रभुम् १३ व्यंसितोव्रीडितोराजन्नाजगामसकुंडिनम् यत्रैवकृष्णेनरणेनिर्जितःपरवीरहा १४ तत्रभोजकटं
नामकृतंनगरमुत्तमम् सैन्येनमहतातेनप्रभूतगजवाजिना १५ पुरंतद्भुविविख्यातंनाम्नाभोजकटंनृप सभोजराजःसैन्येनम
हतापरिवारितः १६ अक्षौहिण्यामहावीर्यःपांडवान्क्षिप्रमागमत् ततःसकवचीधन्वीतलीखड्गीशरासनी १७ ध्वजेनादित्यव
र्णेनप्रविवेशमहाचमूम् विदितःपांडवेयानांवासुदेवप्रियेप्सया १८ युधिष्ठिरस्तुतंराजाप्रत्युद्गम्याभ्यपूजयत् सपूजितःपां
डुपुत्रैर्यथान्यायंसुसंस्कृतः १९ प्रतिगृह्यतुतान्सर्वान्विश्रांतःसहसैनिकः उवाचमध्येवीराणांकुंतीपुत्रंधनंजयम् २० साहा
य्येस्मिन्स्थितोयुद्धेयदिभीतोसिपांडव करिष्यामिरणेसाह्यमसह्यंतवशत्रुभिः २१ नहिमेविक्रमेतुल्यःपुमानस्तीहकश्चन ह
निष्यामिरणेभागंयन्मेदास्यसिपांडव २२ अपिद्रोणकृपौवीरौभीष्मकर्णावथोपुनः अथवासर्वएवैतेतिष्ठंतुवसुधाधिपाः २३

निहत्यसमरेशत्रूंस्त्वदास्यामिमेदिनीं इत्युक्तोधर्मराजस्यकेशवस्यचसंनिधौ २४ शृण्वतांपार्थिवेंद्राणामन्येषांचैवसर्वशः वासुदेवमभिप्रेक्ष्यधर्मराजंचपांडवम् २५ उवाचधीमान्कौंतेयःप्रहस्यसखिपूर्वकम् कौरवाणांकुलेजातःपांडोःपुत्रोविशेषतः २६ द्रोणंव्यपदिशन्शिष्योवासुदेवसहायवान् भीतोस्मीतिकथंब्रूयांदधानोगांडिवंधनुः २७ युध्यमानस्यमेवीरगंधर्वैःसुमहाबलैः सहायोघोषयात्रायांकस्तदासीत्सखामम २८ तथाप्रतिभयेतस्मिन्देवदानवसंकुले खांडवेयुध्यमानस्यकःसहायस्तदाभवत् २९ निवातकवचैर्युद्धेकालकेयैश्चदानवैः तत्रमेयुध्यमानस्यकःसहायस्तदाभवत् ३० तथाविराटनगरेकुरुभिःसहसंगरे युध्यतोबहुभिस्तत्रकःसहायोभवन्मम ३१ उपजीव्यरणेरुद्रंशक्रंवैश्रवणंयमम् वरुणंपावकंचैवकृपंद्रोणंचमाधवम् ३२ धारयन्गांडिवंदिव्यंधनुस्तेजोमयंदृढम् अक्षय्यशरसंयुक्तोदिव्यास्त्रपरिबृंहितः ३३ कथमस्मद्विधोब्रूयाद्भीतोस्मीतियशोहरम् वचनंनरशार्दूलवज्रायुधमपिस्वयम् ३४ नास्मिभीतोमहाबाहोसहायार्थश्चनास्तिमे यथाकामंयथायोगंगच्छवान्यत्रतिष्ठवा ३५ विनिवर्त्यततोरुक्मीसेनांसागरसंनिभाम् दुर्योधनमुपागच्छत्तथैवभरतर्षभ ३६ तथैवचाभिगम्यैनमुवाचवसुधाधिपः प्रत्याख्यातश्चतेनापिसतदाशूरमानिना ३७ द्वावेवतुमहाराजतस्माद्युद्धादपेयतुः रौहिणेयश्चवार्ष्णेयोरुक्मीचवसुधाधिपः ३८ गतेरामेतीर्थयात्रांभीष्मकस्यसुतेतथा उपाविशन्पांडवेयामंत्रायपुनरेवच ३९ समितिर्धर्मराजस्यसापार्थिवसमाकुला शुशुभेतारकैश्चित्राद्यौश्चंद्रेणेवभारत ४० इतिश्रीमन्महाभा॰उद्योगपर्वणिअभिनिर्यात्रायांरुक्मिप्रत्याख्यानंनामाष्टपंचाशदधिकशततमोऽध्यायः १५८ जनमेजयउ॰ तथाव्यूढेष्वनीकेषुयत्तेषुभरतर्षभ किमकुर्वंश्चकुरवःकालेनाभिप्रचोदिताः १ वैशंपायनउवाच तथाव्यूढेष्वनीकेषुयत्तेषुभरतर्षभ धृतराष्ट्रोमहाराजसंजयंवाक्यमब्रवीत् २ एहिसंजयसर्वंमेआचक्ष्वानवशेषतः सेनानिवेशेयद्वृत्तंकुरुपांडवसेनयोः ३ दिष्टमेवपरंमन्येपौरुषंचाप्यनर्थकम् यदहंबुध्यमानोपियुद्धदोषान्क्षयोदयान् ४ तथापिनिकृतिप्रज्ञंपुत्रंदुर्द्यूतदेविनं नशक्नोमिनियंतुंवाकर्तुंवाहितमात्मनः ५

३८ ३९ ४० इतिउद्योगेटीकायांअष्टपंचाशदधिकशततमोऽध्यायः १५८ तथेति १ २ ३ क्षयस्यैवउदयोयेभ्यस्तान्क्षयोदयान् ४ निकृतिप्रज्ञंकपटविषयैवप्रज्ञायस्यनधर्मविषयायस्यतम् ५

६ ७ ८ एनसादोषेणदेवान्कालंवागंतुंउपालब्धुंनार्हनि दृष्टेसंभवस्य दृष्टकल्पनायाअन्याय्यत्वादृष्टापराधाभावेदैवस्यकालस्यवाउपालंभः कर्तुंसुचितः नतुतस्मिन्सतीत्यर्थः नसकालंनवादेवंवक्तुमेतदिहार्हतीतिपाठे प्ययमेवार्थः ९ १० निकाराः तिरस्काराः ११ वैशसंसमरेनिमित्ते १२ १३ १४

भवत्येवहिमेसूतबुद्धिर्दोषानुदर्शिनी दुर्योधनंसमासाद्यपुनःसापरिवर्तते ६ एवंगतेवैयद्भावितद्भविष्यतिसंजय क्षत्रधर्मः किलरणेतनुत्यागोहिपूजितः ७ संजयउवाच त्वद्युक्तोयमनुप्रश्नोमहाराजयथेच्छसि नतुदुर्योधनेदोषमिममाधातुमर्हसि ८ श्रृणुष्वानवशेषेणवदतोमम पार्थिव यआत्मनोदुश्चरितादशुभंप्राप्नुयान्नरः नसकालंनवादेवंवक्तुमेतदिहार्हति ९ महाराजमनुष्येषुनिंद्यंयःसर्वमाचरेत् सवध्यःसर्वलोकस्यनिंदितानिसमाचरन् १० निकारामनुजश्रेष्ठपांडवैस्त्वत्प्रतीक्षया अनुभूताःसहामात्यैर्निकृतैरधिदेवने ११ हयानांचगजानांचराज्ञांचामिततेजसाम् वैशसंसमरेवृत्तंयत्तन्मेशृणुसर्वशः १२ स्थिरोभूत्वामहाप्राज्ञसर्वलोकक्षयोदयम् यथाभूतंमहायुद्धेश्रुत्वाचैकमनाभव १३ नह्येवकर्तापुरुषःकर्मणोःशुभपापयोः अस्वतंत्रोहिपुरुषःकार्यतेदारुयंत्रवत् १४ केचिदीश्वरनिर्दिष्टाःकेचिदेवयदृच्छया पूर्वकर्मभिरप्यन्येत्रेधमेतत्प्रदृश्यते तस्मादनर्थमापन्नंस्थिरोभूत्वानिशामय १५ इति॰उद्यो॰एको॰षष्ट्यधिकशततमोऽध्यायः १५९ संजयउवाच हिरण्वत्यांनिविष्टेषु पांडवेषुमहात्मसु न्यविशंतमहाराजकौरवेयायथाविधि १ तत्रदुर्योधनोराजानिवेश्यबलमोजसा संमानयित्वानृपतीन्न्यस्यगुल्मांस्तथैवच २ आरक्ष्यस्यविधिंकृत्वायोधानांतत्रभारत कर्णंदुःशासनंचैवशकुनिंचापिसौबलम् ३ आनाय्यनृपतींस्तत्रमंत्रयामासभारत तत्रदुर्योधनोराजाकर्णेनसहभारत ४ संभाषित्वाचकर्णेनभ्रात्रादुःशासनेनच सौबलेनचराजेंद्रमंत्रयित्वानरर्षभ ५ आहूयोपह्वरेराजन्नुलूकमिदमब्रवीत् उलूकगच्छकैतव्यपांडवान्सहसोमकान् ६ गत्वाममवचोब्रूहिवासुदेवस्यश्रृण्वतः इदंतत्समनुप्राप्तंवर्षपूगाभिचिंतितम् ७ पांडवानांकुरूणांचयुद्धंलोकभयंकरम् यदेतत्कत्थनावाक्यंसंजयोमहदब्रवीत् ८ वासुदेवसहायस्यगर्जतःसानुजस्यते मध्येकुरूणांकौंतेयतस्यकालोयमागतः ९ यथावःसंप्रतिज्ञातंतत्सर्वंक्रियतामिति ज्येष्ठंतथैवकौंतेयंब्रूयास्त्वंवचनान्मम १०

१५ इत्यु॰टी॰एको॰ष॰शततमोऽध्यायः १५९ हिरण्वत्यामिति १ गुल्मान्सैन्यान् २ आरक्ष्यस्य रक्षिणीयस्यद्रव्यादेः विधिंरक्षाविधानं आरक्ष्यंरक्षणीयेस्यादितिविश्वः ३ ४ ५ ६ ७ कत्थनावाक्यंआत्मप्रशंसनं ८ ९ संप्रतिज्ञातंदुःशासनरुधिरपानादि॰

भ्रातृभिः सहितः कथमधर्मेमनः कृथाइनिसंबंधः ११ दातादास्यसिपारिव्रज्यंकरिष्यसीत्यर्थः १२ १३ भोक्तराइतिदेवान्प्रह्लादः संबोधति यस्यव्रत
स्यधर्मध्वजो धर्मचिह्नंदर्भपवित्रपाणित्वादि उच्छ्रितः सर्वलोकविदितः १४ १५ मनः शुद्धिंहिंसातोनिवृत्तिम् १६ विश्रंभंविश्वासम् १७ १८ १९ २०



भ्रातृभिःसहितंसर्वैःसोमकैश्चसकेकयैः कथंवाधार्मिकोभूत्वात्वमधर्मेमनःकृथाः ११ यद्इच्छसिजगत्सर्वंनश्यमानंनृशंसव
त् अभयंसर्वभूतेभ्योदातात्वमितिमेमतिः १२ श्रूयतेहिपुरागीतःश्लोकोयंभरतर्षभ प्रह्लादेनाथभद्रंतेहृतेराज्येतुदेवतैः १३
यस्यधर्मध्वजोनित्यंसुराध्वजइवोच्छ्रितः प्रच्छन्नानिचपापानिबैडालंनामतद्व्रतम् १४ अत्रतेवर्तयिष्यामिआख्यानमिदमु
त्तमम् कथितंनारदेनेहपितुर्ममनराधिप १५ मार्जारःकिलदुष्टात्मानिश्चेष्टःसर्वकर्मसु ऊर्ध्वबाहुःस्थितोराजन्गंगातीरेकदाचन
सवैकृत्वामनःशुद्धिंप्रत्ययार्थंशरीरिणाम् १६ करोमिधर्ममित्याहसर्वान्नेवशरीरिणः तस्यकालेनमहताविश्रंभंजग्मुरंडजाः १७
समेत्यचप्रशंसंतिमार्जारंतंविशांपते पूज्यमानस्तुतैःसर्वैःपक्षिभिःपक्षिभोजनः १८ आत्मकार्यंकृतंमेनेचर्यायाश्चकृतंफ
लम् अथदीर्घस्यकालस्यतंदेशंमूषिकाययुः १९ ददृशुस्तंचतेतत्रधार्मिकंव्रतचारिणम् कार्येणमहतायुक्तंदंभयुक्तेनभा
रत २० तेषांमतिरियंराजन्नासीत्तत्रविनिश्चये बहुमित्रावयंसर्वेतेषांनोमातुलोह्ययं २१ रक्षांकरोतुसततंवृद्धबालस्यसर्वशः
उपगम्यतुतेसर्वेबिडालमिदमब्रुवन् भवत्प्रसादादिच्छामश्चर्तुंचैवयथासुखम् २२ भवान्नोगतिरव्यग्राभवान्नःपरमःसु
हृत् तेवयंसहिताःसर्वेभवंतंशरणंगताः २३ भवान्धर्मपरोनित्यंभवान्धर्मेव्यवस्थितः सनोरक्षमहाप्राज्ञत्रिदशानिव व
ज्रभृत् २४ एवमुक्तस्तुतैःसर्वैर्मूषिकैःसविशांपते प्रत्युवाचततःसर्वान्मूषिकान्मूषिकांतकृत् २५ द्वयोर्योगंनपश्यामित
पसोरक्षणस्यच अवश्यंतुमयाकार्यंवचनंभवतांहितम् २६ युष्माभिरपिकर्तव्यंवचनंममनित्यशः तपसास्मिपरिश्रां
तोदृढंनियममास्थितः २७ नचापिगमनेशक्तिंकांचित्पश्यामिचिंतयन् सोस्मिनेयःसदातातनदीकूलमितःपरम् २८ तथे
तितेप्रतिज्ञायमूषिकाभरतर्षभ वृद्धबालमथोसर्वंमार्जारायन्यवेदयन् २९ ततःसपापोदुष्टात्मामूषिकानथभक्षयन् पीवर
श्चसुवर्णश्चदृढबंधश्चजायते ३० मूषिकाणांगणश्चात्रभृशंसंक्षीयतेथसः मार्जारोवर्धतेचापितेजोबलसमन्वितः ३१

बहवश्चतेमित्राणिचेतिबहुमित्राः बव्हमित्राइत्यपिपाठः २१ २२ २३ २४ २५ २६ २७ २८ वृद्धाश्चबालाश्चतेषांसमाहारोवृद्धबालम् २९ ३० ३१

३२ ३३ ३४ ३५ ३६ शिखाअमित्रस्यापिमित्रभावस्वरूपंपक्षांतरम् कृतास्वीकृताशिखापक्षांतरेवाह्य इतिमेदिनी ३७ गणश्चमूषिकाणाम् ३८ ३९

ततस्तेमूषिकाःसर्वेसमेत्यान्योन्यमब्रुवन् मातुलोवर्धतेनित्यंवयंक्षीयामहेभृशम् ३२ ततःप्राज्ञतमःकश्चिड्डिंडिकोनाममूषिकः
अब्रवीद्वचनंराजन्मूषिकाणांमहागणम् ३३ गच्छतांवोनदीतीरंसहितानांविशेषतः पृष्ठतोहंगमिष्यामिसहैवमातुलेनतु ३४
साधुसाध्वितितेसर्वेपूजयांचक्रिरेतदा चक्रुश्चैवयथान्यायंडिंडिकस्यवचोर्थवत् ३५ अविज्ञानात्ततःसोथडिंडिकंह्युपयुक्तवान्
ततस्तेसहिताःसर्वेमंत्रयामासुरंजसा तत्रवृद्धतमःकश्चित्कोकिलोनाममूषिकः ३६ अब्रवीद्वचनंराजन्ज्ञातिमध्येयथातथम् न
मातुलोधर्मकामश्छद्ममात्रंकृताशिखा ३७ नमूलफलभक्षस्यविष्टाभवतिलोमशा अस्यगात्राणिवर्धंतेगणश्चपरिहीयते ३८
अद्यसप्ताष्टदिवसान्डिंडिकोपिनदृश्यते एतच्छ्रुत्वावचःसर्वेमूषिकाविप्रदुद्रुवुः ३९ बिडालोपिसदुष्टात्माजगामैवयथागत
म् तथात्वमपिदुष्टात्मन्बैडालंव्रतमास्थितः ४० चरसिज्ञातिषुसदाबिडालोमूषिकेष्विव अन्यथाकिलतेवाक्यमन्यथाकर्मदृ
श्यते ४१ दर्शनार्थायलोकस्यवेदाश्चोपशमश्चते त्यक्त्वाछद्मत्विदंराजन्क्षत्रधर्मसमाश्रितः ४२ कुरुकार्याणिसर्वाणिधर्मिष्ठोऽ
सिनरर्षभ बाहुवीर्येणपृथिवींलब्ध्वाभरतसत्तम ४३ देहिदानंद्विजातिभ्यःपितृभ्यश्चयथोचितम् क्लिष्टायावर्षपूगांश्चमातुर्मा
तृहितेस्थितः ४४ प्रमार्जाश्रुरणेजित्वासंमानंपरमावह पंचग्रामावृतायत्नान्नास्माभिरपवर्जिताः ४५ युध्यामहेकथंसंख्ये
कोपयेमचपांडवान् त्वत्कृतेदुष्टभावस्यसंत्यागोविदुरस्यच ४६ जातुषेचगृहेदाहंस्मरंस्तंपुरुषोभव यच्चकृष्णमवोचस्त्वमायां
तंकुरुसंसदि ४७ अयमस्मिस्थितोराजन्शमायसमरायच तस्यायमागतःकालःसमरस्यनराधिप ४८ एतदर्थंमयासर्वंकृत
मेतद्युधिष्ठिर किंनुयुद्धात्परंलाभंक्षत्रियोबहुमन्यते ४९ किंत्वंक्षत्रियकुलेजातःसंप्रथितोभुवि द्रोणादस्त्राणिसंप्राप्यकृपा
च्चभरतर्षभ तुल्ययोनौसमबलेवासुदेवंसमाश्रितः ५१ ब्रूयास्त्वंवासुदेवंचपांडवानांसमीपतः आत्मार्थंपांडवार्थंचयत्तोमांप्र
तियोधय ५२ सभामध्येचयद्रूपंमाययाकृतवानसि तत्तथैवपुनःकृत्वासार्जुनोमामभिद्रव ५३ इंद्रजालंचमायांवैकुहकंवापिभी
षणा आत्तशस्त्रस्यसंग्रामेवहंतिमतिगर्जनाः ५४

४० ४१ इदंछद्मअजातशत्रुत्वरूपं धर्मिष्ठोसीत्युपहासः ४२ ४३ ४४ प्रमार्जप्रमार्जय ४५ ४६
४७ ४८ ४९ ५० ५१ ५२ ५३ इंद्रजालंप्रसिद्धम् मायाछलकम् कुहकाकृत्या प्रतिगर्जनाः विपरीतंकोपंवहंतिप्रापयंति नतुभयंजनयंतीत्यर्थः गर्जनंनिनदेकोपेइति
मेदिनी ५४

५५ पर्यायतः भयप्रदर्शनादिरूपप्रकारात् तेनसिद्धिः स्वस्यनतुभवति तथापरोपितेनबुद्धिमानुषीभयात्मिकांनप्राप्नोति ५६ यतोमनसैवईश्वरेणेवत्वयैव शेकर्तव्यानत्वाहृशैर्विभीषिकयेतिभावः नन्वितिपाठेपर्यायतः क्रमतः भावस्तुसएव पर्यायःप्रकारेवसरेक्रमेइतिमेदिनी ५७ आचक्षे आख्यातवान् ५८ ५९ ६० सश्मृंगकाः शृंगंपुंस्त्वचिन्हंश्मश्रुलत्वलिंगवत्वादिकंतत्सहिताः षंढाः निर्वीर्याः संति येषुत्वशौर्यप्रख्यातमितिभावः ६१ ६२ तूवरकंतूवरः प्रौढशृं



वयमप्युत्सहेमद्यांत्वंचगच्छेममायया रसातलंविशामोपिऐंद्रंवापुरमेवतु ५५ दर्शयेमचरूपाणिस्वशरीरेबहून्यपि नतुप र्यायतःसिद्धिर्बुद्धिमाप्नोतिमानुषीम् ५६ मनसैवहिभूतानिधातेवकुरुतेवशे यद्ब्रवीषिचवार्ष्णेयधार्तराष्ट्रानहंरणे ५७ घातयि त्वाप्रदास्यामिपार्थेभ्योराज्यमुत्तमम् आचचक्षेचमेसर्वंसंजयस्तवभाषितम् ५८ मद्दूती येनपार्थेनवैरंवःसव्यसाचिना ससत्य संगरोभूत्वापांडवार्थेपराक्रमी ५९ युत्स्यस्वाद्यरणेयत्तःपश्यामःपुरुषोभव यस्त्वंशत्रुमभिज्ञायशक्त्यंपौरुषमास्थितः ६० करोति द्विषतांशोकंसजीवतिस्त्रुजीवितम् अकस्माच्चैवतेकृष्णख्यातंलोकेमहद्यशः अद्येदानींविजानीमःसंतिषंढाःसश्मृंगकाः ६१ म द्विधोवापिनृपतिस्त्वयियुक्तःकथंचन सन्नाहंसंयुगेकर्तुंकंसभृत्येविशेषतः ६२ तंचतूवरकंबालंबह्वाशिनमविद्यकम् ६३ उलूक मद्वचोब्रूहिअसकृद्भीमसेनकम् विराटनगरेपार्थयस्त्वंसूदोह्यभूःपुरा ६४ बल्लवोनामविख्यातस्तन्ममैवहिपौरुषम् प्रतिज्ञा तंसभामध्येनतन्मिथ्यात्वयापुरा ६५ दुःशासनस्यरुधिरंपीयतांयदिशक्यते यद्ब्रवीषिचकौंतेयधार्तराष्ट्रानहंरणे ६६ निहनिष्या मितरसातस्यकालोयमागतः त्वंहिभोज्येपुरस्कार्योभक्ष्येपेयेचभारत ६७ क्वयुद्धंक्वचभोक्तव्यंयुत्स्यस्वपुरुषोभव शयिष्यसेहि तोभूमौगदामालिंग्यभारत ६८ तद्व्यर्थंचसभामध्येवल्गितंतेवृकोदर उलूकनकुलंब्रूहिवचनान्ममभारत ६९ युत्स्यस्वाद्यस्थिरो भूत्वापश्यामस्तवपौरुषम् युधिष्ठिरानुरागंचद्वेषंचमयिभारत ७० कृष्णायाश्चपरिक्लेशंस्मरेदानींयथातथम् ब्रूयास्त्वंसहदेवं चराजमध्येवचोमम ७१ युत्स्येदानींरणेयत्तःक्लेशान्स्मरचपांडव विराटद्रुपदौचोभौब्रूयास्त्वंवचनान्मम नदृष्टपूर्वाभर्तारोभृ त्यैरपिमहागुणैः ७२ तथार्थपतिभिर्भृत्यायतःसृष्टाःप्रजास्ततः अश्लाघ्योयंनरपतिर्युवयोरितिचागतम् ७३

गोनड्वान्तत्तुल्यंतूपरइतिपाठेपिसएवार्थः अश्मश्रुपुरुषमित्यन्ये तूवरोऽश्मश्रुपुरुषेप्रौढशृंगानडुह्यपीतिमेदिनी तेषांभीमसेनोनिःश्मश्रुकइतिकल्पनाभवति अ श्वोजस्तूपरोगोमृगइतिप्राजापत्याइतिश्रुतौअश्वादिसाहचर्यात्तूपरोपिपशुरेव अविद्यकंमूढं ६३ ६४ ६५ ६६ ६७ ६८ ६९ ७० ७१ नदृष्टेति भर्तारःराजानः ७२ अर्थ पतिभिःराजभिः यतः कालात्ततआरभ्येत्यर्थः मूढायूयंमयिगुणवतिस्वामिनिनसंतुष्टास्थः मूढश्चयुधिष्ठिरोभवदादिषुनिर्गुणेष्वपितुष्यतीतिभावः ७३

तत्तस्माद्धेतोर्ममवधार्थंच प्रयुध्यध्वमितिसंबंधः ७४ ७५ पापंकर्मकुरुगुरुवधारव्यंस्वार्थमितिपाठेदुष्करपदादेवायमर्थोज्ञेयः ससुहृत्स्वार्थमितिपाठेतुक्रियाविशे
षणमिदं सुहृद्भिःपार्थैश्चसहितंयथास्यात्तथायुध्यस्वेत्यर्थः अयमेवमूलपाठः ७६ ७७ ७८ ७९ ८० ८१ ८२ ८३ राज्यमाक्रम्यमादृशाइतिशेषः ८४

नेयूयंसंहताभूत्वातद्वधार्थंममापिच आत्मार्थंपांडवार्थंचप्रयुध्यध्वंमयासह ७४ धृष्टद्युम्नंचपांचाल्यंब्रूयास्त्वंवचनान्मम एषते
समयःप्राप्तोलब्धव्यश्चत्वयापिसः द्रोणमासाद्यसमरेज्ञास्यसेहितमुत्तमम् युध्यस्वससुहृत्कार्यंकुरुकर्मसुदुष्करम् ७६ शिखंडि
नमथोब्रूहिउलूकवचनान्मम स्त्रीतिमत्वामहाबाहुर्नहनिष्यतिकौरवः ७७ गांगेयोधन्विनांश्रेष्ठोयुध्येदानींसुनिर्भयः कुरुकर्म
रणेयत्तःपश्यामःपौरुषंतव ७८ एवमुक्त्वाततोराजाप्रहस्योलूकमब्रवीत् धनंजयंपुनर्ब्रूहिवासुदेवस्यशृण्वतः ७९ अस्मान्वात्वं
पराजित्यप्रशाधिपृथिवीमिमाम् अथवानिर्जितोस्माभीरणेवीरशयिष्यसि ८० राष्ट्रान्निर्वासनक्लेशंवनवासंचपांडव कृष्णा
याश्चपरिक्लेशंसंस्मरन्पुरुषोभव ८१ यदर्थंक्षत्रियासूतेसर्वंतदिदमागतम् बलंवीर्यंचशौर्यंचपरंचाप्यस्त्रलाघवम् ८२ पौरुषं-
दर्शयन्युद्धेकोपस्यकुरुनिष्कृतिम् परिक्लिष्टस्यदीनस्यदीर्घकालोषितस्यच ८३ हृदयंकस्यनस्फोटेदैश्वर्याद्भ्रंशितस्यच कुलेजा
तस्यशूरस्यपरवित्तेषुगृध्यतः आच्छिन्नंराज्यमाक्रम्यकोपंकस्यनदीपयेत् ८४ यत्तदुक्तंमहद्वाक्यंकर्मणातद्विभाव्यताम् अकर्म
णाकत्थितेनसंतःकुपुरुषंविदुः ८५ अमित्राणांवशेस्थानंराज्यंचपुनरुद्धर द्वावर्थौयुद्धकामस्यतस्मात्त्वंकुरुपौरुषम् ८६ परा
जितोसिद्यूतेनकृष्णाचानायितासभाम् शक्योमर्षोमनुष्येणकर्तुंपुरुषमानिना ८७ द्वादशैवतुवर्षाणिवनेधिष्ण्याद्विवासितः
संवत्सरंविराटस्यदास्यमास्थायचोषितः ८८ राष्ट्रान्निर्वासनक्लेशंवनवासंचपांडव कृष्णायाश्चपरिक्लेशंसंस्मरन्पुरुषोभव ८९
अप्रियाणांचवचनंप्रव्रजत्सुपुनःपुनः अमर्षंदर्शयस्वत्वममर्षोह्येवपौरुषम् ९० क्रोधोबलंतथावीर्यंज्ञानयोगोस्त्रलाघवम्
इहतेदृश्यतांपार्थयुध्यस्वपुरुषोभव ९१ लोहाभिहारोनिर्वृत्तःकुरुक्षेत्रमकर्दमम् पुष्टास्तेश्वाभृतायोधाःश्वोयुध्यस्वसकेशवः
९२

अकर्मणाअयुद्धेन कत्थितेनस्वप्रशंसामात्रेण ८५ स्थानंस्थितिम् तत्स्थानराज्ययोरुद्धरणम् पौरुषंपुरुषंकर्मकुरु ८६ ८७ धिष्ण्यात्गृहात् ८८ ८९
अप्रियाणांशत्रूणांवक्तुंयोग्यंवचनंगौर्गौःनसंतिपतयोभद्रेषंढतिलाएतेइत्यादिकंब्रुवत्सुदुःशासनादिषु अमर्षंकोपंदर्शय ९० ९१ लोहाभिहारः शस्त्राणां
नीराजनादिकंतेषुमंत्रेणदेवतावाहनादिकंच अकर्दममितियुद्धयोग्यत्वंभूमेरुक्तम् ९२ ५ ५ ५ ५

९३ ९४ ९५ वेदयोःश्रुतिधनुर्वेदयोःअंतगंपारगम् ९६ ९७ युगंकालचक्रं ९८ ९९ आभ्यांद्रोणभीष्माभ्यांअभिध्यातोहंतव्यत्वेननिश्चितः दारुणेनभयानकेनाख्यादिना प
दाभूमिमितिमर्त्यउक्तः१०० दर्दुरोमंडूकः १ २ नागबलस्यहस्तिसैन्यस्य १०३ ४ पर्यायात्युद्धप्रकारात् ५ ६ ७ पर्यायधर्मेणउपधर्मेणमायादिना अन्येतुराजपुत्रो



असमागम्यभीष्मेणसंयुगेकिंविकत्थसे आरुरुक्षुर्यथामंदःपर्वतंगंधमादनम् ९३ एवंकत्थसिकौंतेयअकत्थन्पुरुषोभव सूतपुत्रंस्रुदु
र्मर्षंशल्यंचबलिनांवरम् ९४ द्रोणंचबलिनांश्रेष्ठंशचीपतिसमंयुधि अजित्वासंयुगेपार्थराज्यंकथमिहेच्छसि ९५ ब्राह्मेधनुषिचाचा
र्यवेदयोरंतगंद्वयोः युधिधुर्यमविक्षोभ्यमनीकचरमच्युतम् ९६ द्रोणंमहाद्युतिंपार्थजेतुमिच्छसितन्मृषा नहिशुश्रुमवातेनमेरुमुन्मथि
तंगिरिम् ९७ अनिलोवावहेन्मेरुंद्यौर्वापिनिपतेन्महीम् युगंवापरिवर्तेतयद्येवंस्याद्यथात्थमाम् ९८ कोह्यस्तिजीविताकांक्षीप्राप्ये
ममरिमर्दनम् पार्थोवाइतरोवापिकोन्यःस्वस्तिगृहान्व्रजेत् ९९ कथमाभ्यामभिध्यातःसंस्पृष्टोदारुणेनवा रणेजीवन्प्रमुच्येतपदाभू
मिमुपस्पृशन् १०० किंदर्दुरःकूपशयोयथेमांनबुध्यसेराजचमूंसमेताम् दुराधर्षांदेवचमूप्रकाशांगुप्तांनरेंद्रैस्त्रिदशैरिव द्याम् १
प्राच्यैःप्रतीच्यैरथदाक्षिणात्यैरुदीच्यकांबोजशकैःखशैश्च शाल्वैःसमत्स्यैःकुरुमध्यदेशैर्म्लेच्छैःपुलिंदैर्द्रविडांध्रकांच्यैः २ नानाजनौ
घंयुधिसंप्रवृद्धंगांगंयथावेगमपारणीयम् मांचस्थितंनागबलस्यमध्येयुयुत्ससेमंदकिमल्पबुद्धे ३ अक्षय्याविषुधीचैवअग्निदत्तंच
तेरथम् जानीमोहिरणेपार्थकेतुंदिव्यंचभारत ४ अकत्थमानोयुध्यस्वकत्थसेर्जुनकिंबहु पर्यायात्सिद्धिरेतस्यनैतत्सिद्ध्यतिक
त्थनात् ५ यदीदंकत्थनाल्लोकेसिद्ध्येत्कर्मधनंजय सर्वेभवेयुःसिद्धार्थाःकत्थनेकोहिदुर्गतः ६ जानामितेवासुदेवंसहायंजानामितेगां
डिवंतालमात्रम् जानाम्यहंत्वादृशोनास्तियोद्धाजानानस्तेराज्यमेतद्धरामि ७ नतुपर्यायधर्मेणसिद्धिंप्राप्नोतिमानवः मनसैवा नुकू
लानिविधाताकुरुतेवशे ८ त्रयोदशसमाभुक्तंराज्यंविलपतस्तव भूयश्चैवप्रशासिष्येत्वांनिहत्यसबांधवम् ९ क्वतदागांडिवंतेभू
द्यदादासपणैर्जितः क्वतदाभीमसेनस्यबलमासीच्चफल्गुन १० सगदाद्भीमसेनाद्वाफाल्गुनाद्वासगांडिवात् नवैमोक्षस्तदावोभू
द्विनाकृष्णामनिंदिताम् ११ सावोदास्येसमापन्नान्मोचयामासपार्षती अमनुष्यसमापन्नान्दासकर्मण्यवस्थितान् १२

यंराज्यार्हइतिक्रमधर्मस्तेननकिंतुशौर्येणैवसिद्धिमाप्नोतीत्यर्थः मनसासंकल्पेनधातेवकुरुतेनतुमनुष्यः ८ ९ हेदासवासवइतिपाठेहेइंद्रपुत्र १० ११ अम
नुष्यत्वंनीचमनुष्यत्वं अलवणायवागूरितिवदल्पार्थोत्रनञ् १२ ५ ५ ५ ५ ५ ५

१३ १४ वेणींकृत्वाषंढवेषः कन्यांनर्तितवानसीत्येनस्मात्परंश्रोण्यांवेण्यांचकक्ष्यांचसंयुगेयः पलायतइत्यर्धंदृश्यते तस्यार्थः यः षंढवेषः अस्त्रीअपिस्त्रीवेषभृत् श्रोणिकक्षावेण्युपलक्षितेषुरत्यवमर्ददंशनस्थानेषुसंयुगेस्मरयुद्धेउपस्थितेसतिपलायते स्त्रीत्वस्मिन्संयुगेस्थिरीभवति अयंतुततोप्यधमइतिभावः कक्षायामि त्यपेक्षितेआकारलोपआर्षः १५ १६ नमायेतिव्याख्यातएवश्लोकः ११७ ११८ भीष्मेणसहसंग्रामः गिरौशिरोभेदनादिवत्स्वनाशकरइत्यर्थः १९ २० बृहद्दृल्लोह

अवोचंयत्षंढतिलानहंवस्तथ्यमेवतत् धृताहिवेणीपार्थेनविराटनगरेतदा १३ सूदकर्मणिचश्रांतंविराटस्यमहानसे भीमसेनेनकौंतेययत्तुतन्ममपौरुषम् १४ वेणींकृत्वाषंढवेषःकन्यांनर्तितवानसि श्रोण्यांवेण्यांचकक्ष्यांचसंयुगेयःपलायते एवमेषस दादंडंक्षत्रियाःक्षत्रियेदधुः १५ नभयाद्वासुदेवस्यनचापितवफाल्गुन राज्यंप्रतिप्रदास्यामियुत्ध्यस्वसहकेशवः १६ नमायाहींद्र जालंवाकुहकावापिभीषिणी आत्तशस्त्रस्यसंग्रामेवहंतिप्रतिगर्जनाः १७ वासुदेवसहस्रंवाफाल्गुनानांशतानिवा आसाद्यमाम मोघेषुंद्रविष्यंतिदिशोदश १८ संयुगंगच्छभीष्मेणभिंधिवाशिरसागिरिम् तरस्ववामहागाधंबाहुभ्यांपुरुषोदधिम् १९ शारद्वतम हामीनंविविंशतिमहोरगम् भीष्मवेगमपर्यंतंद्रोणग्राहदुरासदम् २० कर्णशल्यझषावर्तकांबोजवडवामुखम् बृहद्बलमहोच्छ्रा यंसौमदत्तितिमिंगिलम् २१ युयुत्सुतोयंभगदत्तमारुतंश्रुतायुहार्दिक्यमहासमुद्रं दुःशासनौघंशलशल्यमत्स्यंसुषेणचित्रा युधनागनक्रम् २२ जयद्रथाद्रिंपुरुमित्रगाधंदुर्मर्षणोदंशकुनिप्रपातम् शस्त्रौघमक्षय्यमभिप्रवृद्धंयदावगाह्यश्रमनष्टचेताः भविष्यसित्वंहतसर्वबांधवस्तदामनस्तेपरितापमेष्यति १२३ तदामनस्तेत्रिदिवादिवाशुचेर्निवर्तितापार्थमहीप्रशासनात् प्रशाम्य- राज्यंहिसुदुर्लभंत्वयाबुभूषितःस्वर्गइवातपस्विना १२४ इतिश्रीम० उद्योग० उलू० दुर्योधनवाक्येषष्ट्य० शततमोध्यायः १६० संजय- उवाच सेनानिवेशसंप्राप्तःकैतव्यःपांडवस्यह समागतःपांडवेयैर्युधिष्ठिरमभाषत १ अभिज्ञोदूतवाक्यानांयथोक्तंब्रुवतोमम दुर्योधनसमादेशंश्रुत्वानक्रोद्धुमर्हसि २ युधिष्ठिरउ० उलूकनभयंतेस्ति ब्रूहित्वंविगतज्वरः यन्मतंधार्तराष्ट्रस्यलुब्धस्या- दीर्घदर्शिनः ३ ततोद्युतिमतांमध्येपांडवानांमहात्मनाम् संजयानांचमत्स्यानांकृष्णस्यचयशस्विनः ४

मिः २१ ओघःप्रवाहः पुरुमित्रोदुर्योधन भ्राताम्सएवगाधोगांभीर्यस्यपर्यंतोयस्मिन् तेनगाढंदुःप्रवेशंदुर्मर्षणोदंदुर्मर्षणोदकंसोपिदुर्योधनभ्रातैव २२ २३ निवर्तितानिवर्तिष्यति प्रशाम्यशांतोभव प्रशा स्येतिपाठेप्रशास्यंचतद्राज्यंचेतिसमासः बुभूषितः प्राप्तुमिष्टः आतपस्विनास्वर्गइवत्वयाराज्यंदुर्लभंलब्धुमशक्यं १२४ इतिउ० टी० षष्ट्यु० शततमोध्यायः १६०

सेनेति १ २ ३ ४ ५

द्रुपदस्यसपुत्रस्यविराटस्यचसंनिधौ भूमिपानांचसर्वेषांमध्येवाक्यंजगादह ५ उलूकउवाच इदंत्वामब्रवीद्राजाधा र्तराष्ट्रोमहामनाः शृण्वतांकुरुवीराणांतन्निबोधयुधिष्ठिर ६ पराजितोसिद्यूतेनकृष्णाचानायितासभाम् शक्योमर्षोमनुष्ये-णकर्तुंपुरुषमानिना ७ द्वादशैवतुवर्षाणिवनेधिष्ण्याद्विवासिताः संवत्सरंविराटस्यदास्यमास्थायचोषिताः ८ अमर्षंराज्यहरणं वनवासंचपांडव द्रौपद्याश्चपरिक्लेशंसंस्मरन्पुरुषोभव ९ अशक्तेनचयच्छप्तंभीमसेनेनपांडव दुःशासनस्यरुधिरंपीयतांयदि-शक्यते १० लोहाभिहारोनिर्वृत्तःकुरुक्षेत्रमकर्दमम् समःपंथाभृतास्तेश्वाःश्वोयुध्यस्वसकेशवः ११ असमागम्यभीष्मेणसंयु गेकिंविकत्थसे आरुरुक्षुर्यथामंदःपर्वतंगंधमादनम् १२ एवंकत्थसिकौंतेयअकत्थन्पुरुषोभव सूतपुत्रंसुदुर्मर्षंशल्यंचबलिनांव रम् १३ द्रोणंचबलिनांश्रेष्ठंशचीपतिसमंयुधि अजित्वासंयुगेपार्थराज्यंकथमिहेच्छसि १४ ब्राह्मेधनुषिचाचार्यंवेदयोरंतगंद्वयोः युधिधुर्यमविक्षोभ्यमनीकचरमच्युतम् १५ द्रोणंमहाद्युतिंपार्थजेतुमिच्छसितन्मृषा नहिशुश्रूमवातेनमेरुमुन्मथितंगिरिम् १६ अनिलोवावहेन्मेरुंद्यौर्वापिनिपतेन्महीम् युगंवापरिवर्तेतयद्येवंस्याद्यथात्थमाम् १७ कोह्यस्तिजीविताकांक्षीप्राप्येममरिमर्दन म् गजोवाजीरथोवापिपुनःस्वस्तिगृहान्व्रजेत् १८ कथमाभ्यामभिध्यातःसंहृष्टोदारुणेनवा रणेजीवन्विमुच्येतपदाभूमि मुपस्पृशन् १९ किंदर्दुरःकूपशयोयथेमांनबुध्यसेराजचमूंसमेताम् दुराधर्षांदेवचमूप्रकाशांगुप्तांनरेंद्रैस्त्रिदशैरिवद्याम् २० प्राच्यैः प्रतीच्यैरथदाक्षिणात्यैरुदीच्यकांबोजशकैःखशैश्च शाल्वैःसमत्स्यैःकुरुमध्यदेश्यैर्म्लेच्छैःपुलिंदैर्द्रविडांध्रकांच्यैः २१ नानाज नौघंयुधिसंप्रवृद्धंगांगंयथावेगमपारणीयम् मांचस्थितंनागबलस्यमध्येयुयुत्ससेमंदकिमल्पबुद्धे २२ इत्येवमुक्त्वाराजानंधर्म पुत्रंयुधिष्ठिरम् अभ्यावृत्यपुनर्जिष्णुमुलूकःप्रत्यभाषत २३ अकत्थमानोयुध्यस्वकत्थसेर्जुनकिंबहु पर्यायात्सिद्धिरेतस्यनैत त्सित्स्यतिकत्थनात् २४ यदीत्थंकत्थनाल्लोकेसिध्येत्कर्मधनंजय सर्वेभवेयुःसिद्धार्थाःकत्थनेकोहिदुर्गतः २५ जानामितेवासु देवंसहायंजानामितेगांडिवंतालमात्रं जानाम्येतत्त्वादृशोनास्तियोद्धाजानानस्तेराज्यमेतद्धरामि २६ नतुपर्यायधर्मेणराज्यंप्रा प्नोतिमानुषः मनसैवानुकूलानिविधाताकुरुतेवशे २७

त्रयोदशसमाभुक्तंराज्यंविलपतस्तव भूयश्चैवप्रशासिष्येनिहत्यत्वांसबांधवम् २८ कृतदागांडिवंतेभूद्यत्त्वंदासपणेर्जितः कनदाभीमसेनस्यबलमासीच्चफाल्गुन २९ सगदाद्भीमसेनाद्वापार्थाद्वापिसगांडिवात् नवैमोक्षस्तदावोभूद्विनाकृष्णामनिंदिताम् ३० सावोदास्येसमापन्नान्मोक्षयामासपार्षती अमानुष्यसमायुक्तान्दासकर्मण्यवस्थितान् ३१ अवोचंयत्षंढतिलान्हंवस्तथ्यमेवतत् धृताहिवेणीपार्थेनविराटनगरेतदा ३२ सूदकर्मणिचश्रांतंविराटस्यमहानसे भीमसेनेनकौंतेययच्चतन्ममपौरुषम् ३३ एवमेतत्सदादंडंक्षत्रियाःक्षत्रियेदधुः वेणींकृत्वाषंढवेषःकन्यांनर्तितवानसि ३४ नभयाद्वासुदेवस्यतथापितवफाल्गुन राज्यंप्रतिप्रदास्यामियुध्यस्वसहकेशवः ३५ नमायाहींद्रजालंवाकुहकावाविभीषिका आत्तशस्त्रस्यमेयुद्धेवहंतिप्रतिगर्जनाः ३६ वासुदेवसहस्रंवाफाल्गुनानांशतानिवा आसाद्यमाममोघेषुंद्रविष्यंतिदिशोदश ३७ संयुगंगच्छभीष्मेणभिंधिवाशिरसागिरिम् तरेमंवामहागाधंबाहुभ्यांपुरुषोदधिम् ३८ शारद्वतमहामीनंविविंशतिझषाकुलम् बृहद्बलमहानक्रंसोमदत्तितिमिंगिलम् ३९ युयुत्सुतोयंभगदत्तमारुतंश्रुतायुहार्दिक्यमहासमुद्रम् दुःशासनौघंशलशल्यमत्स्यंसुषेणचित्रायुधनागनक्रम् ४० भीष्मवेगमपर्यंतंद्रोणग्राहदुरासदम् कर्णशल्यझषावर्त्तंकांबोजवडवामुखम् ४१ जयद्रथाद्रिंपुरुमित्रगाधंदुर्मर्षणोदंशकुनिप्रपातम् शस्त्रौघमक्षय्यमतिप्रवृद्धंयदावगाह्यश्रमनष्टचेताः ४२ भविष्यसित्वंहतसर्वबांधवस्तदामनस्तेपरितापमेष्यति तदामनस्तेत्रिदिवादिवाशुचेन्निवर्तितापार्थमहीप्रशासनात् ४३ प्रशास्यराज्यंहिसुदुर्लभंत्वयाबुभूषितःस्वर्गइवातपस्विना ४४ इतिश्रीमन्महाभारतेउ० उलूकयानेएकषष्ट्यधिकशततमोऽध्यायः १६१ संजयउवाच उलूकस्त्वर्जुनंभूयोयथोक्तंवाक्यमब्रवीत् आशीविषमिवक्रुद्धंतुदन्वाक्यशलाकया १ तस्यतद्वचनंश्रुत्वारुषिताःपांडवाभृशम् प्रागेवभृशसंक्रुद्धाःकैतव्येनापिधर्षिताः २ आसनेषूदतिष्ठंतबाहूंश्चैवप्रचिक्षिपुः आशीविषाइवक्रुद्धावीक्षांचक्रुःपरस्परम् ३ अवाक्शिराभीमसेनःसमुदैक्षतकेशवम् नेत्राभ्यांलोहितांताभ्यामाशीविषमिवश्वसन् ४ आर्तंवातात्मजंदृष्ट्वाक्रोधेनाभिहतंभृशम् उत्स्मयन्निवदाशार्हःकैतव्यंप्रत्यभाषत ५

६ ७ ८ ९ १० ११ समितिःसभा १२ १३ १४ द्रौपदेयैः सहितोभिमन्युः १५ १६ परिहार्यैः परितोहारायेषांतेपरिहाराः मौक्तिकगुच्छाःमौक्ति



प्रयाहिशीघ्रंकेतव्यब्रूयाश्चैवसुयोधनम् श्रुतंवाक्यंगृहीतोर्थोमतंयत्तेतथास्तुतत् ६ एवमुक्त्वामहाबाहुःकेशवोराजसत्तम पुनरेव महाप्राज्ञंयुधिष्ठिरमुदैक्षत ७ सृंजयानांचसर्वेषांकृष्णस्यचयशस्विनः द्रुपदस्यसपुत्रस्यविराटस्यचसंनिधौ ८ भूमिपानांचसर्वेषां मध्येवाक्यंजगादह उलूकोप्यर्जुनंभूयोयथोक्तंवाक्यमब्रवीत् ९ आशीविषमिवक्रुद्धंतुदन्वाक्यशलाकया कृष्णादींश्चैवतान्सर्वा न्यथोक्तंवाक्यमब्रवीत् १० उलूकस्यतुतद्वाक्यंपापंदारुणमीरितम् श्रुत्वाविचुक्षुभेपार्थोललाटंचाप्यमार्जयत् ११ तदवस्थंतदादृ ष्ट्वापार्थंसासमितिर्नृप नामृष्यंतमहाराजपांडवानांमहारथाः १२ अधिक्षेपेणकृष्णस्यपार्थस्यचमहात्मनः श्रुत्वातेपुरुषव्याघ्राःक्रोधा ज्जज्वलुरच्युताः १३ धृष्टद्युम्नःशिखंडीचसात्यकिश्चमहारथः केकयाभ्रातरःपंचराक्षसश्चघटोत्कचः १४ द्रौपदेयाभिमन्युश्चधृष्ट केतुश्चपार्थिवः भीमसेनश्चविक्रांतोयमजौचमहारथौ १५ उत्पेतुरासनात्सर्वेक्रोधसंरक्तलोचनाः बाहून्प्रगृह्यरुचिरान्रक्तचंद नरूषितान् १६ अंगदैःपारिहार्यैश्चकेयूरैश्चविभूषितान् दंतान्दंतेषुनिष्पिष्यसृक्किणीपरिलेलिहन् १७ तेषामाकारभावज्ञःकुं तीपुत्रोवृकोदरः उदतिष्ठत्सवेगेनक्रोधेनप्रज्वलन्निव १८ उद्वृत्यसहसानेत्रेदंतान्कटकटाय्यच हस्तंहस्तेननिष्पिष्यउलूकंवा क्यमब्रवीत् १९ अशक्तानामिवास्माकंप्रोत्साहननिमित्तकम् श्रुतंतेवचनंमूर्खयत्त्वांदुर्योधनोब्रवीत् तन्मेकथयतोमंदशृणु वाक्यंदुरासदम् २० सर्वक्षत्रस्यमध्येत्वंयद्वक्ष्यसिसुयोधनम् शृण्वतःसूतपुत्रस्यशकुनेश्चदुरात्मनः २१ अस्माभिःप्रीतिकामै स्तुभ्रातुर्ज्येष्ठस्यनित्यशः मर्षितंतेदुराचारतत्त्वंनबहुमन्यसे २२ प्रेषितश्चहृषीकेशःशमाकांक्षीकुरून्प्रति कुलस्यहितकामेन धर्मराजेनधीमता २३ त्वंकालचोदितोनूनंगंतुकामोयमक्षयं गच्छस्वाहवमस्माभिस्तत्त्वश्वोभविताध्रुवम् २४ मयापिचप्रति ज्ञातोवधःसभ्रातृकस्यते सतथाभवितापापनात्रकार्याविचारणा २५ वेलामतिक्रमेत्सद्यःसागरोवरुणालयः पर्वताश्चविशी र्येयुर्मयोक्तंनमृषाभवेत् २६ सहायस्तेयदियमःकुबेरोरुद्रएववा यथाप्रतिज्ञंदुर्बुद्धेप्रकरिष्यंतिपांडवाः २७ दुःशासनस्यरुधिरं पाताचास्मियथेप्सितम् यश्चेहप्रतिसंरब्धःक्षत्रियोमाभियास्यति २८

कादिजालानिपारिहार्याणिस्वार्थेष्यञ् १७ १८ १९ २० २१ २२ २३



२४ २५ २६ २७ यश्चेतिइहदुःशासनरुधिरपानकालेमामांअभियास्यति २८ ६ ६ ६ ६ ६

आत्मानंआलभेशपामि अंतरात्मानंईश्वरंवास्पृश्याहंआलभेइतिईश्वरशपथंकरोमीत्यर्थः २९ ३० शौंडीरः सवर्गः शूरोविक्रांतः शौंडृगर्वैश्वर्यविक्रांतोइति
धातूः अनीकजनः सैन्य वासीजनः हेपापमह्यंमम ३१ नास्माकमितिधृतराष्ट्रदोषादेववैरंजातम् अन्यथातेनबाल्येएवत्वयित्यक्तेसतितन्नस्यादितिभावः

यच्चैतदुक्तंवचनंमयाक्षत्रस्यसंसदि यथैतद्भवितासत्यंतथैवात्मानमालभे २९ भीमसेनवचःश्रुत्वासहदेवोप्यमर्षणः क्रो
धसंरक्तनयनस्ततोवाक्यमुवाचह ३० शौंडीरशूरसदृशमनीकजनसंसदि शृणुपापवचोमह्यंयद्वाच्योहिपितात्वया ३१ ना
स्माकंभविताभेदःकदाचित्कुरुभिःसह धृतराष्ट्रस्यसंबंधोयदिनस्यात्त्वयासह ३२ त्वंतुलोकविनाशायधृतराष्ट्रकुलस्यच
उत्पन्नोवैरपुरुषःस्वकुलघ्नश्चपापकृत् ३३ जन्मप्रभृतिचास्माकंपितातेपापपूरुषः अहितानि नृशंसानिनित्यशःकर्तुमिच्छ
ति ३४ तस्यवैरानुषंगस्यगंतास्म्यंतंसुदुर्गमम् अहमादौनिहत्यत्वांशकुनेःसंप्रपश्यतः ३५ ततोस्मि शकुनिंहंतामिषतांसर्व
धन्विनां भीमस्यवचनंश्रुत्वासहदेवस्यचोभयोः ३६ उवाचफाल्गुनोवाक्यंभीमसेनंस्मयन्निव भीमसेननतेसंतियेषांवै
रंत्वयासह ३७ मंदागृहेषुसुखिनोमृत्युपाशवशंगताः उलूकश्चनतेवाच्यःपरुषंपुरुषोत्तम ३८ दूताःकिमपराध्यंतेयथोक्त
स्यानुभाषिणः एवमुक्त्वामहाबाहुर्भीमंभीमपराक्रमम् ३९ धृष्टद्युम्नमुखान्वीरान्सुहृदःसमभाषत श्रुतंवस्तस्यपाप
स्यधार्तराष्ट्रस्यभाषितम् ४० कुत्सनंवासुदेवस्यममचैवविशेषतः श्रुत्वाभवंतःसंरब्धाअस्माकंहितकाम्यया ४१ प्रभावा
द्वासुदेवस्यभवतांचप्रयत्नतः समग्रंपार्थिवंक्षत्रंसर्वंनगणयाम्यहम् ४२ भवद्भिःसमनुज्ञातोवाक्यमस्ययदुत्तरम् उलू
केप्रापयिष्यामियद्वक्ष्यतिसुयोधनम् ४३ श्वोभूतेकत्थितस्यास्यप्रतिवाक्यंचमूमुखे गांडीवेनाभिधास्यामिक्लीबाहिव
चनोत्तराः ४४ ततस्तेपार्थिवाःसर्वेप्रशशंसुर्धनंजयम् तेनवाक्योपचारेणविस्मितागजसत्तमाः ४५ अनुनीयचतान्सर्वान्यथा
न्यायंयथावयः धर्मराजस्तदावाक्यंतत्प्राप्यंप्रत्यभाषत ४६ आत्मानमवमन्वानोनहिंस्यात्पार्थिवोत्तमः तत्रोत्तरंप्रवक्ष्यामित
वशुश्रूषणेरतः ४७ उलूकंभरतश्रेष्ठःसामपूर्वमथोर्जितम् दुर्योधनस्यतद्वाक्यंनिशम्यभरतर्षभः ४८ अतिलोहितनेत्राभ्यामा
शीविषइवश्वसन् स्मयमानइवक्रोधात्सृक्किणीपरिसंलिहन् ४९ जनार्दनमभिप्रेक्ष्यभ्रातॄंश्चैवेदमब्रवीत् अभ्यभाषतकै
तव्यंप्रगृह्यविपुलंभुजम् ५०

३२ ३३ तवपिताअस्माकंअहितानिकर्तुमिच्छतीतिसंबंधः ३४ ३५ भीमसेनस्येतिप्राचीनपाठेश्रुत्वेत्यध्याहारः ३६ ३७
३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५०

५१ पांडवेष्विति हेपापपांडवेषु त्वयोक्तं बैडालव्रतरूपं जिह्मं प्रवर्तसइति तुष्यत्तु दुर्जनन्यायेनांगीकरोति प्रवर्तनइतिपाठेतु स्पष्टोर्थः ५२ पूरयन्वाक्यं तदर्थानु ष्ठानेनसमर्थयन् ५३ मान्याः भीष्मद्रोणादयः अमान्याः पुत्राः लक्ष्मणादयः बालवृद्ध नार्शमाकार्षीरित्यर्थः ५४ ५५ नपुंसकंनपुंसकत्वंतव ५६ परेषांकर्णा



उलूकगच्छकैतव्यब्रूहितानतस्सुयोधनम् कृतमंवैरपुरुषंदुर्मतिंकुलपांसनं ५१ पांडवेषुसदापापनित्यंजिह्मंप्रवर्तसे स्ववीर्याद्यः पराक्रम्यपापआह्वयतेपरान् ५२ अभीतःपूरयन्वाक्यमेषवैक्षत्रियःपुमान् संपाक्षत्रियोभूत्वाअस्मानाहूयसंयुगे मान्यामा न्यान्पुरस्कृत्ययुद्धंमागाःकुलाधम ५४ आत्मवीर्यंसमाश्रित्यभृत्यवीर्यंचकौरव आह्वयस्वरणेपार्थान्सर्वथाक्षत्रियोभव ५५ परवीर्यंसमाश्रित्ययःसमाह्वयतेपरान् अशक्तःस्वयमादातुमेतदेवनपुंसकम् ५६ यस्त्वंपरेषांवीर्येणआत्मानंबहुमन्यसे कथमेवम शक्तस्त्वमस्मान्समभिगर्जसि ५७ कृष्णउवाच मद्वचश्चापिभूयस्तेवक्तव्यःससुयोधनः श्वइदानींप्रपद्येथाःपुरुषोभवदु र्मते ५८ मन्यसेयच्चमूढत्वंनयोत्स्यतिजनार्दनः सारथ्येनवृतःपार्थैरितित्वंनबिभेषिच ५९ जघन्यकालमप्येतन्नभवेत्सर्वपार्थिवा न् निर्दहेयमहंक्रोधात्तृणानीवहुताशनः ६० युधिष्ठिरनियोगात्तुफाल्गुनस्यमहात्मनः करिष्येयुध्यमानस्यसारथ्यंविजितात्मनः ६१ यद्युत्पतसिलोकांस्त्रीन्यद्याविशसिभूतलम् तत्रतत्रार्जुनरथंप्रभातेद्रक्ष्यसेपुनः ६२ यच्चापिभीमसेनस्यमन्यसेमोघभा षितम् दुःशासनस्यरुधिरंपीतमद्यावधारय ६३ नत्वांसमीक्षतेपार्थोनापिराजायुधिष्ठिरः नभीमसेनोनयमौप्रतिकूलप्रभा षिणम् ६४ इतिश्रीमन्म॰ उ॰ उलूकयानेभगवद्वाक्येद्विषष्ट्यधिकशततमोऽध्यायः १६२ संजयउवाच दुर्योधनस्यतद्वा क्यंनिशम्यभरतर्षभः नेत्राभ्यामतिताम्राभ्यांकैतव्यंससुदैक्षत १ सकेशवमभिप्रेक्ष्यगुडाकेशोमहायशाः अभ्यभाषतकैतव्यंप्र गृह्यविपुलंभुजम् २ स्ववीर्यंयःसमाश्रित्यसमाह्वयतिवैपरान् अभीतोयुध्यतेशत्रून्सवैपुरुषउच्यते ३ परवीर्यंसमाश्रित्ययःस माह्वयतेपरान् क्षत्रबंधुरशक्तत्वाल्लोकेसपुरुषाधमः ४ सत्वंपरेषांवीर्येणमन्यसेवीर्यमात्मनः स्वयंकापुरुषोमूढपरांश्चक्षेप्तुमिच्छ सि ५

दीनाम् ५७ ५८ ५९ जघन्यकालंचरमकालेपिएतन्नभवेत्माभूत् तदेवाह सर्वेत्यादिनाश्लोकेन ६० ६१ ६२ ६३ समीक्षतेगणयति ६४ इत्युद्योगेटीकायांद्विषष्ट्यधिकशततमोऽध्यायः १६२ दुर्योधनस्येति ससुदैक्षतगुडाकेशइतिसंबंधः १ २ पूरणात्पुरुषइतिपुरुषशब्दनिर्वचनंअ न्यथात्वपुरुषएवेत्यर्थः ३ क्षत्रबंधुः क्षत्रजातिरेवनतुक्षत्रकर्मेत्यर्थः ४ ५

वृद्धंबाल्हीकंभीष्मंच ६.७ मिषतांपश्यतां ८ कैतव्येतिसमेत्यएकीकृत्य निशाव्यपायेश्वोभूते ९ सत्यसंधोभीष्मः भीष्मवाक्यमेवाह अहंहीति हेकैत
व्यअहंहंतेत्यादिमदीयंवाक्यंभारतान्पांडवान्प्रतिगत्वावदस्वकिंकृत्वासुयोधनंस मेत्यमदीयंसंदेशंदुर्योधनायश्रावयित्वापांडवान्प्रतिकथयेत्यर्थः तेन
दुर्योधनस्तरवंपांडवानांभयंचोदेष्यतीतिभावः १० द्रोणमृतेपिद्रोणंविनाप्यसहायएवाहंलोकंहन्यां ततोभीष्मवाक्यात् तेनवभावएवंभूतोजात इत्यर्थः ११
हंताहनिष्यामिकुरुवृद्धंभीष्मं १२ योयुक्तसेनोध्वजीरथीतंरक्षतेतियोजनाद्वीपंमज्जतामाधारं १३ १४ १५ १६ अभिमानःश्रेष्ठोस्मीतिबुद्धिः दर्पः

यस्त्वंवृद्धंसर्वराज्ञांहितबुद्धिंजितेंद्रियम् मरणायमहाप्रज्ञंदीक्षयित्वाविकत्थसे ६ भावस्तेविदितोस्माभिर्दुर्बुद्धेकुलपांसन
नहनिष्यंतिगांगेयंपांडवाघृणयेतिह ७ यस्यवीर्यंसमाश्रित्यधार्तराष्ट्रविकत्थसे हंतास्मिप्रथमंभीष्मंमिषतांसर्वधन्विना-
म् ८ कैतव्यगत्वाभरतान्समेत्यसुयोधनंधार्तराष्ट्रंवदस्व तथेत्युवाचार्जुनःसव्यसाचीनिशाव्यपायेभविताविमर्दः ९ यद्वोब्र
वीद्वाक्यमदीनसत्वोमध्येकुरून्हर्षयन्सत्यसंधः अहंहंतासृंजयानामनीकंशाल्वेयकांश्चेतिममैषभारः १० हन्यामहंद्रोणमृ
तेपिलोकंनतेभयंविद्यतेपांडवेभ्यः ततोहितेलब्धमिदंचराज्यमापद्गताःपांडवाश्चेतिभावः ११ सदर्पपूर्णोनसमीक्षसेत्वमन-
र्थमात्मन्यपिवर्तमानम् तस्मादहंतेप्रथमंसमूहेहंतासमक्षंकुरुवृद्धमेव १२ सूर्योदयेयुक्तसेनःप्रतीक्ष्यध्वजीरथीरक्षस्च
सत्यसंधम् अहंहिवःपश्यतांद्वीपमेनंभीष्मंरथात्पातयिष्यामिबाणैः १३ श्वोभूतेकत्थनावाक्यंविज्ञास्यतिसुयोधनः आ
चितंशरजालेनमयाद्दृष्ट्वापितामहम् १४ यदुक्तश्चसभामध्येपुरुषोग्रस्वदर्शनः क्रुद्धेनभीमसेनेनभ्राताद्दुःशासनस्तव १५
अधर्मज्ञोनित्यवैरीपापबुद्धिर्नृशंसवत् सत्यप्रतिज्ञामचिराद्रक्ष्यसेतांसुयोधन १६ अतिमानस्यदर्पस्यक्रोधपारुष्ययो
स्तथा नैष्ठुर्यस्यावलेपस्यआत्मसंभावनस्यच १७ नृशंसतायास्तैक्ष्ण्यस्यधर्मविद्वेषणस्यच अधर्मस्यापवादस्यवृद्धातिक्रमण
स्यच १८ दर्शनस्यचवक्रस्यकृत्स्नस्यापनयस्यच द्रक्ष्यसित्वंफलंतीव्रमचिरेणसुयोधन १९

पराभिभवसमर्थोस्मीतिधीः क्रोधोभिज्वल
नम् पारुष्यंनिष्ठुरवाक्यत्वम् नैष्ठुर्यंनिःस्नेहता अवलेपोन्येषामवज्ञा आत्मसंभावनंअहमेवज्ञाताशूरश्चास्मीतिबुद्धिः १७ नृशंसतानिर्दयत्वंतीक्ष्णताविष
दानादिबीभत्सकर्मकारित्वम् धर्मविद्वेषणंकपटद्यूतादिना अधर्मोयथाप्रतिज्ञातंराज्याप्रदानं अतिवादो धर्मिष्ठेष्वधर्मिष्ठत्वारोपोबैडालव्रतिकोसीत्यादि
वचनम् वृद्धातिक्रमणंविदुरादीनामवमाननं १८ दर्शनंकर्णादिषुजयनिश्चयः चक्रंसेनायाआधिक्यंअपनयः अस्माकंदूरीकरणंएतेषांफलंद्रक्ष्यसि १९

२० २१ २२ २३ २४ वेदवेदि २५ २६ कथमिति हे दुर्बुद्धे तव व्यसनं मरणागमं कथमपि न प्रेक्ष्य इति हेतोः पंचग्रामा नृता इति संबंधः २७ २८ २९ ३०



वासुदेवद्वितीयेहि मयि क्रुद्धे नराधम आशा ते जीविते मूढ राज्ये वा केन हेतुना २० शांतने भीष्मे तथा द्रोणे सूतपुत्रे च पातिते निराशो जीविते राज्ये पुत्रेषु च भविष्यसि २१ भ्रातॄणां निधनं श्रुत्वा पुत्राणां च सुयोधन भीमसेनेन निहतो दुष्कृतानि स्मरिष्यसि २२ नाहं द्वितीयां प्रतिज्ञां हि प्रतिजानामि कैतव सत्यं ब्रवीम्यहं ह्येतत्सर्वं सत्यं भविष्यति २३ युधिष्ठिरोपि कैतव्यमुलूकमिदमब्रवीत् उलूक मद्वचो ब्रूहि गत्वा तात सुयोधनम् २४ स्वेन वृत्तेन मे वृत्तं नाधिगंतुं त्वमर्हसि उभयोरंतरं वेद सूनृतानृतयोरपि २५ न चाहं कामये पापमपि कीटपिपीलयोः किं पुनर्ज्ञातिषु वधं कामयेयं कथंचन २६ एतदर्थं मया तात पंच ग्रामा वृताः पुरा कथं तव सुदुर्बुद्धे न प्रेक्षे व्यसनं महत् २७ स त्वं कामपरीतात्मा मूढभावाच्च कत्थसे तथैव वासुदेवस्य न गृण्हासि हितं वचः किंचेदानीं बहूक्तेन युध्यस्व सह बांधवैः मम विप्रियकर्तारं कैतव्य ब्रूहि कौरवम् २९ श्रुतं वाक्यं गृहीतोर्थो मतं यत्ते तथास्तु तत् भीमसेनस्ततो वाक्यं भूय आह नृपात्मजः उलूक मद्वचो ब्रूहि दुर्मतिं पापपूरुषम् ३० शठं नैकृतिकं पापं दुराचारं सुयोधनम् गृध्रोदरे वा वस्तव्यं पुरे वा नागसाह्वये प्रतिज्ञातं मया यच्च सभामध्ये नराधम ३२ कर्ताहं तद्वचः सत्यं सत्येनैव शपामि ते दुःशासनस्य रुधिरं हत्वा पास्याम्यहं मृधे ३३ सक्थिनी तव भंक्त्वैव हत्वा हि तव सोदरान् सर्वेषां धार्तराष्ट्राणामहं मृत्युः सुयोधन ३४ सर्वेषां राजपुत्राणामभिमन्युरसंशयम् कर्मणा तोषयिष्यामि भूयश्चैव वचः शृणु ३५ हत्वा सुयोधन त्वां वै सहितं सर्वसोदरैः आक्रमिष्ये पदा मूर्ध्नि धर्मराजस्य पश्यतः ३६ नकुलस्तु ततो वाक्यमिदमाह महीपते उलूक ब्रूहि कौरव्यं धार्तराष्ट्रं सुयोधनम् ३७ श्रुतं ते गदतो वाक्यं सर्वमेव यथातथम् तथा कर्तास्मि कौरव्य यथा त्वमनुशाससि माम् ३८ सहदेवोपि नृपते इदमाह वचोर्थवत् सुयोधन मतिर्याते वृथैषा ते भविष्यति ३९ शोचिष्यसि महाराज सपुत्रज्ञातिबांधवः इमं च क्लेशमस्माकं हृष्टो यत्त्वं विकत्थसे ४० विराटद्रुपदौ वृद्धावुलूकमिदमूचतुः दासभावं नियच्छेव साधोरिति मतिः सदा तौ च दासावदासौ वा पौरुषं यस्य यादृशम् ४१

३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ यत् इमं क्लेशं श्रुत्वा हृष्टः सन् विकत्थसे तेन ततो हेतोः शोचिष्यसे इति संबंधः ४० अश्लाघ्योहं नरपतिर्युवयोरिति दुर्योधनवाक्यस्योत्तरं विराटद्रुपदावाहतुरित्याह विराटेति साधोः दासभावं नियच्छेव नितरां यच्छेव प्रार्थयामहे इषुगमी तिच्छादेशे यमयतेः विधिलिङि उत्तमस्य द्विवचनम् इति आवयोर्मतिरस्ति तौ च आवां दासावदासौ वा नियस्यत वयादृशं पौरुषं तत्तथैव स्थोद्क्ष्याव इति शेषः ४१

४२ ४३ वधात्वधहेतोः ४४ ४५ ४६ ४७ अनावृतंविस्पष्टम् ४८ पूर्वेषांचरितंद्रोणवधेनपितृवैरप्रतियातनं सर्वेषामितिपाठेपिसएवार्थः ४९ ५०

शिखंडीतुततोवाक्यमुलूकमिदमब्रवीत् वक्तव्योभवताराजापापेष्वभिरतःसदा ४२ पश्यत्वंमांरणेराजन्कुर्वाणंकर्मदारुणम्
यस्यवीर्यंसमासाद्यमन्यसेविजयंयुधि ४३ तमहंपातयिष्यामिरथात्तवपितामहम् अहंभीष्मवधात्सृष्टोनूनंधात्रामहात्मना
४४ सोहंभीष्मंहनिष्यामिमिषतांसर्वधन्विनाम् धृष्टद्युम्नोपिकैतव्यमुलूकमिदमब्रवीत् ४५ सुयोधनोममवचोवक्तव्योनृपतेःसु
तः अहंद्रोणंहनिष्यामिसगणंसहबांधवम् ४६ कर्ताचाहंतथाकर्मयथानान्यःकरिष्यति तमब्रवीद्धर्मराजःकारुण्यार्थंवचोमहत्
४७ नाहंज्ञातिवधंराजन्कामयेयंकथंचन तवैवदोषाद्दुर्बुद्धेसर्वमेतत्त्वनावृतम् ४८ अवश्यंचमयाकार्यंपूर्वेषांचरितंमहत् सग
च्छमाचिरंतातउलूकयदिमन्यसे ४९ इहवातिष्ठभद्रंतेवयंहितवबांधवाः उलूकस्तुततोराजन्धर्मपुत्रंयुधिष्ठिरम् ५० आमंत्र्य
प्रययौतत्रयत्रराजासुयोधनः उलूकस्ततआगम्यदुर्योधनममर्षणम् ५१ अर्जुनस्यसमादेशंयथोक्तंसर्वमब्रवीत् वासुदेवस्य
भीमस्यधर्मराजस्यपौरुषम् ५२ नकुलस्यविराटस्यद्रुपदस्यचभारत सहदेवस्यचवचोधृष्टद्युम्नशिखंडिनोः ५३ केशवार्जुन
योर्वाक्यंयथोक्तंसर्वमब्रवीत् कैतव्यस्यतुतद्वाक्यंनिशम्यभरतर्षभः ५४ दुःशासनंचकर्णंचशकुनिंचापिभारत आज्ञापयतराज्ञ
श्चबलंमित्रबलंतथा ५५ यथाप्रागुदयात्सर्वेयुक्तास्तिष्ठंत्यनीकिनः ततःकर्णसमादिष्टादूताःसंत्वरितारथैः ५६ उष्ट्रवामीभिरप्य-
न्येसदश्वैश्चमहाजवैः तूर्णंपरिययुःसेनांकृत्स्नांकर्णस्यशासनात् आज्ञापयंतोराज्ञश्चयोगःप्रागुदयादिति ५७ इतिश्रीम
न्महाभारतेउ० उलूकयानेत्रिषष्ट्यधिकशततमोऽध्यायः १६३ संजयउवाच उलूकस्यवचःश्रुत्वाकुंतीपुत्रोयुधिष्ठिरः सेनांनि
र्यापयामासधृष्टद्युम्नपुरोगमाम् १ पदातिनींनागवतींरथिनीमश्ववृंदिनीम् चतुर्विधबलांभीमामकंप्यांपृथिवीमिव २ भीम
सेनादिभिर्गुप्तांसार्जुनैश्चमहारथैः धृष्टद्युम्नवशांदुर्गांसागरस्तिमितोपमाम् ३ तस्यास्त्वग्रेमहेष्वासःपांचाल्योयुद्धदुर्मदः द्रोण
प्रेप्सुरनीकानिधृष्टद्युम्नोव्यकर्षत ४ यथाबलंयथोत्साहंरथिनःसमुपादिशत् अर्जुनंसूतपुत्रायभीमंदुर्योधनायच ५ धृष्टके
तुंचशल्यायगौतमायोत्तमौजसम् अश्वत्थाम्नेचनकुलंशैब्यंचकृतवर्मणे ६

५१ ५२ ५३ ५४ ५५ ५६ ५७ इतिउद्योगेटीका
यांत्रिषष्ट्यधिकशततमोऽध्यायः १६३ उलूकस्येति १ २ ३ ४ रथिनःराजन्यान्धृष्टद्युम्नःसमुपादिशदितिसंबंधः त्वमनेनयुध्यस्वत्वमनेनेत्येवंतत्तद्देशव्यवस्थां
चकारेत्यर्थः ५ ६

७ ८ ९ अंशंकल्पयत् स्वकीयमितिशेषः १० ११ १२ इतिउद्योगेटीकायांचतुःषष्ट्यधिकशततमोऽध्यायः१६४ प्रतिज्ञानेइति१ २ ३ ४



सैंधवायचवार्ष्णेयंयुयुधानंसमादिशत् शिखंडिनंचभीष्मायप्रमुखेसमकल्पयत् ७ सहदेवंशकुनयेचेकितानंशल्यायवै द्रौपदेयांस्तथापंचत्रिगर्त्तेभ्यःसमादिशत् ८ वृषसेनायसौभद्रंशेषाणांचमहीक्षिताम् ससमर्थंहितंमेनेपार्थादभ्यधिकंरणे ९ एवंविभज्ययोधांस्तान्पृथक्चसहचैवह ज्वालावर्णोमहेष्वासोद्रोणमंशमकल्पयत् धृष्टद्युम्नोमहेष्वासःसेनापतिपतिस्ततः विधिवद्व्यूह्यमेधावीयुद्धायधृतमानसः ११ यथोद्दिष्टानिसैन्यानिपांडवानामयोजयत् जयायपांडुपुत्राणांयत्तस्तस्थौरणाजिरे १२ इतिश्रीमन्महाभारतेउद्योगपर्वणिसेनापतिनियोगेचतुःषष्ट्यधिकशततमोऽध्यायः१६४ धृतराष्ट्रउवाच प्रतिज्ञातेफाल्गुनेनवधेभीष्मस्यसंयुगे किमकुर्वतमेमंदाःपुत्रादुर्योधनादयः १ हतमेवहिपश्यामिगांगेयंपितरंरणे वासुदेवसहायेन पार्थेनदृढधन्वना २ सचापरिमितप्रज्ञस्तच्छ्रुत्वापार्थभाषितम् किमुक्तवान्महेष्वासोभीष्मःप्रहरतांवरः ३ सेनापत्यंचसंप्राप्य कौरवाणांधुरंधरः किमचेष्टतगांगेयोमहाबुद्धिपराक्रमः ४ वैशंपायनउवाच ततस्तत्संजयस्तस्मैसर्वमेवन्यवेदयत् यथोक्तंकुरुवृद्धेनभीष्मेणामिततेजसा ५ संजयउवाच सेनापत्यमनुप्राप्यभीष्मःशांतनवोनृप दुर्योधनमुवाचेदंवचनंहर्षयन्निव ६ नमस्कृत्वाकुमारायसेनान्येशक्तिपाणये अहंसेनापतिस्तेद्यभविष्यामिनसंशयः ७ सेनाकर्मण्यभिज्ञोस्मिव्यूहेषुविविधेषुच कर्मकारयितुंचैवभृतानप्यभृतांस्तथा ८ यात्रायानेचयुद्धेचतथाप्रशमनेषुच भृशंवेदमहाराजयथावेदबृहस्पतिः ९ व्यूहानांचसमारंभान्दैवगांधर्वमानुषान् तैरहंमोहयिष्यामिपांडवान्व्येतुतेज्वरः १० सोहंयोत्स्यामितत्वेनपालयंस्तववाहिनीम् यथावच्छास्त्रतोराजन्व्येतुतेमानसोज्वरः ११ दुर्योधनउवाच विद्यतेमेनगांगेयभयंदेवासुरेष्वपि समस्तेषुमहाबाहोसत्यमेतद्ब्रवीमिते १२ किंपुनस्त्वयिदुर्धर्षेसैनापत्येव्यवस्थिते द्रोणेचपुरुषव्याघ्रेस्थितेयुद्धाभिनंदिनि १३ भवद्भ्यांपुरुषाग्र्याभ्यांस्थिताभ्यांविजयोमम नदुर्लभंकुरुश्रेष्ठदेवराज्यमपिध्रुवम् १४ रथसंख्यांतुकार्त्स्न्येनपरेषामात्मनस्तथा तथैवातिरथानांचवेत्तुमिच्छामिकौरव १५ पितामहोहिकुशलःपरेषामात्मनस्तथा श्रोतुमिच्छाम्यहंसर्वैःसहैभिर्वसुधाधिपैः १६

५ ६ ७ भृतान् वेतनभक्षकान् अभृतान्मैत्र्यासमागतान् ८ यात्रार्थयानेप्रयाणे युद्धेप्रशमनेषुपरास्त्राणांप्रतीकारेषुविषयेषुवेदवेद्मि ९ १० तत्वेनअकापट्येन ११ १२ १३ १४ १५ १६

९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२

कांदिग्भूताः श्रांतपत्राहताश्वाहतचेतसः अन्योन्यमभिसंक्लिश्ययोधास्तेभरतर्षभ ९ भीष्ममेवाभिलीयंतेसहसर्वैस्तत्
वात्मजैः तेषामार्तायनमभूद्भीष्मःशांतनवोरणे १० समुत्पतंतिवित्रस्तारथेभ्योरथिनस्तथा सादिनश्चाश्वपृष्ठेभ्योभूमे-
श्चापिपदातयः ११ श्रुत्वागांडीवनिर्घोषंविस्फूर्जितमिवाशनेः सर्वसैन्यानिभीतानिव्यवालीयंतभारत १२ अथकांबोज-
जैरश्वैर्महद्भिःशीघ्रगामिभिः गोपानांबहुसाहस्रैर्बलैर्गोपायनैर्वृतः १३ मद्रसौवीरगांधारैस्त्रैगर्तैश्चविशांपते सर्वकालिं
गमुख्यैश्चकलिंगाधिपतिर्वृतः १४ नानानरगणौघेनदुःशासनपुरःसरः जयद्रथश्चनृपतिः सहितःसर्वराजभिः १५ ह-
यारोहवराश्चैवतवपुत्रेणचोदिताः चतुर्दशसहस्राणिसौबलंपर्यवारयन् १६ ततस्तेसहिताःसर्वेविभक्तरथवाहनाः पांड-
वाःसमरेजघ्नुःस्तावकान्भरतर्षभ १७ रथिभिर्वारणैरश्वैः पादातैश्चसमीरितं घोरमायोधनंजज्ञेमहाभ्रसदृशंरजः १८
तोमरप्रासनाराचगजाश्वरथयोधिनां बलेनमहताभीष्मः समसज्जत्किरीटिना १९ आवंत्यः काशिराजेनभीमसेनेनसैंधवः अ
जातशत्रुर्मद्राणामृषभेणयशस्विना २० सहपुत्रःसहामात्यःशल्येनसमसज्जत विकर्णः सहदेवेनचित्रसेनःशिखंडिना २१
मत्स्यादुर्योधनंजग्मुः शकुनिंचविशांपते द्रुपदश्चेकितानश्चसात्यकिश्चमहारथः २२ द्रौणेनसमसज्जंतसपुत्रेणमहात्मना
कृपश्चकृतवर्माचधृष्टद्युम्नमभिद्रुतौ एवंप्रव्राजिताश्वानिभ्रांतनागरथानिच समसज्जंतयुद्धानितत्रतत्रससंततः २४
निरभ्रेविद्युतस्तीव्रादिशश्चरजसावृताः प्रादुरासन्महोल्काश्चसनिर्घाताविशांपते २५ प्रादुर्बभौमहावातः पांसुवर्षपपातच
नभस्यंतर्दधेसूर्यः सैन्येनरजसावृतः २६ प्रमोहःसर्वभूतानामतीवसमपद्यत रजसाचाभिभूतानामस्त्रजालैश्चयुध्यतां २७
वीरबाहुविसृष्टानांसर्वावरणभेदिनां संह्रादःशरजालानामतीवसमपद्यत २८ प्रकाशंचक्रुराकाशमुद्यतानिभुजोत्तमैः
नक्षत्रविमलाभानिशस्त्राणिभरतर्षभ २९ आर्षभाणिविचित्राणिरुक्मजालावृतानिच संपेतुर्दिक्षुसर्वासुचर्माणि भरतर्ष
भ सूर्यवर्णैश्चनिस्त्रिंशैः पात्यमानानिसर्वशः ३० दिक्षुसर्वास्वदृश्यंतशरीराणिशिरांसिच भग्नचक्राक्षनीडाश्चनिपातितमहा
ध्वजाः ३१ हताश्वाः पृथिवींजग्मुःस्तत्रतत्रमहारथाः परिपेतुर्हयाश्चात्रकेचिच्छस्त्रकृतव्रणाः ३२ ५ ६९

२३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ६९ ६९

रथाश्चपरिवर्तन्तेहतेषुरथयोधिषु शराहताभिन्नदेहाबद्धयोक्त्राहयोनमाः ३३ युगानिपर्यकर्षंततत्रतत्रस्मभारत अदृश्यंतस-
सूताश्चसाश्वाःसरथयोधिनः ३४ एकेनबलिनाराजन्बाणेननिहतारणे गंधहस्तमदस्रावमाघ्रायबहवोरणे ३५ सन्निपातेबलो
घानांघातमाददिरेगजाः सतोरणमहामात्रैःपतद्भिश्चगतासुभिः ३६ बभूवायोधनंछन्नंनाराचाभिहतैर्गजैः सन्निपातेबलौघा
नांचोदितैर्वरवारणैः ३७ निपेतुर्युधिसंभग्नाःसयोधाःसर्वतोगजाः नागराजोपमैर्हस्तैर्नागैराक्षिप्यसंयुगे ३८ व्यदृश्यंतम
हाराजसंभग्नरथकूबराः विशीर्णरथजालाश्चकेशेष्वाक्षिप्यदंतिभिः ३९ द्रुमशाखाइवाविध्यनिष्पिष्टारथिनोरणे रथेषुच
रथान्युद्धेसंसक्तान्वरवारणाः ४० विकर्षतोदिशःसर्वाःसंपेतुःसर्वशब्दगाः तेषांतथाकर्षतांचगजानांरूपमाबभौ ४१ स
रःसुनलिनीजालंविषक्तमिवकर्षतां एवंसंछादितंतत्रबभूवायोधनंमहत् सादिभिश्चपदातैश्चसध्वजैश्चमहारथैः ४२ इ
तिश्रीमन्महाभारतेभीष्म॰ संकुलयुद्धेएकसप्ततितमोऽध्यायः ७१ संजयउवाच शिखंडीसहमत्स्येनविराटेनविशांप
ते भीष्ममाशुमहेष्वासमाससाददुर्जयम् १ द्रोणंकृपंविकर्णंचमहेष्वासान्महाबलान् राज्ञश्चान्यान्रणेशूरान्बहूनार्च्छद्धनंज
यः २ सैंधवंचमहेष्वासंसामात्यंसहबंधुभिः प्राच्यांश्चदाक्षिणात्यांश्चभूमिपान्भूमिपर्षभ ३ पुत्रंचतेमहेष्वासंदुर्योधनममर्षणं दुः
सहंचैवसमरेभीमसेनोभ्यवर्तत ४ सहदेवश्चशकुनिमुलूकंचमहारथं पितापुत्रौमहेष्वासावभ्यवर्तत दुर्जयौ ५ युधिष्ठिरो
महाराजगजानीकंमहारथः समवर्ततसंग्रामेपुत्रेणानिकृतस्तव ६ माद्रीपुत्रस्तुनकुलःशूरःसंक्रंदनोयुधि त्रिगर्तानांरथो
दारैःसमसज्जतपांडवः ७ अभ्यवर्ततदुर्धर्षाःसमरेशाल्वकेकयान् सात्यकिश्चेकितानश्चसौभद्रश्चमहाबलः ८ धृष्ट
केतुश्चसमरेराक्षसश्चघटोत्कचः पुत्राणांतेरथानीकंप्रत्युद्ययुराहवे ९ सेनापतिरमेयात्माधृष्टद्युम्नोमहारथः द्रोणेनस
मरेराजन्समीयायोग्रकर्मणा १० एवमेतेमहेष्वासास्तावकाःपांडवैःसह समेत्यसमरेशूराःसंप्रहारंप्रचक्रिरे ११ मध्यंदिन
गतेसूर्येनभस्याकुलतांगते कुरवःपांडवेयाश्चनिजघ्नुरितरेतरं १२ ध्वजिनोहेमचित्रांगाविचरंतोरणाजिरे सपताकारथा
रेजुर्वैयाघ्रपरिवारणाः १३ समेतानांचसमरेजिगीषाणांपरस्परं बभूवतुमुलःशब्दःसिंहानामिवगर्जताम् १४ ७

१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८

तत्राद्भुतमपश्याम संप्रहारं सुदारुणं यदकुर्वन्रणे वीराः सृंजयाः कुरुभिः सह १५ नैव खं न दिशो राजन्न सूर्यं शत्रुतापन विदिशो वाप्यपश्याम शरैर्मुक्तैः समंततः १६ शक्तीनां विमलाग्राणां तोमराणां तथास्यतां निस्त्रिंशानां च पीतानां नीलोत्पलनिभाः प्रभाः १७ कवचानां विचित्राणां भूषणानां प्रभास्तथा खं दिशः प्रदिशश्चैव भासयामासुरोजसा १८ वपुर्भिश्च नरेंद्राणां चंद्रसूर्यसमप्रभैः विरराज तदा राजंस्तत्र तत्र रणांगणं १९ रथसिंहा नरव्याघ्राः समायांतश्च संयुगे विरेजुः समरे राजन्ग्रहा इव नभस्तले २० भीष्मस्तु रथिनां श्रेष्ठो भीमसेनं महाबलं अवारयत संक्रुद्धः सर्वसैन्यस्य पश्यतः २१ ततो भीष्मविनिर्मुक्ता रुक्मपुंखाः शिलाशिताः अभ्यघ्नन्समरे भीमं तैलधौताः सुतेजनाः २२ तस्य शक्तिं महावेगां भीमसेनो महाबलः क्रुद्धाशीविषसंकाशां प्रेषयामास भारत २३ तामापतंतीं सहसा रुक्मदंडां दुरासदां चिच्छेद समरे भीष्मः शरैः सन्नतपर्वभिः २४ ततोऽपरेण भल्लेन पीतेन निशितेन च कार्मुकं भीमसेनस्य द्विधा चिच्छेद भारत २५ सात्यकिस्तु ततस्तूर्णं भीष्ममासाद्य संयुगे आकर्णप्रहितैस्तीक्ष्णैर्निशितैस्तिग्मतेजनैः २६ शरैर्बहुभिरानर्च्छत्पितरं तेजनेश्वर ततः संधाय वै तीक्ष्णं शरं परमदारुणं वार्ष्णेयस्य रथाद्भीष्मः पातयामास सारथिं २७ तस्याश्वाः प्रद्रुता राजन्निहते रथसारथौ तेन तेनैव धावंति मनोमारुतरंहसः २८ ततः सैन्यस्य सर्वस्य निःस्वनस्तुमुलोऽभवत् हाहाकारश्च संजज्ञे पांडवानां महात्मनां २९ अभिद्रवत गृह्णीत हयान्यच्छत धावत इत्यासीत्तुमुलः शब्दो युयुधानरथं प्रति ३० एतस्मिन्नेव काले तु भीष्मः शांतनवस्तदा अवधीत्पांडवीं सेनामासुरीमिव वृत्रहा ३१ ते वध्यमाना भीष्मेण पांचालाः सोमकैः सह आर्यां युद्धे मतिं कृत्वा भीष्ममेवाभिदुद्रुवुः ३२ धृष्टद्युम्नमुखाश्चापि पार्थाः शांतनवं रणे अभ्यधावन्जिघांसंतस्तव पुत्रस्य वाहिनीं ३३ तथैव तावका राजन्भीष्मद्रोणमुखाः परान् अभ्यधावंत वेगेन ततो युद्धमवर्तत ३४ इति श्रीमन्महाभा० भीष्मप० द्विसप्ततितमोऽध्यायः ७२ संजय उवाच विराटोऽथ त्रिभिर्बाणैर्भीष्ममार्च्छन्महारथं विव्याध तुरगांश्चास्य त्रिभिर्बाणैर्महारथः १ तं प्रत्यविध्यद्दशभिर्भीष्मः शांतनवः शरैः रुक्मपुंखैर्महेष्वासः कृतहस्तो महाबलः २ द्रौणिर्गांडीवधन्वानं भीमधन्वा महारथः अविध्यादिषुभिः षड्भिर्दृढहस्तः स्तनांतरे ३ कार्मुकं तस्य चिच्छेद फाल्गुनः परवीरहा अविध्यच्च भृशं तीक्ष्णैः पत्रिभिः शत्रुकर्शनः ४ २९ ३० ३१ ३२ ३३ ३४ इतिश्रीम० भीष्म० द्विसप्ततितमोध्यायः ७२ १ २ ३ ४

सोऽन्यत्कार्मुकमादायवेगवान्क्रोधमूर्छितः अमृष्यमाणःपार्थेनकार्मुकच्छेदमाहवे ५ अविध्यत्फाल्गुनंराजन्नवत्यानिशि
तैःशरैः वासुदेवंचसप्तत्याविव्याधपरमेषुभिः ६ ततःक्रोधाभिताम्राक्षःसहकृष्णेनफाल्गुनः दीर्घमुष्णंचनिश्वस्यचिंतयित्वा-
मुहुर्मुहुः ७ धनुःसंपीड्यवामेनकरेणामित्रकर्शनः गांडीवधन्वासंक्रुद्धःशितान्सन्नतपर्वणः ८ जीवितांतकरान्घोरान्समाधत्त
शिलीमुखान् तैस्तूर्णंसमरेविद्ध्वाद्रौणिंबलवतांवरः ९ तस्यतेकवचंभित्वापपुःशोणितमाहवे नविव्यथेविनिर्भिन्नोद्रौणिर्गांडीव
धन्वना १० तथैवचशरान्पार्थेप्रतिमुंचन्नविह्वलः तस्थौससमरेराजंस्त्रातुमिच्छन्महाव्रतं ११ तस्यतत्कमहत्कर्मशशंसुःकुरु
सत्तमाः यत्कृष्णाभ्यांसमेताभ्यामभ्यापततसंयुगे १२ सहिनित्यमनीकेषुयुध्यतेभयमास्थितः अस्त्रग्रामंससंहारंद्रोणात्प्राप्यसु
दुर्लभं १३ ममाचार्यसुतोह्येषद्रोणस्यातिप्रियःसुतः ब्राह्मणश्चविशेषेणमाननीयोममेतिच १४ समास्थायमतिंवीरोबीभत्सुः
शत्रुतापनः कृपांचक्रेरथश्रेष्ठोभारद्वाजसुतंप्रति १५ द्रौणिंत्यक्त्वाततोयुद्धेकौंतेयःश्वेतवाहनः युयुधेतावकान्निघ्नंस्त्वरमाणः
पराक्रमी १६ दुर्योधनस्तुदशभिर्गार्द्धपत्रैःशिलाशितैः भीमसेनंमहेष्वासंरुक्मपुंखैःसमर्दयत् १७ भीमसेनस्तुसंक्रुद्धःपरासु
करणंदृढं चित्रंकार्मुकमादत्तशरांश्चनिशितान्दश १८ आकर्णप्रहितैस्तैस्तीक्ष्णैर्वेगितैस्तिग्मतेजितैः अविध्यत्तूर्णमव्यग्रःकुरु
राजंमहोरसि १९ तस्यकांचनसूत्रस्तुशरैःपरिवृतोमणिः रराजोरसिवैसूर्योग्रहैरिवसमावृतः २० पुत्रस्तुतवतेजस्वीभीमसे
नेनताडितः नामृष्यतयथानागस्तलशब्दंसमीरितं २१ ततःशरैर्महाराजरुक्मपुंखैःशिलाशितैः भीमंविव्याधसंक्रुद्धस्त्रा-
यमाणोवरूथिनीं २२ तौयुध्यमानौसमरेभृशमन्योन्यविक्षतौ पुत्रौतेदेवसंकाशौव्यरोचेतांमहाबलौ २३ चित्रसेनंनरव्याघ्रः
सौभद्रःपरवीरहा अविध्यन्निशितैर्बाणैःपुरुमित्रंचसप्तभिः २४ सत्यव्रतंचसप्तत्याविध्वाशक्रसमोयुधि नृत्यन्निवरणेवी
रआर्तिंनःसमजीजनत् २५ तंप्रत्यविध्यद्दशभिश्चित्रसेनःशिलीमुखैः सत्यव्रतश्चनवभिःपुरुमित्रश्चसप्तभिः २६ सविद्धो-
विक्षरन्रक्तंशत्रुसंवारणंमहत् चिच्छेदचित्रसेनस्यचित्रंकार्मुकमार्जुनिः २७ भित्वाचास्यतनुत्राणंशरेणोरस्यताडयत्
ततस्तेतावकावीराराजपुत्रामहारथाः २८ समेत्ययुधिसंरब्धाविव्यधुर्निशितैस्तदा तांश्चसर्वांश्छरैस्तीक्ष्णैर्जघानपरमास्त्रवित्

तस्यदृष्ट्वातुतत्कर्मपरिवव्रुःक्षतास्तव दहंतंसमरेयोधांस्तवकक्षंयथोल्बणं ३० अपेतशिशिरेकालेसमिद्धमिवपावकम् अभ्य-
रोचतसौभद्रस्तवसैन्यानिशातयन् ३१ ततस्तच्चरितंदृष्ट्वापौत्रस्तवविशांपते लक्ष्मणोभ्यपतत्तूर्णंसात्वतीपुत्रमाहवे ३२ अभि
मन्युस्तुसंक्रुद्धोलक्ष्मणंशुभलक्षणम् विव्याधविशिखैःषड्भिःसारथिंचत्रिभिःशरैः ३३ तथैवलक्ष्मणोराजन्सौभद्रंनिशितैःशरैः
अविध्यतमहाराजतदद्भुतमिवाभवत् ३४ तस्याश्वांश्चतुरोहत्वासारथिंचमहारथः अभ्यद्रवतसौभद्रोलक्ष्मणंनिशितैःशरैः
३५ हताश्वेतुरथेतिष्ठन्लक्ष्मणःपरवीरहा शक्तिंचिक्षेपसंक्रुद्धःसौभद्रस्यरथंप्रति ३६ तामापतंतींसहसाघोररूपांदुरास-
दां अभिमन्युःशरैस्तीक्ष्णैश्चिच्छेदभुजगोपमां ३७ ततःस्वरथमारोप्यलक्ष्मणंगौतमस्तदा अपोवाहरथेनाजौसर्वसैन्य
स्यपश्यतः ३८ ततःसमाकुलेतस्मिन्वर्तमानेमहाभये अभ्यद्रवञ्जिघांसंतःपरस्परवधैषिणः ३९ तावकाश्चमहेष्वासाःपां
डवाश्चमहारथाः जुह्वंतःसमरेप्राणान्निजघ्नुरितरेतरं ४० मुक्तकेशाविकवचाविरथाश्छिन्नकार्मुकाः बाहुभिःसमयुध्यं
तसृंजयाःकुरुभिःसह ४१ ततोभीष्मोमहाबाहुःपांडवानांमहात्मनां सेनांजघानसंक्रुद्धोदिव्यैरस्त्रैर्महाबलः ४२ हतेश्वरै
र्गजैस्तत्रनरैरश्वैश्चपातितैः रथिभिःसादिभिश्चैवसमास्तीर्यतमेदिनी ४३ इतिश्रीमन्महाभा० भी० द्वंद्वयुद्धेत्रिसप्तति
तमोऽध्यायः ७३ संजयउवाच अथराजन्महाबाहुःसात्यकिर्युद्धदुर्मदः विकृष्यसमरेचापंभारसाधनमुत्तमं १
प्रामुंचत्पुंखसंयुक्तांश्छरानाशीविषोपमान् प्रगाढंलघुचित्रंचदर्शयन्हस्तलाघवं २ तस्यविक्षिपतश्चापंशरानन्यांश्चमुंचतः
आददानस्यभूयश्चसंदधानस्यचापरान् ३ क्षिपतश्चशरांस्तस्यरणेशत्रून्विनिघ्नतः ददृशेरूपमत्यर्थंमेघस्येवप्रवर्षतः ४ तमु
दीर्यंतमालोक्यराजादुर्योधनस्तदा रथानामयुतंतस्यप्रेषयामासभारत ५ तांस्तुसर्वान्महेष्वासान्सात्यकिःसत्यविक्रमः
जघानपरमेष्वासोदिव्येनास्त्रेणवीर्यवान् ६ सकृत्वादारुणंकर्मप्रगृहीतशरासनः आससादततोवीरोभूरिश्रवसमाहवे ७
सहिसंदृश्यसेनांतांयुयुधानेनपीडितां अभ्यधावतसंक्रुद्धःकुरूणांकीर्तिवर्द्धनः ८ इंद्रायुधसवर्णंतुसविस्फार्यमहद्धनुः
व्यसृजद्वज्रसंकाशांश्छरानाशीविषोपमान् ९ सहस्रशोमहाराजदर्शयन्पाणिलाघवं शरांस्तान्मृत्युसंस्पर्शान्सात्यकेस्तुपदा
नुगाः १०

नविषेहुस्तदाराजन्दुद्रुवुस्तेसमंततः विहायसमरेराजन्सात्यकिंयुद्धदुर्मदं ११ तंदृष्ट्वायुयुधानस्यसुतादशमहाबलाः महा-
रथाःसमाख्याताश्चित्रवर्मायुधध्वजाः १२ समासाद्यमहेष्वासंभूरिश्रवसमाहवे उचुःसर्वेसुसंरब्धायूपकेतुंमहाहवे १३ भो-
भोःकौरवदायादसहास्माभिर्महाबल एहियुध्यस्वसंग्रामेसमस्तैःपृथगेववा १४ अस्मान्वात्वंपराजित्ययशःप्राप्नुहिसंयुगे
वयंत्वांवापराजित्यप्रीतिंदास्यामहेपितुः १५ एवमुक्तस्तदाशूरैस्तानुवाचमहाबलः वीर्यश्लाघीनरश्रेष्ठस्तान्दृष्ट्वासमवस्थि
तान् १६ साध्विदंकथ्यतेवीरायद्येवंमतिरद्यवः युध्यध्वंसहितायत्तान्निहनिष्यामिवोरणे १७ एवमुक्तामहेष्वासास्तेवीराःक्षि
प्रकारिणः महताशरवर्षेणअभ्यवर्षन्नरिंदमाः १८ अपराह्णेमहाराजसंग्रामस्तुमुलोभवत् एकस्यचबहूनांचसमेतानांर
णाजिरे १९ तमेकंरथिनांश्रेष्ठंशरैस्तेसमवाकिरन् प्रावृषीवयथामेरुंसिषिचुर्जलदानृप २० तैस्तुमुक्तांश्छरौघांस्तान्यमदं-
डाशनिप्रभान् असंप्राप्तानसंभ्रांतश्चिच्छेदाशुमहारथः २१ तत्राद्भुतमपश्यामःसौमदत्तेःपराक्रमं यदेकोबहुभिर्युद्धेसमस-
ज्जदभीतवत् २२ विसृज्यशरवृष्टिंतांदशराजन्महारथाः परिवार्यमहाबाहुंनिहंतुमुपचक्रमुः २३ सौमदत्तिस्ततःक्रुद्धस्तेषां
चापानिभारत चिच्छेददशभिर्बाणैर्निमेषेणमहारथः २४ अथैषांछिन्नधनुषांभल्लैःसन्नतपर्वभिः चिच्छेदसमरेराजञ्छि
रांसिभरतर्षभ २५ तेहतान्यपतन्भूमौवज्ररुग्णाइवद्रुमाः तान्दृष्ट्वानिहतान्वीरान्रणेपुत्रान्महाबलान् २६ वार्ष्णेयोविनद
न्राजन्भूरिश्रवसमभ्यगात् रथंरथेनसमरेपीडयित्वामहाबलौ २७ तावन्योन्यस्यसमरेनिहत्यरथवाजिनः विरथावभिव
ल्गंतौसमेयातांमहारथौ २८ प्रगृहीतमहाखड्गौतौचर्मवरधारिणौ शुशुभातेनरव्याघ्रौयुद्धायसमवस्थितौ २९ ततःसा-
त्यकिमभ्येत्यनिस्त्रिंशवरधारिणं भीमसेनस्ततोराजन्रथमारोपयत्तदा ३० तवापितनयोराजन्भूरिश्रवसमाहवे आरोप-
यद्रथंतूर्णंपश्यतांसर्वधन्विनां ३१ तस्मिंस्तथावर्तमानेरणेभीष्मंमहारथं अयोधयंतसंरब्धाःपांडवाभरतर्षभ ३२ लोहि-
तायतिचादित्येत्वरमाणोधनंजयः पंचविंशतिसाहस्रान्निजघानमहारथान् ३४ तेहिदुर्योधनादिष्टास्तदापार्थनिबर्हणे अ-
प्राप्यैवगतानाशंशलभाइवपावके ३४ ततोमत्स्याःकेकयाश्चधनुर्वेदविशारदाः परिवव्रूरणेपार्थंसहपुत्रंमहारथम् ३५

जगामास्तमथादित्योरजोमेघैःसमुत्थितैः एतस्मिन्नेवकालेतुसूर्येऽस्तमुपगच्छति सर्वेषामेवसैन्यानांप्रमोहःसमपद्यत ३६ अव
हारंततश्चक्रेपितादेवव्रतस्तव संध्याकालेमहाराजसैन्यानांश्रांतवाहनः ३७ पांडवानांकुरूणांचपरस्परसमागमे तेसेनेभृशसंविग्ने
ययतुःस्वंनिवेशनं ३८ ततःस्वशिबिरंगत्वान्यविशंस्तत्रभारत पांडवाःसृंजयैःसार्द्धंकुरवश्चयथाविधि ३९ इतिश्रीमन्महाभा
र०भीष्मपर्वणिपंचमदिवसयुद्धंनामचतुःसप्ततितमोऽध्यायः ७४ संजयउवाच विहृत्यचततोराजन्सहिताःकुरुपांडवाः
व्यतीतायांतुशर्वर्यांपुनर्युद्धायनिर्ययुः १ ततःशब्दोमहानासीत्तवतेषांचभारत युज्यतांरथमुख्यानांकल्प्यतांचापिदंतिनां २
सन्नह्यतांपदातीनांहयानांचैवभारत शंखदुंदुभिनिर्घोषास्तुमुलाःसर्वतोभवन् ३ ततोयुधिष्ठिरोराजाधृष्टद्युम्नमभाषत व्यूहं-
व्यूहमहाबाहोमकरंशत्रुतापनं ४ एवमुक्तस्तुपार्थेनधृष्टद्युम्नोमहारथः व्यादिदेशमहाराजरथिनोरथिनांवरः ५ शिरोभूद्द्रु-
पदस्तस्यपांडवश्चधनंजयः चक्षुषीसहदेवश्चनकुलश्चमहारथः ६ तुंडमासीन्महाराजभीमसेनोमहाबलः सौभद्रोद्रौपदेया
श्चराक्षसश्चघटोत्कचः ७ सात्यकिर्धर्मराजश्चव्यूहग्रीवांसमास्थिताः पृष्ठमासीन्महाराजविराटोवाहिनीपतिः ८ धृष्टद्युम्ने-
नसहितोमहत्यासेनयावृतः कैकेयाभ्रातरःपंचवामपक्षंसमाश्रिताः ९ धृष्टकेतुर्नरव्याघ्रश्चेकितानश्चवीर्यवान् दक्षिणंपक्ष
माश्रित्यस्थितावव्यूहस्यदक्षिणे १० पादयोस्तुमहाराजस्थितःश्रीमान्महारथः कुंतीभोजःशतानीकोमहत्यासेनयावृतः ११ शि
खंडीतुमहेष्वासःसोमकैःसंवृतोबली इरावांश्चनृपःपुच्छेमकरस्यव्यवस्थितौ १२ एवमेतंमहाव्यूहंव्यूह्यभारतपांडवाः सूर्योद
येमहाराजपुनर्युद्धायदंशिताः १३ कौरवानभ्ययुस्तूर्णंहस्त्यश्वरथपत्तिभिः समुच्छ्रितैर्ध्वजैश्छत्रैःशस्त्रैश्चविमलैःशितैः १४
व्यूढंदृष्ट्वातुतत्सैन्यंपितादेवव्रतस्तव क्रौंचेनमहताराजन्प्रत्यव्यूहतवाहिनीं १५ तस्यतुंडेमहेष्वासोभारद्वाजोभ्यवर्तत अ-
श्वत्थामाकृपश्चैवचक्षुरास्तांनरेश्वर १६ कृतवर्मातुसहितःकांबोजवरबाल्हिकैः शिरस्यासीन्नरश्रेष्ठःश्रेष्ठःसर्वधनुष्मतां १७
ग्रीवायांशूरसेनस्तवपुत्रश्चभारत दुर्योधनोमहाराजराजभिर्बहुभिर्वृतः १८ प्राग्ज्योतिषस्तुसहितोमद्रसौवीरकेकयैः उ
रस्यभून्नरश्रेष्ठमहत्यासेनयावृतः १९ स्वसेनयाचसहितःसुशर्माप्रस्थलाधिपः वामंपक्षंसमाश्रित्यदंशितःसमवस्थितः २०

तुषारायवनाश्चैवशकैश्चसहचूलिकैः दक्षिणंपक्षमाश्रित्यास्थिताव्यूहस्यभारत २१ श्रुतायुश्चशतायुश्चसौमदत्तिश्चमारिष व्यूहस्यजघनेतस्यरक्षमाणाःपरस्परं २२ ततोयुद्धायसंजग्मुःपांडवाःकौरवैःसह सूर्योदयेमहाराजततोयुद्धमवर्तत २३ प्रतीयूरथिनोनागानागांश्चरथिनोययुः हयारोहाहयारोहान्रथिनश्चापिसादिनः २४ सादिनश्चहयान्राजन्कुंजरांश्चमहारणे हस्त्यारोहान्रथान्राजन्रथिनश्चापिसादिनः २५ रथिनःपत्तिभिःसार्द्धंसादिनश्चापिपत्तिभिः अन्योन्यंसमरेराजन्प्रत्यधावन्नमर्षिताः २६ भीमसेनार्जुनयमैर्गुप्ताश्चान्यैर्महारथैः शोभतेपांडवीसेनानक्षत्रैरिवशर्वरी २७ तथाभीष्मकृपद्रोणशल्यदुर्योधनादिभिः तवापिविबभौसेनाग्रहैर्द्यौरिवसंवृता २८ भीमसेनस्तुकौंतेयोद्रोणंदृष्ट्वापराक्रमी अभ्ययाज्जवनैरश्वैर्भारद्वाजस्यवाहिनीं २९ द्रोणस्तुसमरेक्रुद्धोभीमंनवभिरायसैः विव्याधसमरेराजन्मर्माण्युद्दिश्यवीर्यवान् ३० दृढाहतस्ततोभीमोभारद्वाजेनसंयुगे सारथिंप्रेषयामासयमस्यसदनंप्रति ३१ ससंगृह्यस्वयंवाहान्भारद्वाजःप्रतापवान् व्यधमत्पांडवींसेनांतूलराशिमिवानलः ३२ तेवध्यमानाद्रोणेनभीष्मेणाचनरोत्तम सृंजयाःकेकयैःसार्द्धंपलायनपराभवन् ३३ तथैवतावकंसैन्यंभीमार्जुनपरिक्षतं मुह्यतेतत्रतत्रैवसमदेववरांगना ३४ अभिद्येतांततोव्यूहौतस्मिन्वीरवरक्षये आसीद्व्यतिकरोघोरस्तवतेषांचभारत ३५ तदद्भुतमपश्यामतावकानांपरैःसह एकायनगताःसर्वेयदयुध्यंतभारत ३६ प्रतिसंधायचास्त्राणितेन्योन्यस्यविशांपते युयुधुःपांडवाश्चैवकौरवाश्चमहामृधे ३७ इतिश्रीमन्महाभारतेभीष्म० षष्ठदिनयुद्धारंभेपंचसप्ततितमोऽध्यायः ७५

धृतराष्ट्रउवाच एवंबहुगुणंसैन्यमेवंबहुविधंपरं व्यूढमेतद्यथाशास्त्रममोघंचैवसंजय १ तुष्टमस्माकमत्यंतमभिकामंचनः सदा प्रव्हमव्यसनोपेतंपुरस्तादृष्टविक्रमं २ नातिवृद्धमबालंचनकृशंनचपीवरं लघुवृत्तायतप्रायंसारगात्रमनामयं ३ आत्तसन्नाहशस्त्रंचबहुशस्त्रपरिग्रहं असियुद्धेनियुद्धेचगदायुद्धेचकोविदं ४ प्रासर्ष्टितोमरेष्वाजौपरिघेष्वायसेषुच भिंदिपालेषुशक्तिषुमुसलेषुचसर्वशः ५ कंपनेषुचचापेषुकणपेषुचसर्वशः क्षेपणेषुचचित्रेषुमुष्टियुद्धेषुचक्षमं ६ अपरोक्षंचविद्यासुव्यायामेषुकृतश्रमं शस्त्रग्रहणविद्यासुसर्वासुपरिनिष्ठितं ७ आरोहेपर्यवस्कंदेसरणेसांतरप्लुते सम्यक्प्रहरणेयानेव्यपयानेचकोविदं ८

नागाश्वरथयानेषुबहुशःकृपरीक्षितं परीक्ष्यचयथान्यायंवेतनेनोपपादितं ९ नगोष्ठ्यानोपकारेणनसंबंधनिमित्ततः नसौ हृदबलेनापिनकुलीनपरिग्रहैः १० समृद्धजनमार्यंचतुष्टसत्कृतबांधवं कृतोपकारभूयिष्ठंयशस्विचमनस्विच ११ सजवै-श्वनरैर्मुख्यैर्बहुशोमुख्यकर्मभिः लोकपालोपमैस्तातपालितंलोकविश्रुतैः १२ बहुभिःक्षत्रियैर्गुप्तंपृथिव्यांलोकसंमतैः अ स्मानभिगतैःकामान्सबलैःसपदानुगैः १३ महोदधिमिवापूर्णमापगाभिःसमंततः अपक्षैःपक्षिसंकाशैरथैनर्गैश्वसंवृतं १४ नानायोधजनंभीमंवाहनोर्मितरंगिणं क्षेपण्यसिगदाशक्तिशरप्रासैःसमाकुलं १५ ध्वजभूषणसंबाधंरत्नपट्टकृसंचितं वाहनैःपरिधावद्भिर्वायुवेगविकंपितं १६ अपारमिवगर्जंतंसागरप्रतिमंमहत् द्रोणभीष्माभिसंगुप्तंगुप्तंचकृतवर्मणा १७ कृपदुःशासनाभ्यांचजयद्रथमुखैस्तथा भगदत्तविकर्णाभ्यांद्रोणिसौबलबाल्हिकैः १८ गुप्तंप्रवीरैर्लोकस्यसारवद्भिर्महा त्मभिः यद्धन्यतसंग्रामेदिष्टमत्रपुरातनं १९ नैतादृशंसमुद्योगंदृष्टवंतोऽथमानुषाः ऋषयोवामहाभागाःपुराणाभुविसं जय २० ईदृशोऽपिबलौघस्तुयुक्तःशास्त्रार्थसंपदा वध्यतेयत्रसंग्रामेकिमन्यद्भागधेयतः २१ विपरीतमिदंसर्वंप्रतिभाति स्मसंजय यत्रेदृशंबलंघोरंनातरद्युधिपांडवान् २२ अथवापांडवार्थायदेवास्तत्रसमागताः युद्ध्यंतेमामकंसैन्यंयथाविद्य-निसंजय २३ उक्तोहिविदुरेणेहहितंपथ्यंचनित्यशः नचगृण्हातितन्मंदःपुत्रोदुर्योधनोमम २४ तस्यमन्येमतंपूर्वंसर्वज्ञस्य महात्मनः आसीद्यथागतंतातयेनदृष्टमिदंपुरा २५ अथवाभाव्यमेवंहिसंजयैतेनसर्वथा पुराधात्रायथासृष्टंतत्तथान-नदन्यथा २६ इतिश्रीमन्महाभा० भी० धृतराष्ट्रचिंतायांषट्सप्ततितमोध्यायः ७६ संजयउवाच आत्मदोषात्त्वया राजन्प्राप्तंव्यसनमीदृशं नहिदुर्योधनस्तातपश्यतेभरतर्षभ १ यानित्वंदृष्टवान्राजन्धर्मसंकरकाणिते तवदोषात्पुराव-त्तंद्यूतमेतद्विशांपते २ तवदोषेणयुद्धंचप्रवृत्तंसहपांडवैः त्वमेवाद्यफलंभुंक्ष्वकृत्वाकिल्बिषमात्मनः ३ आत्मनैवकृतंक र्मआत्मनैवोपभुज्यते इहवाप्रेत्यवाराजंस्त्वयाप्राप्तंयथातथं ४ तस्माद्राजन्स्थिरोभूत्वाप्राप्येदंव्यसनमहत् शृणुयुद्धंय थादृत्तंशंसतोममसारिष ५ भीमसेनःकृनिशितैर्बाणैर्भित्वामहाचमूम् आससादततोवीरःसर्वान्दुर्योधनानुजान् ६

दुःशासनंदुर्विषहंदुःसहंदुर्मदंजयं जयसेनंविकर्णंचचित्रसेनंसुदर्शनं ७ चारुचित्रंसुवर्माणंदुष्कर्णंकर्णमेवच एतानन्यां
श्चसुबहून्समीपस्थान्महारथान् ८ धार्त्तराष्ट्रान्सुसंक्रुद्धान्दृष्ट्वाभीमोमहाबलः भीष्मेणसमरेगुप्तांप्रविवेशमहाचमूं ९ अ
थाह्वयंतसर्वेतेअयमेष वृकोदरः जीवग्राहंनिगृण्हीमोवयमेतंनराधिपाः १० सतैःपरिवृतःपार्थोभ्रातृभिःकृतनिश्चयैः
प्रजासंहरणेसूर्यःक्रूरैरिवमहाग्रहैः ११ संप्राप्यमध्यंव्यूहस्यनभीःपांडवमाविशत् यथादेवासुरेयुद्धेमहेंद्रःप्राप्यदानवान् १२
ततःशतसहस्राणिरथिनांसर्वशस्त्रिणां उद्यतानिशरैर्घोरैस्तमेकमनुवव्रिरे १३ सतेषांप्रवरान्योधान्हस्त्यश्वरथसादिनः जघा-
नसमरेशूरोधार्त्तराष्ट्रानचिंतयन् १४ तेषांव्यवसितंज्ञात्वाभीमसेनोजिघृक्षतां समस्तानांवधेराजन्मतिंचक्रेमहाबलः १५
ततोरथंससुत्सृज्यगदामादायपांडवः जघानधार्त्तराष्ट्राणांतंबलौघमहार्णवं १६ भीमसेनेप्रविष्टेतुधृष्टद्युम्नोपिपार्षतः द्रोणमु
त्सृज्यतरसाप्रययौयत्रसौबलः १७ निवार्यमहतींसेनांतावकानांनरर्षभः आससादरथंतूर्णंभीमसेनस्यसंयुगे १८ दृष्ट्वा
विशोकंसमरेभीमसेनस्यसारथिं धृष्टद्युम्नोमहाराजदुर्मनागतचेतनः १९ अपृच्छत्बाष्पसंरुद्धोनिश्वसन्वाचमीरयन् म
मप्राणैःप्रियतमःक्वभीमइतिदुःखितः २० विशोकस्तमुवाचेदंधृष्टद्युम्नंकृतांजलिः संस्थाप्यमामिहबलीपांडवःसुमहाबलः
२१ प्रविष्टोधार्त्तराष्ट्राणामेकोबलमहार्णवं मामुक्त्वापुरुषव्याघ्रप्रीतियुक्तमिदंवचः २२ प्रतिपालयमांसूतनियम्याश्वान्मुहूर्त-
कं यावदेतान्निहन्म्यद्ययइमेमद्वधोद्यताः २३ ततोदृष्ट्वागदाहस्तंप्रधावंतंमहाबलं सर्वेषामेवसैन्यानांसंहर्षःसमजायत
२४ तस्मिन्सुतुमुलेयुद्धेवर्तमानेमहाभये भित्त्वाराजन्महाव्यूहंप्रविवेशसखातव २५ विशोकस्यवचःश्रुत्वाधृष्टद्युम्नोपि-
पार्षतः प्रत्युवाचततःसूतंरणमध्येमहाबलः २६ नहिमेजीवितेनापिविद्यतेद्यप्रयोजनं भीमसेनंरणेहित्वास्नेहमुत्सृज्यपां-
डवैः २७ यदियामिविनाभीमंकिंमांक्षत्रंवदिष्यति एकायनगतेभीमेमयिचावस्थितेयुधि २८ अस्वस्तितस्यकुर्वंतिदेवाःशक्र
पुरोगमाः यःसहायान्परित्यज्यस्वस्तिमानाव्रजेद्गृहान् २९ समेभीमःसखाचैवसंबंधीचमहाबलः भक्तोमेभक्तिमांश्चाहंत-
स्मिन्नरिनिषूदन ३० सोहंतत्रगमिष्यामियत्रयातोवृकोदरः निघ्नंतंमारिपून्पश्य दानवानिववासवम् ३१ ६९ ६९

३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५

एवमुक्त्वाततोवीरोरथयोमध्येनभारत भीमसेनस्यमार्गेषुगदाप्रमाथिनेर्गजे: ३२ सददर्शतदाभीमंदहंतंरिपुवाहिनीं वातोवृक्षा-
निवबहून्प्रभंजंतंरणेनृपान् ३३ तेहन्यमानाःसमरेरथिनःसादिनस्तथा पादातादंतिनश्चैवचक्रुरार्तस्वरंमहत् ३४ हाहाकारश्च
संजज्ञेतवसैन्यस्यमारिष वध्यतेभीमसेनेनकृतिनाचित्रयोधिना ३५ ततःकृतास्त्रास्तेवीरापरिवार्यवृकोदरम् अभीताःसमकुर्वंत
शस्त्रवृष्टिंसमंततः ३६ अभिद्रुतंशस्त्रभृतांवरिष्ठंसमंततःपांडवलोकवीरम् सैन्येनघोरेणसुसंहतेनदृष्ट्वाबलीपार्षतोभीमसे-
नं ३७ अथोपगच्छच्छरविक्षतांगंपदातिनंक्रोधविषंवमंतं आश्वासयन्पार्षतोभीमसेनंगदाहस्तंकालमिवांतकाले ३८ निः
शल्यमेनंचचकारतूर्णमारोपयच्चात्मरथेमहात्मा भृशंपरिष्वज्यचभीमसेनमाश्वासयामासचशत्रुमध्ये ३९ भ्रातृनथोपेत्यतवा
पिपुत्रस्तस्मिन्विमर्देसहसाभ्युवाच अयंदुरात्माद्रुपदस्यपुत्रःसमागतोभीमसेनेनसार्द्धं ४० तंयामसर्वेसहितानिहंतुंमानोरिपुः
प्रार्थयतामनीकं श्रुत्वाथवाक्यंतममृष्यमाणाज्येष्ठाज्ञयाचोदिताधार्तराष्ट्राः ४१ वधायनिष्पेतुरुदायुधास्तेयुगक्षयेकेतवोयद्व
दुग्राः प्रगृह्यचित्राणिधनूंषिवीराज्यानेमिघोषैःप्रविकंपयंतः ४२ शरैरवर्षन्द्रुपदस्यपुत्रंयथांबुदाभूधरंवारिजालैः निहत्यतां
श्चापिशरैःसुतीक्ष्णैर्नविव्यथेसमरेचित्रयोधी ४३ समभ्युदीर्णांश्चतवात्मजांस्तथानिशम्यवीरानभितःस्थितान्रणे जिघांसुरु-
ग्रंद्रुपदात्मजोयुवाप्रमोहनास्त्रंयुयुजेमहारथः ४४ क्रुद्धोभृशंतवपुत्रेषुराजन्दैत्येषुयद्वत्समरेमहेंद्रः ततोव्यमुह्यंतरणेनृवी
राःप्रमोहनास्त्राहतबुद्धिसत्वाः ४५ प्रदुद्रुवुःकौरवाश्चैवसर्वेसवाजिनागाःसरथाःसमंतात् परीतकालानिवनष्टसंज्ञान्मो
होपेतांस्तवपुत्रान्निशम्य ४६ एतस्मिन्नेवकालेतुद्रोणःशस्त्रभृतांवरः द्रुपदंत्रिभिरासाद्यशरैर्विव्याधदारुणैः ४७ सोतिवि
द्धस्तदाराजन्रणाद्द्रोणेनपार्थिवः अपायाद्द्रुपदोराजन्पूर्ववैरमनुस्मरन् ४८ जित्वाद्रोणस्तुद्रुपदंशंखंदध्मौप्रतापवान् तस्य
शंखस्वनंश्रुत्वावित्रेसुःसर्वसोमकाः ४९ अथशुश्रावतेजस्वीद्रोणःशस्त्रभृतांवरः प्रमोहनास्त्रेणरणेमोहितानात्मजांस्तव ५०
ततोद्रोणोराजगृद्धीत्वरितोभ्याययौरणात् तत्रापश्यन्महेष्वासोभारद्वाजःप्रतापवान् ५१ धृष्टद्युम्नंचभीमंचविचरंतौमहारणे
मोहाविष्टांश्चतेपुत्रानपश्यत्समहारथः ५२ ततःप्रज्ञास्त्रमादायमोहनास्त्रंव्यशातयत् अथप्रत्यागतप्राणास्तवपुत्रामहारथाः ५३

४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५४ ५४ ५४

पुनर्युद्धायसमरेप्रययुर्भीमपार्षतौ ततोयुधिष्ठिरःप्राहसमाहूयस्वसैनिकान् ५४ गच्छंतुपदवींशक्त्याभीमपार्षतयोर्युधि सौ-
भद्रप्रमुखावीरारथाद्वादशदंशिताः ५५ प्रवृत्तिमधिगच्छंतुनहिसुद्ध्यतिमेमनः तएवंसमनुज्ञाताःशूराविक्रांतयोधिनः ५६
बाढमित्येवमुक्त्वातुसर्वेपुरुषमानिनः मध्यंदिनगतेसूर्येप्रययुःसर्वएवहि ५७ कैकेयाद्रौपदेयाश्चधृष्टकेतुश्चवीर्यवान् अ-
भिमन्युंपुरस्कृत्यमहत्यासेनयावृताः ५८ तेकृत्वासमरेव्यूहंसूचीमुखमरिंदमाः बिभिदुर्धार्तराष्ट्राणांतद्रथानीकमाहवे ५९
तान्प्रयातान्महेष्वासानभिमन्युपुरोगमान् भीमसेनभयाविष्टाधृष्टद्युम्नविमोहिता ६० नसंधारयितुंशक्तातवसेनानराधिप
मदमूर्छान्वितात्माहिप्रमदेवाध्वनिस्थिता ६१ तेभियायमहेष्वासाःस्वर्णविकृतध्वजाः परीप्संतोभ्यधावंतधृष्टद्युम्नवृकोद-
रौ ६२ तौचदृष्ट्वामहेष्वासानभिमन्युपुरोगमान् बभूवतुर्मुदायुक्तौनिघ्नंतौतववाहिनीं ६३ दृष्ट्वाचसहसायांतंपांचाल्योगुरुमा
त्मनः नाशंसतवधंवीरःपुत्राणांतवपार्षतः ६४ ततोरथंसमारोप्यकेकेयस्यवृकोदरं अभ्यधावत्सुसंक्रुद्धोद्रोणमिष्वस्त्रपा
रगं ६५ तस्यापिपततस्तूर्णंभारद्वाजःप्रतापवान् क्रुद्धश्चिच्छेदभल्लेनधनुःशत्रुनिषूदनः ६६ अन्यांश्चशतशोबाणान्प्रेषया
मासपार्षते दुर्योधनहितार्थायभर्तुःपिंडमनुस्मरन् ६७ अथान्यद्धनुरादायपार्षतःपरवीरहा द्रोणंविव्याधसप्तत्यारुक्मपुं
खैःशिलाशितैः ६८ तस्यद्रोणःपुनश्चापंचिच्छेदामित्रकर्शनः हयांश्चचतुरस्तूर्णंचतुर्भिःसायकोत्तमैः ६९ वैवस्वतक्षयंघो-
रंप्रेषयामासभारत सारथिंचास्यभल्लेनप्रेषयामासमृत्यवे ७० हताश्वात्सरथात्तूर्णमवप्लुत्यमहारथः आरुरोहमहाबा-
हुरभिमन्योर्महारथं ७१ ततःसरथनागाश्वासमकंपतवाहिनी पश्यतोभीमसेनस्यपार्षतस्यचपश्यतः ७२ तत्प्रभग्नंबलं
दृष्ट्वाद्रोणेनामिततेजसा नाशक्नुवन्वारयितुंसमस्तास्तेमहारथाः ७३ वध्यमानंतुतत्सैन्यंद्रोणेननिशितैःशरैः व्यभ्रमत्तत्र
तत्रैवक्षोभ्यमाणइवार्णवः ७४ तथादृष्ट्वाचतत्सैन्यंजहृषेचबलंतव दृष्ट्वाचार्यंचसंक्रुद्धंदहंतंरिपुवाहिनीं चुक्रुशुःसर्वतो
योधाःसाधुसाध्वितिभारत ७५ इतिश्रीमन्महाभा॰भी॰सप्तसप्ततितमोऽध्यायः ७७ संजयउवाच ततोदुर्योध
नोराजामोहात्प्रत्यागतस्तदा शरवर्षैःपुनर्भीमंप्रत्यवारयदच्युतं १ एकीभूताःपुनश्चैवतवपुत्रामहारथाः समेत्यसमरेभी-
मंयोधयामासुरुद्यताः २

३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६

भीमसेनोपिसमरेसंप्राप्यस्वरथंपुनः समारुह्यमहाबाहुर्ययौयत्रतवात्मजः ३ प्रगृह्यचमहावेगःपराक्रुकरणंदृढं चित्रंश
रासनंसंख्येशरैर्विव्याधतेस्रुतं ४ ततोदुर्योधनोराजन्भीमसेनंमहाबलं नाराचेनस्रुतीक्ष्णेनभृशंमर्मण्यताडयत् ५ सो
तिविद्धोमहेष्वासस्तवपुत्रेणधन्विना संरक्तनयनःक्रोधाद्वेगादाक्रुष्यकार्मुकं ६ दुर्योधनंत्रिभिर्बाणैर्बाह्वोरुरसिचार्पयत् स
तथाभिहतोराजन्नाचलद्गिरिराडिव ७ तौदृष्ट्वासमरेक्रुद्धौविनिघ्नंतौपरस्परं दुर्योधनानुजाःसर्वेशूराःसंत्यक्तजीविताः ८
संस्मृत्यमंत्रितंपूर्वंनिग्रहेभीमकर्मणः निश्चयंपरमंकृत्वानिगृहीतुंप्रचक्रमुः ९ तानापततएवाजौभीमसेनोमहाबलः अभ्यु
द्ययौमहाराजगजःप्रतिगजानिव १० भृशंक्रुद्धश्चतेजस्वीनाराचेनसमार्पयत् चित्रसेनंमहाराजतवपुत्रंमहायशाः ११ त-
थेतरांस्तवस्रुतांस्ताडयामासभारत शरैर्बहुविधैःसंख्येरुक्मपुंखैःस्रुवेगितैः १२ ततःसंस्थाप्यसमरेस्वान्यनीकानिसर्वशः
अभिमन्युप्रभृतयस्तेद्वादशमहारथाः १३ प्रेषिताधर्मराजेनभीमसेनपदानुगाः प्रत्युद्ययुर्महाराजराजपुत्रान्महारथान् १४
दृष्ट्वारथस्थांस्तांश्छूरान्सूर्याग्निसमतेजसः सर्वानेवमहेष्वासान्भ्राजमानांश्छ्रियावृतान् १५ महाहवेदीप्यमानान्सुवर्णविक्रुतोज्व-
लान् तत्यजुःसमरेभीमंतवपुत्रामहाबलाः तान्नामृष्यतकौंतेयोजीवमानागताइति १६ इतिश्रीमन्महाभारतेभी० भीमयुद्धे
अष्टसप्ततितमोध्यायः ७८ संजयउवाच अन्वीयचपुनःसर्वांस्तवपुत्रानपीडयत् अभिमन्युश्चसमरेभीमसेनेनसंयुतः
१ पार्षतेनचसंप्रेक्ष्यतवसैन्यंमहारथः दुर्योधनप्रभृतयःप्रगृहीतशरासनाः २ भृशमश्वैःप्रजवितैःप्रययुर्यत्रतेरथाः अपरा-
ह्णेततोराजन्प्रावर्ततमहान्रणः ३ तावकानांचबलिनांपरेषांचैवभारत अभिमन्युर्विकर्णस्यहयान्हत्वामहाहवे ४ अथैनंपंच
विंशत्याक्षुद्रकाणांसमाचिनोत् हताश्वंरथमुत्सृज्यविकर्णस्रुमहारथः ५ आरुरोहरथंराजंश्चित्रसेनस्यभास्वरं स्थितावेक
रथेतौतुभ्रातरौकुरुवर्द्धनौ ६ आर्जुनिःशरवर्षेणछादयामासभारत दुर्जयोथविकर्णश्चकार्ष्णिंपंचभिरायसैः ७ विव्याधतेननाकंपत्कार्ष्णिर्मेरुरिवस्थितः दुःशासनस्रुसमरेकेकेयान्पंचमारिष ८ योधयामासराजेंद्रतदद्भुतमिवाभवत् द्रौपदेयारणेक्रु
द्धादुर्योधनमवारयन् ९ एकैकस्त्रिभिरानर्च्छत्पुत्रंतवविशांपते पुत्रोपितवदुर्द्धर्षान्द्रौपद्यास्तनयान्रणे १० ६ ६

इतिश्रीमन्महाभा० भीमयुद्धेअष्टसप्ततितमोऽध्यायः ७८ १ २ ३ ४ ५ ६ ७ ८ ९ १०

११ १२ १३ १४ १५ १६ १७ १८ १९ इतिश्रीमन्महाभा॰ एकोनाशीतितमोऽध्यायः ७९



सायकैर्निशितैराजन्नाजघानपृथक्पृथक् तैश्चापिविद्धःशुशुभेरुधिरेणसमुक्षितः ११ गिरिःप्रस्रवणैर्यद्वद्गिरिधातुविमिश्रितैः
भीष्मोपिसमरेराजन्पांडवानांवरूथिनीं १२ कालयामासबलवान्पालःपशुगणानिव ततोगांडीवनिर्घोषःप्रादुरासीद्दिशांपते
१३ दक्षिणेनवरूथिन्याःपार्थस्यारीन्विनिघ्नतः उत्तस्थुःसमरेतत्रकबंधानिसहस्रशः १४ कुरूणांचापिसैन्येषुपांडवानांचभा-
रत शोणितोदंशरावर्तंगजद्वीपंहयोर्मिणं १५ रथनौभिर्नरव्याघ्राःप्रतेरुःसैन्यसागरं छिन्नहस्ताविकवचाविदेहाश्चनरोत्त
माः १६ पतितास्तत्रदृश्यंतेशतशोथसहस्रशः निहतैर्मत्तमातंगैःशोणितौघपरिप्लुतैः १७ भूर्भातिभरतश्रेष्ठपर्वतैराचितायथा
तत्राद्भुतमपश्यामतवतेषांचभारत १८ नतत्रासीत्पुमान्कश्चिद्योयोद्धुंनाभिकांक्षते एवंयुयुधिरेवीराःप्रार्थयानामहद्यशः
तावकाःपांडवैःसार्द्धंकांक्षमाणाजयंयुधि १९ इतिश्रीमन्महाभा॰भी॰संकुलयुद्धेएकोनाशीतितमोऽध्यायः ७९
संजयउवाच ततोदुर्योधनोराजालोहितायतिभास्करे संग्राममरभसोभीमंहंतुकामोभ्यधावत १ तमायांतमभिप्रेक्ष्यनृवीरं
दृढवैरिणं भीमसेनःसुसंक्रुद्धइदंवचनमब्रवीत् २ अयंसकालःसंप्राप्तोवर्षपूगाभिकांक्षितः अद्यत्वांनिहनिष्यामियदिनोत्सृ
जसेरणं ३ अद्यकुंत्याःपरिक्लेशंवनवासंचकृत्स्नशः द्रौपद्याश्चपरिक्लेशंप्रणोत्स्यामिहतेत्वयि ४ यत्पुरामत्सरोभूत्वापांडवानव
मन्यसे तस्यपापस्यगांधारेपश्यव्यसनमागतं ५ कर्णस्यमतमास्थायसौबलस्यचयत्पुरा अचिंत्यपांडवान्कामाद्यथेष्टंकृतवान-
सि ६ याचमानंचयन्मोहाद्दाशार्हमवमन्यसे उलूकस्यसमादेशंयद्ददासिचहृष्टवत् ७ तेनत्वांनिहनिष्यामिसहितंसर्वबांधवैः
शमीकरिष्येतत्पापंयत्पुराकृतवानसि ८ एवमुक्त्वाधनुर्घोरंविकृष्योद्भ्राम्यचासकृत् समादायशरान्घोरान्महाशनिसमप्रभा-
न् ९ षड्विंशत्तरसाक्रुद्धोमुमोचाशुसुयोधने ज्वलिताग्निशिखाकारान्वज्रकल्पानजिह्मगान् १० ततोस्यकार्मुकंद्वाभ्यांसू-
तंद्वाभ्यांचविव्यधे चतुर्भिर्जवनानश्वाननयद्यमसादनं ११ द्वाभ्यांचसुविकृष्टाभ्यांशराभ्यामरिमर्दनः चिच्छेदसमरेछत्रंरा-
ज्ञस्तस्यरथोत्तमात् १२ त्रिभिश्चतस्यचिच्छेदज्वलंतंध्वजमुत्तमं छित्वातंचननादोच्चैस्तवपुत्रस्यपश्यतः १३ रथाच्चसध्वजः
श्रीमान्नानारत्नविभूषितः पपातसहसाभूमौविद्युज्जलधरादिव १४ ज्वलंतंसूर्यसंकाशंनागंमणिमयंशुभं ध्वजंकुरुपतेश्छि
न्नंददृशुःसर्वपार्थिवाः १५ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५

अथैनंदशभिर्बाणैस्तोत्रैरिवमहागजं आजघानरणेभीमः स्मयन्निवमहारथः १६ ततस्तुराजासिंधूनांरथश्रेष्ठोमहाबलः दुर्यो
धनस्यजग्राहपार्ष्णिंसत्पुरुषैःसह १७ कृपश्चरथिनांश्रेष्ठःकौरव्यमभितौजसं आरोपयद्रथंराजन्दुर्योधनममर्षणं १८ सगा
ढविद्धोव्यथितोभीमसेनेनसंयुगे निषसादरथोपस्थेराजादुर्योधनस्तदा १९ परिवार्यरणेभीमंहंतुकामोजयद्रथः रथैरनेक
साहस्रैर्भीमस्यावारयद्दिशः २० धृष्टकेतुस्ततोराजन्नभिमन्युश्चवीर्यवान् केकेयाद्द्रौपदेयाश्चतवपुत्रानयोधयन् २१ चित्र
सेनःसुचित्रश्चचित्रांगश्चित्रदर्शनः सुचारुश्चारुचित्रश्चतथानंदोपनंदकौ २२ अष्टावेतेमहेष्वासाःसुकुमारायशस्विनः अ-
भिमन्युरथंराजन्समंतात्पर्यवारयन् २३ आजघानततस्तूर्णमभिमन्युर्महामनाः एकैकंपंचभिर्विद्ध्वाशरैःसन्नतपर्वभिः २४
वज्रमृत्युप्रतीकाशैर्विचित्रायुधनिःसृतैः अमृष्यमाणास्तेसर्वेसौभद्रंरथसत्तमं २५ ववर्षुर्मार्गणैस्तीक्ष्णैर्गिरिंमेरुमिवांबुदाः
सपीड्यमानःसमरेकृतास्त्रोयुद्धदुर्मदः २६ अभिमन्युर्महाराजतावकान्समकंपयत् यथादेवासुरेयुद्धेवज्रपाणिर्महासुरान्
२७ विकर्णायततोभल्लान्प्रेषयामासभारत चतुर्दशरथश्रेष्ठोघोरानाशीविषोपमान् २८ सतैर्विकर्णस्यरथात्पातयामासवी
र्यवान् ध्वजंसूतंहयांश्चापंनृत्यमानइवाहवे २९ ततश्चान्यांश्छरान्पीतानकुंठाग्रानजिह्मगान् प्रेषयामाससौभद्रोविकर्णा
यमहाबलः ३० तेविकर्णंसमासाद्यकंकबर्हणवाससः भित्वादेहंगताभूमिंश्वसंतइवपन्नगाः ३१ तेशराहेमपुंखाग्राव्यदृश्यं
तमहीतले विकर्णरुधिरक्लिन्नावमंतइवशोणितं ३२ विकर्णंवीक्ष्यनिर्भिन्नंतस्यैवान्येसहोदराः अभ्यद्रवंतसमरेसौभद्रप्रमु
खान्रथान् ३३ अभियायतथैवाशुरथांस्तान्सूर्यवर्चसः अविध्यन्समरेन्योन्यंसंरब्धायुद्धदुर्मदाः ३४ दुर्मुखःश्रुतकर्माणंवि
ध्वासप्तभिराशुगैः ध्वजमेकेनचिच्छेदसारथिंचास्यसप्तभिः ३५ अश्वान्जांबूनदैर्जालैःप्रच्छन्नान्वातरंहसः जघानषड्भि-
रासाद्यसारथिंचाभ्यपातयत् ३६ सहताश्वेरथेतिष्ठंश्छ्रुतकर्मामहाबलः शक्तिंचिक्षेपसंक्रुद्धोमहोल्कांज्वलितामिव ३७ सादु
र्मुखस्यविपुलंवर्मभित्वायशस्विनः विदार्यप्राविशद्भूमिंदीप्यमानास्वतेजसा ३८ तंदृष्ट्वाविरथंतत्रसुतसोमोमहाबलः पश्य-
तांसर्वसैन्यानांरथमारोपयत्स्वकम् ३९ श्रुतकीर्तिर्महावीरोजयसेनंसुतंतव अभ्ययात्समरेराजन्हंतुकामोयशस्विनं ४०

तस्यविक्षिपतश्चापंश्रुतकीर्तेर्महात्मनः चिच्छेदसमरेराजन्जयसेनःक्षुरेणह ४१ क्षुरप्रेणसुतीक्ष्णेनप्रहसन्निवभारत तंदृ
ष्ट्वाच्छिन्नधन्वानंशतानीकःसहोदरं ४२ अभ्यपद्यततेजस्वीसिंहवद्विनदन्मुहुः शतानीकस्तुसमरेदृढंविस्फार्यकार्मुकं ४३ वि
व्याधदशभिस्तूर्णंजयसेनंशिलीमुखैः ननादसुमहानादंप्रभिन्नइववारणः ४४ अथान्येनसुतीक्ष्णेनसर्वावरणभेदिना ज-
यसेनंशतानीकोविव्याधसमरेभृशं ४५ तथातस्मिन्वर्तमानेदुष्कर्णोभ्रातुरंतिके चिच्छेदसशरंचापंनाकुलेःक्रोधमूर्छितः ४६
अथान्यद्धनुरादायभारसाधनमुत्तमं समादत्तशरान्घोरांश्छतानीकोमहाबलः ४७ तिष्ठतिष्ठेतिचामंत्र्यदुष्कर्णंभ्रातुरग्रतः मु
मोचास्मैशितान्बाणान्ज्वलितान्पन्नगानिव ४८ ततोस्यधनुरेकेनद्वाभ्यांसूतंचमारिष चिच्छेदसमरेतूर्णंतंचविव्याधसप्त-
भिः ४९ अश्वान्मनोजवांस्तस्यकल्माषान्वीतकल्मषः जघाननिशितैस्तूर्णंसर्वान्द्वादशभिःशरैः ५० अथापरेणभल्लेनसुयुक्ते
नारिघातिना दुष्कर्णंसमरेराजन्क्रुद्धोविव्याधपत्रिणा ५१ सपपातहतोभूमौवज्ररुग्ण इवद्रुमः दुष्कर्णंनिहतंदृष्ट्वापंचराज
न्महारथाः ५२ जिघांसंतःशतानीकंसमंतात्पर्यवारयन् छाद्यमानंशरव्रातैःशतानीकंयशस्विनं ५३ अभ्यधावंतसंक्रुद्धाःकै
केयाःपंचसोदराः तानभ्यापततःप्रेक्ष्यतवपुत्रामहारथान् ५४ प्रत्युद्ययुर्महाराजगजाइवमहागजान् दुर्मुखोदुर्जयश्चैवत
थादुर्धर्षणोयुवा ५५ शत्रुंजयःशत्रुसहःसर्वेक्रुद्धायशस्विनः प्रत्युद्यातामहाराजकैकेयान्भ्रातरःसमं ५६ रथैर्नगरसंका
शैर्हयैर्युक्तैर्मनोजवैः नानावर्णविचित्राभिःपताकाभिरलंकृतैः ५७ वरचापधरावीराविचित्रकवचध्वजाः विविशुस्तेपरसै-
न्यंसिंहाइववनाद्वनं ५८ तेषांसुतुमुलंयुद्धंव्यतिषक्तरथद्विपं अवर्ततमहारौद्रंनिघ्नतामितरेतरं ५९ अन्योन्यागस्कृतांरा
जन्यमराष्ट्रविवर्धनं मुहूर्तास्तमितेसूर्येचक्रुर्युद्धंसुदारुणं ६० रथिनःसादिनश्चैवव्यकीर्यंतसहस्रशः ततःशांतनवःक्रुद्धःशरैः
सन्नतपर्वभिः ६१ नाशयामासतांसेनांभीष्मस्तेषांमहात्मनां पांचालानांचसैन्यानिशरैर्निन्येयमक्षयं ६२ एवंभित्वामहेष्वासः
पांडवानामनीकिनीं कृत्वावहारंसैन्यानांययौस्वशिबिरंप्रति ६३ धर्मराजोपिसंप्रेक्ष्यधृष्टद्युम्नवृकोदरौ मूर्ध्निचैनावुपाघ्रायसं-
हृष्टःशिबिरंययौ ६४ इतिश्रीमन्महाभारतेभीष्मप॰ षष्ठमदिवसयुद्धसमाप्तिर्नामअशीतितमोऽध्यायः ८० ५

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५

संजयउवाच अथशूरामहाराजपरस्परकृतागसः जग्मुःस्वशिबिराण्येवरुधिरेणासमुक्षिताः १ विश्रम्यचयथान्यायंपू-
जयित्वापरस्परं सन्नद्धाःसमदृश्यन्तभूयोयुद्धचिकीर्षया २ ततस्तवसुतोराजंश्चिंतयाभिपरिप्लुतः प्रस्रवच्छोणिताक्तांगंप-
प्रच्छेदंपितामहं ३ सैन्यानिघोराणिभयानकानिव्यूढानिसम्यग्बहुलध्वजानि विदार्यहत्वाचनिपीड्यशूरास्तेपांडवानांत्वरि
तामहारथाः ४ संमोह्यसर्वान्युधिकीर्तिमंतोव्यूहंत्वतन्मकरंवज्रकल्पं प्रविश्यभीमेननिबर्हितोस्मिघोरैःशरैर्मृत्युदंडप्रकाशैः
५ क्रुद्धंसमुद्वीक्ष्यभयेनराजन्संमूर्च्छितोनलभेशांतिमद्य इच्छेप्रसादात्तवसत्यसंधप्राप्तुंजयंपांडवेयांश्चहंतुं ६ तेनैवमुक्तः
प्रहसन्महात्मादुर्योधनंजातमन्युंविदित्वा तंप्रत्युवाचाविमनामनस्वीगंगासुतःशस्त्रभृतांवरिष्ठः ७ परेणयत्नेनविगाह्यसेनां
सर्वात्मनाहंतवराजपुत्र इच्छामिदातुंविजयंसुखंचनचात्मानंछादयेहंत्वदर्थे ८ एतेतुरौद्राबहवोमहारथायशस्विनःशूरत
माःकृतास्त्राः येपांडवानांसमरेसहायाजितक्लमाःक्रोधविषंवमंतः ९ तेनेहशक्याःसहसाविजेतुंवीर्योन्नताःकृतवैरास्त्वया-
च अहंह्येतान्प्रतियोत्स्यामिराजन्सर्वात्मनाजीवितंत्यज्यवीर १० रणेतवार्थायमहानुभावनजीवितंरक्षितव्यंमयाद्य सर्वां-
स्तवार्थायसदेवदैत्यांल्लोकान्दहेयंकिमुशत्रूंस्तवेह ११ तान्पांडवान्योधयिष्यामिराजन्प्रियंचतेसर्वमहंकरिष्ये श्रुत्वैवमेनंतत्स
रमप्रतीतोदुर्योधनःशांतमनाबभूव १२ सर्वाणिसैन्यानिततःप्रहृष्टोनिर्गच्छतेत्याहनृपांश्चसर्वान् तदाज्ञयातातविनिर्ययुर्द्रुतं
रथाश्वपादातगजायुतानि १३ प्रहर्षयुक्तानितुतानिराजन्महांतिनानायुधशस्त्रवंति स्थितानिनागाश्वपदातिमंतिविरेजुराजौ
तवराजन्बलानि १४ वृंदैःस्थिताश्चापिसुसंप्रयुक्ताश्चकाशिरेदंतिगणाःसमंतात् शस्त्रास्त्रविद्भिर्नरदेवयोधैरनुष्ठिताःसैन्यग-
णास्त्वदीयाः १५ रथैश्चपादातगजाश्वसंघैःप्रयाद्भिराजौविधिवत्प्रणुन्नैः समुद्धतंतैस्तरुणार्कवर्णंरजोबभौ छादयत्सूर्यरश्मी
न् १६ रेजुःपदातारथदंतिसंस्थावातेरिताभ्राम्यमाणाःसमंतात् नानारंगाःसमरेतत्रराजन्मेघैर्युक्ताविद्युतःखेयथैव १७ धनूं-
षिविस्फारयतांनृपाणांबभूवशब्दस्तुमुलोतिघोरः निर्मथ्यतोदेवमहासुरौघैर्यथार्णवस्यादियुगेतदानीं १८ तदुग्रनादंबहुव-
र्णरूपंतवात्मजानांसमुदीर्णवर्णं बभूवसैन्यंरिपुसैन्यहंतृयुगांतमेघौघनिभंतदानीं १९ इतिश्रीम० भी० भीष्मदुर्योधनसंवा
देएकाशीतितमोऽध्यायः ८१ १६ १७ १८ १९

संजयउवाच अथात्मजंतवपुनर्गांगेयोध्यानमास्थितं अब्रवीद्भरतश्रेष्ठसंप्रहर्षकरंवचः १ अहंद्रोणश्चशल्यश्चकृतवर्माच-
सात्वतः अश्वत्थामाविकर्णश्चसोमदत्तोथसैंधवः २ विंदानुविंदावावंत्यौबाल्हिकःसहबाल्हिकैः त्रिगर्तराजोऽथबलीमागधश्च
कृदुर्जयः ३ बृहद्बलश्चकौशल्यश्चित्रसेनोविविंशतिः रथाश्चबहुसाहस्राःशोभमानामहाध्वजाः ४ देशजाश्चहयाराजन्सारू-
ढाहयसादिभिः गजेंद्राश्चमदोन्नद्धाःप्रभिन्नकरटामुखाः ५ पादाताश्चरथाःशूरानानाप्रहरणायुधाः नानादेशसमुत्पन्नास्त्व
दर्थेयोद्धुमुद्यताः ६ एतेचान्येचबहवस्त्वदर्थेत्यक्तजीविताः देवानपिरणेजेतुंसमर्थाइतिमेमतिः ७ अवश्यंतुमयाराजंस्तव
वाच्यंहितंसदा अशक्याःपांडवाजेतुंदेवैरपिसवासवैः ८ वासुदेवसहायाश्चमहेंद्रसमविक्रमाः सर्वथाऽहंतुराजेंद्रकरिष्ये
वचनंतव ९ पांडवान्वारणेजेष्येमांवाजेष्यंतिपांडवाः एवमुक्त्वाददौचास्मैविशल्यकरणींशुभां १० ओषधीवीर्यसंपन्नांविश
ल्यश्चाभवत्तदा ततःप्रभातेविमलेस्वेनसैन्येनवीर्यवान् ११ अव्यूहतस्वयंव्यूहंभीष्मोव्यूहविशारदः मंडलंमनुजश्रेष्ठोनानाश
स्त्रसमाकुलं १२ संपूर्णयोधमुख्यैश्चतथादंतिपदातिभिः रथैरनेकसाहस्रैःसमंतात्परिवारितं १३ अश्ववृंदैर्महद्भिश्चऋष्टितो
मरधारिभिः नागेनागेरथाःसप्तसप्तचाश्वारथेरथे १४ अन्वश्वंदशधानुष्काधानुष्केसप्तचारिणः एवंव्यूढंमहाराजतवसै-
न्यंमहारथैः १५ स्थितंरणायमहतेभीष्मेणयुधिपालितं दशाश्वानांसहस्राणिदंतिनांचतथैवच १६ रथानामयुतंचापिपु
त्राश्चतवदंशिताः चित्रसेनादयःशूराअभ्यरक्षन्पितामहं १७ रक्ष्यमाणश्चतैःशूरैर्गोप्यमानाश्चतेनते सन्नद्धाःसमदृश्यं
तराजानश्चमहाबलाः १८ दुर्योधनस्तुसमरेदंशितोरथमास्थितः व्यभ्राजतश्रियाजुष्टोयथाशक्रस्त्रिविष्टपे १९ ततःश-
ब्दोमहानासीत्पुत्राणांतवभारत रथघोषश्चविपुलोवादित्राणांचनिस्वनः २० भीष्मेणधार्तराष्ट्राणांव्यूढःप्रत्यङ्मुखोयुधि
मंडलःसमहाव्यूहोदुर्भेद्योमित्रघातिनां २१ सर्वतःशुशुभेराजन्रणेरीणांदुरासदः मंडलंतुसमालोक्यव्यूहंपरमदारुणं
२२ स्वयंयुधिष्ठिरोराजाव्यूहंवज्रमथाकरोत् तथाव्यूढेष्वनीकेषुयथास्थानमवस्थिताः २३ रथिनःसादिनश्चैवसिंहनादमथा
नदन् बिभित्सवस्ततोव्यूहंनिर्ययुर्युद्धकांक्षिणः २४ इतरेतरयोःशूराःसहसैन्याःप्रहारिणः भारद्वाजोययौमत्स्यंद्रौणिश्चापिशि-
खंडिनं २५

स्वयंदुर्योधनोराजापार्षतंसमुपाद्रवत् नकुलःसहदेवश्चराजन्मद्रेशमीयतुः २६ विंदानुविंदावावंत्योसुधामन्युमभिद्रुतौ सर्वे
नृपास्तसमरेधनंजयमयोधयन् २७ भीमसेनंरणेयत्तोहार्दिक्यःसमवारयत् चित्रसेनंविकर्णंचतथादुर्मर्षणंविभुः २८ आ
र्जुनिःसमरेराजं स्तवपुत्रानयोधयत् प्राग्ज्योतिषंतुराजानंहैडिंबोराक्षसोत्तमः २९ अभिदुद्राववेगेनमत्तोमत्तमिवद्विपं अ
लंबुषस्तदाराजन्सात्यकिंयुद्धदुर्मदं ३० ससैन्यंसमरेक्रुद्धोराक्षसःसमभिद्रवत् भूरिश्रवारणेयत्तोधृष्टकेतुमयोधयत्
३१ श्रुतायुषंतुराजानंधर्मपुत्रोयुधिष्ठिरः चेकितानश्चसमरेकृपमेवान्वयोधयत् ३२ शेषाःप्रतियत्तुर्यत्ताभीमसेनंमहा
रथं ततोराजसहस्राणिपरिवव्रुर्धनंजयं ३३ शक्तितोमरनाराचगदापरिघपाणयः अर्जुनस्तभृशंक्रुद्धोवार्ष्णेयमिदमब्र-
वीत् ३४ पश्यमाधवसैन्यानिधार्तराष्ट्रस्यसंयुगे व्यूढानिव्यूहविदुषागांगेयेनमहात्मना ३५ युद्धाभिकामांश्छूरांश्चपश्य-
माधवदंशितान् त्रिगर्तराजंसहितंभ्रातृभिःपश्यकेशव ३६ अद्यैतान्घातयिष्यामिपश्यतस्तेजनार्दन यइमेमांयदुश्रेष्ठ-
योद्धुकामारणाजिरे ३७ एतावदुक्त्वाकौंतेयोधनुर्ज्यामवमृज्यच ववर्षशरवर्षाणिनराधिपगणान्प्रति ३८ तेपितंपरमेष्वा-
साःशरवर्षैरपूरयन् तडागंवारिधाराभिर्यथाप्रावृषितोयदाः ३९ हाहाकारोमहानासीत्तवसैन्येविशांपते छाद्यमानौभृशं
कृष्णौशरैर्दृष्ट्वामहारणे ४० देवादेवर्षयश्चैवगंधर्वाश्चमहोरगाः विस्मयंपरमंजग्मुर्दृष्ट्वाकृष्णौतथाचितौ ४१ ततःक्रुद्धो
र्जुनोराजन्नैंद्रमस्त्रमुदैरयत् तत्राद्भुतमपश्यामविजयस्यपराक्रमं ४२ शस्त्रवृष्टिंपरैर्मुक्तांशरौघैर्यदवारयत् नचतत्रास्त्वैर
निर्भिन्नःकश्चिदासीद्विशांपते ४३ एषांराजसहस्राणांहयानांदंतिनांतथा द्वाभ्यांशरैस्त्रिभिश्चान्यान्पार्थोविव्याधमा-
रिष ४४ तेहन्यमानाःपार्थेनभीष्मंशांतनवंययुः अगाधेमज्जमानानांभीष्मस्त्राताभवत् ४५ आपतद्भिश्चतैस्तत्रप्र
भग्नंतावकंबलं संचुक्षुभेमहाराजवातैरिवमहार्णवः ४६ इतिश्रीमन्महाभा०भी० सप्तमदिवसयुद्धारंभेद्व्यशीतितमोऽ
ध्यायः ८२ संजयउवाच तथाप्रवृत्तेसंग्रामेनिवृत्तेचसुशर्मणि प्रभग्नेषुचवीरेषुपांडवेनमहात्मना १ क्षुभ्यमाणे-
बलेतूर्णंसागरप्रतिमेतव प्रत्युद्यातेचगांगेयेत्वरितंविजयंप्रति २ दृष्ट्वादुर्योधनोराजन्रणेपार्थस्यविक्रमं त्वरमाणःसम-
भ्येत्यसर्वांस्तानब्रवीन्नृपान् ३

तेषांचप्रमुखेशूरंरुक्मशर्माणंमहाबलं मध्येसर्वस्यसैन्यस्यभृशंसंहर्षयन्वचः ४ एषभीष्मःशांतनवोयोद्धुकामोधनंजयं सर्वा
त्मनाकुरुश्रेष्ठस्त्यक्त्वाजीवितमात्मनः ५ तंप्रयांतंपरान्वीरान्सर्वसैन्येनभारत संयत्ताःसमरेसर्वेपालयध्वंपितामहं ६ बा
ढमित्येवसुक्त्वातुतान्यनीकानिसर्वशः नरेंद्राणांमहाराजअनुजग्मुःपितामहं ७ ततःप्रयातःसहसाभीष्मःशांतनवोर्जुनं
रणेभारतमायांतमाससादमहाबलं ८ महाश्वेताश्वयुक्तेनभीमवानरकेतुना महतामेघनादेनरथेनातिविराजता ९ सम
रेसर्वसैन्यानामुपयातंधनंजयं अभवत्तुमुलोनादोभयाद्दृष्ट्वाकिरीटिनं १० अभीषुहस्तंकृष्णंचदृष्ट्वादित्यमिवापरं म-
ध्यंदिनगतेसूर्येनशेकुरभिवीक्षितुं ११ तथाशांतनवंभीष्मंश्वेताश्वंश्वेतकार्मुकं नशेकुःपांडवाद्द्रष्टुंश्वेतंग्रहमिवोदितं
१२ ससर्वतःपरिवृतस्त्रिगर्तैःसुमहात्मभिः भ्रातृभिस्तवपुत्रैश्चतथान्यैश्चमहारथैः १३ भारद्वाजस्तुसमरेमत्स्यंविव्या
धपत्रिणा ध्वजंचास्यशरेणाजौधनुश्चैकेनचिच्छिदे १४ तदपास्यधनुश्छिन्नंविराटोवाहिनीपतिः अन्यदादत्तवेगेनध-
नुर्भारसहंदृढम् १५ शरांश्चाशीविषाकारान्ज्वलितान्पन्नगानिव द्रोणंत्रिभिःप्रविव्याधचतुर्भिश्चास्यवाजिनः १६
ध्वजमेकेनविव्याधसारथिंचास्यपंचभिः धनुश्चैकेषुणाविध्यत्तत्राक्रुध्यद्द्विजर्षभः १७ तस्यद्रोणोवधीदश्वांश्छरैःस
न्नतपर्वभिः अष्टाभिर्भरतश्रेष्ठसूतमेकेनपत्रिणा १८ सहताश्वादवप्लुत्यस्यंदनाद्धतसारथिः आरुरोहरथंतूर्णंपुत्रस्यरथि
नांवरः १९ ततस्तौतुपितापुत्रौभारद्वाजंरथेस्थितौ महताशरवर्षेणवारयामासतुर्बलात् २० भारद्वाजस्ततःक्रुद्धःशरमा-
शीविषोपमं चिक्षेपससमरेतूर्णंशंखंप्रतिजनेश्वर २१ सतस्यहृदयंभित्वापीत्वाशोणितमाहवे जगामधरणींबाणोलोहितार्द्रकृ
तच्छविः २२ सपपातरणेतूर्णंभारद्वाजशराहतः हित्वाधनुःशरांश्चैवपितुरेवसमीपतः २३ हतंस्वमात्मजंदृष्ट्वाविराटःप्रा-
द्रवद्भयात् उत्सृज्यसमरेद्रोणंव्यात्ताननमिवांतकं २४ भारद्वाजस्ततस्तूर्णंपांडवानांमहाचमूं वारयामाससमरेशतशो
थसहस्रशः २५ शिखंड्यपिमहाराजद्रौणिमासाद्यसंयुगे आजघानभ्रुवोर्मध्येनाराचैस्त्रिभिराशुगैः २६ सबभौन
रशार्दूलोललाटेसंस्थितैस्त्रिभिः शिखरैःकांचनमयैर्मेरुस्त्रिभिरिवोच्छ्रितैः २७ अश्वत्थामाततःक्रुद्धोनिमेषार्द्धाच्छिखं-
डिनः सूतंरथमथोराजंस्तुरगानायुधंध्वजं २८

२९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१

शरैर्बहुभिराच्छिद्यपातयामाससंयुगे सहताश्वादवप्लुत्यरथाद्द्रैरथिनांवरः २९ खड्गमादायनिशितंविमलंचशरावरं श्येनव
द्विचरन्क्रुद्धः शिखंडीशत्रुतापनः ३० सखड्गस्यमहाराजचरतस्तस्यसंयुगे नांतरंददृशेद्रौणिस्तदद्भुतमिवाभवत् ३१ त-
तःशरसहस्राणिबहूनिभरतर्षभ प्रेषयामाससमरेद्रौणिःपरमकोपनः ३२ तामापतंतींसमरेशरवृष्टिंसुदारुणां असि
नातीक्ष्णधारेणच्चिच्छेदबलिनांवरः ३३ ततोस्यविमलंद्रौणिःशतचंद्रंमनोरमं चर्माच्छिनदसिंचास्यखंडयामाससंयुगे
३४ शरैश्चबहुशोराजंस्तंचविव्याधपत्रिभिः शिखंडीतुततःखड्गंखंडितंतेनसायकैः ३५ आविध्यव्यसृजत्तूर्णंज्वलंतमि
वपन्नगं तमापतंतंसहसावज्राशनिसमस्वनं ३६ चिच्छेदसमरेद्रौणिर्दर्शयन्पाणिलाघवं शिखंडिनंचविव्याधशरैर्बहु
भिरायसैः ३७ शिखंडीतुभृशंराजंस्ताड्यमानःशितैःशरैः आरुरोहंरथंतूर्णंमाधवस्यमहात्मनः ३८ सात्यकिश्चापिसं
क्रुद्धोराक्षसंतंमहाहवे अलंबुषंशरैर्घोरैर्विव्याधबलिनंबली ३९ राक्षसेंद्रस्ततस्तस्यधनुश्चिच्छेदभारत अर्धचंद्रेणस
मरेतंचविव्याधसायकैः ४० मायांचराक्षसींकृत्वाशरवर्षैरवाकिरत् तत्राद्भुतमपश्यामशैनेयस्यपराक्रमं ४१ नासंभ्रम
द्यत्समरेवध्यमानःशितैःशरैः ऐंद्रमस्त्रंचवार्ष्णेयोयोजयामासभारत ४२ विजयाद्यदनुप्राप्तंमाधवेनमहात्मना तदस्त्रं
भस्मसात्कृत्वामायांतांराक्षसींतदा ४३ अलंबुषंशरैर्घोरैरभ्याकिरतसर्वशः पर्वतंवारिधाराभिःप्रावृषीवबलाहकः ४४
तंतथापीडितंतेनमाधवेनयशस्विना प्रदुद्रावभयाद्रक्षोहित्वासात्यकिमाहवे ४५ तमजेयंराक्षसेंद्रंसंख्येमघवताअपि शैनेयः
प्राणदन्जित्वायोधानांतवपश्यतां ४६ अवधीत्तावकांश्चापिसात्यकिःसत्यविक्रमः निशितैर्बहुभिर्बाणैस्तेद्रवंतभयार्दिताः
४७ एतस्मिन्नेवकालेतुद्रुपदस्यात्मजोबली धृष्टद्युम्नोमहाराजतवपुत्रंजनेश्वरं ४८ छादयामाससमरेशरैःसन्नतपर्वभिः
सं छाद्यमानोविशिखैर्धृष्टद्युम्नेनमारिष ४९ विव्यथेनचराजेंद्रतवपुत्रोजनेश्वरः धृष्टद्युम्नंचसमरेतूर्णंविव्याधपत्रिभिः
५० षष्ट्याचविंशताचैवतदद्भुतमिवाभवत् तस्यसेनापतिःक्रुद्धोधनुश्चिच्छेदमारिष ५१ हयांश्चचतुरःशीघ्रंनिजघानमहाब-
लः शरैश्चैनंसुनिशितैःक्षिप्रंविव्याधसप्तभिः ५२ सहताश्वान्महाबाहुरवप्लुत्यरथाद्बली पदातिरसिमुद्यम्यप्राधावत्पार्षतंप्रति
५३

४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४

शकुनिस्तुसमभ्येत्यराजगृद्धीमहाबलः राजानंसर्वलोकस्यरथमारोपयत्स्वकं ५४ ततोनृपंपराजित्यपार्षतःपरवीरहा निज
घ्नेतावकंसैन्यंवज्रपाणिरिवासुरान् ५५ कृतवर्मारणेभीमंशरैरार्च्छन्महारथं प्रच्छादयामासचतंमहामेघोरविंयथा ५६ त-
तःप्रहस्यसमरेभीमसेनःपरंतपः प्रेषयामाससंक्रुद्धःसायकान्कृतवर्मणे ५७ तैर्हन्यमानोतिरथःसात्वतःशस्त्रकोविदः
नाकंपतमहाराजभीमंमार्च्छच्छितैःशरैः ५८ तस्याश्वांश्चतुरोहत्वाभीमसेनोमहाबलः सारथिंपातयामासध्वजंचसुप-
रिष्कृतं ५९ शरैर्बहुविधैश्चैनमाचिनोत्परवीरहा शकलीकृतसर्वांगश्चाविद्धःसमदृश्यत ६० हताश्वाच्चरथात्तूर्णंवृषकस्यर-
थंययौ श्यालस्यतेमहाराजतवपुत्रस्यपश्यतः ६१ भीमसेनोपिसंक्रुद्धस्तवसैन्यंसमाद्रवत् निजघानचसंक्रुद्धोदंडपाणि
रिवांतकः ६२ इतिश्रीमन्महाभा॰ भी॰ द्वैरथयुद्धेत्र्यशीतितमोऽध्यायः ८३ धृतराष्ट्रउवाच सुबहूनिविचित्राणि
द्वैरथानिचसंजय पांडूनांमामकैःसार्द्धमश्रौषंतवजल्पतः १ नचैवमामकंकंचिद्धृष्टंशंससिसंजय नित्यंपांडुसुतान्हृष्टा
नभग्नांश्चैवशंससि २ जीयमानान्विमनसोमामकान्विगतौजसः वदसेसंयुगेसूतदिष्टमेवनसंशयः ३ संजयउवाच यथा
शक्तियथोत्साहंयुद्धेचेष्टंतितावकाः दर्शयंतःपरंशक्त्यापौरुषंपुरुषर्षभाः ४ गंगायाःसुरनद्यावैस्वादुभूतंयथोदकं महोद-
धियुगाभ्यासाल्लवणत्वंनियच्छति ५ तथातत्पौरुषंराजंस्तावकानांमहात्मनां प्राप्यपांडुसुतान्वीरान्व्यर्थीभवतिसंयुगे ६
घटमानान्यथाशक्तिकुर्वाणान्कर्मदुष्करं नदोषेणाकुरुश्रेष्ठस्वान्योधान्गंतुमर्हसि ७ तवापराधात्सुमहान्सपुत्रस्यविशांपते
पृथिव्याःप्रक्षयोघोरोयमराष्ट्रविवर्द्धनः ८ आत्मदोषात्समुत्पन्नंशोचितुंनार्हसेनृप नहिरक्षंतिराजानःसर्वथात्रापिजी
वितं ९ युद्धेनसुकृतांल्लोकानिच्छंतिवसुधाधिपाः चमूंविगाह्ययुध्यंतिनित्यंस्वर्गपरायणाः १० पूर्वाह्णेतुमहाराजप्रा-
वर्ततजनक्षयः तन्ममेकमनाभूत्वाशृणुदेवासुरोपमं ११ आवंत्यौतुमहेष्वासौमहात्मानौमहाकृती इरावंतमभिप्रेक्ष्य
समेयातांरणोत्कटौ १२ तेषांप्रवद्वृतेयुद्धंतुमुलंलोमहर्षणम् इरावांस्तुसुसंक्रुद्धोभ्रातरौदेवरूपिणौ १३ विव्या
धनिशितैस्तूर्णंशरैःसन्नतपर्वभिः तावेनंप्रत्यविद्ध्येतांसमरेचित्रयोधिनौ १४ छ छ छ

युध्यतांहितनोराजन्विशेषोनस्मदृश्यते यतनांशत्रुनाशायकृतप्रतिकृतैषिणां १५ इरावांस्तुरणेराजन्ननुविंदस्यसायकैः च
तुर्भिश्चतुरोवाहाननयद्यमसादनं १६ भल्लाभ्यांचसुतीक्ष्णाभ्यांधनुःकेतुंचमारिष चिच्छेदसमरेराजंस्तदद्भुतमिवाभवत् १७
त्यक्त्वानुविंदोथरथंविंदस्यरथमास्थितः धनुर्गृहीत्वासुदृढंभारसाहमनुत्तमम् १८ तावेकस्थौरणेवीरावावंत्यौबलिनांवरौ
शरान्मुमुचतुस्तूर्णमिरावतिमहात्मनि १९ ताभ्यांमुक्तामहावेगाःशराःकनकभूषणाः दिवाकररथंप्राप्यच्छादयामासुरंब
रं २० इरावांस्तुरणेक्रुद्धोभ्रातरौतौमहारथौ ववर्षशरवर्षेणसारथिंचाभ्यपातयत् २१ तस्मिन्निपतितेराजन्गतसत्वेथसार
थौ रथःप्रदुद्रावदिशःसमुद्भ्रांतहयस्ततः २२ तौसजित्वामहाराजनागराजसुतासुतः पौरुषंख्यापयंस्तूर्णंव्यधमत्तववाहि
नीं २३ सावध्यमानासमरेधार्तराष्ट्रीमहाचमूः वेगान्बहुविधांश्चक्रेविषंपीत्वेवमानवः २४ हैडिंबोराक्षसेंद्रस्तुभगदत्तंसमा-
द्रवत् रथेनादित्यवर्णेनसध्वजेनमहाबलः २५ ततःप्राग्ज्योतिषोराजानागराजंसमास्थितः यथावज्रधरःपूर्वंसंग्रामेतार-
कामये २६ तत्रदेवाःसगंधर्वाऋषयश्चसमागताः विशेषंनस्मविविदुर्हैडिंबभगदत्तयोः २७ यथासुरपतिःशक्रस्त्रासयामास-
दानवान् तथैवसमरेराजाद्रावयामासपांडवान् २८ तेनविद्राव्यमाणास्तेपांडवाःसर्वतोदिशं त्रातारंनाभ्यविंदंतस्वेष्वनीके
षुभारत २९ भैमसेनिंरथस्थंतुतत्रापश्यामभारत शेषाविमनसोभूत्वाप्राद्रवंतमहारथाः ३० निवृत्तेषुतुपांडूनांपुनःसैन्येषु
भारत आसीन्निष्टानकोघोरस्तवसैन्यस्यसंयुगे ३१ घटोत्कचस्ततोराजन्भगदत्तंमहारणे शरैःप्रच्छादयामासमेरुंगिरिमिवां
बुदः ३२ निहत्यतांश्छरान्राजाराक्षसस्यधनुश्च्युतान् भैमसेनिंरणेतूर्णंसर्वमर्मस्वताडयत् ३३ सताड्यमानोबहुभिःशरैःस
न्नतपर्वभिः नविव्यथेराक्षसेंद्रोभिद्यमानइवाचलः ३४ तस्यप्राग्ज्योतिषःक्रुद्धस्तोमरान्सचतुर्दश प्रेषयामाससमरेतांश्च
चिच्छेदराक्षसः ३५ सतांश्छित्वामहाबाहुस्तोमरान्निशितैःशरैः भगदत्तंचविव्याधसप्तत्याकंकपत्रिभिः ३६ ततःप्राग्ज्यो
तिषोराजाप्रहसन्निवभारत तस्याश्वांश्चतुरोराजन्पातयामाससायकैः ३७ सहताश्वेरथेतिष्ठन्राक्षसेंद्रःप्रतापवान् श-
क्तिंचिक्षेपवेगेनप्राग्ज्योतिषगजंप्रति ३८ तामापतंतींसहसाहेमदंडांप्रवेगितां त्रिधाचिच्छेदनृपतिःसाव्यकीर्यतमेदिनीं ३९

शक्तिं विनिहतां दृष्ट्वा हैडिंबः प्राद्रवद्भयात् यथेंद्रेण रणे पूर्वं नमुचिर्दैत्यसत्तमः ४० तं विजित्य रणे शत्रुं विक्रांतं ख्यातपौरुषं अजेयं समरे राजन्यमेन वरुणेन च ४१ पांडवीं समरे सेनां संममर्द सकुंजरः यथा वनगजो राजन्मृद्नंश्चरति पद्मिनीं ४२ मद्रेश्वरश्च समरे यमाभ्यां सह संगतः स्वस्रीयौ छादयांचक्रे शरौघैः पांडुनंदनौ ४३ सहदेवस्तु समरे मातुलं दृश्य संगतं अवारयच्छरौघेण मेघो यद्वद्दिवाकरं ४४ छाद्यमानः शरौघेण हृष्टरूपतरोऽभवत् तयोश्चाप्यभवत्प्रीतिरतुला मातृकारणात् ४५ ततः प्रहस्य समरे नकुलस्य महारथः अश्वान्वै चतुरो राजंश्चतुर्भिः सायकोत्तमैः ४६ प्रेषयामास समरे यमस्य सदनं प्रति हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः ४७ आरुरोह ततो यानं भ्रातुरेव यशस्विनः एकस्थौ तु रणे शूरौ दृढे विक्षिप्य कार्मुके ४८ मद्रराजरथं क्रुद्धौ छादयामासतुः क्षणात् संछाद्यमानो बहुभिः शरैः सन्नतपर्वभिः ४९ स्वस्रीयाभ्यां नरव्याघ्रो नाकंपत यथाचलः प्रहसन्निव तां चापि शरवृष्टिं जघान ह ५० सहदेवस्ततः क्रुद्धः शरमुद्यम्य वीर्यवान् मद्रराजमभिप्रेक्ष्य प्रेषयामास भारत ५१ स शरः प्रेषितस्तेन गरुत्मानिव वेगवान् मद्रराजं विनिर्भिद्य निपपात महीतले ५२ स गाढविद्धो व्यथितो रथोपस्थे महारथः निषसाद महाराज कश्मलं च जगाम ह ५३ तं विसंज्ञं निपतितं सूतः संप्रेक्ष्य संयुगे अपोवाह रथेनाजौ यमाभ्यामतिपीडितं ५४ दृष्ट्वा मद्रेश्वररथं धार्तराष्ट्राः पराङ्मुखं सर्वे विमनसोऽभूत्वा नेदमस्तीत्यचिंतयन् ५५ निर्जित्य मातुलं संख्ये माद्रीपुत्रौ महारथौ दध्मतुर्मुदितौ शंखौ सिंहनादं विनेदतुः ५६ अभ्यद्रवेतां संहृष्टौ तव सैन्यं विशांपते यथा दैत्यचमूं राजन्निंद्रोपेंद्राविवामरौ ५७ इतिश्रीमन्महाभारते भी॰ द्वंद्वयुद्धे चतुरशीतितमोऽध्यायः ८४ संजय उवाच ततो युधिष्ठिरो राजा मध्यं प्राप्ते दिवाकरे श्रुतायुषमभिप्रेक्ष्य चोदयामास वाजिनः १ अभ्यधावत्ततो राजा श्रुतायुषमरिंदमं विनिघ्नन्सायकैस्तीक्ष्णैर्नवभिर्नतपर्वभिः २ स संवार्य रणे राजन्रोषितो धर्मसूनुना शरान्सप्त महेष्वासः कौंतेयाय समार्पयत् ३ ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे असूनिव विचिन्वंतो देहे तस्य महात्मनः ४ पांडवस्तु भृशं विद्धस्तेन राज्ञा महात्मना रणे वराहकर्णेन राजानं ह्यधिविव्यधे ५ अथापरेण भल्लेन केतुं तस्य महात्मनः रथश्रेष्ठो रथात्तूर्णं भूमौ पार्थोऽन्यपातयत् ६

७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१

केतुंनिपतितंदृष्ट्वाश्रुतायुःसतुपार्थिवः पांडवंविशिखैस्तीक्ष्णैराजन्विव्याधसप्तभिः ७ ततःक्रोधात्प्रजज्वालधर्मराजोयुधिष्ठिरः यथायुगांतेभूतानिधक्ष्यन्निवहुताशनः ८ क्रुद्धंतुपांडवंदृष्ट्वादेवगंधर्वराक्षसाः प्रविव्यथुर्महाराजव्याकुलंचाप्यभूज्जगत् ९ सर्वेषांचैवभूतानामिदमासीन्मनोगतं त्रीँल्लोकानद्यसंक्रुद्धोनृपोयंधक्ष्यतीतिवै १० ऋषयश्चैवदेवाश्चचक्रुःस्वस्त्ययनंमहत् लोकानांनृपशांत्यर्थंक्रोधितेपांडवेतदा ११ सचक्रोधसमाविष्टःसृक्किणीपरिसँल्लिहन् दधारात्मवपुर्घोरंयुगांतादित्यसंन्निभं १२ ततः सर्वाणिसैन्यानितावकानिविशांपते निराशान्यभवंस्तत्रजीवितंप्रतिभारत १३ सतुधैर्येणतंकोपंसन्निवार्यविशांपते श्रुतायुषःप्रचिच्छेदमुष्टिदेशेमहद्धनुः १४ अथैनंछिन्नधन्वानंनाराचेनस्तनांतरे निर्बिभेदरणेराजासर्वसैन्यस्यपश्यतः १५ सत्वरंचरणेराजंस्तस्यवाहान्महात्मनः निजघानशरैःक्षिप्रंसूतंचसुमहाबलः १६ हताश्वंतुरथंत्यक्त्वादृष्ट्वाराज्ञश्चपौरुषं विप्रदुद्राववेगेनश्रुतायुःसमरात्तदा १७ तस्मिन्जितेमहेष्वासेधर्मपुत्रेणसंयुगे दुर्योधनबलंराजन्सर्वमासीत्पराङ्मुखं १८ एतत्कृत्वामहाराजधर्मराजोयुधिष्ठिरः व्यात्ताननोयथाकालस्तवसैन्यंजघानह १९ चेकितानश्चवार्ष्णेयोगौतमंरथिनांवरं प्रेक्षतांसर्वसैन्यानांछादयामाससायकैः २० सन्निवार्यशरांस्तांस्तुकृपःशारद्वतोयुधि चेकितानंरणेयत्तंराजन्विव्याधपत्रिभिः २१ अथापरेणभल्लेनधनुश्चिच्छेदमारिष सारथिंचास्यसमरेक्षिप्रहस्तोन्यपातयत् २२ हयांश्चास्यावधीद्राजन्नुभौतौपार्ष्णिसारथी सोवप्लुत्यरथात्तूर्णंगदांजग्राहसात्वतः २३ सतयावीरघातिन्यागदयागदिनांवरः गौतमस्यहयान्हत्वासारथिंचाप्यपातयत् २४ भूमिष्ठोगौतमस्तस्यशरांश्चिक्षेपषोडश तेशराःसात्वतंभित्वाप्राविशंतधरातलं २५ चेकितानस्ततःक्रुद्धःपुनश्चिक्षेप तांगदां गौतमस्यवधाकांक्षीवृत्रस्येवपुरंदरः २६ तामापतंतींविपुलामश्मगर्भांमहागदां शरैरनेकसाहस्रैर्वारयामासगौतमः २७ चेकितानस्ततःखड्गंकोशादुद्धृत्यभारत लाघवंपरमास्थायगौतमंसमुपाद्रवत् २८ गौतमोपिधनुस्त्यक्त्वाप्रगृह्यासिंसुसंयतः वेगेनमहताराजंश्चेकितानमुपाद्रवत् २९ तावुभौबलसंपन्नौनिस्त्रिंशवरधारिणौ निस्त्रिंशाभ्यांसुतीक्ष्णाभ्यामन्योन्यंसंततक्षतुः ३० निस्त्रिंशवेगाभिहतौततस्तौपुरुषर्षभौ धरणीमनुसंप्राप्तौसर्वभूतनिषेवितां ३१ ५९

२२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ५९ ५९

मूर्च्छयाभिपरीतांगोव्यायामेनविमोहितौ ततोभ्यधावद्वेगेनकरकर्षःसुहृत्तया ३२ चेकितानंतथाभूतंदृष्ट्वासमरदुर्मदं रथमा-
रोपयच्चैनंसर्वसैन्यस्यपश्यतः ३३ तथैवशकुनिःशूरःश्यालस्तवविशांपते आरोपयद्रथंतूर्णंगौतमंरथिनांवरं ३४ सौमदत्तिं-
तथाक्रुद्धोधृष्टकेतुर्महाबलः नवत्यानिशितैर्बाणैराजन्विव्याधवक्षसि ३५ सौमदत्तिरुरस्यैस्तैर्भृशंबाणैरशोभत मध्यंदिने
महाराजरश्मिभिस्तपनोयथा ३६ भूरिश्रवास्तुसमरेधृष्टकेतुंमहारथं हतसूतहयंचक्रेविरथंसायकोत्तमैः ३७ विरथंचैं
नमालोक्यहताश्वंहतसारथिं महताशरवर्षेणच्छादयामाससंयुगे ३८ सचतंरथमुत्सृज्यधृष्टकेतुर्महामनाः आरुरोह-
ततोयानंशतानीकस्यमारिष ३९ चित्रसेनोविकर्णश्चराजन्दुर्मर्षणस्तथा रथिनोहेमसन्नाहाःसौभद्रमभिदुद्रुवुः ४० अ
भिमन्योस्ततस्तैस्तुघोरंयुद्धमवर्तत शरीरस्ययथाराजन्वातपित्तकफैस्त्रिभिः ४१ विरथांस्तवपुत्रांस्तुकृत्वाराजन्महाहवे
नजघाननरव्याघ्रःस्मरन्भीमवचस्तदा ४२ ततोराज्ञांबहुशतैर्गजाश्वरथयायिभिः संवृतंसमरेभीष्मंदेवैरपिदुरासदं ४३
प्रयांतंशीघ्रमुद्वीक्ष्यपरित्रातुंसुतांस्तव अभिमन्युंसमुद्दिश्यबालमेकंमहारथं ४४ वासुदेवमुवाचेदंकौंतेयःश्वेतवाहनः
चोदयाश्वान्हृषीकेशयत्रैतेबहुलारथाः ४५ एतेहिबहवःशूराःकृतास्त्रायुद्धदुर्मदाः यथाहन्युर्ननःसेनांतथामाधवचोदय
४६ एवमुक्तःसवार्ष्णेयःकौंतेयेनामितौजसा रथंश्वेतैर्हयैर्युक्तंप्रेषयामाससंयुगे ४७ निष्टानकोमहानासीत्तवसैन्यस्यमा
रिष यदर्जुनोरणेक्रुद्धःसंयतस्तावकान्प्रति ४८ समासाद्यतुकौंतेयोराज्ञस्तान्भीष्मरक्षिणः सुशर्माणमथोराजन्निदंवच
नमब्रवीत् ४९ जानामित्वांयुधिश्रेष्ठमत्यंतंपूर्ववैरिणं अनयस्याद्यसंप्राप्तंफलंपश्यसुदारुणं ५० अद्यत्वांदर्शयिष्यामिपूर्व
प्रेतान्पितामहान् एवंप्रजल्पतस्तस्यबीभत्सोःशत्रुतापन ५१ श्रुत्वापिपरुषंवाक्यंसुशर्मारथयूथपः नचैनमब्रवीत्किंचि
च्छुभंवायदिवाशुभं ५२ अभिगत्यार्जुनंवीरंराजभिर्बहुभिर्वृतः पुरस्तात्पृष्ठतश्चैवपार्श्वतश्चैवसर्वतः ५३ परिवार्यार्जुनं
संख्येतवपुत्रामहारथाः शरैःसंच्छादयामासुर्मेघाइवदिवाकरं ५४ ततःप्रववृतेघोरःसंग्रामःशोणितोदकः तावकानां
चसमरेपांडवानांचभारत ५५ इतिश्रीमन्महाभारतेभीष्मपर्वणिसुशर्मार्जुनसमागमेपंचाशीतितमोऽध्यायः ८५

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५

संजयउवाच सतुद्यमानस्तुशरैर्धनंजयःपदाहतोनागइवश्वसन्बली बाणेनबाणेनमहारथानांचिच्छेदचापानिरणेप्र-
सह्य १ चिच्छेदचापानिचतानिराज्ञांतेषांरणेवीर्यवतांक्षणेन विव्याधबाणैर्युगपन्महात्मानिःशेषतांतेष्वथमन्यमानः २
निपेतुराजौरुधिरप्रदिग्धास्तेताडिताःशक्रसुतेनराजन् विभिन्नगात्राःपतितोत्तमांगागतासवश्छिन्नतनुत्रकायाः ३ महींग
ताःपार्थबलाभिभूताविचित्ररूपायुगपद्विनेशुः दृष्ट्वाहतांस्तान्युधिराजपुत्रांस्त्रिगर्तराजःप्रययौरथेन ४ तेषांरथानामथ
पृष्ठगोपाद्वात्रिंशदन्येप्यपतंतपार्थे तथैवतेषांपरिवार्यपार्थंविकृष्यचापानिमहावराणि ५ अवीवृषन्बाणमहौघवृष्ट्या-
यथागिरिंतोयधराजलौघैः सपीड्यमानस्तुशरौघवृष्ट्याधनंजयस्तान्युधिजातरोषः ६ षष्ट्याशरैःसंयतितैलधौतैर्जघानतान-
प्यथपृष्ठगोपान् षष्टिंरथांस्तानवजित्यसंख्येधनंजयःप्रीतमनायशस्वी ७ अथात्वरद्भीष्मवधायजिष्णुर्बलानिराज्ञांस
मरेनिहत्य त्रिगर्तराजोनिहतान्समीक्ष्यमहात्मनातानथबंधुवर्गान् ८ रणेपुरस्कृत्यनराधिपांस्तान्जगामपार्थंत्वरितो
वधाय अभिद्रुतंचास्त्रविदांवरिष्ठंधनंजयंवीक्ष्यशिखंडिमुख्याः ९ अभ्युद्ययुस्तेशितशस्त्रहस्तारिरक्षिषंतोरथमर्जुनस्य
पार्थोपितानापततःसमीक्ष्यत्रिगर्तराज्ञासहितान्नृवीरान् १० विध्वंसयित्वासमहाधनुष्मान्गांडीवमुक्तैर्निशितैःपृषत्कैः भी-
ष्मंयियासुर्युधिसंददर्शदुर्योधनंसैंधवादींश्चराज्ञः ११ आवारयिष्णूनथसंप्रयायमुहूर्तमायोध्यरथेनवीरः उत्सृज्यराजान-
मनंतवीर्योजयद्रथादींश्चनृपान्महौजाः १२ ययोनतोभीमबलोमनस्वीगांगेयमाजौशरचापपाणिः युधिष्ठिरश्चोग्रबलोम-
हात्मासमाययौत्वरितोजातकोपः १३ मद्राधिपंसमभित्यज्यसंख्येस्वभागमाप्तंतमनंतकीर्तिः सार्द्धंसमाद्रीसुतभीमसेनै-
र्भीष्मंययौशांतनवंरणाय १४ तैःसंप्रयुक्तःसमहारथाग्र्यैर्गंगासुतःसमरेचित्रयोधी नविव्यथेशांतनवोमहात्मासमागतैः
पांडुसुतैःसमस्तैः १५ अथैत्यराजायुधिसत्यसंधोजयद्रथोह्युग्रबलोमनस्वी चिच्छेदचापानिमहारथानांप्रसह्यतेषांधनु
षावरेण १६ युधिष्ठिरंभीमसेनंयमौचकृष्णांचपार्थंयुधिजातकोपः दुर्योधनोवैरविषोमहात्माजघानबाणैरनलप्रकाशैः
१७ कृपेणशल्येनशलेनचैवतथाविभोचित्रसेनेनचाजौ विद्धाःशरैस्तेभिविवृद्धकोपैर्देवायथादैत्यगणैःसमेतैः १८ ५

१६ १७ १८ ५९ ५९ ५९ ५९ ५९ ५९

छिन्नायुधंशांतनवेनराजाशिखंडिनंप्रेक्ष्यचजातकोपः अजातशत्रुःसमरेमहात्माशिखंडिनंक्रुद्धउवाचवाक्यं १९ उक्त्वा
तथात्वंपितुरग्रतोमामहंहनिष्यामिमहाव्रततं भीष्मंशरौघैर्विमलार्कवर्णैःसत्यंवदामीतिकृताप्रतिज्ञा २० त्वयानचैनांस-
फलांकरोषिदेवव्रतंयन्ननिहंसियुद्धे मिथ्याप्रतिज्ञोभवमानृवीररक्षस्वधर्मंचयशःकुलंच २१ प्रेक्षस्वभीष्मंयुधिभीम-
वेगंसर्वांस्तपंतंममसैन्यसंघान् शरौघजालैरतितिग्मतेजनैःकालोयथाकालकृतःक्षणेन २२ निकृत्तचापःसमरेनपेक्षःपरा
जितःशांतनवेनराज्ञा विहायबंधूनथसोदरांश्चक्वयास्यसेनानुरूपंतवेदं २३ दृष्ट्वाहिभीष्मंतमनंतवीर्यंभग्नंचसैन्यंद्रवमा-
णमेतत् भीतोऽसिनूनंद्रुपदस्यपुत्रतथाहितेमुखवर्णोऽप्रहृष्टः २४ आज्ञायमानेनधनंजयेनमहाहवेपश्ययुक्तंनृवीरं क-
थंहिभीष्मात्प्रथितःपृथिव्यांभयंत्वमद्यप्रकरोषिवीर २५ सधर्मराजस्यवचोनिशम्यरूक्षाक्षरंविप्रलापापविद्धं प्रत्यादेशंम
न्यमानोमहात्माप्रतत्वरेभीष्मवधायराजन् २६ तमापतंतंहिमहाजवेनशिखंडिनंभीष्ममभिद्रवंतं आवारयामासहिशल्य-
एनमस्त्रेणघोरेणसुदुर्जयेन २७ सचापिदृष्ट्वासमुदीर्यमाणमस्त्रंयुगांताग्निसमप्रकाशं नासंप्रमुह्यद्द्रुपदस्यपुत्रोराजन्म
हेंद्रप्रतिमप्रभावः २८ तस्थौचतत्रैवमहाधनुष्मांश्छरैस्तदस्त्रंप्रतिबाधमानः अथाददेवारुणमन्यदस्त्रमुग्रंशिखंडीप्रति-
घातमस्य २९ तदस्त्रमस्त्रेणनिवार्यमाणंस्वस्थाःसुराददृशुःपार्थिवाश्च भीष्मस्तुराजन्समरेमहात्माधनुःसचित्रंध्वजमे
वचापि ३० छित्वानदत्पांडुसुतस्यवीरोयुधिष्ठिरस्याजमीढस्यराज्ञः ततःसमुत्सृज्यधनुःसबाणंयुधिष्ठिरंवीक्ष्यभयाभि-
भूतं ३१ गदांप्रगृह्याथपपातसंख्येजयद्रथंभीमसेनःपदातिः तमापतंतंमहताजवेनजयद्रथःसगदंभीमसेनं ३२ विव्या-
धघोरैर्यमदंडकल्पैःशितैःशरैर्वैनवभिःसमंतात् अचिंतयित्वासशरांस्तरस्वीवृकोदरःक्रोधपरीतचेताः ३३ जघान-
वाहान्समरेसमस्तान्पारावतान्सिंधुराजस्यसंख्ये ततोभिवीक्ष्याप्रतिमप्रभावस्तवात्मजस्त्वरमाणोरथेन ३४ अभ्याय
यौभीमसेनंनिहंतुंसमुद्यतास्त्रःसुरराजकल्पः भीमोप्यथैनंसहसाविनद्यप्रत्युद्ययौगदयातर्जमानः ३५ समुद्यतां-
तांयमदंडकल्पांदृष्ट्वागदांतेकुरवःसमंतात् विहायसर्वेतवपुत्रमुग्रंभैमींगदांतांपरिहर्तुकामाः ३६ ६९ ६९

अपक्रांतास्तुमुलेसंविमर्देस्मिन्दारुणेभारतमोहनीये अमूढचेतास्त्वथचित्रसेनोमहागदामापततींनिरीक्ष्य ३७ रथंस-
मुत्सृज्यपदातिराजौप्रगृह्यखड्गंविमलंचचर्म अवप्लुतःसिंहइवाचलाग्राज्जगामतंभूमिपभूमिदेशं ३८ गदापिसाप्राप्यर
थंसुचित्रंसाश्वंससूतंविनिहत्यसंख्ये जगामभूमिंज्वलितामहोल्काभ्रष्टांबराद्गामिवसंचरंती ३९ आश्चर्यरूपंसुमहत्त्व
दीयाहष्ट्वैवतद्भारतरःसंप्रहृष्टाः सर्वेविनेदुःसहिताःसमंतात्सपूजिरेतवपुत्रंससैन्याः ४० इतिश्रीमन्महाभारतेभी०
चित्रसेनरथभंगेषडशीतितमोऽध्यायः ८६ संजयउवाच विरथंतुसमासाद्यचित्रसेनंमनस्विनं रथमारोपयामासवि
कर्णस्तनयस्तव १ तस्मिंस्तथावर्तमानेतुमुलेसंकुलेभृश भीष्मःशांतनवस्तूर्णंयुधिष्ठिरमुपाद्रवत् २ ततःसरथनागाश्वाः
समकंपंतसृंजयाः मृत्योरास्यमनुप्राप्तंमेनिरेचयुधिष्ठिरं ३ युधिष्ठिरोपिकौरव्योयमाभ्यांसहितःप्रभुः महेष्वासंनरव्या-
घ्रंभीष्मंशांतनवंययौ ४ ततःशरसहस्राणिप्रमुंचन्पांडवोयुधि भीष्मंसंच्छादयामासयथामेघोदिवाकरं ५ तेनसम्य
क्प्रणीतानिशरजालानिभागशः प्रतिजग्राहगांगेयःशतशोथसहस्रशः ६ तथैवशरजालानिभीष्मेणास्तानिमारिष आ
काशेसमदृश्यंतखगमानांव्रजाइव ७ निमेषार्द्धाच्चकौंतेयंभीष्मःशांतनवोयुधि अदृश्यंसमरेचक्रेशरजालानिभागशः ८
ततोयुधिष्ठिरोराजाकौरव्यस्यमहात्मनः नाराचंप्रेषयामासक्रुद्धआशीविषोपमं ९ असंप्राप्तंतुतंतत्रक्षुरप्रेणमहारथः
चिच्छेदसमरेराजन्भीष्मस्तस्यधनुश्च्युतं १० तंतुच्छित्वारणेभीष्मोनाराचंकालसंमितं निजघ्नेकौरवेंद्रस्यहयान्कांचन
भूषणान् ११ हताश्वंतुरथंत्यक्त्वाधर्मपुत्रोयुधिष्ठिरः आरुरोहरथंतूर्णंनकुलस्यमहात्मनः १२ यमावपिचसंक्रुद्धोसमा
साद्यरणेतदा शरैःसंच्छादयामासभीष्मःपरपुरंजयः १३ तौतुदृष्ट्वामहाराजभीष्मबाणप्रपीडितौ जगामाथपरांचिंतां
भीष्मस्यवधकांक्षया १४ ततोयुधिष्ठिरोवश्यान्राज्ञस्तान्समचोदयत् भीष्मंशांतनवंसंख्येनिहतेतिसुहृद्गणान् १५ त
तस्तेपार्थिवाःसर्वेश्रुत्वापार्थिवभाषितं महतारथवंशेनपरिवव्रुःपितामहं १६ ससमंतात्परिवृतःपितादेवव्रतस्तव चिक्री
डधनुषाराजन्पातयानोमहारथान् १७ तंचरंतंरणेपार्थाददृशुःकौरवंयुधि मृगमध्येप्रविश्येवयथासिंहंमहावने १८

तर्जयानंरणेशूरांस्त्रासयानंचसायकैः दृष्ट्वाभेजुर्महाराजसिंहंमृगगणाइव १९ रणेभरतसिंहस्यददृशुःक्षत्रियागतिं अ
ग्नेर्वायुसहायस्ययथाकक्षंदिधक्षतः २० शिरांसिरथिनांभीष्मःपातयामाससंयुगे तालेभ्यइवपक्कानिफलानिकुशलोनरः
२१ पतद्भिश्चमहाराजशिरोभिर्धरणीतले बभूवतुमुलःशब्दःपततामश्मनामिव २२ तस्मिंस्तुमुलेयुद्धेवर्तमानेभयानके स
र्वेषामेवसैन्यानामासीद्व्यतिकरोमहान् २३ भिन्नेषुतेषुव्यूहेषुक्षत्रियाइतरेतरं एकमेकंसमाहूययुद्धायैवोपतस्थिरे २४
शिखंडीतुसमासाद्यभरतानांपितामहं अभिदुद्राववेगेनतिष्ठतिष्ठेतिचाब्रवीत् २५ अनादृत्यततोभीष्मस्तंशिखंडिनमाह-
वे प्रययौसृंजयान्क्रुद्धःस्त्रीत्वंचिंत्यशिखंडिनः २६ सृंजयास्ततोहृष्टादृष्ट्वाभीष्मंमहारथं सिंहनादान्बहुविधांश्चक्रुः
शंखविमिश्रितान् २७ ततःप्रववृतेयुद्धंव्यतिषक्तरथद्विपं अपरांदिशमास्थायास्थितेसवितरिप्रभो २८ धृष्टद्युम्नोथपां-
चाल्यःसात्यकिश्चमहारथः पीडयंतौभृशंसैन्यंशक्तितोमरवृष्टिभिः २९ शरैर्बहुविधैराजन्नाजघ्नुस्तावकान्रणे तेहन्य
मानाःसमरेतावकाःपुरुषर्षभ ३० आर्यांयुद्धेमतिंकृत्वानत्यजंतिस्मसंयुगं यथोत्साहंचसमरेजघ्नुर्लोकंमहारथाः ३१ त-
त्राक्रंदोमहानासीत्तावकानांमहात्मनां वध्यतांसमरेराजन्पार्षतेनमहात्मना ३२ तंश्रुत्वानिनदंघोरंतावकानांमहारथौ
विंदानुविंदावावंत्यौपार्षतंप्रत्युपस्थितौ ३३ तौतस्यतुरगान्हत्वात्वरमाणौमहारथौ छादयामासतुरुभौशरवर्षेणपार्षतं
३४ अवप्लुत्याथपांचाल्योरथात्तूर्णंमहाबलः आरुरोहरथंतूर्णंसात्यकेःसुमहात्मनः ३५ ततोयुधिष्ठिरोराजामहत्यासे-
नयावृतः आवंत्यौसमरेक्रुद्धावभ्यधावत्परंतपौ ३६ तथैवतवपुत्रोपिसर्वोद्योगेनमारिष विंदानुविंदौसमरेपरिवार्यावतस्थि-
वान् ३७ अर्जुनश्चापिसंक्रुद्धःक्षत्रियान्क्षत्रियर्षभ अयोधयतसंग्रामेवज्रपाणिरिवासुरान् ३८ द्रोणश्चसमरेक्रुद्धःपु
त्रस्यप्रियकृत्तव व्यधमत्सर्वपांचालांस्तूलराशिमिवानलः ३९ दुर्योधनपुरोगास्तुपुत्रास्तवविशांपते परिवार्यरणेभीष्मंयु
युधुःपांडवैःसह ४० ततोदुर्योधनोराजालोहितायतिभास्करे अब्रवीत्तावकान्सर्वांस्त्वरध्वमितिभारत ४१ युध्यतांतुतथा
तेषांकुर्वतांकर्मदुष्करं अस्तंगिरिमथारूढेनप्रकाशतिभास्करे ४२ ५ ५ ५ ५

प्रावर्ततनदीघोराशोणितौघतरंगिणी गोमायुशतसंकीर्णाक्षणेनक्षणदामुखे ४३ शिवाभिरशिवाभिश्चरुवंतीभिः समंततः घो
रमायोधनंजज्ञेभूतसंघसमाकुलं ४४ राक्षसाश्चपिशाचाश्चतथान्येपिशिताशनाः समंततोव्यदृश्यंतशतशोथसहस्रशः ४५ अ
र्जुनोथसुशर्मादीन्राज्ञःसहपदानुगान् विजित्यपृतनामध्येययौस्वशिबिरंप्रति ४५ युधिष्ठिरोपिकौरव्योभ्रातृभिःसहितस्तदा
ययौस्वशिबिरंराजन्निशायांसेनयावृतः ४७ भीमसेनोपिराजेंद्रदुर्योधनमुखान्रथान् अवजित्यनृपाःसंख्येययौस्वशिबिरंप्रति ४८
दुर्योधनोपिनृपतिःपरिवार्यमहारणे भीष्मंशांतनवंतूर्णंप्रयातःशिबिरंप्रति ४९ द्रोणोद्रौणिःकृपःशल्यःकृतवर्माचसात्वतः परिवा
र्यचमूंसर्वंप्रययुःशिबिरंप्रति ५० तथैवसात्यकीराजन्धृष्टद्युम्नश्चपार्षतः परिवार्यरणेयोधान्ययतुःशिबिरंप्रति ५१ एवमेतेम
हाराजतावकाःपांडवैःसह पर्यवर्तंतसहितानिशाकालेपरंतपाः ५२ ततःस्वशिबिरंगत्वापांडवाःकुरवस्तथा न्यविशंतमहारा-
जपूजयंतःपरस्परं ५३ रक्षांकृत्वात्मनःशूराह्स्वागुल्मान्यथाविधि अपनीयचशल्यांस्तेस्नात्वाचविविधैर्जलैः ५४ कृतस्व-
स्त्ययनाःसर्वेस्तूयमानाश्चबंदिभिः गीतवादित्रशब्देनचिक्रीडुस्तेयशस्विनः ५५ मुहूर्तादिवतत्सर्वमभवत्स्वर्गसंमितं नहियुद्ध
कथांकांचित्तत्रचक्रुर्महारथाः ५६ तेप्रसुप्तेबलेतत्रपरिश्रांतजनेनृप हस्त्यश्वबहुलेराजन्प्रेक्षणीयेबभूवतुः ५७ इति-
श्रीमन्महाभा०तेभी० सप्तमदिवसयुद्धसमाप्तिर्नामसप्ताशीतितमोऽध्यायः ८७ संजयउवाच परिणाम्यनिशांतांतुसुखसु
प्तास्तेजनेश्वराः कुरवःपांडवाश्चैवपुनर्युद्धायनिर्ययुः १ ततःशब्दोमहानासीत्सैन्ययोरुभयोरपि निर्गच्छमानयोःसंख्येसा
गरप्रतिमोमहान् २ ततोदुर्योधनोराजाचित्रसेनोविविंशतिः भीष्मश्चरथिनांश्रेष्ठोभारद्वाजःसवैद्विजः ३ एकीभूताःसुसं
यत्ताःकौरवाणांमहारथाः व्यूहायनिदधूराजन्पांडवान्प्रतिदंशिताः ४ भीष्मःकृत्वामहाव्यूहंपितातवविशांपते सागरप्रति-
मंघोरंवाहनोर्मितरंगिणं ५ अग्रतःसर्वसैन्यानांभीष्मःशांतनवोययौ मालवैर्दाक्षिणात्यैश्चआवंत्यैश्चसमन्वितः ६ ततोनं
तरमेवासीद्भारद्वाजःप्रतापवान् पुलिंदैःपारदैश्चापितथाक्षुद्रकमालवैः ७ द्रोणादनंतरोयत्तोभगदत्तःप्रतापवान् मागधै
श्चकलिंगैश्चपिशाचैश्चविशांपते ८ प्राग्ज्योतिषादनुनृपःकौशल्योथबृहद्बलः मेकलैस्त्रैपुरैश्चैवचित्रुकैश्चसमन्वितः ९

बृहद्बलस्ततःशूरस्त्रैगर्तःप्रस्थलाधिपः कांबोजैर्बहुभिःसार्द्धंप्रवरैश्चसहस्रशः १० द्रौणिस्तरभसःशूरस्त्रिगर्ताननुभारत प्र-
ययौसिंहनादेननादयानोधरातलं ११ तथासर्वेणसैन्येनराजादुर्योधनस्तदा द्रौणेरनंतरंप्रायात्सोदरैःपरिवारितः १२ दुर्यो-
धनादनुततः कृपःशारद्वतोययौ एवमेषमहाव्यूहःप्रययौसागरोपमः १३ रेजुस्तत्रपताकाश्चश्वेताच्छत्राणिवाविभो अंग
दान्यथविचित्राणितोमराणिधनूंषिच १४ तंतुदृष्ट्वामहाव्यूहंतावकानांमहारथः युधिष्ठिरोब्रवीत्तूर्णंपार्षतंपृतनापतिं १५
पश्यव्यूहंमहेष्वासनिर्मितंसागरोपमं प्रतिव्यूहंत्वमपिमेकुरुपार्षतसत्वरं १६ ततःसपार्षतःशूरोव्यूहंचक्रेसुदारुणं शृं-
गाटकंमहाराजपरव्यूहविनाशकं १७ शृंगाभ्यांभीमसेनश्चसात्यकिश्चमहारथः रथैरनेकसाहस्रैस्तथाहयपदातिभिः
१८ नाभ्यामभून्नरश्रेष्ठःश्वेताश्वःकृष्णसारथिः मध्येयुधिष्ठिरोराजामाद्रीपुत्रौचपांडवौ १९ तथेतरेमहेष्वासाःसहसै-
न्यामहारथाः व्यूहंतंपूरयामासुर्व्यूहशास्त्रविशारदाः २० अभिमन्युस्ततःपश्चाद्विराटश्चमहारथः द्रौपदेयाश्चसंहृष्टा
राक्षसश्चघटोत्कचः २१ एवमेतंमहाव्यूहंव्यूह्यभारतपांडवाः अतिष्ठन्समरेशूरायोद्धुकामाजयैषिणः २२ भेरीशब्दाश्च
तुमुलाविमिश्राःशंखनिःस्वनैः क्ष्वेडितास्फोटितोत्क्रुष्टैःसुभीमाःसर्वतोदिशः २३ ततःशूराःसमासाद्यसमरेतेपरस्परं ने-
त्रैरनिमिषैराजन्नवैक्षंतपरस्परं २४ नामभिस्तेमनुष्येंद्रपूर्वंयोधाःपरस्परं युद्धायसमवर्तंतसमाहूयेतरेतरं २५ ततःप्र
वदृतेयुद्धंघोररूपंभयानकं तावकानांपरेषांचनिघ्नतामितरेतरं २६ नाराचानिशिताःसंख्येसंपतंतिस्मभारत व्यात्तान
नाभयकराउरगाइवसर्वशः २७ निष्पेतुर्विमलाःशक्त्यस्तैलधौताःसमंततः अंबुदेभ्योयथाराजन्भ्राजमानाःशतह्र-
दाः २८ गदाश्चविमलैःपट्टैःपिनद्धाःस्वर्णभूषिताः पतंत्यस्तत्रदृश्यंतेगिरिशृंगोपमाःशुभाः २९ निस्त्रिंशाश्चव्यराजंतवि
मलांबरसन्निभाः आर्षभाणिचचर्माणिशतचंद्राणिभारत ३० अशोभंतरणेराजन्पतमानानिसर्वशः तेन्योन्यंसमरेसे
नेयुध्यमानेनराधिप ३१ अशोभेतांयथादेवदैत्यसेन्येसमुद्यते अभ्यद्रवंतसमरेतेअन्योन्यंसमंततः ३२ रथास्तुरथिभि
स्तूर्णंप्रेषिताःपरमाहवे युगैर्युगानिसंश्लिष्ययुयुधुःपार्थिवर्षभाः ३३ दंतिनांयुध्यमानानांसंघर्षात्पावकोभवत् दंतेषुभर-
तश्रेष्ठसधूमःसर्वतोदिशः ३४

भासैरभिहताःकेचिद्गजयोधाःसमंततः पतमानास्मदृश्यंतेगिरिशृंगान्नगाइव ३५ पादाताश्चाप्यदृश्यंतनिघ्नंतोहिपरस्परं
चित्ररूपधराःशूरानरवरप्रासयोधिनः ३६ अन्योन्यंतेसमासाद्यकुरुपांडवसैनिकाः शरैर्नानाविधाकारैरयोनिस्तुर्यमक्षयं
३७ तत्रशांतनवोभीष्मोरथघोषेणनादयन् अभ्यागमद्रणेपांडून्धनुःशब्देनमोहयन् ३८ पांडवानांरथाश्चापिनदंतोभैरवंर
वं अभ्यद्रवंतसंयत्ताधृष्टद्युम्नपुरोगमाः ३९ ततःप्रववृतेयुद्धंतवतेषांचभारत नराश्वरथनागानांव्यतिषक्तंपरस्परं ४०
इतिश्रीमन्महाभा० भीष्मप० अष्टमदिनयुद्धारंभेअष्टाशीतितमोऽध्यायः ८८ संजयउवाच भीष्मंतुसमरेक्रुद्धंप्रतपंतं-
समंततः नशेकुःपांडवाद्रष्टुंतपंतमिवभास्करं १ ततःसर्वाणिसैन्यानिधर्मपुत्रस्यशासनात् अभ्यधावंतगांगेयंमर्दयंतांशितैः
शरैः २ सतुभीष्मोरणश्लाघीसोमकान्सहसृंजयान् पांचालांश्चमहेष्वासान्पातयामाससायकैः ३ तेवध्यमानाभीष्मेणपां-
चालाःसोमकैःसह भीष्ममेवाभ्ययुस्तूर्णंत्यक्त्वामृत्युकृतंभयं ४ सतेषांरथिनांवीरोभीष्मःशांतनवोबली चिच्छेदसमरेरा-
जन्बाहूनथशिरांसिच ५ विरथान्रथिनश्चक्रेपितादेवव्रतस्तव पतितान्युत्तमांगानिहयेभ्योहयसादिनां ६ निर्मनुष्यांश्च
मातंगान्निर्वृक्षानिवपर्वतान् अपश्याममहाराजभीष्मास्त्रेणप्रमोहितान् ७ नतत्रासीत्पुमान्कश्चित्पांडवानांविशांपते अ
न्यत्ररथिनांश्रेष्ठाद्भीमसेनान्महाबलात् ८ सहिभीष्मंसमासाद्यवारयामाससंयुगे ततोनिष्टानकोघोरोभीष्मभीमस-
मागमे ९ बभूवसर्वसैन्यानांघोररूपोभयानकः तथैवपांडवाहृष्टाःसिंहनादमथानदन् १० ततोदुर्योधनोराजासोदर्यैःपरिवा-
रितः भीष्मंजुगोपसमरेवर्तमानेमहाक्षये ११ भीमस्तुसारथिंहत्वाभीष्मस्यरथिनांवरः प्रद्रुताश्वेरथेतस्मिन्द्रवमानेसमंत-
तः १२ सुनाभस्यक्षुरेणाशुशिरश्चिच्छेदभारत पूर्णायतविसृष्टेनसहतोन्यपतद्भुवि १३ हतेतस्मिन्महाराजतवपुत्रेमहारथे ना
मृष्यंतरणेशूराःसोदराःसप्तसंयुगे १४ आदित्यकेतुर्बह्वाशीकुंडधारोमहोदरः अपराजितःपंडितकोविशालाक्षश्चदुर्जयः
१५ पांडवंचित्रसन्नाहाविचित्रकवचायुधाः अभ्यद्रवंतसंग्रामेयोद्धुकामारिमर्दनाः १६ महोदरस्तुसमरेभीमंविव्याधपत्रिभिः न
वभिर्वज्रसंकाशैर्नमुचिंवृत्रहायथा १७ आदित्यकेतुःसप्तत्याबह्वाशीचापिपंचभिः नवत्याकुंडधारस्तुविशालाक्षश्चसप्तभिः
१८

अपराजितोमहाराजपराजिष्णुर्महारथः शरैर्बहुभिरानर्च्छद्भीमसेनंमहाबलं १९ रणेपडितकश्चैनंत्रिभिर्बाणैःसमर्पयत् स
तन्नममृषेवीरःशत्रुभिर्वधमाहवे २० धनुःप्रपीड्यवामेनकरेणामित्रकर्शनः शिरश्चिच्छेदसमरेशरेणानतपर्वणा २१ अपरा
जितस्यसुनसंतवपुत्रस्यसंयुगे पराजितस्यभीमेननिपपातशिरोमही २२ अथापरेणभल्लेनकुंडधारंमहारथं प्राहिणोन्मृ-
त्युलोकायसर्वसैन्यस्यपश्यतः २३ ततःपुनरमेयात्मासंप्रधायशिलीमुखं प्रेषयामाससमरेपंडितंप्रतिभारत २४ सशरःपं-
डितंहत्वाविवेशधरणीतलं यथानरंनिहत्याशुभुजगःकालचोदितः २५ विशालाक्षशिरश्छित्वापातयामासभूतले त्रिभिःश
रैरदीनात्मास्मरन्क्लेशंपुरातनं २६ महोदरंमहेष्वासंनाराचेनस्तनांतरे विव्याधसमरेराजन्सहतोन्यपतद्भुवि २७ आदित्यके
तोश्छत्रंचच्छित्वाबाणेनसंयुगे भल्लेनभृशतीक्ष्णेनशिरश्चिच्छेदभारत २८ बह्वाशिनंततोभीमःशरेणानतपर्वणा प्रेषयामा
ससंक्रुद्धोयमस्यसदनंप्रति २९ प्रदुद्रुवुस्ततस्तेऽन्येपुत्रास्तवविशांपते मन्यमानाहितत्सत्यंसभायांतस्यभाषितं ३० ततोदुर्यो
धनोराजाभ्रातृव्यसनकर्शितः अब्रवीत्तावकान्सर्वान्भीमोयंवध्यतामिति ३१ एवमेतेमहेष्वासाःपुत्रास्तवविशांपते भ्रातॄन्सं
दृश्यनिहतान्स्मरंतोहितद्वचः ३२ यदुक्तवान्महाप्रज्ञःक्षत्ताहितमनामयं तदिदंसमनुप्राप्तंवचनंसत्यवादिनः ३३ लोभमोह
समाविष्टःपुत्रप्रीत्याजनाधिप नबुध्यसेपुरायत्तुतथ्यमुक्तंहितंवचः ३४ तथैववधार्थायपुत्राणांपांडवोबली नूनंजातोमहा
बाहुर्यथाहंतीहकौरवान् ३५ ततोदुर्योधनोराजाभीष्ममासाद्यमारिष दुःखेनमहताविष्टोविललापातिदुःखितः ३६ निहताभ्रा
तरःशूराभीमसेनेनमेयुधि यतमानास्तथान्येपिहन्यंतेसर्वसैनिकाः ३७ भवान्मध्यस्थितस्तथानित्यमस्मानुपेक्षते सोहंकापं
थमारूढःपश्यदेवमिदंमम ३८ संजयउ० एतच्छ्रुत्वावचःक्रूरंपितादेवव्रतस्तव दुर्योधनमिदंवाक्यमब्रवीत्साश्रुलोचनं
३९ उक्तमेतन्मयापूर्वंद्रोणेनविदुरेणच गांधार्याचयशस्विन्यातत्त्वंनातनबुद्धवान् ४० समयश्चमयापूर्वंकृतोवःशत्रुसूद-
न नाहंयुधिविमोक्तव्योनाप्याचार्यःकथंचन ४१ यंयंहिधार्तराष्ट्राणांभीमोद्रक्ष्यतिसंयुगे हनिष्यतिरणेतंतंसत्यमे-
तद्ब्रवीमिते ४२ सत्वंराजन्स्थिरोभूत्वादृढांकृत्वारणेमतिम् योधयस्वरणेपार्थान्स्वर्गंकृत्वापरायणम् ४३ ६९

नशक्याः पांडवाजेतुंदेवैरपिसवासवैः तस्माद्युद्धेस्थिरांकृत्वामतिंयुध्यस्वभारत ४४ इतिश्रीमन्महाभा० भी० आदित्य-
केतुप्रभृतिवधेएकोननवतितमोऽध्यायः ८९ धृतराष्ट्रउवाच दृष्ट्वाममहतात्पुत्रान्बहूनेकेनसंजय भीष्मोद्रोणःकृ-
पश्चैवकिमकुर्वतसंयुगे १ अहन्यहनिमेपुत्राःक्षयंगच्छंतिसंयुगे मन्येहंसर्वथासूतदैवेनोपहतोभृशं २ यत्रमेतनयाः
सर्वेहीयंतेनजयंत्युत यत्रभीष्मस्यद्रोणस्यकृपस्यचमहात्मनः ३ सौमदत्तेश्चवीरस्यभगदत्तस्यचोभयोः अश्वत्थाम्नस्त
थातातशूराणांसुमहात्मनां ४ अन्येषांचैवशूराणांमध्यगास्तनयामम यदहन्यंतसंग्रामेकिमन्यद्भागधेयतः ५ नहिदुर्यो
नोमंदःपुराप्रोक्तमबुध्यत वार्यमाणोमयाताततभीष्मेणाविदुरेणच ६ गांधार्याचैवदुर्मेधाःसततंहितकाम्यया नाबुध्यत-
पुरामोहात्तस्यप्राप्तमिदंफलं ७ यद्भीमसेनःसमरेपुत्रान्ममविशेषतः अहन्यहनिसंक्रुद्धोनयतेयमसादनं ८ संजयउ०
इदंतत्समनुप्राप्तंक्षत्तुर्वचनमुत्तमं नबुद्धवानसिविभोप्रोच्यमानंहितंतदा ९ निवारयसुतान्द्यूतात्पांडवान्माद्रुहेतिच सु
हृदांहितकामानांब्रुवतांतत्तदेवच १० नशुश्रूषसितद्वाक्यंमार्तःपथ्यमिवौषधं तदेवत्वामनुप्राप्तंवचनंसाधुभाषितं ११ वि-
दुरद्रोणभीष्माणांतथान्येषांहितैषिणां अकृत्वावचनंपथ्यंक्षयंगच्छंतिकौरवाः १२ तदेतत्समनुप्राप्तंपूर्वमेवविशांपते
तस्मात्त्वंशृणुतत्वेनयथायुद्धमवर्तत १३ मध्यान्हेसुमहारौद्रःसंग्रामःसमपद्यत लोकक्षयकरोराजंस्तन्मेनिगदतःशृणु
१४ ततःसर्वाणिसैन्यानिधर्मपुत्रस्यशासनात् संरब्धान्यभ्यधावंतभीष्ममेवजिघांसया १५ धृष्टद्युम्नःशिखंडीचसात्यकि
श्चमहारथः युक्तानीकामहाराजभीष्ममेवसमभ्ययुः १६ विराटोद्रुपदश्चैवसहितःसर्वसोमकैः अभ्यद्रवंतसंग्रामेभीष्म-
मेवमहारथाः १७ कैकेयाधृष्टकेतुश्चकुंतीभोजश्चदंशितः युक्तानीकामहाराजभीष्ममेवसमभ्ययुः १८ अर्जुनोद्रौपदेया
श्चचेकितानश्चवीर्यवान् दुर्योधनसमादिष्टान्राज्ञःसर्वान्समभ्ययुः १९ अभिमन्युस्तथावीरोहैडिंबश्चमहारथः भीमसेनश्च
संक्रुद्धस्त्वभ्यधावतकौरवान् २० त्रिधाभूतैरवध्यंतपांडवैःकौरवायुधि तथैवकौरवैराजन्नवध्यंतपरेरणे २१ द्रोणश्चरथिनांश्रे
ष्ठःसोमकान्सृंजयैःसह अभ्यद्रवतसंक्रुद्धःप्रेषयिष्यन्यमक्षयं २२ तत्राक्रंदोमहानासीत्सृंजयानांमहात्मनां वध्यतांसमरेरा
जन्भारद्वाजेनधन्विना २३

द्रोणेननिहतास्तत्रक्षत्रियाबहवोरणे विचेष्टंतोव्यदृश्यंतव्याधिक्लिन्नानराइव २४ कूजतांक्रंदतांचैवस्तनतांचैवसंयुगे अ-
भिसंश्रूयतेशब्दः क्षत्क्लेशानांनृणामिव २५ तथैवकौरवेयाणांभीमसेनोमहाबलः चकारकदनंघोरंक्रुद्धःकालइवापरः २६
वध्यतांसर्वसैन्यानामन्योन्येनमहाहवे प्रावर्ततनदीघोराशोणितौघतरंगिणी २७ स संग्रामोमहाराजघोररूपोभवन्महान्
कुरूणांपांडवानांचयमराष्ट्रविवर्द्धनः २८ ततोभीमोरणेक्रुद्धोरभसश्चविशेषतः गजानीकंसमासाद्यप्रेषयामासमृत्यवे २९
तत्रभारतभीमेननाराचाभिहतागजाः पेतुःसेदुश्चनेदुश्चदिशःसंपरिबभ्रमुः ३० छिन्नहस्तामहानागाश्छिन्नगात्राश्चमारिष
क्रौंचवद्व्यनदंतश्चपृथिवीमधिशिश्यिरे ३१ नकुलःसहदेवश्चहयानीकमभिद्रुतौ तेहयाःकांचनापीडारुक्मभांडपरिच्छ-
दाः ३२ वध्यमानाव्यदृश्यंतशतशोथसहस्रशः पतद्भिश्चहयैराजन्समाकीर्यतमेदिनी ३३ निर्जिह्वैश्चश्वसद्भिश्चकूज-
द्भिश्चगतासुभिः हयैर्बभौनरश्रेष्ठनानारूपधरैर्धरा ३४ अर्जुनेनहतैःसंख्येतथाभारतराजभिः प्रबभौवसुधाघोरातत्रत
त्रविशांपते ३५ रथैर्भग्नैर्ध्वजैश्छिन्नैश्छत्रैश्चसुमहाप्रभैः चामरव्यजनैश्छिन्नैर्निकृत्तैश्चमहायुधैः ३६ हारैर्निष्कैः
सकेयूरैःशिरोभिश्चसकुंडलैः उष्णीषैरपविद्धैश्चपताकाभिश्चसर्वशः ३७ अनुकर्षैःशुभैराजन्योक्त्रैश्चसहरश्मिभिः सं
छन्नावसुधाभातिवसंतेकुसुमैरिव ३८ एवमेषक्षयोवृत्तःपांडूनामपिभारत क्रुद्धेशांतनवेभीष्मेद्रोणेचरथसत्तमे ३९ अ
श्वत्थाम्निकृपेचैवतथैवकृतवर्मणि तथेतरेषुक्रुद्धेषुतावकानामपिक्षयः ४० इतिश्रीमन्महाभा॰भी॰ अष्टदिनयुद्धेनव
तितमोऽध्यायः ९० संजयउवाच वर्तमानेतथारौद्रेराजन्वीरवरक्षये शकुनिःसौबलःश्रीमान्पांडवान्समुपाद्र
वत् १ तथैवसात्वतोराजन्हार्दिक्यःपरवीरहा अभ्यद्रवतसंग्रामेपांडवानांवरूथिनीं २ ततःकांबोजमुख्यानांनदीजा
नांचवाजिनां आरट्टानांमहीजानांसिंधुजानांचसर्वशः ३ वनायुजानांशुभ्राणांतथापर्वतवासिनां वाजिनांबहुभिःसं
ख्येसमंतात्पर्यवारयन् ४ येचापरेतित्तिरिजाजवनावातरंहसः सुवर्णालंकृतैरेतैवर्मवद्भिःसुकल्पितैः ५ हयैर्वात
जवैर्मुख्यैःपांडवस्यसुतोबली अभ्यवर्ततत्सैन्यंहृष्टरूपःपरंतप ६ अर्जुनस्यसुतःश्रीमानिरावान्नामवीर्यवान् सुता
यांनागराजस्यजातःपार्थेनधीमता ७

८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१

ऐरावतेनसादत्ताअनपत्यामहात्मना पत्यौहतेसुपर्णेनकृपणादीनचेतना ८ भार्यार्थिंतांचजग्राहपार्थःकामवशानुगां एवमेषससुत्पन्नःपरक्षेत्रेर्जुनात्मजः ९ सनागलोकेसंवृद्धोमात्राच परिरक्षितः पितृव्येनपरित्यक्तःपार्थद्वेषाद्दुरात्मना १० रूपवान्बलसंपन्नोगुणवान्सत्यविक्रमः इंद्रलोकंजगामाशुश्रुत्वातत्रार्जुनंगतं ११ सोभिगम्यमहाबाहुःपितरंसत्य-विक्रमः अभ्यवादयदव्यग्रोनियमेनकृतांजलिः १२ न्यवेदयतचात्मानमर्जुनस्यमहात्मनः इरावानस्मिभद्रंतेपुत्रश्चाहं तवप्रभो १३ मातुःसमागमोयस्तुतत्सर्वंप्रत्यवेदयत् तच्चसर्वंयथावृत्तमनुसस्मारपांडवः १४ परिष्वज्यसुतंचापिसोत्म-नःसदृशंगुणैः प्रीतिमानभवत्पार्थोदेवराजनिवेशने १५ सोर्जुनेनसमादिष्टोदेवलोकेतदानृप प्रीतिपूर्वंमहाबाहुःस्व-कार्यंप्रतिभारत १६ युद्धकालेत्वयास्माकंसाह्यंदेयमितिप्रभो बाढमित्येवमुक्त्वाचयुद्धकालइहागतः १७ कामवर्णजवैर-श्वैःसंवृतोबहुभिर्नृप तेहयाकांचनापीडानानावर्णमनोजवाः १८ उत्पेतुःसहसाराजन्हंसाइवमहोदधौ तेत्वदीयान्समा-साद्यहयसंघान्महाजवान् १९ क्रोडैःक्रोडानभिघ्नंतोघोणाभिश्चपरस्परं निपेतुःसहसाराजन्स्ववेगाभिहताभुवि २० निपतद्भिस्तथातैश्चहयसंघैःपरस्परं शुश्रुवेदारुणःशब्दःसुपर्णपतनेयथा २१ तथैवचमहाराजसमेत्यान्योन्यमाहवे परस्परवधंघोरंचक्रुस्तेहयसादिनः २२ तस्मिंस्तथामहाघोरेसंकुलेतुमुलेभृशम् उभयोरपिसंभ्रान्ताहयसंघाःसमंततः २३ प्रक्षीणसायकाःशूरानिहताश्वाःसमाहताः विलयंसमनुप्राप्तास्तक्षमाणाःपरस्परं २४ ततःक्षीणेहयानीकेकिं-चिच्छिष्टेचसंयुगे सौबलस्यानुजाःशूरानिर्गतारणमूर्द्धनि २५ वायुवेगसमस्पर्शान्वायुवेगसमान्जवे आरुह्यशीलसंप-न्नान्वयस्थांस्तुरगोत्तमान् २६ गजोगवाक्षोवृषभश्चर्मवानार्जवःशुकः षडेतेबलसंपन्नानिर्ययुर्महतोबलात् २७ वार्य-माणाःशकुनिनास्वैश्चयोधैर्महाबलैः सन्नद्धायुद्धकुशलारौद्ररूपामहाबलाः २८ तदनीकंमहाबाहोभित्वापरमदुर्जयं बलेनमहतायुक्ताःस्वर्गायविजयैषिणः २९ विविशुस्तेतदाहृष्टागांधारायुद्धदुर्मदाः तान्प्रविष्टांस्तदाहृष्टाइरावानपिवीर्य-वान् ३० अब्रवीत्समरेयोधान्विचित्राभरणायुधान् यथैतेधार्तराष्ट्रस्ययोधाःसानुगवाहनाः ३१ ६९ ६९

२२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ६९ ६९

३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४

हन्यंतेसमरेसर्वेतथानीतिर्विधीयतां बाढमित्येवमुक्त्वातेसर्वेयोधाइरावतः ३२ जघ्नुस्तेषांबलानीकंदुर्जयंसमरेपरैः तदनीक
मनीकेनसमरेवीक्ष्यपातितं ३३ अमृष्यमाणास्तेसर्वेसुबलस्यात्मजारणे इरावंतमभिद्रुत्यसर्वतःपर्यवारयन् ३४ ताडयं
तःशितैःप्रासैश्चोदयंतःपरस्परं तेश्शूराःपर्यधावंतकुर्वंतोमहदाकुलं ३५ इरावानपिनिर्विद्धःप्रासैस्तीक्ष्णैर्महात्मभिः स्र
वतारुधिरेणाक्तस्तोत्रैर्विद्धइवद्विपः ३६ उरस्यपिचपृष्ठेचपार्श्वयोश्चभृशाहतः एकोबहुभिरत्यर्थंधैर्याद्राजन्नविव्यथे ३७
इरावानथसंक्रुद्धःसर्वांस्तान्निशितैःशरैः मोहयामाससमरेविद्ध्वापरपुरंजयः ३८ प्रासानुत्कृत्यसर्वांश्चस्वशरीरादरिंद
मः तैरेवताडयामाससुबलस्यात्मजान्रणे ३९ निकृष्यचशितंखड्गंगृहीत्वाचशरावरं पदातिस्तूर्णमागच्छज्जिघांसुःसौ
बलान्युधि ४० ततःप्रत्यागतप्राणाःसर्वेतेसुबलात्मजाः भूयःक्रोधसमाविष्टाइरावंतमथाद्रवन् ४१ इरावानथखड्गेनदर्श
यन्पाणिलाघवं अभ्यधावततान्सर्वान्सोबलान्बलदर्पितः ४२ लाघवेनाथचरतःसर्वेतेसुबलात्मजाः अंतरंनाभ्यगच्छंत
चरंतःशीघ्रगैर्हयैः ४३ भूमिष्ठमथतंसंख्येसंप्रदृश्यततःपुनः परिवार्यभृशंसर्वेग्रहीतुमुपचक्रमुः ४४ अथाभ्याशगता
नांसखड्गेनामित्रकर्शनः असिहस्तापहस्ताभ्यांतेषांगात्राण्यकृंतत ४५ आयुधानिचसर्वेषांबाहूनपिविभूषितान् अपतं
तनिकृत्तांगामृताभूमौगतासवः ४६ वृषभस्तुमहाराजबहुधापरिरक्षितः अमुच्यतमहारौद्रात्तस्माद्वीरावकर्तनात् ४७ ता
न्सर्वान्पतितान्दृष्ट्वाभीतोदुर्योधनस्तव अभ्यभाषतसंक्रुद्धोराक्षसंघोरदर्शनं ४८ आर्ष्यशृंगिंमहेष्वासंमायाविनमरिंदमं
वैरिणंभीमसेनस्यपूर्वंबकवधेनवै ४९ पश्यवीरयथाह्येषफाल्गुनस्यसुतोबली मायावीविप्रियंघोरमकार्षीन्मेबलक्ष
यं ५० त्वंचकामगमस्तातमायास्त्रेचविशारदः कृतवैरश्चपार्थेनतस्मादेनंरणेजहि ५१ बाढमित्येवमुक्त्वातुराक्षसोघो
रदर्शनः प्रययौसिंहनादेनयत्रार्जुनसुतोयुवा ५२ स्वारूढैर्युद्धकुशलैर्विमलप्रासयोधिभिः वीरैःप्रहारिभिर्युक्तैःस्वैर
नीकैःसमावृतः ५३ हतशेषैर्महाराजद्विसाहस्रैर्हयोत्तमैः निहंतुकामःसमरेइरावंतंमहाबलं ५४ इरावानपिसंक्रुद्धस्त्व
रमाणःपराक्रमी हंतुकामममित्रघ्नोराक्षसंप्रत्यवारयत् ५५ तमापतंतंसंप्रेक्ष्यराक्षसःसुमहाबलः त्वरमाणस्ततोमायां
प्रयोक्तुमुपचक्रमे ५६ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६

५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ ६७ ६८ ६९ ७०

तेनमायामयाःसृष्टाहयास्तावंतएवहि आरूढाराक्षसैर्घोरैःशूलपट्टिशपाणिभिः ५७ तेसंरब्धाःसमागम्यद्विसाहस्राःप्रहारिणः अचिराद्गमयामासुःप्रेतलोकंपरस्परं ५८ तस्मिंस्तुनिहतेसैन्येतावुभौयुद्धदुर्मदौ संग्रामेसमतिष्ठेतांयथावैवृत्रवासवौ ५९ आद्रवंतमभिप्रेक्ष्यराक्षसंयुद्धदुर्मदं इरावान्क्रोधसंरब्धःप्रत्यधावन्महाबलः ६० समभ्याशगतस्याजौतस्यखड्गेनदुर्मतेः चिच्छेदकार्मुकंदीप्तंशरान्वैपंचपंचधा ६१ सनिकृत्तंधनुर्दृष्ट्वाखंजवेनसमाविशत् इरावंतमभिक्रुद्धंमोहयन्मायया तदा ६२ ततोंतरिक्षमुत्पत्यइरावानपिराक्षसं विमोहयित्वामायाभिस्तस्यगात्राणिसंयुगे ६३ चिच्छेदसर्वधर्मज्ञःकामरूपोदुरासदः तथासराक्षसश्रेष्ठःकृत्तःकृत्तःपुनःपुनः ६४ संबभूवमहाराजसमवापचयौवनं मायाहिसहजातेषांवयोरूपंचकामजं ६५ एवंतद्राक्षसस्यांगंछिन्नंछिन्नमजायत इरावानपिराजेंद्रराक्षसंतंमहाबलं ६६ परश्वधेनतीक्ष्णेनचिच्छेदचपुनःपुनः सतेनबलिनावीरश्छिद्यमानइवद्रुमः ६७ राक्षसोव्यनदद्घोरंसशब्दस्तुमुलोभवत् परश्वधक्षतंरक्षःसुस्रावरुधिरंबहु ६८ ततश्चुक्रोधबलवांश्चक्रेवेगंचसंयुगे आर्ष्यशृंगिस्तथादृष्ट्वासमरेशत्रुमूर्जितं ६९ कृत्वाघोरंमहद्रूपंविग्रहीतुंप्रचक्रमे अर्जुनस्यसुतंवीरमिरावंतंयशस्विनं ७० संग्रामशिरसोमध्येसर्वेषांतत्रपश्यतां तांदृष्ट्वातादृशीं मायांराक्षसस्यदुरात्मनः ७१ इरावानपिसंक्रुद्धोमायांस्रष्टुंप्रचक्रमे तस्यक्रोधाभिभूतस्यसंयुगेष्वनिवर्तिनः ७२ योन्वयोमातृकस्तस्यसएनमभिपेदिवान् सनागैर्बहुशोराजन्सर्वतःसंवृतोरणे ७३ दधारसुमहद्रूपमनंतइवभोगवान् ततोबहुविधैर्नागैश्छादयामासराक्षसं ७४ छाद्यमानस्तुनागैःसध्यात्वाराक्षसपुंगवः सौपर्णरूपमास्थायभक्षयामासपन्नगान् ७५ माययाभक्षितेतस्मिन्नन्वयेतस्यमातृके विमोहितमिरावंतंन्यहनद्राक्षसोसिना ७६ सकुंडलंसमुकुटंपद्मेंदुसदृशप्रभं इरावतःशिरोरक्षःपातयामासभूतले ७७ तस्मिंस्तुनिहितेवीरेराक्षसेनार्जुनात्मजे विशोकाःसमपद्यंत धार्तराष्ट्राःसराजकाः ७८ तस्मिन्महतिसंग्रामेतादृशेभैरवेपुनः महान्व्यतिकरोघोरःसेनयोःसमपद्यत ७९ गजाहयाःपदाताश्चविमिश्रादंतिभिर्हताः रथाश्वादंतिनश्चैवपत्तिभिस्तत्रसूदिताः ८० तथापत्तिरथौघाश्चहयाश्चबहवोरणे रथिभिर्निहताराजंस्तवतेषांचसंकुले ८१ ७१ ७२ ७३ ७४ ७५ ७६ ७७ ७८ ७९ ८० ८१

अजानन्नर्जुनश्चापिनिहतंपुत्रमौरसं जघानसमरेशूरान्राज्ञस्तान्भीष्मरक्षिणः ८२ तथैवतावकाराजन्सृंजयाश्चसहस्रशः जुह्वंतःसमरेप्राणान्निजघ्नुरितरेतरं ८३ मुक्तकेशाविकवचाविरथाश्छिन्नकार्मुकाः बाहुभिःसमयुध्यंतसमवेताःपरस्परं ८४ तथामर्मातिगैर्भीष्मोनिजघानमहारथान् कंपयन्समरेसेनांपांडवानांपरंतपः ८५ तेनयौधिष्ठिरेसैन्येबहवोमानवाहताः दंतिनःसादिनश्चैवरथिनोथहयास्तथा ८६ तत्रभारतभीष्मस्यरणेदृष्ट्वापराक्रमं अत्यद्भुतमपश्यामशक्रस्येवपराक्रमं ८७ तथैवभीमसेनस्यपार्षतस्यचभारत रौद्रमासीद्रणेयुद्धंसात्यकस्यचधन्विनः ८८ दृष्ट्वाद्रोणस्यविक्रांतंपांडवान्भयमाविशत् एकएवरणेशक्तोनिहंतुंसर्वसैनिकान् ८९ किंपुनःपृथिवीशूरैर्योधव्रातैःसमावृतः इत्यब्रुवन्महाराजरणेद्रोणेनपीडिताः ९० वर्तमानेतथारौद्रेसंग्रामेभरतर्षभ उभयोःसेनयोःशूरानामृष्यंतपरस्परं ९१ आविष्टाइवयुध्यंते-रक्षोभूतैर्महाबलाः तावकाःपांडवेयाश्चसंरब्धास्तातधन्विनः ९२ नस्मपश्यामहेकंचित्प्राणान्यःपरिरक्षति संग्रामेदैत्यसंकाशेतस्मिन्वीरवरक्षये ९३ इतिश्रीमन्महाभारतेभीष्मप॰ इरावद्वधेएकनवतितमोऽध्यायः ९१

धृतराष्ट्रउवाच इरावंतंतुनिहतंदृष्ट्वापार्थामहारथाः संग्रामेकिमकुर्वंततन्ममाचक्ष्वसंजय १ संजयउ॰ इरावंतंतुनिहतंसंग्रामेवीक्ष्यराक्षसः व्यनदत्सुमहानादंभैमसेनिर्घटोत्कचः २ नदतस्तस्यशब्देनपृथिवीसागरांबरा सपर्वतवनाराजंश्चचालसुभृशंतदा ३ अंतरिक्षंदिशश्चैवसर्वाश्चप्रदिशस्तथा तंश्रुत्वासुमहानादंतवसैन्यस्यभारत ४ ऊरुस्तंभःसमभवद्वेपथुःस्वेदएवच सर्वएवमहाराजतावकादीनचेतसः ५ सर्वतःसमचेष्टंतसिंहभीतागजाइव नर्दित्वासुमहानादंनिर्घातमिवराक्षसः ६ ज्वलितंशूलमुद्यम्यरूपंकृत्वाविभीषणं नानारूपप्रहरणैर्वृतोराक्षसपुंगवैः ७ आजघानसुसंक्रुद्धःकालांतकयमोपमः तमापतंतंसंप्रेक्ष्यसंक्रुद्धंभीमदर्शनं ८ स्वबलंचभयात्तस्यप्रायशोविमुखीकृतं ततोदुर्योधनोराजाघटोत्कचमुपाद्रवत् ९ प्रगृह्यविपुलंचापंसिंहवद्विनदन्मुहुः पृष्ठतोनुययौचैनंस्रवद्भिःपर्वतोपमैः १० कुंजरैर्दशसाहस्रैर्वंगानामधिपःस्वयं तमापतंतंसंप्रेक्ष्यगजानीकेनसंवृतं ११ पुत्रंतवमहाराजत्तुकोपसनिशाचरः ततःप्रववृतेयुद्धंतुमुलंलोमहर्षणं १२

पताकाध्वजवृक्षाढ्या मर्त्यकूलापहारिणी क्रव्यादहंससंकीर्णा यमराष्ट्रविवर्द्धिनी ३६ तांनदींक्षत्रियाः शूरा रथनागहयप्लवैः
प्रतेरुर्बहवोराजन्भयंत्यक्त्वामहारथाः ३७ अपोवाहरणेभीरून्कश्मलेनाभिसंवृतान् यथावैतरणीप्रेतान्प्रेतराजपुरंप्रति
३८ प्राक्रोशन्क्षत्रियास्तत्रदृष्ट्वातद्वैशसंमहत् दुर्योधनापराधेनगच्छंतिक्षत्रियाःक्षयं ३९ गुणवत्सुकथंद्वेषंधृतराष्ट्रोजने-
श्वरः कृतवान्पांडुपुत्रेषुपापात्मालोभमोहितः ४० एवंबहुविधावाचः श्रूयंतेस्मपरस्परं पांडवस्तवसंयुक्ताः पुत्राणांतसुदा
रुणाः ४१ तानिशम्यततोवाचः सर्वयोधैरुदाहृताः आगस्कृत्सर्वलोकस्यपुत्रोदुर्योधनस्तव ४२ भीष्मंद्रोणंकृपंचैवशल्यं
चोवाचभारत युध्यध्वमनहंकाराः किंचिरंकुरुथेतिच ४३ ततः प्रववृतेयुद्धंकुरूणांपांडवैःसह अक्षद्यूतकृतंराजन्सु-
घोरंवैशसंतदा ४४ यत्पुरानिगृण्हासिवार्यमाणोमहात्मभिः वैचित्रवीर्यतस्येदंफलंपश्यसुदारुणं ४५ नहिपांडुसु-
ताराजन्ससैन्याः सपदानुगाः रक्षंतिसमरेप्राणान्कौरवावापिसंयुगे ४६ एतस्मात्कारणाद्घोरोवर्ततेस्वजनक्षयः दैवाद्वा
पुरुषव्याघ्रतवचापनयान्नृप ४७ इतिश्रीमन्महाभा॰ भीष्मप॰ संकुलयुद्धेचतुरधिकशततमोऽध्यायः १०४
संजयउवाच अर्जुनस्तान्नरव्याघ्रोसुशर्मानुचरान्नृपान् अनयत्प्रेतराजस्यसदनंसायकैःशितैः १ सुशर्माचततोबा-
णैः पार्थंविव्याधसंयुगे वासुदेवंचसप्तत्यापार्थंचनवभिःपुनः २ तान्निवार्यशरौघेणशक्रसूनुर्महारथः सुशर्मणोरणे-
योधान्प्राहिणोद्यमसादनं ३ तेवध्यमानाः पार्थेनकालेनेवयुगक्षये व्यद्रवंतरणेराजन्भयेजातेमहारथाः ४ उत्सृज्य
तुरगान्केचिद्रथान्केचिच्चमारिष गजानन्येसमुत्सृज्यप्राद्रवंतदिशोदश ५ अपरेतुनदादायवाजिनागरथान्रणे त्वरया
परयायुक्ताः प्राद्रवंतविशांपते ६ पादाताश्चापिशस्त्राणिसमुत्सृज्यमहारणे निरपेक्षास्मधावंततेनतेनस्मभारत ७
वार्यमाणाः सुबहुशस्त्रैगर्तेनसुशर्मणा तथान्यैः पार्थिवश्रेष्ठैर्नव्यतिष्ठंतसंयुगे ८ तद्बलंप्रद्रुतंदृष्ट्वापुत्रोदुर्योधनस्तव
पुरस्कृत्यरणेभीष्मंसर्वसैन्यपुरस्कृतः ९ सर्वोद्योगेनमहताधनंजयमुपाद्रवत् त्रिगर्ताधिपतेरर्थेजीवितस्यविशांपते
१० सएकः समरेतस्थौकिरन्बहुविधाञ्छरान् भ्रातृभिः सहितः सर्वैः शेषाहिप्रद्रुतानराः ११

तथैवपांडवाराजन्सर्वेंद्योगेनदंशिताः प्रययुःफाल्गुनार्थाययत्रभीष्मोव्यतिष्ठत १२ ज्ञायमानारणेवीर्यंघोरंगांडीवधन्वनः हाहा
कारकृतोत्साहाभीष्मंजग्मुःसमंततः १३ ततस्तालध्वजःशूरःपांडवानांवरूथिनीं छादयामाससमरेशरैःसन्नतपर्वभिः १४
एकीभूतास्ततःसर्वेकुरवःसहपांडवैः अयुध्यंतमहाराजमध्यंप्राप्तेदिवाकरे १५ सात्यकिःकृतवर्माणंविद्ध्वापंचभिराशुगैः अ
तिष्ठदाहवेशूरःकिरन्बाणान्सहस्रशः १६ तथैवद्रुपदोराजाद्रोणंविद्ध्वाशितैःशरैः पुनर्विव्याधसप्तत्यासारथिंचास्यपंचभिः १७
भीमसेनस्तुराजानंबाल्हीकंप्रपितामहं विद्ध्वानदन्महानादंशार्दूलइवकानने १८ आर्जुनिश्चित्रसेनेनविद्धोबहुभिराशुगैः
चित्रसेनंत्रिभिर्बाणैर्विव्याधसमरेभृशं १९ समागतौतौतुरणेमहामात्रौव्यरोचतां यथादिविमहाघोरौराजन्बुधशनैश्चरौ
२० तस्याश्वांश्चतुरोहत्वासूतंचनवभिःशरैः ननादबलवन्नादंसौभद्रःपरवीरहा २१ हताश्वात्तुरथात्तूर्णंसोवप्लुत्यमहार-
थः आरुरोहरथंतूर्णंदुर्मुखस्यविशांपते २२ द्रोणश्चद्रुपदंभित्वाशरैःसन्नतपर्वभिः सारथिंचास्यविव्याधत्वरमाणःपराक्रमी २३
पीड्यमानस्ततोराजाद्रुपदोवाहिनीमुखे अपायाज्जवनैरश्वैःपूर्ववैरमनुस्मरन् २४ भीमसेनस्तुराजानंमुहूर्तादिवबाल्हिकं व्य
श्वसूतरथंचक्रेसर्वसैन्यस्यपश्यतः २५ ससंभ्रमोमहाराजसंशयंपरमंगतः अवप्लुत्यततोवाहाद्बाल्हीकःपुरुषोत्तमः २६ आ
रुरोहरथंतूर्णंलक्ष्मणस्यमहारणे सात्यकिःकृतवर्माणंवारयित्वामहारणे २७ शरैर्बहुविधैराजन्नाससादपितामहं सविद्ध्वा
भारतंषष्ट्यानिशितैर्लोमवाहिभिः २८ नृत्यन्निवरथोपस्थेविधुन्वानोमहद्धनुः तस्यायसींमहाशक्तिंचिक्षेपाथपितामहः
२९ हेमचित्रांमहावेगांनागकन्योपमांशुभां तामापतंतींसहसामृत्युकल्पांसुदुर्जयां ३० व्यंसयामासवार्ष्णेयोलाघवेनमहाय-
शाः अनासाद्यतुवार्ष्णेयंशक्तिःपरमदारुणा ३१ न्यपतद्धरणीपृष्ठेमहोल्केवमहाप्रभा वार्ष्णेयस्तुततोराजन्स्वांशक्तिंकनकप्रभां
३२ वेगवद्गृह्यचिक्षेपपितामहरथंप्रति वार्ष्णेयभुजवेगेनप्रणुन्नासामहाहवे ३३ अभिदुद्रावदवेगेनकालरात्रिर्यथानरं तामा
पतंतींसहसाद्विधाचिच्छेदभारत ३४ क्षुरप्राभ्यांसुतीक्ष्णाभ्यांसाव्यशीर्यतमेदिनीं छित्वाशक्तिंतुगांगेयःसात्यकिंनवभिःश
रैः ३५ आजघानोरसिक्रुद्धःप्रहसंश्छत्रुकर्शनः ततःसरथनागाश्वाःपांडवाःपांडुपूर्वज ३६ ६९ ६९ ६९

परिवव्रूरणेभीष्मंमाधवत्राणकारणात् ततःप्रववृतेयुद्धंतुमुलंलोमहर्षणं पांडवानांकुरूणांचसमरेविजयैषिणां ३७ इति-
श्रीमन्महाभा० भीष्म० पंचाधिकशततमोध्यायः १०५ संजयउवाच दृष्ट्वाभीष्मंरणेक्रुद्धंपांडवैरभिसंवृतं यथामेघैर्महाराज
तपांतेदिविभास्करं १ दुर्योधनोमहाराजदुःशासनमभाषत एषशूरोमहेष्वासोभीष्मःशूरनिषूदनः २ छादितःपांडवैःशूरैःस-
मंताद्भरतर्षभ तस्यकार्यंत्वयावीररक्षणंसुमहात्मनः ३ रक्ष्यमाणोहिसमरेभीष्मोस्माकंपितामहः निहन्यात्समरेयत्तान्पांचाला-
न्पांडवैःसह ४ तत्रकार्यतमंमन्येभीष्मस्यैवाभिरक्षणं गोप्ताह्येषमहेष्वासोभीष्मोस्माकंमहाव्रतः ५ सभवान्सर्वसैन्येनपरिवार्य
पितामहं समरेकर्मकुर्वाणंदुष्करंपरिरक्षतु ६ सएवमुक्तःसमरेपुत्रोदुःशासनस्तव परिवार्यस्थितोभीष्मंसैन्येनमहतावृतः ७
ततःशतसहस्राणांहयानांसुबलात्मजः विमलप्रासहस्तानामृष्टितोमरधारिणां ८ दर्पितानांसुवेशानांबलस्थानांपताकिनां शि
क्षितैर्युद्धकुशलैरुपेतानांनरोत्तमैः ९ नकुलंसहदेवंचधर्मराजंचपांडवं न्यवारयन्नरश्रेष्ठान्परिवार्यसमंततः १० ततोदुर्योधनो
राजाशूराणांहयसादिनां अयुतंप्रेषयामासपांडवानांमहारणे ११ तैःप्रविष्टैर्महावेगैर्गरुत्मद्भिरिवाहवे खुराहताधराराजंश्च-
कंपेचननादच १२ खुरशब्दश्चसुमहान्वाजिनांशुश्रुवेतदा महावंशवनस्येवदह्यमानस्यपर्वते १३ उत्पतद्भिश्चतैस्तत्रसमुद्भू-
तंमहद्रजः दिवाकररथंप्राप्यच्छादयामासभास्करं १४ वेगवद्भिर्हयैस्तैस्तुक्षोभितापांडवीचमूः निपतद्भिर्महावेगैर्हंसैरिव
महत्सरः १५ हेषतांचैवशब्देननप्राज्ञायतकिंचन ततोयुधिष्ठिरोराजामाद्रीपुत्रौचपांडवौ १६ प्रत्यघ्नंस्तरसावेगंसमरेहयसा
दिनां उद्वृत्तस्यमहाराजप्रावृट्कालेतिपूर्यतः १७ पौर्णमास्यामंबुवेगंयथावेलामहोदधेः ततस्तेरथिनोराजञ्छरैःसन्नतप-
र्वभिः १८ न्यकृंतन्नुत्तमांगानिशरीरेणहयसादिनां तेनिपेतुर्महाराजनिहतादृढधन्वभिः १९ नागैरिवमहानागायथावद्गि
रिगह्वरे तेपिप्रासैःसुनिशितैःशरैःसन्नतपर्वभिः २० न्यकृंतन्नुत्तमांगानिविचरंतोदिशोदिश अथाहताहयारोहाऋष्टि-
भिर्भरतर्षभ २१ अत्यजन्नुत्तमांगानिफलानीवमहाद्रुमाः ससादिनोहयाराजंस्तत्रतत्रनिषूदिताः २२ पतिताःपात्यमानाश्चप्र
त्यदृश्यंतसर्वशः वध्यमानाहयाश्चैवप्राद्रवंतभयार्दिताः २३ यथासिंहंसमासाद्यमृगाःप्राणपरायणाः पांडवाश्चमहाराजजित्वाशत्रू
न्महामृधे २४

दध्मुःशंखांश्चभेरीश्चनाडयामासुराहवे ततोदुर्योधनोदीनोदृष्ट्वासैन्यंपराजितं २५ अब्रवीद्भरतश्रेष्ठमद्रराजमिदंवचः एषपां
डुसुतोज्येष्ठोयमाभ्यांसहितोरणे २६ पश्यतांवोमहाबाहोसेनांद्रावयतिप्रभो तंवारयमहाबाहोवेलेवमकरालयं २७ त्वंहिसं
श्रूयसेत्यर्थमसह्यबलविक्रमः पुत्रस्यतवतद्वाक्यंश्रुत्वाशल्यःप्रतापवान् २८ सययौरथवंशेनयत्रराजायुधिष्ठिरः तदापतद्वै
सहसाशल्यस्यसुमहद्बलं २९ महौघवेगंसमरेवारयामासपांडवः मद्रराजंचसमरेधर्मराजोमहारथः ३० दशभिःसायकै
स्तूर्णमाजघानस्तनांतरे नकुलःसहदेवश्चतंसप्तभिरजिह्मगैः ३१ मद्रराजोपितान्सर्वानाजघानत्रिभिस्त्रिभिः युधिष्ठिरंपुनः
षष्ट्याविव्याधनिशितैःशरैः ३२ माद्रीपुत्रौचसंभ्रांतौद्वाभ्यांद्वाभ्यामताडयत् ततोभीमोमहाबाहुर्दृष्ट्वाराजानमाहवे ३३ मद्र
राजरथंप्राप्तंमृत्योरास्यगतंयथा अभ्यपद्यतसंग्रामेयुधिष्ठिरममित्रजित् ३४ ततोयुद्धंमहाघोरंप्रावर्ततसुदारुणं अपरांदि
शमास्थायपतमानेदिवाकरे ३५ इतिश्रीमन्महाभा॰ भी॰ शल्यधर्मसमागमेषडधिकशततमोऽध्यायः १०६ संज
यउवाच ततःपितातवक्रुद्धोनिशितैःसायकोत्तमैः आजघानरणेपार्थान्सहसेनान्समंततः १ भीमंद्वादशभिर्विद्ध्वासात्यकिं
नवभिःशरैः नकुलंचत्रिभिर्विद्ध्वासहदेवंचसप्तभिः २ युधिष्ठिरंद्वादशभिर्बाह्वोरुरसिचार्पयत् धृष्टद्युम्नंततोविद्ध्वाननना-
दसुमहाबलः ३ तंद्वादशार्द्धैर्नकुलोमाधवश्चत्रिभिःशरैः धृष्टद्युम्नश्चसप्तत्याभीमसेनश्चसप्तभिः ४ युधिष्ठिरोद्वादशभिः
प्रत्यविध्यत्पितामहं द्रोणस्तुसात्यकिंविद्ध्वाभीमसेनमविध्यत ५ एकैकंपंचभिर्बाणैर्यमदंडोपमैःशितैः तौचतंप्रतिविव्यधे
तांत्रिभिस्त्रिभिरजिह्मगैः ६ तोत्त्रैरिवमहानागंद्रोणंब्राह्मणपुंगवं सौवीराःकितवाःप्राच्याःप्रतीच्योदीच्यमालवाः ७ अ
भीषाहाःशूरसेनाःशिवयोथवशातयः संग्रामेनाजहुर्भीष्मंवध्यमानाःशितैःशरैः ८ तथैवान्येमहीपालानानादेशसमागताः
पांडवानभ्यवर्तंतविविधायुधपाणयः ९ तथैवपांडवाराजन्परिवव्रुःपितामहं ससमंतात्परिवृतोरथौघैरपराजितः १० गह
नेग्निरिवोत्सृष्टःप्रजज्वालदहन्परान् रथाग्न्यगारश्चापार्चिरसिशक्तिगदेंधनः ११ शरस्फुलिंगोभीष्माग्निर्ददाहक्षत्रियर्षभा
न् सुवर्णपुंखैरिषुभिर्गार्द्धपक्षैःसुतेजनैः १२ कर्णिनालीकनाराचैश्छादयामासतद्बलं अपातयद्ध्वजांश्चैवरथिनश्चाशितैःशरैः १३

१४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७

मुंडतालवनानीवचकारसरथव्रजान् निर्मनुष्यान्रथान्राजन्गजानश्वांश्चसंयुगे १४ अकरोत्स महाबाहुःसर्वशस्त्रभृतांवरः तस्य
ज्यातलनिर्घोषंविस्फूर्जितमिवाशनेः १५ निशम्यसर्वभूतानिसमकंपंतभारत अमोघाह्यपतन्बाणाःपितुस्तेभरतर्षभ १६ नासज्जंत
तनुत्रेषुभीष्मचापच्युताःशराः हतवीरान्रथान्राजन्संयुक्तान्जवनैर्हयैः १७ अपश्यामम्हाराजक्रियमाणान्रणाजिरे चेदिकाशि
करूषाणांसहस्राणिचतुर्दश १८ महारथाःसमाख्याताःकुलपुत्रास्तनुत्यजः अपरावर्तिनःसर्वेसुवर्णविकृतध्वजाः १९ संग्रा-
मेभीष्ममासाद्यव्यादितास्यमिवांतकं निमग्नाःपरलोकायसवाजिरथकुंजराः २० भग्नाक्षोपस्करान्कांश्चिद्भग्नचक्रांश्चभारत
अपश्याममहाराजशतशोथसहस्रशः २१ सवरूथैरथैर्भग्नैरथिभिश्चनिपातितैः शरैःसुकवचैश्छिन्नैःपट्टिशैश्चविशांपते २२
गदाभिर्भिंडिपालैश्चनिशितैश्चशिलीमुखैः अनुकर्षैरुपासंगैश्चक्रैर्भग्नैश्चमारिष २३ बाहुभिःकार्मुकैःखड्गैःशिरोभिश्चसकुंडलैः
तलत्रैरंगुलित्रैश्चध्वजैश्चविनिपातितैः २४ चापैश्चबहुधाछिन्नैःसमास्तीर्यतमेदिनी हतारोहागजाराजन्हयाश्चहतसादिनः २५
न्यपतंतगतप्राणाःशतशोथसहस्रशः यतमानाश्चतेवीराद्रवमाणान्महारथान् २६ नाशक्नुवन्वारयितुंभीष्मबाणप्रपीडितान्
महेंद्रसमवीर्येणवध्यमानामहाचमूः २७ अभज्यतमहाराजनचद्वौसहधावतः आविद्धरथनागाश्वंपतितध्वजसंकुलं २८
अनीकंपांडुपुत्राणांहाहाभूतमचेतनं जघानात्रपितापुत्रंपुत्रश्चपितरंतथा २९ प्रियंसखायंचाक्रंदेसखादैवबलात्कृतः विमुक्त
कवचानन्येपांडुपुत्रस्यसैनिकाः ३० प्रकीर्यकेशान्धावंतःप्रत्यदृश्यंतसर्वशः तद्गोकुलमिवोद्भ्रांतमुद्भ्रांतरथकूबरं ३१ ददर्शपांडुपु
त्रस्यसैन्यमार्तस्वरंतदा प्रभज्यमानंसैन्यंतुदृष्ट्वायादवनंदनः ३२ उवाचपार्थंबीभत्सुंनिगृह्यरथमुत्तमं अयंसकालःसंप्राप्तः
पार्थयःकांक्षितस्तव ३३ प्रहरास्मिन्नरव्याघ्रनचेन्मोहाद्विमुह्यसि यत्पुराकथितंवीरराज्ञांतेषांसमागमे ३४ विराटनगरेता
तसंजयस्यसमीपतः भीष्मद्रोणमुखान्सर्वान्धार्तराष्ट्रस्यसैनिकान् ३५ सानुबंधान्हनिष्यामियेमांयोत्स्यंतिसंगरे इतितत्कु-
रुकौंतेयसत्यंवाक्यमरिंदम ३६ क्षत्रधर्ममनुस्मृत्ययुध्यस्वविगतज्वरः इत्युक्तोवासुदेवेनतिर्यग्दृष्टिरधोमुखः ३७ अकामइ
वबीभत्सुरिदंवचनमब्रवीत् अवध्यानांवधंकृत्वाराज्यंवानरकोत्तरं ३८ दुःखानिवनवासेवाकिंनुमेस्यात्कृतंभवेत् चोदयाश्वा
न्यतोभीष्मःकरिष्येवचनंतव ३९

२८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९

पातयिष्यामिदुर्द्धर्षंभीष्मंकुरुपितामहं सचाश्वान्रजतप्रख्यांश्चोदयामाससमाधवः ४० यतोभीष्मस्ततोराजन्दुष्प्रेक्ष्योरश्मिवानि-
व ततस्तत्पुनराववृत्तंयुधिष्ठिरबलंमहत् ४१ दृष्ट्वापार्थंमहाबाहुंभीष्मायोद्यतमाहवे ततोभीष्मःकुरुश्रेष्ठःसिंहवद्विनदन्मुहुः ४२
धनंजयरथंशीघ्रंशरवर्षैरवाकिरत् क्षणेनसरथस्तस्यसहयःसहसारथिः ४३ शरवर्षेणमहतानप्राज्ञायतभारत वासुदेवस्त्व-
संभ्रांतोधैर्यमास्थायसत्वरः ४४ चोदयामासतानश्वान्वितुन्नान्भीष्मसायकैः ततःपार्थोधनुर्गृह्यदिव्यंजलदनिस्वनं ४५ पा-
तयामासभीष्मस्यधनुश्छित्वाशितैःशरैः सच्छिन्नधन्वाकौरव्यःपुनरन्यन्महद्धनुः ४६ निमेषांतरमात्रेणसज्जंचक्रेपितातव च
कर्षचततोदोर्भ्यांधनुर्जलदनिस्वनं ४७ अथास्यतदपिक्रुद्धश्चिच्छेदधनुरर्जुनः तस्यतत्पूजयामासलाघवंशांतनोःसुतः ४८
साधुसाधुमहाबाहोसाधुकुंतीसुतेतिच समाभाष्यैवमपरंप्रगृह्यरुचिरंधनुः ४९ मुमोचसमरेभीष्मःशरान्पार्थरथंप्रति
अदर्शयद्वासुदेवोहययानेपरंबलं ५० मोघीकुर्वंश्छरांस्तस्यमंडलानिनिदर्शयन् शुशुभातेनरव्याघ्रौतौभीष्मशरविक्षतौ ५१
गोवृषाविवसंरब्धौविषाणोल्लिखितांकितौ वासुदेवस्तुसंप्रेक्ष्यपार्थस्यमृदुयुद्धतां ५२ भीष्मंचशरवर्षाणिसृजंतमनिशंयुधि
प्रतपंतमिवादित्यंमध्यमासाद्यसेनयोः ५३ वरान्वरान्विनिघ्नंतंपांडुपुत्रस्यसैनिकान् युगांतमिवकुर्वाणंभीष्मंयौधिष्ठिरेब-
ले ५४ नामृष्यतमहाबाहुर्माधवःपरवीरहा उत्सृज्यरजतप्रख्यान्हयान्पार्थस्यमारिष ५५ वासुदेवस्ततोयोगीप्रचस्कंद
महारथात् अभिदुद्रावभीष्मंसभुजप्रहरणोबली ५६ प्रतोदपाणिस्तेजस्वीसिंहवद्विनदन्मुहुः दारयन्निवपद्भ्यांसजगतींजग
दीश्वरः ५७ क्रोधताम्रेक्षणःकृष्णोजिघांसुरमितद्युतिः ग्रसन्निवचेतांसितावकानांमहाहवे ५८ दृष्ट्वामाधवमाक्रंदेभी-
ष्मायोद्यतमंतिके हतोभीष्मोहतोभीष्मस्तत्रतत्रवचोमहत् ५९ अश्रूयतमहाराजवासुदेवभयात्तदा पीतकौशेयसंवीतो
मणिश्यामोजनार्दनः ६० शुशुभेविद्रवन्भीष्मंविद्युन्मालीयथांबुदः ससिंहइवमातंगंयूथर्षभइवर्षभं ६१ अभिदुद्राव-
वेगेनविनदन्यादवर्षभः तमापतंतंसंप्रेक्ष्यपुंडरीकाक्षमाहवे ६२ असंभ्रमंरणेभीष्मोविचकर्षमहद्धनुः उवाचचैवगोविं-
दमसंभ्रांतेनचेतसा ६३ एह्येहिपुंडरीकाक्षदेवदेवनमोस्तुते मामद्यसात्वतश्रेष्ठपातयस्वमहाहवे ६४ ६५ ६५

६५ ६६ ६७ ६८ ६९ ७० ७१ ७२ ७३ ७४ ७५ ७६ ७७ ७८

त्वयाहिदेवसंग्रामेहतस्यापिममानघ श्रेयएवपरंकृष्णलोकेभवतिसर्वतः ६५ संभावितोस्मिगोविंदत्रैलोक्येनाद्यसंयुगे प्रहर
स्वयथेष्टंवैदासोस्मितवचानघ ६६ अन्वगेवततःपार्थस्समभिद्रुत्यकेशवं निजग्राहमहाबाहुंबाहुभ्यांपरिगृह्यवै ६७ निगृह्य
माणःपार्थेनकृष्णोराजीवलोचनः जगामैवैनमादायवेगेनपुरुषोत्तमः ६८ पार्थस्तुविष्टभ्यबलाच्चरणौपरवीरहा निजग्राह-
हृषीकेशंकथंचिद्दशमेपदे ६९ ततएवसुवाचार्तःक्रोधपर्याकुलेक्षणं निश्वसंतंयथानागमर्जुनःप्रणयात्सखा ७० निवर्तस्व-
महाबाहोनानृतंकर्तुमर्हसि यत्त्वयाकथितंपूर्वंनयोत्स्यामीतिकेशव ७१ मिथ्यावादीतिलोकस्त्वांकथयिष्यतिमाधव ममैष
भारःसर्वोहिहनिष्यामिपितामहं ७२ शपेकेशवशस्त्रेणसत्येनसुकृतेनच अंतंयथागमिष्यामिशत्रूणांशत्रुसूदन ७३ अ-
द्यैवपश्यदुर्द्धर्षंपात्यमानंमहारथं तारापतिमिवापूर्णमंतकालेयदृच्छया ७४ माधवस्तुवचःश्रुत्वाफाल्गुनस्यमहात्मनः अ
किंचिदुक्त्वासक्रोधआरुरोहरथंपुनः ७५ तौरथस्थौनरव्याघ्रौभीष्मःशांतनवःपुनः ववर्षशरवर्षेणमेघोवृष्ट्यायथाचलं
७६ प्राणानादत्तयोधानांपितादेवव्रतस्तव गभस्तिभिरिवादित्यस्तेजांसिशिशिरात्यये ७७ यथाकुरूणांसैन्यानिबभंजु
र्युधिपांडवाः तथापांडवसैन्यानिबभंजयुधितेपिता ७८ हतविद्रुतसैन्यास्तुनिरुत्साहाविचेतसः निरीक्षितुंनशेकुस्ते
भीष्ममप्रतिमंरणे ७९ मध्यंगतमिवादित्यंप्रतपंतंस्वतेजसा तेवध्यमानाभीष्मेणशतशोथसहस्रशः ८० वीक्षांचक्रुर्म-
हाराजपांडवाभयपीडिताः तथापांडवसैन्यानिद्रवमाणानिभारत ८१ त्रातारंनाध्यगच्छंतगावःपंकगताइव पिपीलिकाइ
वक्षुण्णादुर्बलाबलिनारणे ८२ महारथंभारतदुःप्रकंपंशरोर्मिणंप्रतपंतंनरेंद्रान् भीष्मंनशेकुःप्रतिवीक्षितुंतेशरार्चिषंसू
र्यमिवातपंतम् ८३ विमृद्नतस्तस्यतुपांडुसेनामस्तंजगामाथसहस्ररश्मिः ततोबलानांश्रमकर्शितानांमनोवहारंप्रतिसंबभूव
८४ इतिश्रीमन्महाभा० भी० नवमदिवसयुद्धसमाप्तिर्नामसप्ताधिकशततमोऽध्यायः १०७ संजयउवाच युध्य
तामेवतेषांतुभास्करेस्तमुपागते संध्यासमभवद्घोरानापश्यामततोरणं १ ततोयुधिष्ठिरोराजासंध्यांसंदृश्यभारत वध्य
मानंचभीष्मेणत्यक्तास्त्रंभयविह्वलं २ स्वसैन्यंचपरावृत्तंपलायनपरायणं भीष्मंचयुधिसंरब्धंपीडयंतंमहारथं ३

७९ ८० ८१ ८२ ८३ ८४ इतिश्रीमन्महाभा० भी० सप्ताधिकशततमोऽध्यायः १०७ १ २ ३

सोमकांश्चजितान्दृष्ट्वानिरुत्साहान्महारथान् चिंतयित्वाततोराजाअवहारमरोचयत् ४ ततोवहारंसैन्यानांचक्रेराजायुधिष्ठिरः
तथैवतवसैन्यानामवहारोह्यभूत्तदा ५ ततोवहारंसैन्यानांकृत्वातत्रमहारथाः न्यविशंतकुरुश्रेष्ठसंग्रामेक्षतविक्षताः ६ भी-
ष्मस्यसमरेकर्मचिंतयानास्तुपांडवाः नालभंतदाशांतिंभीष्मबाणप्रपीडिताः ७ भीष्मोपिसमरेजित्वापांडवान्सहसृंजयान् पूज्य
मानस्तवसुतैर्वंद्यमानश्चभारत ८ न्यविशत्कुरुभिःसार्द्धंहृष्टरूपैःसमंततः ततोरात्रिःसमभवत्सर्वभूतप्रमोदिनी ९ तस्मि
न्रात्रिमुखेघोरेपांडवावृष्णिभिःसह सृंजयाश्चदुराधर्षामंत्रायसमुपाविशन् १० आत्मनिःश्रेयसंसर्वेप्राप्तकालंमहाबलाः मं
त्रयामासुरव्यग्रामंत्रनिश्चयकोविदाः ११ ततोयुधिष्ठिरोराजामंत्रयित्वाचिरंनृप वासुदेवंसमुद्वीक्ष्यवचनंचेदमाददे १२ कृ-
ष्णपश्यमहात्मानंभीष्मंभीमपराक्रमं गजंनलवनानीवविमृद्नंतंबलंमम १३ नचैवैनंमहात्मानमुत्सहामोनिरीक्षितुं लेलिह्य
मानंसैन्येषुप्रवृद्धमिवपावकं १४ यथाघोरोमहानागस्तक्षकोवैविषोल्बणः तथाभीष्मोरणेक्रुद्धस्तीक्ष्णशस्त्रःप्रतापवान् १५
गृहीतचापःसमरेप्रमुंचन्निशितांश्छरान् शक्योजेतुंयमःक्रुद्धोवज्रपाणिश्चदेवराट् १६ वरुणःपाशभृद्वापिसगदोवाधने-
श्वरः नतुभीष्मःसुसंक्रुद्धःशक्योजेतुंमहाहवे १७ सोहमेवंगतेकृष्णनिमग्नःशोकसागरे आत्मनोबुद्धिदौर्बल्याद्भीष्ममा
साद्यसंयुगे १८ वनंयास्यामिदुर्द्धर्षश्रेयोवैतत्रमेगतं नयुद्धंरोचतेकृष्णहंतिभीष्मोहिनःसदा १९ यथाप्रज्वलितंवन्हिंपतं
गःसमभिद्रवन् एकतोमृत्युमभ्येतितथाहंभीष्ममेयिवान् २० क्षयंनीतोस्मिवार्ष्णेयराज्यहेतोःपराक्रमी भ्रातरश्चैवमेंशू
राःसायकैर्भृशपीडिताः २१ मत्कृतेभ्रातृसौहार्दाद्राज्यभ्रष्टावनंगताः परिक्लिष्टातथाकृष्णामत्कृतेमधुसूदन २२ जीवितंबहु
मन्येहंजीवितंह्यद्यदुर्लभं जीवितस्याद्यशेषेणचरिष्येधर्ममुत्तमं २३ यदितेहमनुग्राह्योभ्रातृभिःसहकेशव स्वधर्मस्याविरोधे
नहितंव्याहरकेशव २४ एवंश्रुत्वावचस्तस्यकारुण्याद्बहुविस्तरं प्रत्युवाचततःकृष्णःसांत्वयानोयुधिष्ठिरं २५ धर्मपुत्रविषा
दंत्वंमाकृथाःसत्यसंगरः यस्यतेभ्रातरःशूरादुर्जयाःशत्रुसूदनाः २६ अर्जुनोभीमसेनश्चवाय्वग्निसमतेजसौ माद्रीपुत्रौच
विक्रांतौत्रिदशानामिवेश्वरौ २७ मांवानियुंक्ष्वसौहार्दाद्योत्स्येभीष्मेणपांडव त्वत्प्रयुक्तोमहाराजकिंनकुर्यांमहाहवे २८

२९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२

हनिष्यामिरणेभीष्ममाहूयपुरुषर्षभं पश्यतांधार्तराष्ट्राणांयदिनेच्छतिफाल्गुनः २९ यदिभीष्मेहतेवीरेजयंपश्यसिपांडव हंता
स्म्येकरथेनाद्यकुरुवृद्धंपितामहं ३० पश्यमेविक्रमंराजन्महेंद्रस्येवसंयुगे विमुंचंतंमहास्त्राणिपातयिष्यामितंरथात् ३१ यःश
त्रुःपांडुपुत्राणामच्छत्रुःसनसंशयः मदर्थाभवदीयायेयेमदीयास्तवैवते ३२ तवभ्राताममसखासंबंधीशिष्यएवच मांसान्यु
त्कृत्यदास्यामिफाल्गुनार्थेमहीपते ३३ एषचापिनरव्याघ्रोमत्कृतेजीवितंत्यजेत् एषनःसमयस्तातताराययेमपरस्परं ३४ स
मांनियुंक्ष्वराजेंद्रयथायोद्धाभवाम्यहं प्रतिज्ञातमुपप्लव्येयत्तत्पार्थेनपूर्वतः ३५ घातयिष्यामिगांगेयमितिलोकस्यसन्नि-
धौ परिरक्ष्यमिदंतावद्वचःपार्थस्यधीमतः ३६ अनुज्ञातंतुपार्थेनमयाकार्यंनसंशयः अथवाफाल्गुनस्यैवभारःपरमितोरणे
३७ सहनिष्यतिसंग्रामेभीष्मंपरपुरंजय अशक्यमपिकुर्याद्धिरणेपार्थःसमुद्यतः ३८ त्रिदशान्वासमुद्युक्तान्सहितान्दैत्य
दानवैः निहन्यादर्जुनःसंख्येकिमुभीष्मंनराधिप ३९ विपरीतोमहावीर्योगतसत्वोल्पजीवनः भीष्मःशांतनवोनूनंकर्तव्यं-
नावबुध्यते ४० युधिष्ठिरउवाच एवमेतन्महाबाहोयथावदसिमाधव सर्वेह्येतेनपर्याप्तास्तववेगविधारणे ४१ नियतंसम-
वाप्स्यामिसर्वमेतद्यथेप्सितं यस्यमेपुरुषव्याघ्रभवान्पक्षेव्यवस्थितः ४२ सेंद्रानपिरणेदेवान्जयेयंजयतांवर त्वयानाथेन
गोविंदकिमुभीष्मंमहारथं ४३ नतुत्वामनृतंकर्तुमुत्सहेस्वात्मगौरवात् अयुध्यमानःसाहाय्यंयथोक्तंकुरुमाधव ४४ समय
स्तुकृतःकश्चिन्ममभीष्मेणसंयुगे मंत्रयिष्येतवार्थायनतुयोत्स्येकथंचन ४५ दुर्योधनार्थेयोत्स्यामिसत्यमेतदितिप्रभो
सहिराज्यस्यमेदातामंत्रस्यैवचमाधव ४६ तस्माद्देवव्रतंभूयोवधोपायार्थमात्मनः भवतासहिताःसर्वेप्रयाममधुसूदन ४७
तद्वयंसहितागत्वाभीष्ममाशुनरोत्तमं नचिरात्सर्ववार्ष्णेयमंत्रंपृच्छामकौरवं ४८ सवक्ष्यतिहितंवाक्यंसत्यमस्माञ्जना-
र्दन यथाचवक्ष्यतेकृष्णतथाकर्तास्मिसंयुगे ४९ सनोजयस्यदातास्यान्मंत्रस्यचदृढव्रतः बालाःपित्राविहीनाश्चतेनसं-
वर्द्धितावयं ५० तंचेत्पितामहंवृद्धंहंतुमिच्छामिमाधव पितुःपितरमिष्टंचधिगस्तुक्षत्रजीविकां ५१ संजयउवाच ततो
ब्रवीन्महाराजवार्ष्णेयःकुरुनंदनं रोचतेमेमहाप्राज्ञराजेंद्रतवभाषितं ५२ देवव्रतःकृतीभीष्मःप्रेक्षितेनापिनिर्दहेत् गम्यतां-
सवधोपायंप्रष्टुंसागरगासुतं ५३

४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३

वक्तुमर्हतिसत्यंसत्वयापृष्टोविशेषतः नेवयंतत्रगच्छामः प्रष्टुंकुरुपितामहं ५४ गत्वाशांतनवंवृद्धंमंत्रंपृच्छामभारत सनोदा
स्यतिमंत्रंयंतेनयोत्स्यामहेपरान् ५५ एवमामंत्र्यतेवीराः पांडवाः पांडुपूर्वज जग्मुस्तेसहिताःसर्वेवासुदेवश्चवीर्यवान् ५६
विमुक्तशस्त्रकवचाभीष्मस्यसदनंप्रति प्रविश्यचतदाभीष्मंशिरोभिःप्रणिपेदिरे ५७ पूजयंतोमहाराजपांडवाभरतर्षभं
प्रणम्यशिरसाचैनंभीष्मंशरणमभ्ययुः ५८ तानुवाचमहाबाहुर्भीष्मःकुरुपितामहः स्वागतंतववार्ष्णेयस्वागतंतेधनंजय ५९
स्वागतंधर्मपुत्रायभीमाययमयोस्तथा किंवाकार्यंकरोम्यद्ययुष्माकंप्रीतिवर्द्धनं ६० सर्वात्मनापिकर्तास्मियद्यपिस्यात्सुदुष्करं त
थाब्रुवाणंगांगेयंप्रीतियुक्तंपुनःपुनः ६१ उवाचराजादीनात्माप्रीतियुक्तमिदंवचः कथंजयेमसर्वज्ञकथंराज्यंलभेमहि ६२ प्र-
जानांसंक्षयोनस्यात्कथंतन्मेवदप्रभो भवान्हिनोवधोपायंब्रवीतुस्वयमात्मनः ६३ भवंतंसमरेवीरविषहेमकथंवयं नहितेसू
क्ष्ममप्यस्तिरंध्रंकुरुपितामह ६४ मंडलेनैवधनुषादृश्यसेसंयुगेसदा आददानंसंदधानंविकर्षंतधनुर्नच ६५ पश्यामस्त्वांम
हाबाहोरथेसूर्यमिवापरं रथाश्वनरनागानांहंतारंपरवीरहन् ६६ कोह्युत्सहतेजेतुंत्वांपुमान्भरतर्षभ वर्षताशरवर्षाणि
संयुगेवैशसंकृतं ६७ क्षयंनीताहिपृतनासंयुगेमहतीमम यथायुधिजयेमत्वांयथाराज्यंभृशंमम ६८ ममसैन्यस्यचक्षेमं-
तन्मेब्रूहिपितामह ततोऽब्रवीच्छांतनवःपांडवान्पांडुपूर्वजः ६९ नकथंचनकौंतेयमयिजीवतिसंयुगे जयोभवतिसर्वज्ञसत्य
मेतद्ब्रवीमिते ७० निर्जितेमयियुद्धेनरणेजेष्यथपांडवाः क्षिप्रंमयिप्रहरध्वंयदीच्छथरणेजयं ७१ अनुजानामिवःपार्थाः
प्रहरध्वंयथासुखं एवंहिसुकृतंमन्येभवतांविदितोह्यहं हतेमयिहतंसर्वंतस्मादेवंविधीयतां ७२ युधिष्ठिरउवाच ब्रूहि
तस्मादुपायंनोयथायुद्धेजयेमहि भवंतंसमरेक्रुद्धंदंडहस्तमिवांतकं ७३ शक्योवज्रधरोजेतुंवरुणोथयमस्तथा नभवान्स
मरेशक्यःसेंद्रैरपिसुरासुरैः ७४ भीष्मउवाच सत्यमेतन्महाबाहोयथावदसिपांडव नाहंजेतुंरणेशक्यःसेंद्रैरपिसुरा
सुरैः ७५ आत्तशस्त्रोरणेयत्तोगृहीतवरकार्मुकः ततोमांन्यस्तशस्त्रंतुएतेहन्युर्महारथाः ७६ निक्षिप्तशस्त्रेपतितेविमुक्तकव
चध्वजे द्रवमाणेचभीतेचतवचास्मीतिवादिनि ७७ स्त्रियांस्त्रीनामधेयेचविकलेचैकपुत्रिणि अप्रशस्तेनरेचैवनयुद्धंरोचतेमम

७९ ८० ८१ ८२ ८३ ८४ ८५ ८६ ८७ ८८ ८९ ९० ९१

इमंमेशृणुराजेंद्रसंकल्पंपूर्वचिंतितं अमंगल्यध्वजंदृष्ट्वानयुध्येयंकदाचन ७९ यएषद्रौपदोराजंस्तवसैन्येमहारथः शिखं-
डीसमरामर्षीशूरश्चसमितिंजयः ८० यथाभवच्चस्त्रीपूर्वंपश्चात्पुंस्त्वंसमागतः जानंतिचभवंतोपिसर्वमेतद्यथातथं ८१ अ-
र्जुनःसमरेशूरःपुरस्कृत्यशिखंडिनं मामेवविशिखैस्तीक्ष्णैरभिद्रवतुदंशितः ८२ अमंगल्यध्वजेतस्मिन्स्त्रीपूर्वेचविशेषतः
नप्रहर्तुमभीप्सामिगृहीतेषुःकथंचन ८३ तदंतरंसमासाद्यपांडवोमांधनंजयः शरैर्घातयतुक्षिप्रंसमंताद्भरतर्षभ ८४ न
तंपश्यामिलोकेषुमांहन्याद्यःसमुद्यतं ऋतेकृष्णान्महाभागात्पांडवाद्वाधनंजयात् ८५ एषतस्मात्पुरोधायकंचिदन्यंममाग्र
तः आत्तशस्त्रोरणेयत्तोगृहीतवरकार्मुकः ८६ मांपातयतुबीभत्सुरेवंतवजयोध्रुवं एतत्कुरुष्वकौंतेययथोक्तंममसुव्रत
संग्रामेधार्तराष्ट्रांश्चहन्याःसर्वान्समागतान् ८७ संजयउवाच तेतुज्ञात्वाततःपार्थाजग्मुःस्वशिबिरंप्रति अभिवाद्यम
हात्मानंभीष्मंकुरुपितामहं ८८ तथोक्तवतिगांगेयेपरलोकायदीक्षिते अर्जुनोदुःखसंतप्तःसव्रीडमिदमब्रवीत् ८९ गुरु
णाकुलवृद्धेनकृतप्रज्ञेनधीमता पितामहेनसंग्रामेकथंयोद्धास्मिमाधव ९० क्रीडताहिमयाबाल्येवासुदेवमहामनाः पांसु
रूषितगात्रेणमहात्माकलुषीकृतः ९१ यस्याहमधिरुह्यांकंबालःकिलगदाग्रज तातेत्यवोचंपितरंपितुःपांडोर्महात्मनः ९२
नाहंतातस्तवपितुस्ततोस्मितवभारत इतिमामब्रवीद्बाल्येयःसवध्यःकथंमया ९३ कामंवध्यतुसैन्यंमेनाहंयोत्स्येमहात्म
ना जयोवास्तुवधोवामेकथंवाकृष्णमन्यसे ९४ वासुदेवउवाच प्रतिज्ञायवधंजिष्णोपुराभीष्मस्यसंयुगे क्षत्रधर्म-
स्थितःपार्थकथंनैनंहनिष्यसि ९५ पातयैनंरथात्पार्थक्षत्रियंयुद्धदुर्मदं नाहत्वायुधिगांगेयंविजयस्तेभविष्यति ९६ दृष्ट-
मेतत्पुरादेवैर्गमिष्यतियमक्षयं यद्दृष्टंहिपुरापार्थतत्तथाननदन्यथा ९७ नहिभीष्मंदुराधर्षंव्यात्ताननमिवांतकं त्वदन्यः
शक्नुयाद्योद्धुमपिवज्रधरःस्वयं ९८ जहिभीष्मंस्थिरोभूत्वाशृणुचेदंवचोमम यथोवाचपुराशक्रंमहाबुद्धिर्बृहस्पतिः ९९
ज्यायांसमपिचेद्वृद्धंगुणैरपिसमन्वितं आततायिनमायांतंहन्याद्घातकमात्मनः १०० शाश्वतोयंस्थितोधर्मःक्षत्रियाणांधनंज
य योद्धव्यंरक्षितव्यंचयष्टव्यंचानसूयुभिः १ अर्जुनउवा० शिखंडीनिधनंकृष्णभीष्मस्यभविताध्रुवं दृष्ट्वैवहिसदाभीष्मःपां
चाल्यंविनिवर्तते १०२

९२ ९३ ९४ ९५ ९६ ९७ ९८ ९९ १०० १०१ १०२

तेवयंप्रमुखेनस्यपुरस्कृत्यशिखंडिनं गांगेयंपातयिष्यामउपायेनेतिमेमतिः १०३ अहमन्यान्महेष्वासान्वारयिष्यामिसायकैः शिखंड्यपियुधांश्रेष्ठंभीष्ममेवाभियोधयेत् १०४ श्रुतंहिकुरुमुख्यस्यनाहंहन्यांशिखंडिनं कन्याह्येषापुराभूत्वापुरुषः समपद्यत १०५ इत्येवंनिश्चयंकृत्वापांडवाःसहबांधवाः अनुमान्यमहात्मानंप्रययुर्हृष्टमानसाः १०६ इतिश्रीमन्महाभारते भी॰ नवमदिवसावहारोत्तरमंत्रेअष्टोत्तरशततमोऽध्यायः १०८ धृतराष्ट्रउवाच कथंशिखंडीगांगेयमभ्यवर्ततसंयुगे पांडवांश्चकथंभीष्मस्तन्ममाचक्ष्वसंजय १ संजयउ॰ ततस्तेपांडवाःसर्वेसूर्यस्योदयनंप्रति ताड्यमानासुभेरीषुमृदंगेष्वानकेषुच २ ध्मायत्सुदधिवर्णेषुजलजेषुसमंततः शिखंडिनंपुरस्कृत्यनिर्याताःपांडवायुधि ३ कृत्वाव्यूहंमहाराजसर्वशत्रुनिबर्हणं शिखंडीसर्वसैन्यानामग्रआसीद्विशांपते ४ चक्ररक्षौततस्तस्यभीमसेनधनंजयौ पृष्ठतोद्रौपदेयाश्चसौभद्रश्चैववीर्यवान् ५ सात्यकिश्चेकितानश्चतेषांगोप्तामहारथः धृष्टद्युम्नस्ततःपश्चात्पांचालैरभिरक्षितः ६ ततोयुधिष्ठिरोराजायमाभ्यांसहितःप्रभुः प्रययौसिंहनादेननादयन्भरतर्षभ ७ विराटस्तुततःपश्चात्स्वेनसैन्येनसंवृतः द्रुपदश्चमहाबाहोततःपश्चादुपाद्रवत् ८ कैकेयाभ्रातरःपंचधृष्टकेतुश्चवीर्यवान् जघनंपालयामासुःपांडुसैन्यस्यभारत ९ एवंव्यूह्यमहासैन्यंपांडवास्तववाहिनीं अभ्यद्रवंतसंग्रामेत्यक्त्वाजीवितमात्मनः १० तथैवकुरवोराजन्भीष्मंकृत्वामहारथं अग्रतःसर्वसैन्यानांप्रययुःपांडवान्प्रति ११ पुत्रैस्तवदुराधर्षैरक्षितःसुमहाबलैः ततोद्रोणोमहेष्वासःपुत्रश्चास्यमहाबलः १२ भगदत्तस्ततःपश्चाद्गजानीकेनसंवृतः कृपश्चकृतवर्माचभगदत्तमनुव्रतौ १३ कांबोजराजोबलवांस्ततःपश्चात्सुदक्षिणः मागधश्चजयत्सेनःसौबलश्चबृहद्बलः १४ तथैवान्येमहेष्वासाःसुशर्मप्रमुखान्नृपाः जघनंपालयामासुस्तवसैन्यस्यभारत १५ दिवसेदिवसेप्राप्तेभीष्मःशांतनवोयुधि आसुरानकरोद्व्यूहान्पैशाचानथराक्षसान् १६ ततःप्रववृतेयुद्धंतवतेषांचभारत अन्योन्यंनिघ्नतांराजन्यमराष्ट्रविवर्द्धनं १७ अर्जुनप्रमुखाःपार्थाःपुरस्कृत्यशिखंडिनं भीष्मंयुद्धेभ्यवर्तंतकिरंतोविविधाञ्छरान् १८ तत्रभारतभीमेनताडितास्तावकाःशरैः रुधिरौघपरिक्लिन्नाःपरलोकंययुस्तदा १९ नकुलःसहदेवश्चसात्यकिश्चमहारथः तवसैन्यंसमासाद्यपीडयामासुरोजसा २०

पक्षांतरमाहरथस्येति एकस्यरथस्यपंचाशद्गजाः पंचसहस्रंअश्वाः पंचत्रिंशत्सहस्रंपदातयः परिवारइत्यर्थः २३ अत्ररथादीनांप्राधान्याभिप्रायेणपरिवारा
ल्पबहुत्वेज्ञेये साधारणीतुसंख्याआदिपर्वण्युक्ता एकोरथोगजस्त्वेकोनराःपंचपदातयः त्रयश्चतुरगास्तज्ज्ञैःपत्तिरित्यभिधीयतइत्यादिनातामेवानुसरति सेने
ति तत्रगजानांरथानांचतुल्यसंख्योक्तिः पूर्वोक्तसंख्योपलक्षणार्था तेनपंचविंशतिशतानिमनुष्याःपंचदशशतंतुरगाइत्यपिज्ञेयम् पृतनायांतु पंचसहस्रं
नागास्तावंतोरथाः पंचविंशतिसहस्रंनराःपंचदशसहस्रंअश्वाःवाहिन्यांपंचाशत्सहस्रंनागास्तावंतोरथाः सार्द्धलक्षद्वयंनराः सार्द्धलक्षंअश्वाइतिज्ञेयम् २४

रथस्यनागाःपंचाशन्नागस्यासन्शतंहयाः हयस्यपुरुषाःसप्तभिन्नसंधानकारिणः २३ सेनापंचशतंनागारथास्तावंतएवच
दशसेनाचपृतनापृतनादशवाहिनी २४ सेनाचवाहिनीचैवपृतनाध्वजिनीचमूः अक्षौहिणीतिपर्यायैर्निरुक्ताचवरूथिनी २५ एवं
व्यूढान्यनीकानिकौरवेयेणधीमता अक्षौहिण्योदशैकाचसंख्याताःसप्तचैवह २६ अक्षौहिण्यस्तुसप्तैवपांडवानामभूद्बल
म् अक्षौहिण्योदशैकाचकौरवाणामभूद्बलम् २७ नराणांपंचपंचाशदेषापत्तिर्विधीयते सेनामुखंचतिस्रस्तागुल्मइत्यभि
शब्दितम् २८ त्रयोगुल्मागणस्त्वासीद्गणास्त्वयुतशोभवन् दुर्योधनस्यसेनासुयोत्स्यमानाःप्रहारिणः २९ तत्रदुर्योधनोराजा
शूरान्बुद्धिमतोनरान् प्रसमीक्ष्यमहाबाहुश्चक्रेसेनापतींस्तदा ३० पृथगक्षौहिणीनांचप्रणेतॄन्नरसत्तमान् विधिवत्पूर्वमानीय
पार्थिवानभ्यभाषत ३१ कृपंद्रोणंचशल्यंचसैंधवंचजयद्रथम् सुदक्षिणंचकांबोजंकृतवर्माणमेवच ३२ द्रोणपुत्रंचकर्णंचभू
रिश्रवसमेवच शकुनिंसौबलंचैवबाल्हिकंचमहाबलं ३३ दिवसेदिवसेतेषांप्रतिवेलंचभारत चक्रेसविविधाःपूजाःप्रत्यक्षंच
पुनःपुनः ३४ तथाविनियताःसर्वेयेचतेषांपदानुगाः बभूवुःसैनिकाराज्ञांप्रियंराज्ञश्चिकीर्षवः ३५ इतिश्रीमन्महाभारते
उद्योगपर्वणिअभिनिर्यात्रायांपंचपंचाशदधिकशततमोऽध्यायः १५५ वैशंपायनउ० ततःशांतनवंभीष्मंप्रांजलिर्धृत
राष्ट्रजः सहसर्वैर्महीपालैरिदंवचनमब्रवीत् १ ऋतेसेनाप्रणेतारंपृतनासुमहत्यपि दीर्यतेयुद्धमासाद्यपिपीलिकपुटंयथा
२

एवमपिपूर्वोक्ताक्षौहिणीसंख्ययाविसंवादएवेत्याशंक्याह सेनेति सेनादयःशब्दाःपर्यायाःनतुसंख्येयाभेदमात्रेणनानार्थाः एकस्मिन्नपिभीमसेने
दशनागसहस्रबलत्वस्मरणात् एवंचबलस्यैवेयंएकादशसप्तेतिसंख्यानसंख्येयस्येतिभावः पांडवानांहीनबलत्वेपिअसंख्येयंवासुदेवबलंतत्रसहा
यीभूतमितिजयोभूदितिद्रष्टव्यम् २५ २६ २७ नराणामिति अयुतइत्यनेननराणामंतोनास्तीतिदर्शितम् २८ २९ ३० ३१ ३२ ३३ ३४ ३५ इतिउ० नी० भा०पं
चपं० शततमोऽध्यायः १५५ ततइति १ २

३ ४ ५ ६ ७ ८ ९ १० उशनसाशुक्रेणअसंहार्यः पितुर्वरदानात् कालेनापिसंहर्तुमशक्यः ११ १२ कुमारः कार्तिकेयः १३ १४ पावकिः कार्तिकेयए



नहिजातुद्वयोर्बुद्धिःसमाभवतिकर्हिचित् शौर्यंचबलनेतॄणांस्पर्धतेचपरस्परम् ३ श्रूयतेचमहाप्राज्ञहैहयानमितौजसः अभ्य
युर्ब्राह्मणाःसर्वेसमुच्छ्रितकुशध्वजाः ४ तानभ्ययुस्तदावैश्याःशूद्राश्चैवपितामह एकतस्तुत्रयोवर्णाएकतःक्षत्रियर्षभाः ५ ततो
युद्धेष्वभज्यंतत्रयोवर्णाःपुनःपुनः क्षत्रियाश्चजयंत्येवबहुलंचैकतोबलम् ६ ततस्तेक्षत्रियानेवपप्रच्छुर्द्विजसत्तमाः तेभ्यःशशंसुर्ध
र्मज्ञायाथातथ्यंपितामह ७ वयमेकस्यशृण्वानामहाबुद्धिमतोरणे भवंतस्तुपृथक्सर्वेस्वबुद्धिवशवर्तिनः ८ ततस्तेब्राह्मणाश्चक्रु
रेकंसेनापतिंद्विजम् नयेषुकुशलंशूरमजयन्क्षत्रियांस्ततः ९ एवंयेकुशलंशूरंहितेप्सितमकल्मषम् सेनापतिंप्रकुर्वंतितेजयंतिर
णेरिपून् १० भवानुशनसातुल्योहितैषीचसदामम असंहार्यःस्थितोधर्मेसनःसेनापतिर्भव ११ रश्मिमतामिवादित्योवीरुधामिवचं
द्रमाः कुबेरइवयक्षाणांदेवानामिववासवः १२ पर्वतानांयथामेरुःसुपर्णःपक्षिणांयथा कुमारइवदेवानांवसूनामिवहव्यवाट् १३
भवताहिवयंगुप्ताःशक्रेणेवदिवौकसः अनाधृष्याभविष्यामस्त्रिदशानामपिध्रुवम् १४ प्रयातुनोभवानग्रेदेवानामिवपावकिः वयं
त्वामनुयास्यामःसौरभेयाइवर्षभम् १५ भीष्मउवाच एवमेतन्महाबाहोयथावदसिभारत यथैवहिभवंतोमेतथैवमम
पांडवाः १६ अपिचैवमयाश्रेयोवाच्यंतेषांनराधिप संयोद्धव्यंतवार्थाययथामेसमयःकृतः १७ नतुपश्यामियोद्धारमात्मनःसदृ
शंभुवि ऋतेतस्मान्नरव्याघ्रात्कुंतीपुत्राद्धनंजयात् १८ सहिवेदमहाबुद्धिर्दिव्यान्यस्त्राण्यनेकशः नतुमांविवृतोयुद्धेजातुयुध्ये
तपांडवः १९ अहंचैवक्षणेनैवनिर्मनुष्यमिदंजगत् कुर्यांशस्त्रबलेनैवससुरासुरराक्षसम् २० नत्वेवोत्सादनीयामेपांडोःपुत्रा
जनाधिप तस्माद्योधान्हनिष्यामिप्रयोगेणायुतंसदा २१ एवमेषांकरिष्यामिनिधनंकुरुनंदन नचेत्तेमांहनिष्यंतिपूर्वमेवसमा
गमे २२ सेनापतिर्भविष्यामिसमयेनापरेणते भविष्यामियथाकामंतन्मेश्रोतुमिहार्हसि २३ कर्णोवायुध्यतांपूर्वमहंवापृथि
वीपते स्पर्धतेहिसदात्यर्थंसूतपुत्रोमयारणे २४ कर्णउवाच नाहंजीवतिगांगेयेराजन्योत्स्येकथंचन हतेभीष्मेतुयो
त्स्यामिसहगांडीवधन्वना २५ वैशंपायनउवा॰ ततःसेनापतिंचक्रेविधिवद्भूरिदक्षिणं धृतराष्ट्रात्मजोभीष्मंसोभिषिक्तो
व्यरोचत २६



व १५ १६ १७ १८ विवृतोविस्पष्टोपमूलेत्यर्थः १९ २० नमेमयाउत्सादनीयाःनाशयितुंशक्याःसदाप्रत्यहम् २१ २२ २३ २४ २५ २६

२७ २८ पातयंतः मूर्छितानिकुर्वतः २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ इत्युद्योगेटीकायांषट्पंचा० शततमोऽध्यायः १५६ आपगेयमिति १ २ ३

ततोभेरीश्वशंखाश्वशतशोथसहस्रशः वादयामासुरव्यग्रावादकाराजशासनात् २७ सिंहनादाश्वविविधावाहनानांचनिस्व
नाः प्रादुरासन्ननभ्रेचवर्षंरुधिरकर्दमम् २८ निर्घाताः पृथिवीकंपागजबृंहितनिस्वनाः आसंश्वसर्वयोधानांपातयंतोमनांस्युत २९
वाचश्वाप्यशरीरिण्योदिवश्वोल्काःप्रपेदिरे शिवाश्वभयवेदिन्योनेदुर्दीप्तनराभृशम् ३० सेनापत्येयदाराजागांगेयमभिषिक्तवान्
तदैतान्युग्ररूपाणिबभूवुःशतशोनृप ३१ ततःसेनापतिंकृत्वाभीष्मंपरबलार्दनम् वाचयित्वाद्विजश्रेष्ठान्गोभिर्निष्कैश्वभूरिशः ३२
वर्धमानोजयाशीर्भिर्निर्ययौसैनिकैर्वृतः आपगेयंपुरस्कृत्यभ्रातृभिःसहितस्तदा ३३ स्कंधावारेणमहताकुरुक्षेत्रंजगामह ३४
परिक्रम्यकुरुक्षेत्रंकर्णेनसहकौरवः शिबिरंमापयामाससमेदेशेजनाधिप ३५ मधुरानूखरेदेशेप्रभूतयवसेंधने यथैवहास्तिन
पुरंतद्वच्छिबिरमाबभौ ३६ इतिश्रीम०उ०अभिनिर्यात्रायांभीष्मसेनापत्येषट्पं० शततमो०ध्यायः १५६ जनमेजयउ०
आपगेयंमहात्मानंभीष्मंशस्त्रभृतांवरम् पितामहंभारतानांध्वजंसर्वमहीक्षिताम् १ बृहस्पतिसमंबुद्ध्याक्षमयापृथिवीसमं
समुद्रमिवगांभीर्येहिमवंतमिवस्थिरम् २ प्रजापतिमिवोदार्येतेजसाभास्करोपमम् महेंद्रमिवशत्रूणांध्वंसनंशरवृष्टिभिः ३ र
णयज्ञेप्रवितते सुभीमेलोमहर्षणे दीक्षितंचिररात्रायश्रुत्वातत्रयुधिष्ठिरः ४ किमब्रवीन्महाबाहुःसर्वशस्त्रभृतांवरः भीमसेनार्जु
नौवापिकृष्णोवाप्रत्यभाषत ५ वैशंपायनउ० आपद्धर्मार्थकुशलोमहाबुद्धिर्युधिष्ठिरः सर्वान्भ्रातृन्समानीयवासुदेवं
चशाश्वतम् ६ उवाचवदतांश्रेष्ठःसांत्वपूर्वमिदंवचः पर्याक्रामतसैन्यानियत्तास्तिष्ठतदंशिताः ७ पितामहेनवोयुद्धंपूर्वमेवभवि
ष्यति तस्मात्सप्तसुसेनासुप्रणेतृन्ममपश्यत ८ कृष्णउवाच यथार्हतिभवान्वक्तुमस्मिन्कालेह्युपस्थिते तथेदमर्थव
द्वाक्यमुक्तंतेभरतर्षभ ९ रोचतेमेमहाबाहोक्रियतांयदनंतरम् नायकास्तवसेनायांक्रियतामिहसप्तवै १० वैशंपायनउ०
ततोद्रुपदमानाय्यविराटंशिनिपुंगवम् धृष्टद्युम्नंचपांचाल्यंधृष्टकेतुंचपार्थिवम् ११ शिखंडिनंचपांचाल्यंसहदेवंचमागधम्
एतान्सप्तमहाभागान्वीरान्युद्धाभिकांक्षिणः १२ सेनाप्रणेतृन्विधिवदभ्यषिंचद्युधिष्ठिरः सर्वसेनापतिंचात्रधृष्टद्युम्नंचकारह
१३

४ ५ ६ ७ ८ ९ १० ११ १२ १३ ५७ ५७ ५७ ५७ ५७ ५७ ५७ ५७

इद्धात्प्रदीप्तात् १४ १५ महात्ययं अत्यंतक्षयकरम् १६ १७ १८ १९ २० २१ २२ २३ रौहिणेयोबलरामः २४ २५ २६ २७ उप



द्रोणांतहेतोरुत्पन्नोयइद्धाज्जातवेदसः सर्वेषामेवतेषांतुसमस्तानांमहात्मनाम् १४ सेनापतिपतिंचक्रेगुडाकेशंधनंजयम् अर्जुनस्यापिनेताचसंयंताचैववाजिनाम् १५ संकर्षणानुजःश्रीमान्महाबुद्धिर्जनार्दनः तदृष्ट्वोपस्थितंयुद्धंसमासन्नमहात्ययम् १६ प्राविशद्भवनंराजन्पांडवानांहलायुधः सहाक्रूरप्रभृतिभिर्गदसांबोद्धवादिभिः १७ रौक्मिणेयाहुकसुतैश्चारुदेष्णपुरोगमैः वृष्णिमुख्यैरधिगतैर्व्याघ्रैरिवबलोत्कटैः १८ अभिगुप्तोमहाबाहुर्मरुद्भिरिववासवः नीलकौशेयवसनःकैलासशिखरोपमः १९ सिंहखेलगतिःश्रीमान्मदरक्तांतलोचनः तंदृष्ट्वाधर्मराजश्चकेशवश्चमहाद्युतिः २० उदतिष्ठत्ततःपार्थोभीमकर्मावृकोदरः गांडीवधन्वायेचान्येराजानस्तत्रकेचन २१ पूजयांचक्रिरेतेवैसमायांतंहलायुधम् ततस्तंपांडवोराजाकरेपस्पर्शपाणिना २२ वासुदेवपुरोगास्तुतंसर्वएवाभ्यवादयन् विराटद्रुपदौवृद्धावभिवाद्यहलायुधः २३ युधिष्ठिरेणसहितउपाविशदरिंदमः ततस्तेषूपविष्टेषुपार्थिवेषुसमंततः वासुदेवमभिप्रेक्ष्यरौहिणेयोभ्यभाषत २४ भवितायंमहारौद्रोदारुणःपुरुषक्षयः दिष्टमेतद्ध्रुवंमन्येनशक्यमभिवर्तितुम् २५ तस्माद्युद्धात्समुत्तीर्णानपिवःससुहृज्जनान् अरोगानक्षतैर्देहैर्द्रष्टास्मीतिमतिर्मम २६ समेतंपार्थिवंक्षत्रंकालपक्वमसंशयम् विमर्दश्चमहान्भावीमांसशोणितकर्दमः २७ उक्तोमयावासुदेवःपुनःपुनरुपह्वरे संबंधिषुसमांवृत्तिंवर्तस्वमधुसूदन २८ पांडवाहियथास्माकंतथादुर्योधनोनृपः तस्यापिक्रियतांसाह्यंसपर्येतिपुनःपुनः २९ तच्चमेनाकरोद्वाक्यंत्वदर्थेमधुसूदनः निर्विष्टःसर्वभावेनधनंजयमवेक्ष्यह ३० ध्रुवोजयःपांडवानामितिमेनिश्चितामतिः तथाह्यभिनिवेशोयंवासुदेवस्यभारत ३१ नचाहमुत्सहेकृष्णामृतेलोकमुदीक्षितुम् ततोहमनुवर्तामिकेशवस्यचिकीर्षितम् ३२ उभौशिष्यौहिमेवीरौगदायुद्धविशारदौ तुल्यस्नेहोस्म्यतोभीमेतथादुर्योधनेनृपे ३३ तस्माद्यास्यामितीर्थानिसरस्वत्यानिषेवितुम् नहिशक्ष्यामिकौरव्यान्नश्यमानानुपेक्षितुम् ३४ एवमुक्त्वामहाबाहुरनुज्ञातश्चपांडवैः तीर्थयात्रांययौरामोनिवर्त्यमधुसूदनम् ३५ इतिश्रीमन्महाभारतेउद्योगपर्वणिअभिनिर्याणायांसप्तपंचाशदधिकशततमोऽध्यायः १५७

ह्वरेएकांते २८ २९ ३० ३१ ३२ ३३ ३४ ३५ इत्युद्योगेटीकायांसप्तपंचाशदधिकशततमोऽध्यायः १५७

एतस्मिन्निति आकूतीनांसंकल्पानां सत्यसंकल्पइत्यर्थः २ ३ ४ ५ ६ मौरवान् आंत्रनंति मयान् यैरिदानींशार्ङ्गे धनुषिज्याक्रियते ७ ८ ९ १० ११ १२ १३

वैशंपायनउवाच एतस्मिन्नेवकालेतुभीष्मकस्यमहात्मनः हिरण्यरोम्णोनृपतेःसाक्षादिंद्रसखस्यवै १ आकृतीनामधिप तिर्भोजस्यातियशस्विनः दाक्षिणात्यपतेःपुत्रोदिक्षुरुक्मीतिविश्रुतः २ यःकिंपुरुषसिंहस्यगंधमादनवासिनः कृत्स्नंशिष्योधनु र्वेदंचतुष्पादमवाप्तवान् ३ योमाहेंद्रंधनुर्लेभेतुल्यंगांडीवतेजसा शार्ङ्गेणचमहाबाहुःसम्मितंदिव्यलक्षणम् ४ त्रीण्येवैतानिदि व्यानिधनूंषिदिविचारिणाम् वारुणंगांडिवंतत्रमाहेंद्रंविजयंधनुः शार्ङ्गंतुवैष्णवंप्राहुर्दिव्यंतेजोमयंधनुः ५ धारयामासतत्कृष्णः परसेनाभयावहम् गांडीवंपावकाल्लेभेरवांडवेपाकशासनिः ६ द्रुमाद्रुक्मीमहातेजाविजयंप्रत्यपद्यत संछिद्यमौरवान्पाशा न्निहत्यमुरमोजसा ७ निर्जित्यनरकंभौममाहृत्यमणिकुंडले षोडशस्त्रीसहस्राणिरत्नानिविविधानिच ८ प्रतिपेदेहृषीके शःशार्ङ्गंचधनुरुत्तमम् रुक्मीतुविजयंलब्ध्वाधनुर्मेघनिभस्वनम् ९ विभीषयन्निवजगत्पांडवानभ्यवर्तत नामृष्यतपुरायो सौस्वबाहुबलगर्वितः रुक्मिण्याहरणंवीरोवासुदेवेनधीमता कृत्वाप्रतिज्ञांनाहत्वानिवर्तिष्येजनार्दनम् ११ ततोन्वधावद्वा र्ष्णेयंसर्वशस्त्रभृतांवरं सेनयाचतुरंगिण्यामहत्यादूरपातया १२ विचित्रायुधवर्मिण्यागंगयेवप्रवृद्धया ससमासाद्यवार्ष्णेयं योगानामीश्वरंप्रभुम् १३ व्यंसितोव्रीडितोराजन्नाजगामसकुंडिनम् यत्रैवकृष्णेनरणेनिर्जितःपरवीरहा १४ तत्रभोजकटं नामकृतंनगरमुत्तमम् सैन्येनमहतातेनप्रभूतगजवाजिना १५ पुरंतद्भुविविख्यातंनाम्नाभोजकटंनृप सभोजराजःसैन्येनम हतापरिवारितः १६ अक्षौहिण्यामहावीर्यःपांडवान्क्षिप्रमागमत् ततःसकवचीधन्वीतलीखड्गीशरासनी १७ ध्वजेनादित्यव र्णेनप्रविवेशमहाचमूम् विदितःपांडवेयानांवासुदेवप्रियेप्सया १८ युधिष्ठिरस्तुतंराजाप्रत्युद्गम्याभ्यपूजयत् सपूजितःपां डुपुत्रैर्यथान्यायंसुसंस्तुतः १९ प्रतिगृह्यतुतान्सर्वान्विश्रांतःसहसैनिकः उवाचमध्येवीराणांकुंतीपुत्रंधनंजयम् २० साहा य्येस्मिन्स्थितोयुद्धेयदिभीतोसिपांडव करिष्यामिरणेसाह्यमसह्यंतवशत्रुभिः २१ नहिमेविक्रमेतुल्यःपुमानस्तीहकश्चन ह निष्यामिरणेभागंयन्मेदास्यसिपांडव २२ अपिद्रोणकृपौवीरौभीष्मकर्णावथोपुनः अथवासर्वएवैतेतिष्ठंतुवसुधाधिपाः २३

२४ २५ २६ द्रोणंअयंममगुरुरितिव्यपदिशन्कथयन् २७ २८ २९ ३०।३१उपजीव्यआराध्यरणेयुद्धनिमित्तम् ३२ ३३ ३४ ३५ ३६ ३७



निहत्यसमरेशत्रूंस्तवदास्यामिमेदिनीं इत्युक्तोधर्मराजस्यकेशवस्यचसंनिधौ २४ शृण्वतांपार्थिवेंद्राणामन्येषांचैवसर्वशः वासुदेवमभिप्रेक्ष्यधर्मराजंचपांडवम् २५ उवाचधीमान्कौंतेयःप्रहस्यसखिपूर्वकम् कौरवाणांकुलेजातःपांडोःपुत्रोविशेषतः २६ द्रोणंव्यपदिशन्शिष्योवासुदेवसहायवान् भीतोस्मीतिकथंब्रूयांदधानोगांडिवंधनुः २७ युध्यमानस्यमेवीरगंधर्वैःसुमहाबलैः सहायोघोषयात्रायांकस्तदासीत्सखामम २८ तथाप्रतिभयेतस्मिन्देवदानवसंकुले खांडवेयुध्यमानस्यकःसहायस्तदाभवत् २९ निवातकवचैर्युद्धेकालकेयैश्चदानवैः तत्रमेयुध्यमानस्यकःसहायस्तदाभवत् ३० तथाविराटनगरेकुरुभिःसहसंगरे युध्यतोबहुभिस्तत्रकःसहायोभवन्मम ३१ उपजीव्यरणेरुद्रंशक्रंवैश्रवणंयमम् वरुणंपावकंचैवकृपंद्रोणंचमाधवम् ३२ धारयन्गांडिवंदिव्यंधनुस्तेजोमयंदृढम् अक्षय्यशरसंयुक्तोदिव्यास्त्रपरिबृंहितः ३३ कथमस्मद्विधोब्रूयाद्भीतोस्मीतियशोहरम् वचनंनरशार्दूलवज्रायुधमपिस्वयम् ३४ नास्मिभीतोमहाबाहोसहायार्थश्चनास्तिमे यथाकामंयथायोगंगच्छवान्यत्रतिष्ठवा ३५ विनिवर्त्यततोरुक्मीसेनांसागरसंनिभाम् दुर्योधनमुपागच्छत्तथैवभरतर्षभ ३६ तथैवचाभिगम्यैनमुवाचवसुधाधिपः प्रत्याख्यातश्चतेनापिसतदाशूरमानिना ३७ द्वावेवतुमहाराजतस्माद्युद्धादपेयतुः रोहिणेयश्चवार्ष्णेयोरुक्मीचवसुधाधिपः ३८ गतेरामेतीर्थयात्रांभीष्मकस्यसुतेतथा उपाविशन्पांडवेयामंत्रायपुनरेवच ३९ समितिर्धर्मराजस्यसापार्थिवसमाकुला शुशुभेतारकैश्चित्राद्यौश्चंद्रेणेवभारत ४०     इतिश्रीमन्महाभा॰उद्योगपर्वणिअभिनिर्यात्रायांरुक्मिप्रत्याख्यानंनामाष्टपंचाशदधिकश॰ध्यायः१५८     जनमेजयउ॰     तथाव्यूढेष्वनीकेषुयत्तेषुभरतर्षभ किमकुर्वंश्चकुरवःकालेनाभिप्रचोदिताः १     वैशंपायनउवाच     तथाव्यूढेष्वनीकेषुयत्तेषुभरतर्षभ धृतराष्ट्रोमहाराजसंजयंवाक्यमब्रवीत् २ एहिसंजयसर्वंमेआचक्ष्वानवशेषतः सेनानिवेशेयद्वृत्तंकुरुपांडवसेनयोः ३ दिष्टमेवपरंमन्येपौरुषंचाप्यनर्थकम् यदहंबुध्यमानोपियुद्धदोषान्क्षयोदयान् ४ तथापिनिकृतिप्रज्ञंपुत्रंदुर्द्यूतदेविनं नशक्नोमिनियंतुंवाकर्तुंवाहितमात्मनः ५

३८ ३९ ४० इतिउद्योगेटीकायांअष्टपंचाशदधिकशततमोऽध्यायः १५८     तथेति १ २ ३ क्षयस्यैवउदयोयेभ्यस्तान्क्षयोदयान् ४ निकृतिप्रज्ञंकपटविषयैवप्रज्ञायस्यनधर्मविषयायस्यतम् ५

६ ७ ८ एनसादोषेणदेवान्कालंवागंतुंउपालब्धुंनार्हति दृष्टेसंभवस्य दृष्टकल्पनायाअन्याय्यत्वाद्दृष्टापराधाभावेदेवस्यकालस्यवाउपालंभःकर्तुमु
चितःनतुतस्मिन्सतीत्यर्थः नसकालंनवादेवंवक्तुमेतदिहार्हतीतिपाठे प्ययमेवार्थः ९ १० निकाराःतिरस्काराः ११ वैशसंसमरेनिमित्ते १२ १३ १४

भवत्येवहिमेसूतबुद्धिर्दोषानुदर्शिनी दुर्योधनंसमासाद्यपुनःसापरिवर्तते ६ एवंगतेवैयद्भावितद्भविष्यतिसंजय क्षत्रधर्मःकि
लरणेतनुत्यागोहिपूजितः ७ संजयउवाच त्वद्युक्तोयमनुप्रश्नोमहाराजयथेच्छसि नतुदुर्योधनेदोषमिममाधातुमर्ह
सि ८ शृणुष्वानवशेषेणवदतोमम्पार्थिव यआत्मनोदुश्चरितादशुभंप्राप्नुयान्नरः नसकालंनवादेवंवक्तुमेतदिहार्हति ९
महाराजमनुष्येषुनिंद्यंयःसर्वमाचरेत् सवध्यःसर्वलोकस्यनिंदितानिसमाचरन् १० निकारामनुजश्रेष्ठपांडवैस्त्वत्प्रतीक्षया
अनुभूताःसहामात्यैर्निकृतैरधिदेवने ११ हयानांचगजानांचराज्ञांचामिततेजसाम् वैशसंसमरेवृत्तंयत्तन्मेशृणुसर्वशः १२
स्थिरोभूत्वामहाप्राज्ञसर्वलोकक्षयोदयम् यथाभूतंमहायुद्धेश्रुत्वाचैकमनाभव १३ नह्येवकर्तापुरुषःकर्मणोःशुभपापयोः
अस्वतंत्रोहिपुरुषःकार्यतेदारुयंत्रवत् १४ केचिदीश्वरनिर्दिष्टाःकेचिदेवयदृच्छया पूर्वकर्मभिरप्यन्येत्रैधमेतत्प्रदृश्यते तस्माद
नर्थमापन्नंस्थिरोभूत्वानिशामय १५ इति॰उद्यो॰एकोनषष्ट्यधिकशततमोऽध्यायः१५९ संजयउवाच हिरण्वत्यांनिविष्टेषु
पांडवेषुमहात्मसु न्यविशंतमहाराजकौरवेयायथाविधि १ तत्रदुर्योधनोराजानिवेश्यबलमोजसा संमानयित्वानृपतीन्न्य
स्यगुल्मांस्तथैवच २ आरक्ष्यस्यविधिंकृत्वायोधानांतत्रभारत कर्णंदुःशासनंचैवशकुनिंचापिसौबलम् ३ आनाय्यनृपतीस्तत्र
मंत्रयामासभारत तत्रदुर्योधनोराजाकर्णेनसहभारत ४ संभाषित्वाचकर्णेनभ्रात्रादुःशासनेनच सौबलेनचराजेंद्रमंत्रयित्वा
नरर्षभ ५ आहूयोपह्वरेराजन्नुलूकमिदमब्रवीत् उलूकगच्छकैतव्यपांडवान्सहसोमकान् ६ गत्वाममवचोब्रूहिवासुदेवस्य
शृण्वतः इदंतत्समनुप्राप्तंवर्षपूगाभिचिंतितम् ७ पांडवानांकुरूणांचयुद्धंलोकभयंकरम् यदेतत्कत्थनावाक्यंसंजयोमहदब्रवीत्
८ वासुदेवसहायस्यगर्जतःसानुजस्यते मध्येकुरूणांकौंतेयतस्यकालोयमागतः ९ यथावःसंप्रतिज्ञातंतत्सर्वंक्रियतामिति ज्ये
ष्ठंतथैवकौंतेयंब्रूयास्त्वंवचनान्मम १०

१५ इत्यु॰टी॰एकोनष॰शततमोऽध्यायः१५९ हिरण्वत्यामिति १ गुल्मान्सैन्यान् २ आरक्ष्यस्य
रक्षिणीयस्यद्रव्यादेः विधिंरक्षाविधानं आरक्ष्यंरक्षणीयेस्यादितिविश्वः ३ ४ ५ ६ ७ कत्थनावाक्यंआत्मप्रशंसनं ८ ९ संप्रतिज्ञातंदुःशासनरुधिरपानादि॰

भ्रातृभिः सहितः कथमधर्मेमनः कृथाइतिसंबंधः ११ दातादास्यसिपारिव्राज्यंकरिष्यसीत्यर्थः १२ १३ भोक्तराइतिदेवान्प्रह्लादः संबोधति यस्यव्रत
स्यधर्मध्वजो धर्मचिह्नंदर्भपवित्रपाणित्वादि उच्छ्रितः सर्वलोकविदितः १४ १५ मनः शुद्धिंहिंसातोनिवृत्तिम् १६ विश्रंभंविश्वासम् १७ १८ १९ २०



भ्रातृभिःसहितंसर्वैःसोमकैश्चसकेकयैः कथंवाधार्मिकोभूत्वात्वमधर्मेमनःकृथाः ११ यइच्छसिजगत्सर्वंनश्यमानंनृशंसव
त् अभयंसर्वभूतेभ्योदातात्वमितिमेमतिः १२ श्रूयतेहिपुरागीतःश्लोकोयंभरतर्षभ प्रह्लादेनाथभद्रंतेहृतेराज्येतुदेवतैः १३
यस्यधर्मध्वजोनित्यंसुराध्वजइवोच्छ्रितः प्रच्छन्नानिचपापानिबैडालंनामतद्व्रतम् १४ अत्रतेवर्तयिष्यामिआख्यानमिदमु
त्तमम् कथितंनारदेनेहपितुर्ममनराधिप १५ मार्जारःकिलदुष्टात्मानिश्चेष्टःसर्वकर्मसु ऊर्ध्वबाहुःस्थितोराजन्गंगातीरेकदाचन
सवैकृत्वामनःशुद्धिंप्रत्ययार्थंशरीरिणाम् १६ करोमिधर्ममित्याहसर्वान्नेवशरीरिणः तस्यकालेनमहताविश्रंभंजग्मुरंडजाः १७
समेत्यचप्रशंसंतिमार्जारंतंविशांपते पूज्यमानस्तुतैःसर्वैःपक्षिभिःपक्षिभोजनः १८ आत्मकार्यंकृतंमेनेचर्यायाश्चकृतंफ
लम् अथदीर्घस्यकालस्यतंदेशंमूषिकाययुः १९ ददृशुस्तंचतेतत्रधार्मिकंव्रतचारिणम् कार्येणमहतायुक्तंदंभयुक्तेनभा
रत २० तेषांमतिरियंराजन्नासीत्तत्रविनिश्चये बहुमित्रावयंसर्वेतेषांनोमातुलोह्ययं २१ रक्षांकरोतुसततंवृद्धबालस्यसर्वशः
उपगम्यतुतेसर्वेबिडालमिदमब्रुवन् भवत्प्रसादादिच्छामश्चर्तुंचैवयथासुखम् २२ भवान्नोगतिरव्यग्राभवान्नःपरमःसु
हृत् तेवयंसहिताःसर्वेभवंतंशरणंगताः २३ भवान्धर्मपरोनित्यंभवान्धर्मेव्यवस्थितः सनोरक्षमहाप्राज्ञत्रिदशानिववज्रभृत् २४ एवमुक्तस्तुतैःसर्वैर्मूषिकैःसविशांपते प्रत्युवाचततःसर्वान्मूषिकान्मूषिकांतकृत् २५ द्वयोर्योगंनपश्यामित
पसोरक्षणस्यच अवश्यंतुमयाकार्यंवचनंभवतांहितम् २६ युष्माभिरपिकर्तव्यंवचनंममनित्यशः तपसास्मिपरिश्रां
तोदृढंनियममास्थितः २७ नचापिगमनेशक्तिंकांचित्पश्यामिचिंतयन् सोस्मिनेयःसदातातनदीकूलमितःपरम् २८ तथे
तितेप्रतिज्ञायमूषिकाभरतर्षभ वृद्धबालमथोसर्वंमार्जारायन्यवेदयन् २९ ततःसपापोदुष्टात्मामूषिकानथभक्षयन् पीवर
श्चसुवर्णश्चदृढबंधश्चजायते ३० मूषिकाणांगणश्चात्रभृशंसंक्षीयतेथसः मार्जारोवर्धतेचापितेजोबलसमन्वितः ३१



बहवश्चतेमित्राणिचेतिबहुमित्राः बह्वमित्राइत्यपिपाठः २१ २२ २३ २४ २५ २६ २७ २८ वृद्धाश्चबालाश्चतेषांसमाहारोवृद्धबालम् २९ ३० ३१

३२ ३३ ३४ ३५ ३६ शिखाअमित्रस्यापिमित्रभावस्वरूपंपक्षांतरम् कृतास्वीकृताशिखापक्षांतरेवाह्याइतिमेदिनी ३७ गणश्चमूषिकाणाम् ३८ ३९

ततस्तेमूषिकाःसर्वेसमेत्यान्योन्यमब्रुवन् मातुलोवर्धतेनित्यंवयंक्षीयामहेभृशम् ३२ ततःप्राज्ञतमःकश्चिडिंडिकोनाममूषिकः
अब्रवीद्वचनंराजन्मूषिकाणांमहागणम् ३३ गच्छतांवोनदीतीरंसहितानांविशेषतः पृष्ठतोहंगमिष्यामिसहैवमातुलेनतु ३४
साधुसाध्वितितेसर्वेपूजयांचक्रिरेतदा चक्रुश्चैवयथान्यायंडिंडिकस्यवचोर्थवत् ३५ अविज्ञानात्ततःसोथडिंडिकंह्युपयुक्तवान्
ततस्तेसहिताःसर्वेमंत्रयामासुरंजसा तत्रवृद्धतमःकश्चित्कोकिलोनाममूषिकः ३६ अब्रवीद्वचनंराजन्ज्ञातिमध्येयथातथम् न
मातुलोधर्मकामश्छद्ममात्रंकृताशिखा ३७ नमूलफलभक्षस्यविष्टाभवतिलोमशा अस्यगात्राणिवर्धंतेगणश्चपरिहीयते ३८
अद्यसप्ताष्टदिवसान्डिंडिकोपिनदृश्यते एतच्छ्रुत्वावचःसर्वेमूषिकाविप्रदुद्रुवुः ३९ बिडालोपिसदुष्टात्माजगामैवयथागत
म् तथात्वमपिदुष्टात्मन्बैडालंव्रतमास्थितः ४० चरसिज्ञातिषुसदाबिडालोमूषिकेष्विव अन्यथाकिलतेवाक्यमन्यथाकर्मदृ
श्यते ४१ दर्शनार्थायलोकस्यवेदाश्चोपशमश्चते त्यक्त्वाछद्मत्विदंराजन्क्षत्रधर्मंसमाश्रितः ४२ कुरुकार्याणिसर्वाणिधर्मिष्ठोऽ
सिनरर्षभ बाहुवीर्येणपृथिवींलब्ध्वाभरतसत्तम ४३ देहिदानंद्विजातिभ्यःपितृभ्यश्चयथोचितम् क्लिष्टायावर्षपूगांश्चमातुर्मा
तृहितेस्थितः ४४ प्रमार्जाश्रुरणेजित्वासंमानंपरमावह पंचग्रामावृतायत्नान्नास्माभिरपवर्जिताः ४५ युध्यामहेकथंसंख्ये
कोपयेमचपांडवान् त्वत्कृतेदुष्टभावस्यसंत्यागोविदुरस्यच ४६ जातुषेचगृहेदाहंस्मरंस्त्वंपुरुषोभव यच्चकृष्णामवोचस्त्वमार्यां
तंकुरुसंसदि ४७ अयमस्मिस्थितोराजन्शमायसमरायच तस्यायमागतःकालःसमरस्यनराधिप ४८ एतदर्थंमयासर्वंकृत
मेतद्युधिष्ठिर किंनुयुद्धात्परंलाभंक्षत्रियोबहुमन्यते ४९ किंचत्वंक्षत्रियकुलेजातःसंप्रथितोभुवि द्रोणादस्त्राणिसंप्राप्यकृपा
च्चभरतर्षभ तुल्ययोनौसमबलेवासुदेवंसमाश्रितः ५१ ब्रूयास्त्वंवासुदेवंचपांडवानांसमीपतः आत्मार्थेपांडवार्थेचयत्तोमांप्र
तियोधय ५२ सभामध्येचयद्रूपंमाययाकृतवानसि तत्तथैवपुनःकृत्वासार्जुनोमामभिद्रव ५३ इंद्रजालंचमायांवैकुहकांवापिभी
षणा आत्तशस्त्रस्यसंग्रामेवहंतिमतिगर्जनाः ५४

४० ४१ इदंछद्मअजातशत्रुत्वरूपं धर्मिष्ठोसीत्युपहासः ४२ ४३ ४४ प्रमार्जप्रमार्जय ४५ ४६
४७ ४८ ४९ ५० ५१ ५२ ५३ इंद्रजालंप्रसिद्धम् मायाछलकम् कुहकाकृत्या प्रतिगर्जनाः विपरीतंकोपंवहंतिप्रापयंति नतुभयंजनयंतीत्यर्थः गर्जनंतुनिनदेकोपेइति
मेदिनी ५४

५५ पर्यायतः भयप्रदर्शनादिरूपप्रकारात् तेनसिद्धिः स्वस्यनतुभवति तथापरोपितेनबुद्धिंमानुषींभयात्मिकांनप्राप्नोति ५६ यतोमनसैवईश्वरेणेवत्वयंच शेकर्तव्यानत्वादृशैर्विभीषिकयेतिभावः नन्विति पाठेपर्यायतः क्रमतः भावस्तुसएव पर्यायःप्रकारेवसरेक्रमेइतिमेदिनी ५७ आचचक्षे आख्यातवान् ५८ ५९ ६० सश्रृंगकाः श्रृंगंपुंस्त्वचिन्हंश्मश्रुलत्वलिंगवत्वादिकंतत्सहिताः षंढाः निर्वीर्याः संति येषुत्वत्रशौर्यंप्रख्यातमितिभावः ६१ ६२ तूवरकंतूवरः प्रौढश्रृं



वयमप्युत्सहेमद्यांत्वंचगच्छेममायया रसातलंविशामोपिऐंद्रंवापुरमेवतु ५५ दर्शयेमचरूपाणिस्वशरीरेबहून्यपि नतुप र्यायतःसिद्धिर्बुद्धिंमाप्नोतिमानुषीम् ५६ मनसैवहिभूतानिधातैवकुरुतेवशे यद्ब्रवीषिचवार्ष्णेयधार्तराष्ट्रानहंरणे ५७ घातयि त्वाप्रदास्यामिपार्थेभ्योराज्यमुत्तमम् आचचक्षेचमेसर्वंसंजयस्तवभाषितम् ५८ मद्दितीयेनपार्थेनवैरंवःसव्यसाचिना ससत्य संगरोभूत्वापांडवार्थेपराक्रमी ५९ युत्स्यस्वाद्यरणेयत्तःपश्यामःपुरुषोभव यस्तुशत्रुमभिज्ञायशुद्धंपौरुषमास्थितः ६० करोति द्विषतांशोकंसजीवतिसुजीवितम् अकस्माच्चैवतेकृष्णख्यातंलोकेमहद्यशः अद्येदानींविजानीमःसंतिषंढाःसश्रृंगकाः ६१ म द्विधोवापिनृपतिस्त्वयियुक्तःकथंचन सन्नाहंसंयुगेकर्तुंकंसभृत्येविशेषतः ६२ तंचतूवरकंबालंबह्वाशिनमविद्यकम् ६३ उलू कमद्यचोब्रूहिअसकृद्भीमसेनकम् विराटनगरेपार्थयस्त्वंसूदोह्यभूःपुरा ६४ बल्लवोनामविख्यातस्तन्ममैवहिपौरुषम् प्रतिज्ञा तंसभामध्येनतन्मिथ्यात्वयापुरा ६५ दुःशासनस्यरुधिरंपीयतांयदिशक्यते यद्ब्रवीषिचकौंतेयधार्तराष्ट्रानहंरणे ६६ निहनिष्या मितरसातस्यकालोयमागतः त्वंहिभोज्येपुरस्कार्योभक्ष्येपेयेचभारत ६७ क्वयुद्धंक्वचभोक्तव्यंयुत्स्यस्वपुरुषोभव शयिष्यसेहः तोभूमौगदामालिंग्यभारत ६८ तद्व्यथाचसभामध्येवल्गितंतेवृकोदर उलूकनकुलंब्रूहिवचनान्ममभारत ६९ युत्स्यस्वाद्यस्थिरो भूत्वापश्यामस्तवपौरुषम् युधिष्ठिरानुरागंचद्वेषंचमयिभारत ७० कृष्णायाश्चपरिक्लेशंस्मरेदानींयथातथम् ब्रूयास्त्वंसहदेवं चराजमध्येवचोमम ७१ युत्स्येदानींरणेयत्तःक्लेशान्स्मरचपांडव विराटद्रुपदौचोभौब्रूयास्त्वंवचनान्मम नदृष्टपूर्वाभर्तारोभृ त्यैरपिमहागुणैः ७२ तथार्थपतिभिर्भृत्यायतःसृष्टाःप्रजास्ततः अश्लाघ्योयंनरपतिर्युवयोरितिचागतम् ७३

गोनड्वान्नत्तुल्यंतूपरइतिपाठेपिसएवार्थः अश्मश्रुपुरुषमित्यन्ये तूवरोश्मश्रुपुरुषेप्रौढश्रृंगानडुह्यपीतिमेदिनी तेषांभीमसेनोनिःश्मश्रुकइतिकल्पनाभवति अ- श्वोजस्तूपरोगोमृगइतिप्राजापत्याइतिश्रुतौअश्वादिसाहचर्यात्तूपरोपिपशुरेव अविद्यकंमूढं ६३ ६४ ६५ ६६ ६७ ६८ ६९ ७० ७१ नदृष्टेति भर्तारःराजानः ७२ अर्थ पतिभिःराजभिः यतः कालात्ततआरभ्येत्यर्थः मूढापूर्यंमयिगुणवतिस्वामिनिनसंतुष्टास्थः मूढश्चयुधिष्ठिरोभवदादिषुनिर्गुणेष्वपितुष्यतीतिभावः ७३

तत्तस्माद्धेतोर्ममवधार्थंचप्रयुत्स्यध्वमितिसंबंधः७४७५पापंकर्मकुरुगुरुवधारव्यंस्वार्थमितिपाठेदुष्करपदादेवायमर्थोज्ञेयः सस्कृहत्यार्थमितिपाठेतुक्रियाविशे
षणमिदंस्कृहृद्भिःपार्थैश्चसहितंयथास्यात्तथायुत्स्यस्वेत्यर्थः अयमेवमूलपाठः ७६ ७७ ७८ ७९ ८० ८१ ८२ ८३ राज्यमाक्रम्यमादृशाइतिशेषः८४

नेयूयंसंहताभूत्वातद्वधार्थंममापिच आत्मार्थंपांडवार्थंचप्रयुत्स्यध्वंमयासह ७४ धृष्टद्युम्नंचपांचाल्यंब्रूयास्त्वंवचनान्मम एषते
समयःप्राप्तोलब्धव्यश्चत्वयापिसः द्रोणमासाद्यसमरेज्ञास्यसेहितमुत्तमम् युध्यस्वसस्कृहत्कार्यंकुरुकर्मस्कृदुष्करम् ७६ शिखंडि
नमथोब्रूहिउलूकवचनान्मम स्त्रीतिमत्वामहाबाहुर्नहनिष्यतिकौरवः ७७ गांगेयोधन्विनांश्रेष्ठोयुत्स्येदानींस्कनिर्भयः कुरुकर्म
रणेयत्तःपश्यामःपौरुषंतव ७८ एवमुक्त्वाततोराजाप्रहस्योलूकमब्रवीत धनंजयंपुनर्ब्रूहिवासुदेवस्यशृण्वतः ७९ अस्मान्वात्वं
पराजित्यप्रशाधिपृथिवीमिमाम् अथवानिर्जितोस्माभीरणेवीरशयिष्यसि ८० राष्ट्रान्निर्वासनक्लेशंवनवासंचपांडव कृष्णा
याश्चपरिक्लेशंसंस्मरन्पुरुषोभव ८१ यदर्थंक्षत्रियासूतेसर्वंतदिदमागतम् बलंवीर्यंचशौर्यंचपरंचाप्यस्त्रलाघवम् ८२ पौरुषं-
दर्शयन्युद्धेकोपस्यकुरुनिष्कृतिम् परिक्लिष्टस्यदीनस्यदीर्घकालोषितस्यच ८३ हृदयंकस्य नस्फोटेदैश्वर्याद्भ्रंशितस्यच कुलेजा
नस्यशूरस्यपरवित्तेषुगृत्स्यतः आच्छिन्नंराज्यमाक्रम्यकोपंकस्यनदीपयेत् ८४ यत्तदुक्तंमहद्वाक्यंकर्मणातद्विभाव्यताम् अकर्म
णाकत्थितेनसंतःकुपुरुषंविदुः ८५ अमित्राणांवशेस्थानंराज्यंचपुनरुद्धर द्वावर्थौयुद्धकामस्यतस्मात्त्वंकुरुपौरुषम् ८६ परा
जितोसिद्यूतेनकृष्णाचानायितासभाम् शक्योमर्षोमनुष्येणकर्तुंपुरुषमानिना ८७ द्वादशैवतुवर्षाणिवनेधिष्ण्याद्विवासितः
संवत्सरंविराटस्यदास्यमास्थायचोषितः ८८ राष्ट्रान्निर्वासनक्लेशंवनवासंचपांडव कृष्णायाश्चपरिक्लेशंसंस्मरन्पुरुषोभव ८९
अप्रियाणांचवचनंप्रव्रजत्सुपुनःपुनः अमर्षंदर्शयस्वत्वममर्षोह्येवपौरुषम् ९० क्रोधोबलंतथावीर्यंज्ञानयोगोस्त्रलाघवम्
इहनेदृश्यतांपार्थयुत्स्यस्वपुरुषोभव ९१ लोहाभिहारोनिर्वृत्तःकुरुक्षेत्रमकर्दमम् पुष्टास्तेश्वाभृतायोधाःश्वोयुत्स्यस्वसकेशवः
९२

अकर्मणाअयुद्धेन कत्थितेनस्वप्रशंसामात्रेण ८५ स्थानंस्थितिम् तत्स्थानराज्ययोरुद्धरणम् पौरुषंपुरुषंकर्मकुरु८६८७ धिष्ण्यात्गृहात् ८८ ८९
अप्रियाणांशत्रूणांवक्तुंयोग्यंवचनंगौगौःनसंतिपतयोषद्वेषंढतिलाएतेइत्यादिकंब्रुवत्सु दुःशासनादिषु अमर्षंकोपंदर्शय ९० ९१ लोहाभिहारः शस्त्राणां
नीराजनादिकंतेषुमंत्रेणदेवतावाहनादिकंच अकर्दममितियुद्धयोग्यत्वंभूमेरुक्तम् ९२ ५ ५ ५ ५

१३ १४ १५ वेदयोःश्रुतिधनुर्वेदयोः अंतगंपारगम् १६ १७ युगंकालचक्रं १८ १९ आभ्यांद्रोणभीष्माभ्यां अभिध्यातोहंतव्यत्वेननिश्चितः दारुणेनभयानकेनास्त्रादिना प
दाभूमिमितिमर्त्यउक्तः १०० दर्दुरोमंडूकः १ २ नागबलस्यहस्तिसैन्यस्य १०३ ४ पर्यायात्युद्धप्रकारात् ५ ६ ७ पर्यायधर्मेणउपधर्मेणमायादिना अन्येतुराजपुत्रो



असमागम्यभीष्मेणसंयुगेकिंविकत्थसे आरुरुक्षुर्यथामंदःपर्वतंगंधमादनम् १३ एवंकत्थसिकौंतेयअकत्थन्पुरुषोभव सूतपुत्रंसुदु
र्मर्षंशल्यंचबलिनांवरम् १४ द्रोणंचबलिनांश्रेष्ठंशचीपतिसमंयुधि अजित्वासंयुगेपार्थराज्यंकथमिहेच्छसि १५ ब्राह्मेधनुषिचाचा
र्यंवेदयोरंतगंद्वयोः युधिधुर्यमविक्षोभ्यमनीकचरमच्युतम् १६ द्रोणंमहाद्युतिंपार्थजेतुमिच्छसितन्मृषा नहिशुश्रुमवातेनमेरुमुन्मथि
तंगिरिम् १७ अनिलोवावहेन्मेरुंद्यौर्वापिनिपतेन्महीम् युगंवापरिवर्तेतयद्येवंस्याद्यथात्थमाम् १८ कोह्यस्तिजीविताकांक्षीप्राप्ये
ममरिमर्दनम् पार्थोवाइतरोवापिकोन्यःस्वस्तिगृहान्व्रजेत् १९ कथमाभ्यामभिध्यातःसंस्पृष्टोदारुणेनवा रणेजीवन्प्रमुच्येतपदाभू
मिमुपस्पृशन् १०० किंदर्दुरःकूपशयोयथेमांनबुध्यसेराजचमूंसमेताम् दुराधर्षांदेवचमूप्रकाशांगुप्तांनरेंद्रैस्त्रिदशैरिव द्याम् १
प्राच्यैःप्रतीच्यैरथदाक्षिणात्यैरुदीच्यकांबोजशकैःखशैश्च शाल्वैःसमत्स्यैःकुरुमध्यदेश्यैर्म्लेच्छैःपुलिंदैर्द्रविडांध्रकांच्यैः २ नानाजनौ
घंयुधिसंप्रवृद्धंगांगंयथावेगमपारणीयम् मांचस्थितंनागबलस्यमध्येयुयुत्ससेमंदकिमल्पबुद्धे ३ अक्षय्याविषुधीचैवअग्निदत्तंच
तेरथम् जानीमोहिरणेपार्थकेतुंदिव्यंचभारत ४ अकत्थमानोयुध्यस्वकत्थसेर्जुनकिंबहु पर्यायात्सिद्धिरेतस्यनैतत्सिध्यतिक
त्थनात् ५ यदीदंकत्थनाल्लोकेसिध्येत्कर्मधनंजय सर्वेभवेयुःसिद्धार्थाःकत्थनेकोहिदुर्गतः ६ जानामितेवासुदेवंसहायंजानामितेगां
डिवंतालमात्रम् जानाम्यहंत्वादृशोनास्तियोद्धाजानानस्तेराज्यमेतद्धरामि ७ नतुपर्यायधर्मेणसिद्धिंप्राप्नोतिमानवः मनसैवा नुकू
लानिविधाताकुरुतेवशे ८ त्रयोदशसमाभुक्तंराज्यंविलपतस्तव भूयश्चैवप्रशासिष्येत्वांनिहत्यसबांधवम् ९ क्वतदागांडिवंतेभू
द्यदादासपणेर्जितः क्वतदाभीमसेनस्यबलमासीच्चफल्गुन १० सगदाद्भीमसेनाद्वाफाल्गुनाद्वासगांडिवात् नवैमोक्षस्तदावोभू
द्विनाकृष्णामनिंदिताम् ११ सावोदास्येसमापन्नान्मोचयामासपार्षती अमनुष्यसमापन्नान्दासकर्मण्यवस्थितान् १२

यंराज्यार्हइतिक्रमधर्मस्तेननकिंतुशौर्येणैवसिद्धिमाप्नोतीत्यर्थः मनसासंकल्पेनधातेवकुरुतेनतुमनुष्यः ८ ९ हेदासवासवइतिपाठेहेइंद्रपुत्र १० ११ अम
नुष्यत्वंनीचमनुष्यत्वं अलवणायवागूरितिवदल्पार्थोत्रनञ् १२

१३ १४ वेणींकृत्वाषंढवेषः कन्यांनर्तितवानसीत्येनस्मात्परंश्रोण्यांवेण्यांचकक्ष्यांचसंयुगेयःपलायनइत्यर्धंदृश्यते तस्यार्थः यःषंढवेषः अस्त्रीअपिस्त्रीवेषभृत् श्रोणिकक्षावेण्युपलक्षितेषुरत्यवमर्ददंशनस्थानेषुसंयुगेस्मरयुद्धेउपस्थितेसतिपलायते स्त्रीत्वस्मिन्संयुगेस्थिरीभवति अयंतुततोप्यधमइतिभावः कक्षायामि त्यपेक्षितेआकारलोपआर्षः १५ १६ नमायेतिव्याख्यातएवश्लोकः ११७ ११८ भीष्मेणसहसंग्रामः गिरौशिरोभेदनादिवत्स्वनाशकरइत्यर्थः १९ २० वृहद्गुल्मेह

अवोचंयत्संढनिलानहंवस्तथ्यमेवतत् धृताहिवेणीपार्थेनविराटनगरेतदा १३ सूदकर्मणिचश्रांतंविराटस्यमहानसे भीमसेनेनकौंतेययत्तुतन्ममपौरुषम् १४ वेणींकृत्वाषंढवेषःकन्यांनर्तितवानसि श्रोण्यांवेण्यांचकक्ष्यांचसंयुगेयःपलायते एवमेषसदादंडंक्षत्रियाःक्षत्रियेदधुः १५ नभयाद्वासुदेवस्यनचापितवफाल्गुन राज्यंप्रतिप्रदास्यामियुत्ध्यस्वसहकेशवः १६ नमायाहींद्रजालंवाकुहकावापिभीषिणी आत्तशस्त्रस्यसंग्रामेवहंतिप्रतिगर्जनाः १७ वासुदेवसहस्त्रंवाफाल्गुनानांशतानिवा आसाद्यमाममोघेषुंद्रविष्यंतिदिशोदश १८ संयुगंगच्छभीष्मेणभिंधिवाशिरसागिरिम् तरस्ववामहागाधंबाहुभ्यांपुरुषोदधिम् १९ शारद्वतमहामीनंविविंशतिमहोरगम् भीष्मवेगमपर्यंतंद्रोणग्राहदुरासदम् २० कर्णशल्यझषावर्तंकांबोजवडवामुखम् वृहद्बलमहोच्छ्रायंसोमदत्तितिमिंगिलम् २१ युयुत्सुतोयंभगदत्तमारुतंश्रुतायुहार्दिक्यमहासमुद्रं दुःशासनौघंशलशल्यमत्स्यंसुषेणचित्रायुधनागनक्रम् २२ जयद्रथाद्रिंपुरुमित्रगाधंदुर्मर्षणोदंशकुनिप्रपातम् शस्त्रौघमक्षय्यमभिप्रवृद्धंयदावगाह्यश्रमनष्टचेताः भविष्यसित्वंहतसर्वबांधवस्तदामनस्तेपरितापमेष्यति १२३ तदामनस्तेत्रिदिवादिवाशुचेर्निवर्तितापार्थमहीप्रशासनात् प्रशाम्यराज्यंहिसुदुर्लभंत्वयाबुभूषितःस्वर्गइवातपस्विना १२४ इतिश्रीम॰उद्योग॰उलू॰दुर्योधनवाक्येषष्ट्य॰शततमोध्यायः१६० संजयउवाच सेनानिवेशंसंप्राप्तःकैतव्यःपांडवस्यह समागतःपांडवेयैर्युधिष्ठिरमभाषत १ अभिज्ञोदूतवाक्यानांयथोक्तंब्रुवतोमम दुर्योधनसमादेशंश्रुत्वानक्रोद्धुमर्हसि २ युधिष्ठिरउ॰ उलूकनभयंतेस्ति ब्रूहित्वंविगतज्वरः यन्मतंधार्तराष्ट्रस्यलुब्धस्यादीर्घदर्शिनः ३ ततोद्युतिमतांमध्येपांडवानांमहात्मनाम् सृंजयानांचमत्स्यानांकृष्णास्यचयशस्विनः ४

छ्निः २१ ओघःप्रवाहः पुरुमित्रोदुर्योधन भ्रातामएवगाधोगांभीर्यस्यपर्यंतोयस्मिन् तेनगाढंदुःप्रवेशंदुर्मर्षणोदंदुर्मर्षणोदकंसोपिदुर्योधनभ्रातैव २२ २३ निवर्तितानिवर्तिष्यति प्रशाम्यशांतोभव प्रशाम्येतिपाठेप्रशाम्यंचतद्राज्यंचेतिसमासः बुभूषितः प्राप्तुमिष्टः आतपस्विनास्वर्गइवत्वयाराज्यंदुर्लभंलब्धुमशक्यं१२४ इतिउ॰दी॰षष्ट्यु॰शततमोध्यायः१६०

सेनेति १ २ ३ ४ ५

३७ ३८ निष्ठतेगृहेएवस्थिरोस्ति ३९ त्वाद्यत्वामद्य ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४



यस्माज्जानन्समंदात्मामामसौनोपसर्पति तस्मात्तस्मैमहादंडोधार्यःस्यादितिमेमतिः ३७ यक्षाऊचुः द्रुपदस्यकृताराजन्
राज्ञोजाताशिखंडिनी तस्यानिमित्तेकस्मिंश्चित्प्रादात्पुरुषलक्षणम् ३८ अग्रहील्लक्षणंस्त्रीणांस्त्रीभूतातिष्ठतेगृहे नोपसर्पतितेनासौसव्रीडस्त्रीसरूपवान् ३९ एतस्मात्कारणाद्राजन्स्थूणोनत्वाद्यसर्पति श्रुत्वाकुरुयथान्याय्यंविमानमिहतिष्ठताम् ४०आनीयतांस्थूणइतिततोयक्षाधिपोब्रवीत् कर्तास्मिनिग्रहंतस्यप्रत्युवाचपुनःपुनः ४१ सोभ्यगच्छतयक्षेंद्रमाहूतःपृथिवीपते स्त्रीसरूपोमहाराजतस्थौव्रीडासमन्वितः ४२ तंशशापाथसंक्रुद्धोधनदःकुरुनंदन एवमेवभवत्वद्यस्त्रीत्वंपापस्यगुह्यकाः ४३ ततोब्रवीद्यक्षपतिर्महात्मायस्माददास्त्ववमन्येहयक्षान् शिखंडिनेलक्षणंपापबुद्धेस्त्रीलक्षणंचाग्रहीःपापकर्मन् ४३ अप्रवृत्तंसुदुर्बुद्धेयस्मादेतत्त्वयाकृतम् तस्मादद्यप्रभृत्येवस्त्रीत्वंसापुरुषःस्तथा ४४ ततःप्रसादयामासुर्यक्षावैश्रवणंकिल स्थूणस्यार्थेकुरुष्वांतंशापस्येतिपुनःपुनः ४५ ततोमहात्मायक्षेंद्रःप्रत्युवाचानुगामिनः सर्वान्यक्षगणांस्तातशापस्यांतचिकीर्षया ४६ शिखंडिनिहतेयक्षाःस्वरूपंप्रतिपत्स्यते स्थूणोयक्षोनिरुद्वेगोभवत्विितिमहामनाः ४७ इत्युक्त्वाभगवान्देवोयक्षराजःसुपूजितः प्रययौसहितःसर्वैर्निमेषांतरचारिभिः ४८ स्थूणस्तुशापंसंप्राप्यतत्रैवन्यवसत्तदा समयेचागमत्तूर्णंशिखंडीतंक्षपाचरं ४९ सोभिगम्याब्रवीद्वाक्यंप्राप्तोस्मिभगवन्निति तमब्रवीत्ततःस्थूणःप्रीतोस्मीतिपुनःपुनः ५० आर्जवेनागतंदृष्ट्वाराजपुत्रंशिखंडिनम् सर्वमेवयथावृत्तमाचचक्षेशिखंडिने ५१ यक्षउवाच शप्तोवैश्रवणेनाहंत्वत्कृतेपार्थिवात्मजे गच्छेदानींयथाकामंचरलोकान्यथासुखम् ५२ दिष्टमेतत्पुरामन्येनशक्यमतिवर्तितुम् गमनंतवचेतोहिपौलस्त्यस्यचदर्शनम् ५३ भीष्मउवाच एवमुक्तःशिखंडीतुस्थूणयक्षेणभारत प्रत्याजगामनगरंहर्षेणमहतावृतः ५४ पूजयामासविविधैर्गंधमाल्यैर्महाधनैः द्विजातीन्देवताश्चैवचैत्यानथचतुष्पथान् ५५ द्रुपदःसहपुत्रेणसिद्धार्थेनशिखंडिना मुदंचपरमांलेभेपांचाल्यःसहबांधवैः ५६ शिष्यार्थंप्रददौचायद्रोणायकुरुपुंगव शिखंडिनंमहाराजपुत्रंस्त्रीपूर्विणंतदा ५७ प्रतिपेदेचतुष्पादंधनुर्वेदंनृपात्मजः शिखंडीसहयुष्माभिर्धृष्टद्युम्नश्चपार्षतः ५८ ममत्वेतच्चरास्तातयथावत्प्रत्यवेदयन् जडांधबधिराकारायेयुक्ताद्द्रुपदेमया ५९

५५ ५६ ५७ चतुष्पादंग्रहणधारणप्रयोगप्रतीकारैःचतुर्भिःपादैर्युक्तम् ५८ ५९ ६० ६१ ६२ ६३ ६४

एवमेषमहाराजस्त्रीपुमान्द्रुपदात्मजः ससंभूतःकुरुश्रेष्ठशिखंडीरथसत्तमः ६० ज्येष्ठाकाशिपतेःकन्याअंबानामेतिविश्रुता द्रुपदस्यकुले जाता शिखंडीभरतर्षभ ६१ नाहमेनंधनुष्पाणिंयुयुत्सुंसमुपस्थितम् मुहूर्तमपिपश्येयंप्रहरेयंनचाच्युत ६२ व्रतमेतन्ममसदापृथिव्यामपिविश्रुतम् स्त्रियांस्त्रीपूर्वकेचैवस्त्रीनाम्निस्त्रीस्वरूपिणि ६३ नमुंचेयमहंबाणमितिकौरवनंदन नहन्यामहमेतेनकारणेनशिखंडिनम् ६४ एतत्तत्त्वमहंवेदजन्मतातशिखंडिनः ततोनैनंहनिष्यामिसमरेष्वाततायिनम् ६५ यदिभीष्मःस्त्रियंहन्यात्संतःकुर्युर्विगर्हणम् नैनंतस्माद्धनिष्यामिदृष्ट्वापिसमरेस्थितम् ६६ वैशंपायनउ० एतच्छ्रुत्वातुकौरव्योराजादुर्योधनस्तदा मुहूर्तमिवसध्यात्वाभीष्मेयुक्तममन्यत ६७ इतिश्रीमन्महाभारतेउद्यो० अंबोपाख्यानेचतुर्नवत्य० शततमोऽध्यायः १९४ संजयउवाच प्रभातायांतुशर्वर्यांपुनरेवसुतस्तव मध्येसर्वस्यसैन्यस्यपितामहमपृच्छत १ पांडवेयस्यगांगेययदेतत्सैन्यमुद्यतम् प्रभूतनरनागाश्वंमहारथसमाकुलम् २ भीमार्जुनप्रभृतिभिर्महेष्वासैर्महाबलैः लोकपालसमैर्गुप्तंधृष्टद्युम्नपुरोगमैः ३ अप्रधृष्यमनावार्यमुद्धूतमिवसागरम् सेनासागरमक्षोभ्यमपिदेवैर्महाहवे ४ केनकालेनगांगेयक्षपयेथामहाद्युते आचार्योवामहेष्वासःकृपोवासुमहाबल ५ कर्णोवासमरश्लाघीद्रौणिर्वाद्विजसत्तमः दिव्यास्त्रविदुषःसर्वेभवंतोहिबलेमम ६ एतदिच्छाम्यहंज्ञातुंपरंकौतूहलंहिमे हृदिनित्यंमहाबाहोवक्तुमर्हसितन्मम ७ भीष्मउवाच अनुरूपंकुरुश्रेष्ठत्वय्येतत्पृथिवीपते बलाबलममित्राणांतेषांयदिहपृच्छसि ८ शृणुराजन्ममरणेयाशक्तिःपरमाभवेत् शस्त्रवीर्यंरणेयच्चभुजयोश्चमहाभुज ९ आर्जवेनैवयुद्धेनयोद्धव्यइतरोजनः मायायुद्धेनमायावीइत्येतद्धर्मनिश्चयः १० हन्यामहंमहाभागपांडवानामनीकिनीम् दिवसेदिवसेकृत्वाभागंप्राग्राह्णिकंमम ११ योधानांदशसाहस्रंकृत्वाभागंमहाद्युते सहस्रंरथिनामेकमेषभागोमतोमम १२ अनेनाहंविधानेनसन्नद्धःसततोत्थितः क्षपयेहंमहत्सैन्यंकालेनानेनभारत १३ मुंचेयंयदिवास्त्राणिमहांतिसमरेस्थितः शतसाहस्रघातीनिहन्यांमासेनभारत १४ संजयउवाच श्रुत्वाभीष्मस्यतद्वाक्यंराजादुर्योधनस्ततः पर्यपृच्छतराजेंद्रद्रोणमंगिरसांवरम् १५

१६ १७ १८ १९ २० २१ २२ इत्युद्योगे टीकायां पंचनवत्यधिकशततमोऽध्यायः १९५ तच्छ्रुत्वेति १ व्युषितां निशां प्रभातकाले २ ३ ४



आचार्य केन कालेन पांडुपुत्रस्य सैनिकान् निहन्या इति तं द्रोणः प्रत्युवाच हसन्निव १६ स्थविरोस्मि महाबाहो मंदप्राणविचेष्टितः श स्त्राग्निना निर्दहेयं पांडवानामनीकिनीम् १७ यथा भीष्मः शांतनवो मासेनेति मतिर्मम एषा मे परमा शक्तिरेतन्मे परमं बलम् १८ द्वाभ्यामेव तु मासाभ्यां कृपः शारद्वतोब्रवीत् द्रौणिस्तु दशरात्रेण प्रतिजज्ञे बलक्षयम् १९ कर्णस्तु पंचरात्रेण प्रतिजज्ञे महास्त्रवित् तच्छ्रुत्वा सूतपुत्रस्य वाक्यं सागरगासुतः २० जहास सस्वनं हासं वाक्यं चेदमुवाच ह नहि यावद्रणे पार्थं बाणशंखधनुर्धरम् २१ वासुदेवसमायुक्तं रथेनायांतमाहवे समागच्छसि राधेय तेनैवमभिमन्यसे शक्यमेवं च भूयश्च त्वया वक्तुं यथेष्टतः २२ इति श्रीमन्महाभारते उद्योगपर्वणि भारतयुद्धप्रमाणं नाम पंचनवत्यधिकशततमोऽध्यायः १९५ वैशंपायन उवाच एतच्छ्रुत्वा तु कौंतेयः सर्वान्भ्रातॄनुपह्वरे आहूय भरतश्रेष्ठ इदं वचनमब्रवीत् १ युधिष्ठिर उवाच धार्तराष्ट्रस्य सैन्येषु ये चारपुरुषा मम ते प्रवृत्तिं प्रयच्छंति ममेमां व्युषितां निशाम् २ दुर्योधनः किलापृच्छदापगेयं महाव्रतम् केन कालेन पांडूनां हन्याः सैन्यमिति प्रभो ३ मासेनेति च तेनोक्तो धार्तराष्ट्रः सुदुर्मतिः तावता चापि कालेन द्रोणोपि प्रतिजज्ञिवान् ४ गौतमो द्विगुणं कालमुक्तवानिति नः श्रुतम् द्रौणिस्तु दशरात्रेण प्रतिजज्ञे महास्त्रवित् ५ तथा दिव्यास्त्रवित्कर्णः संपृष्टः कुरुसंसदि पंचभिर्दिवसैर्हंतुं ससैन्यं प्रतिजज्ञिवान् ६ तस्मादहमपीच्छामि श्रोतुमर्जुन ते वचः कालेन कियता शत्रून्क्षपयेरिति फाल्गुन ७ एवमुक्तो गुडाकेशः पार्थिवेन धनंजयः वासुदेवं समीक्ष्येदं वचनं प्रत्यभाषत ८ सर्व एते महात्मानः कृतास्त्राश्चित्रयोधिनः असंशयं महाराज हन्युरेव न संशयः ९ अपैतु ते मनस्तापो यथासत्यं ब्रवीम्यहम् हन्यामेकरथेनैव वासुदेवसहायवान् १० सामरानपि लोकांस्त्रीन्सर्वान्स्थावरजंगमान् भूतं भव्यं भविष्यं च निमेषादिति मे मतिः ११ यत्तद्घोरं पशुपतिः प्रादादस्त्रं महन्मम कैराते द्वंद्वयुद्धे तु तदिदं मयि वर्तते १२ यद्युगांते पशुपतिः सर्वभूतानि संहरन् प्रयुंक्ते पुरुषव्याघ्र तदिदं मयि वर्तते १३ तन्न जानाति गांगेयो न द्रोणो न च गौतमः न च द्रोणसुतो राजन्कुत एव तु सूतजः १४ न तु युक्तं रणे हंतुं दिव्यैरस्त्रैः पृथग्जनम् आर्जवेनैव युद्धेन विजेष्यामो वयं परान् १५ तथेमे पुरुषव्याघ्राः सहायास्तव पार्थिव सर्वे दिव्यास्त्रविद्वांसः सर्वे युद्धाभिकांक्षिणः १६

५ ६ ७ ८ ९ १० भूतमुत्पन्नं भव्यमुत्पाद्यमानं अनयोर्बीजभूतयोर्नाशे बीजाभावाद्भविष्यस्यापि नाशो मयैव कर्तव्य इत्यर्थः ११ १२ १३ १४ १५ १६

वेदांतावभृथस्नाताः वेदग्रहणांतएवदारक्रियायासहैवयागंकृतवंतइत्यर्थः १७ १८ १९ २० २१ २२ इतिउद्योगपर्वणिटीकायांषण्णवत्यधिकशततम

वेदांतावभृथस्नाताःसर्वएतेपराजिताः निहन्युःसमरेसेनांदेवानामपिपांडव १७ शिखंडीयुयुधानश्चधृष्टद्युम्नश्चपार्षतः भीमसेनो यमौचोभौयुधामन्यूत्तमौजसौ १८ विराटद्रुपदौचोभौभीष्मद्रोणसमौयुधि शंखश्चैवमहाबाहुर्हैडिंबिश्चमहाबलः १९ पुत्रोस्यांजन पर्वानुमहाबलपराक्रमः शैनेयश्चमहाबाहुःसहायोरणकोविदः २० अभिमन्युश्चबलवान्द्रौपद्याःपंचचात्मजाः स्वयंचापिसमर्थोसि त्रैलोक्योत्सादनेअपि २१ क्रोधाद्यंपुरुषंपश्येस्त्वंथाशक्रसमद्युते सक्षिप्रंनभवेद्व्यक्तमितित्वांवेद्मिकौरव २२ इतिश्रीम० उद्योग० युद्धविचारोनामषण्णवत्यधिकशततमोऽध्यायः १९६ वैशंपायनउवाच ततःप्रभातेविमलेधार्तराष्ट्रेणचोदिताः दुर्योधनेनराजा नःप्रययुःपांडवान्प्रति १ आप्लाव्यशुचयःसर्वेस्रग्विणःशुक्लवाससः गृहीतशस्त्राध्वजिनःस्वस्तिवाच्यहुताग्नयः २ सर्वेब्रह्मविदःशूराः सर्वेसुचरितव्रताः सर्वेकामकृतश्चैवसर्वेचाहवलक्षणा ३ आहवेषुपरांल्लोकान्जिगीषंतोमहाबलाः एकाग्रमनसःसर्वेश्रद्दधानाःपरस्प रम् ४ विंदानुविंदावावंत्यौकैकेयाबाल्हिकैःसह प्रययुःसर्वएवैतेभारद्वाजपुरोगमाः ५ अश्वत्थामाशांतनवःसैंधवोथजयद्रथः दाक्षिणा त्याःप्रतीच्याश्चपार्वतीयाश्चयेनृपाः ६ गांधारराजःशकुनिःप्राच्योदीच्याश्चसर्वशः शकाःकिरातायवनाःशिबयोथवशातयः ७ स्वैःस्वैरनी कैःसहिताःपरिवार्यमहारथम् एतेमहारथाःसर्वेद्वितीयेनिर्ययुर्बले ८ कृतवर्मासहानीकस्त्रिगर्तश्चमहारथः दुर्योधनश्चनृपतिर्भ्रातृ भिःपरिवारितः ९ शलोभूरिश्रवाःशल्यःकौशल्योथबृहद्रथः एतेपश्चादनुगताधार्तराष्ट्रपुरोगमाः १० तेसमेत्ययथान्यायंधार्तराष्ट्रा महाबलाःकुरुक्षेत्रस्यपश्चार्द्धेव्यवतिष्ठंतदंशिताः ११ दुर्योधनस्तुशिबिरंकारयामासभारत यथैवहास्तिनपुरंद्वितीयंसमलंकृतम् १२ नविशेषंविजानंतिपुरस्यशिबिरस्यवा कुशलाअपिराजेंद्रनरानगरवासिनः १३ तादृशान्येवदुर्गाणिराज्ञामपिमहीपतिः कारयामा सकौरव्यःशतशोथसहस्रशः १४ पंचयोजनमुत्सृज्यमंडलंतद्रणाजिरम् सेनानिवेशास्तेराजन्नाविशंश्छतसंघशः १५

मोऽध्यायः१९६

ततःप्रभातेइति १ आप्लाव्यस्नात्वा २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ उत्सृज्यउत्कर्षेणसृष्ट्वापंचयोजनंवर्तुलंपरिधिंकृत्वेत्यर्थः सेनानिवेशाःसैनिकाःवणिक्शूराश्च

दयः १५

१६ १७ १८ १९ इतिउद्योगपर्वणिटीकायांसप्तनवत्यधिकशततमोध्यायः१९७ तथैवेति१ २ ३ ४ ५ ६ ७ बलस्कंधंसैन्यसमुदायम् ८ भांडंयुक्तो



तत्रतेपृथिवीपालायथोत्साहंयथाबलम् विविशुःशिबिराण्यत्रद्रव्यवंतिसहस्रशः १६ तेषांदुर्योधनोराजाससैन्यानांमहात्मनाम् व्यादिदेशसबाह्यानांभक्ष्यभोज्यमनुत्तमम् १७ सनागाश्वमनुष्याणांयेचशिल्पोपजीविनः येचान्येनुगतास्तत्रसूतमागधबंदिनः १८ वणिजोगणिकाश्चारायेचैवप्रेक्षकाजनाः सर्वांस्तान्कौरवोराजाविधिवत्प्रत्यवैक्षत १९ इतिश्रीम॰उद्योगपर्वणिकौरवसैन्यनिर्याणे सप्तनवत्यधिकशततमोऽध्यायः१९७ वैशंपायनउ॰ तथैवराजाकौंतेयोधर्मपुत्रोयुधिष्ठिरः धृष्टद्युम्नमुखान्वीरांश्चोदयामास भारत १ चेदिकाशिकरूषाणांनेतारंदृढविक्रमम् सेनापतिममित्रघ्नंधृष्टकेतुमथादिशत् २ विराटंद्रुपदंचैवयुयुधानंशिखंडिनम् पांचाल्यौचमहेष्वासौयुधामन्यूत्तमौजसौ ३ तेशूराश्चित्रवर्माणस्तप्तकुंडलधारिणः आज्यावसिक्ताज्वलिताधिष्ण्यानीवहुताशनाः ४ अशोभंतमहेष्वासाग्रहाःप्रज्वलिताइव अथसैन्यंयथायोगंपूजयित्वानरर्षभः ५ दिदेशतान्यनीकानिप्रयाणायमहीपतिः तेषांयुधिष्ठिरोराजाससैन्यानांमहात्मनाम् ६ व्यादिदेशसबाह्यानांभक्ष्यभोज्यमनुत्तमम् सगजाश्वमनुष्याणांयेचशिल्पोपजीविनः अभिमन्युंबृहंतंचद्रौपदेयांश्चसर्वशः ७ धृष्टद्युम्नमुखानेतान्प्राहिणोत्पांडुनंदनः भीमंचयुयुधानंचपांडवंचधनंजयम् द्वितीयंप्रेषयामासबलस्कंधंयुधिष्ठिरः ८ भांडंसमारोपयतांचरतांसंप्रधावताम् हृष्टानांतत्रयोधानांशब्दोदिवमिवास्पृशत् ९ स्वयमेवततःपश्चाद्विराटद्रुपदान्वितः अथापरैर्महीपालैःसहप्रायान्महीपतिः १० भीमधन्वायनीसेनाधृष्टद्युम्नेनपालिता गंगेवपूर्णास्तिमितास्यंदमानाव्यदृश्यत ११ ततःपुनरनीकानिव्ययोजयतबुद्धिमान् मोहयन्धृतराष्ट्रस्यपुत्राणांबुद्धिनिश्चयम् १२ द्रौपदेयान्महेष्वासानभिमन्युंचपांडवः नकुलंसहदेवंचसर्वांश्चैवप्रभद्रकान् १३ दशचाश्वसहस्राणिद्विसहस्राणिदंतिनाम् अयुतंचपदातीनांरथाःपंचशतंतथा १४ भीमसेनस्यदुर्धर्षंप्रथमंप्राविशद्बलम् मध्यमेचविराटंचजयत्सेनंचपांडवः १५ महारथौचपांचाल्यौयुधामन्यूत्तमौजसौ वीर्यवंतौमहात्मानौ गदाकार्मुकधारिणौ १६ अन्वयातांतदामध्येवासुदेवधनंजयौ बभूवुरितिसंरब्धाःकृतप्रहरणानराः १७

पकरणं ९१० भीमधन्वानःअयंतेप्रचरंत्यस्यामितिभीमधन्वायनी ११ १२ १३ १४ १५ १६ कृतप्रहरणाःकृतयुद्धाः १७

१८ _ १९ २० २१ २२ २३ शकटाभांडवंति अनांसि आपणोवणिक्समुदायःवेशःवेश्याजनः यानंयुद्धयोग्यंवाहनंयुग्यंकेवलंवाहनं फल्गुबालादिकंक लत्रंस्त्र्यादिकम् २५ कोशोधनं कोष्ठोधान्यादिसामग्री संगृह्यएकीकृत्य २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धर

तेषांविंशतिसाहस्राहयाःशूरैरधिष्ठिताः पंचनागसहस्राणिरथवंशाश्चसर्वशः १८ पदातयश्चयेशूराः कार्मुकासिगदाधराः सहस्रशोन्वयुः पश्चादग्रतश्चसहस्रशः १९ युधिष्ठिरोयत्रसैन्येस्वयमेवबलार्णवे तत्रतेपृथिवीपालाभूयिष्ठंपर्यवस्थिताः २० तत्रनागसहस्राणिह यानामयुतानिच तथारथसहस्राणिपदातीनांचभारत २१ चेकितानःस्वसैन्येनमहतापार्थिवर्षभ धृष्टकेतुश्चचेदीनांप्रणेतापार्थि- वोययौ २२ सात्यकिश्चमहेष्वासोवृष्णीनांप्रवरोरथः वृतःशतसहस्रेणरथानांप्रणुदन्बली २३ क्षत्रदेवक्षत्रदेवश्चरथस्थौपुरुषर्षभौ ज घनंपालयंतौचपृष्ठतोनुप्रजग्मतुः २४ शकटापणवेशाश्चयानंयुग्यंचसर्वशः तत्रनागसहस्राणिहयानामयुतानिच २५फल्गुसर्वंक लत्रंचयत्किंचित्कृशदुर्बलम् २५ कोशसंचयवाहांश्चकोष्ठागारंतथैवच गजानीकेनसंगृह्यशनैःप्रायाद्युधिष्ठिरः २६ तमन्वयात्सत्यधृतिः सौचित्तिर्युद्धदुर्मदः श्रेणिमान्वसुदानश्चपुत्रःकाश्यस्यवाविभुः २७ रथाविंशतिसाहस्रायेतेषामनुयायिनः हयानांदशकोट्यश्चमह तांकिंकिणीकिनाम् २८ गजाविंशतिसाहस्राईषादंताःप्रहारिणः कुलीनाभिन्नकरटामेघाइवविसर्पिणः २९ षष्टिर्नागसहस्राणिदशा न्यानिचभारत युधिष्ठिरस्ययान्यासन्युधिसेनास्तस्य ३० क्षरंतइवजीमूताःप्रभिन्नकरटामुखाः राजानमन्वयुःपश्चाच्चलंत इवपर्वताः ३१ एवंतस्यबलंभीमंकुंतीपुत्रस्यधीमतः यदाश्रित्याथयुयुधेधार्तराष्ट्रंसुयोधनम् ३२ ततोन्येशतशःपश्चात्सहस्रायुतशो नराः नर्दंतःप्रययुस्तेषामनीकानिसहस्रशः ३३ तत्रभेरीसहस्राणिशंखानामयुतानिच न्यवादयंतसंहृष्टाःसहस्रायुतशोनराः ३४ ॥ ॥इतिश्रीमन्महाभारतेशतसाहस्र्यां संहितायांवैय्यासिक्यांउद्योगपर्वणिसेनानिर्याणंनामाष्टनवत्यधिकशततमोऽध्यायः१९८ जनमेजयउवाच कथंयुधिष्ठिरेवीराःकुरुपांडवसोमकाः पार्थिवाःसुमहात्मानोनानादेशसमागताः १ अयंभीष्मपर्वप्रतिसंधिः ॥

वंशावतंसगोविंदसूरिसूनोःश्रीनीलकंठस्यकृतौभारतभावदीपेउद्योगपर्वार्थप्रकाश समाप्तिर्नामअष्टनवत्यधिकशततमोऽध्यायः १९८ श्रीकृष्णार्पणमस्तु समाप्तंचेदमुद्योगपर्व ५ श्रीवेदव्यासायनमः ५ ५ ५ ५ ५ ५

